

# अद्वैततत्त्वसुधा

## द्वितीयभागः

विशिष्टाद्वैताद्वैतसिद्धान्तपरीक्षात्मक
द्वितीय संपुटः

महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी-
वाराणसेयसंस्कृतविश्वविद्यालयसंमानितप्राध्यापक-
**श्रीमदनन्तकृष्णशास्त्रिकृतिः**

महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषणी श्रीमदनन्तकृष्णशास्त्रिणा
काशीहिन्दूविश्वविद्यालयमीमांसाऽध्यापकप्रवर-
मीमांसारत्नादिविरुदाङ्कितमीमांसा-
वेदान्ताचार्यसुब्रह्मण्यशास्त्रिणा च
सम्पादिता—

वाराणसेयतारामुद्रणालयद्वारा मुद्रापिता, प्रकाशिता च
विजयतेतराम्

१९६२



मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

# ADVAITA TATTVA SUDHA

## (SECOND PART)

## VOL. II

BY

MAHĀMAHOPĀDHYĀYA ŚASTRARATNAKARA
SATABHŪṢAṆĪ

N. S. ANANTAKṚIŚṆA SĀSTRI

*Honorary Professor*

Sanskrit University, Varanasi

*Edited By*

Mahāmahopādhyāya Śastraratnākara Śatabhūṣaṇī,
N. S. Anantakṛisṇa Śāstri
and
Meemānsā Ratna Pt. A. Subrahmanyam Śāstri
*Lecturer*, Banaras Hindu University,
Varanasi

*Price Rs. 35/- for two vols. together.*
*Packing and Postage extra.*

1962

## शास्त्रभेदसमर्थनम्

### भूषणमतेऽपि कर्मविचारानन्तर्यं नाथशब्दार्थः

तत्र पूर्वोत्तरमीमांसे मिलिते एकं शास्त्रमित्युपवर्षाचार्याः, भास्कराचार्याश्चाभिप्रयन्ति, इति नेदं श्रीभाष्यकाराणामेव सिद्धान्तः। अयं तु सिद्धान्तो भगवत्पादैरपि—"नन्विह कर्मावबोधानन्तर्यं विशेषः, न; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"त्यादिना निरस्तः। श्रीभाष्यं तु भगवत्पादनिरस्तमुक्तं पक्षं समर्थयति—"संहतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेने"त्यादिस्वपूर्वाचार्यनिबन्धमवष्टभ्येति वस्तुस्थितिः॥

भूषणं तु लिखति—कर्मविचारपूर्ववृत्तत्वस्य, ऐकशास्त्र्यस्य चास्वीकारेऽपि न विशिष्टाद्वैतस्य हानिरिति। यद्येवम्, "अथातो ब्रह्मजिज्ञासे"-त्यत्राथशब्दार्थः को वा श्रीभाष्यदृष्ट्येति नवनवाद्वैत-विशिष्टाद्वैत-सिद्धान्तशिक्षणदीक्षं किमपि लिखति कुत्रापि। यदि श्रीभाष्यस्य कर्मविचारानन्तर्यार्थत्वे न निर्भरः, तर्हि किमिति भगवत्पादनिरस्तस्य पक्षस्य स्वभाष्ये समर्थनम्? अस्तु नामैतत्॥

यदि संहतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन; तर्हि संकर्षकाण्डानन्तर्यमेव कुतो नाथशब्दार्थः॥

अत्रेदं समाधत्ते भूषणम्—अयं शतभूषण्या आक्षेपः किमनिष्टं कल्पयति? अस्तु षोडशलक्षणानन्तर्यमेवात्राथशब्दार्थ इति॥

इदमत्रानिष्टम्—संकर्षेण "स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते" इत्युपसंहरात् सगुणब्रह्मविचारानन्तरं ब्रह्मजिज्ञासेति स्यात्, तेन च"अथातो ब्रह्मजिज्ञासे"ति भूषणाभिमतसविशेषब्रह्मजिज्ञासा न ब्रह्मजिज्ञासालक्ष्यं स्यात्, इति निर्विशेषब्रह्मजिज्ञासैव बादरायणस्य मुख्यं लक्ष्यमिति, किमिदं भूषणस्य नानिष्टम्?

### तत्त्वसुधाया ऐकशास्त्र्योपपादनप्रकारः स्वतन्त्रोऽपि न संभवति, न च धर्मजिज्ञासायां धर्मपदं वेदार्थपरम्, न वा "अथातः शेषलक्षणमि"त्यादाविव पृथक् ब्रह्मजिज्ञासाप्रतिज्ञोपपत्तिः

तत्त्वसुधा तु—"अथातो धर्मजिज्ञासे"त्यत्र धर्मपदं वेदार्थपरमिति प्राभाकरसिद्धान्तम्, यत्र सिद्धेऽर्थे शब्दानां न प्रामाण्यमिति व्यवस्था,

तमादाय, वेदार्थत्वेन ब्रह्मणोऽपि प्रतिज्ञा वर्तते, इति "अथातः शेषलक्षणमि"तिवदवान्तरप्रतिज्ञा ब्रह्मविचारस्यापीति—वदति। तत्र—"अथातःशेषलक्षणम्" "अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासे"ति वेदार्थैकदेशप्रतिज्ञा, न तु वेदार्थस्यैव; अन्यथा "चोदनालक्षणोऽर्थो धर्मः" इति वेदार्थसामान्यस्य चोदनाप्रमाणकत्वे वर्णिते श्रीभाष्यमते चोदनातिरिक्तशास्त्राभावात् शास्त्रयोनित्वादिसूत्राणि वितथानि। वस्तुतस्तु चोदनार्थो ब्रह्मापि वेदार्थः "स विष्णुराह हि" इति संकर्षान्तेनैव निर्णीतत्वात् "अथातो ब्रह्मजिज्ञासे"ति ब्रह्मरूपवेदार्थजिज्ञासायां चोदनापदं परित्यज्य शास्त्रपदं तत्र विन्यस्य शास्त्रयोनित्वादिसूत्रणं पुनरुक्तमेव, नैवम्; अथातः शेषलक्षणमि"त्यादौ, इति वेदार्थविशेषस्य ब्रह्मणः संकर्षेण निर्णीतत्वात् पुनरपि वेदार्थविशेषब्रह्मजिज्ञासा वितथैव तत्त्वसुधादिसिद्धान्ते ॥

### सविशेषस्य संकर्षनिर्णीतस्य धर्मत्वेऽपि निर्विशेषस्य न धर्मत्वम्

तत्र ब्रह्मणो धर्मत्वे न विप्रतिपत्तिः। तत्तु सविशेषमेव। अत एव सहस्रनामभाष्यमपि भगवत्पादानाम्। ते हि सगुणमपि ब्रह्म शास्त्रवेद्यमवान्तरतात्पर्यविषयतया स्वीकुर्वन्ति। तस्य क्रियाविधिशेषत्वात्, चोदनालक्षणत्वाच्च, न तु तत्त्वमस्यादिमहावाक्यापरपर्यायशास्त्रगम्यं निर्विशेषमपि धर्मशब्दार्थः। "सर्वे वेदा यत्पदमामनन्ति" इति महावाक्यविधया सर्ववेदप्रतिपाद्यमेव शास्त्रयोनि ब्रह्मेति सिध्यति। तत्र "स विष्णुराह हि" इत्यादिसंकर्षवाक्यमप्रमाणं मन्यते भूषणम्, तत्त्वसुधा तु तत्र मौनमेव शरणीकरोति ॥

### अथशब्दार्थः संकर्षानन्तर्यमेव श्रीभाष्यमते भवितुमर्हति न कर्मविचारानन्तर्यम्, किन्तु साधनचतुष्टयानन्तर्यमेव

एतेन—द्वादशलक्षणीशेषत्वेन संकर्षकाण्डः प्रवृत्तः, इति न तत्र ब्रह्मविचारस्य प्रसक्तिरपीति—परास्तम्; उक्तसंकर्षोपसंहारविरोधात्। भूषणसिद्धान्ते हि न केवलं संकर्षकाण्डः, किन्तु ब्रह्मजिज्ञासाऽपि द्वादशलक्षणीशेषः, "अथातः शेषलक्षणम्" "अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासे"त्यादावपि पूर्वपूर्वप्रकरणानन्तर्यमेवोत्तरोत्तरप्रकरणस्येति सिद्धे, कथं द्वादशलक्षणीशेषत्वेन सकर्षकाण्डस्य, मुख्यकर्मविचारानन्तर्य-

मेवात्राथशब्दार्थ इति वक्तुं शक्यते ? अतः सङ्कर्षकाण्डानन्तर्य-विवक्षायां महदनिष्टं भूषणेन दुष्परिहरम्। अत्र कर्मविचारासिद्धसविशेष-विचारः संकर्षे, संकर्षशेषब्रह्मजिज्ञासा ब्रह्मजिज्ञासायामिति स्यात्, इति। कर्म-देवता-ब्रह्मगोचराणां जिज्ञासानां स्वतन्त्रतैव फलति, तेन चानन्तर्यप्रतियोगिनः "आत्मा वा अरे द्रष्टव्यः" इत्यादिविषयवाक्यशेषेऽ-धिकारिविशेषणतया निर्दिष्टा एवाधिकारितावच्छेदकतामर्हन्तीति साधन-चतुष्टयसंपत्त्यानन्तर्यमेवात्राथशब्दार्थः, न तु कर्मविचारानन्तर्यमिति निगदव्याख्यातम्॥

### कर्मविचारस्य ब्रह्मविचारेऽनुपयोगाद् न तदानन्तर्यमत्राथशब्दार्थः

वस्तुतस्तु—ऐकशास्त्र्येऽपि विषयवाक्यसंनिधिपठितसाधनसम्पत्ति-रेवाथशब्दार्थो भवितुमर्हति, ये ब्रह्मजिज्ञासायामुपयुज्यन्ते। तत्रो-पयोगो विचारे वा तत्फले वा वक्तव्यः। तत्र कर्मविचारस्योपयोगो विचारफलेऽवगतिपर्यन्तज्ञानेऽद्वैतमते दृष्टविधया संभवति, श्रीभाष्य-मते तु साक्षात्कर्मविचारस्य ब्रह्मविद्यायां नोपयोगः, किन्तु कर्मणाम्। न हि ब्रह्मविद्योपयोगीन्येव कर्माणि कर्मविचारे निर्णीयन्ते, किन्त्वन्यान्यपि प्रमाणादीनि। न च कर्मप्रमाणान्येव ब्रह्मणि प्रमाणानि; अन्यथा शास्त्रयोनित्वसूत्रवैयर्थ्यापत्तेः। कर्मणामल्पस्थिरफलत्वं तु न कर्मविचारे कुत्रापि, इति कुतो वा कर्मविचारानन्तर्यमर्थः स्यात् ?

तत्र यद्यपि सविशेषविचारानन्तर्यं तदर्थतामर्हति; उपासनस्यापि साधनकोटिप्रवेशात्, परन्तु तत् तत्फलसाधनम्, न विद्यासाधनम्; तस्याः श्रीभाष्यमते स्वयं विद्यात्वात्। अतो विषयवाक्यसंनिधिपठिता-नामेवानन्तर्यप्रतियोगित्वात् कर्मविचारानन्तर्यं नाथशब्दार्थः॥

### संनिधिपठितानामेवानन्तर्यप्रतियोगित्वम्, न च कर्मविचारस्तथा, इति न तदानन्तर्यमत्र

यत्तु—अथशब्दस्य स्वघटितवाक्यप्रकरणादिरूपपदसमुदायपूर्वपद-समुदायप्रतिपाद्यानन्तर्यनिरूढत्वमर्थसिद्धमिति—भूषणम्, तदपि संकर्ष-काण्डानन्तर्याथशब्दार्थतामेव साधयति, न कर्मविचारानन्तर्यं विंशति-लक्षण्या एकशास्त्रतायाम्। तत्र सति संभवे विषयवाक्यार्थपूर्ववृत्तमेवाथ-शब्दार्थ आनन्तर्यप्रतियोगि॥

अत एव—"अथातो धर्मजिज्ञासे"त्यत्र तद्विषयकवाक्यफलसाधना-नन्तर्यमेवाथशब्दार्थः। अथ शब्दार्थानन्तर्यविवक्षायाः सूत्रेषु तथैव दर्शनात्। यत्र तु सूत्रे शास्त्रारम्भे विषयवाक्यमेव न संभवति, तत्रा-रम्भार्थकत्वमेव, यथा—"अथ शब्दानुशासनम्" "अथ योगानुशास-नम्" इत्यादौ ॥

वस्तुतस्तु ऐकशास्त्र्यं भूषणेन प्राचीनोक्तमपि त्यजत इति मुक्त-कण्ठमुद्घुष्यते। तत्र प्रथमं पूर्वाचार्योक्तकर्मविचारानन्तर्यमपि भूषणेन त्यक्तम्, परन्तु तदानन्तर्यार्थतायां निर्भरः साम्प्रतं प्रदर्श्यते, तत्तु विनाऽपि शास्त्रैकतामिति परं विशेषः, परन्तु शास्त्रैक्य-परित्यागेऽनुपदोक्त-विधया कर्मविचारानन्तर्यं नाथशब्दार्थः ॥

भामती-परिमलादीनां प्रवन्धभेदमात्रे तात्पर्यम्, न शास्त्रभेदे

यत्तु—भूषणम्—अद्वैतिभिरपि शास्त्रैक्यं न त्यक्तमिति विवरणभा-मती-पमिलाद्यवष्टभ्य—वदति ॥

तत्र विवरण-भामत्यादौ "अथातो धर्मजिज्ञासे"ति वेदार्थविचारप्रति-ज्ञापरत्ववर्णनात् "सर्वे वेदा यत्पदमामनन्ति" इति ब्रह्मण्येव वेदानां मुख्यतात्पर्यवर्णनाच्चैकशास्त्र्यमिव पूर्वोत्तरमीमांसयोः प्रतीयते, परंतु तत् सर्वेषां वेदवाक्यानां तत्त्वमस्यादिमहावाक्य एव वाक्यैकवाक्यतादृष्ट्या, न तु तत्त्वमर्थादिपरावान्तरवाक्याभिप्रायेण, यथा भागवतादीनामैकशा-स्त्र्यम्, तत्तु शास्त्रारम्भप्रतिज्ञैक्येन वक्तृभेदेप्येकप्रवन्धतामात्रम्, न तु शास्त्रैक्यम्, शास्त्रैक्यं हि वक्तृभेदेऽपि, एककर्तृकप्रवन्धभेदेऽपि, तत्तद्वे-दान्तनिबन्धानां वक्तृभेदेऽप्यनुबन्धचतुष्टयैक्यादैकशास्त्र्यम्, यथा दशो-पनिषदां प्रवन्धभेदेप्यैकशास्त्र्यम्, अतः प्रवन्धभेदोऽन्यः, शास्त्र-भेदोऽन्यः ॥

अनुबन्धचतुष्टयभेद एव शास्त्रभेदप्रयोजकः, न च धर्म-ब्रह्मजिज्ञासयोस्तदभेदः, इति नैकशास्त्र्यम्

अयमेव न्यायोऽष्टादशपुराणानाम्, इतिहासानाम्, अष्टादशविद्या—स्थानानां धर्मस्थानानां च। तत्र केवलं धर्मस्थानानि कर्मकाण्डः, यः साङ्गो-प्येकं शास्त्रम्, यद्विषयिणी जिज्ञासा धर्मजिज्ञासा, पुराणेतिहासादयस्तु धर्मविद्योभयस्थानानि। तेन च रूपेणैकशास्त्रत्वमेवैतेषाम्। अथाप्यधिकारि-

भेदात् , विषयभेदात् , प्रयोजनभेदाच्च कर्मकाण्डस्य साङ्गस्य, उपनिषदां च पृथग् शास्त्रत्वम् ॥

वेदार्थविचारत्वेनैकशास्त्र्ये—अथ-शब्दार्थस्तत्तच्छास्त्रमध्यपतितपूर्वपूर्वाध्यायानन्तर्यमेवोत्तराध्यायगताथशब्दार्थः । स च तत्तच्छाखामात्राभिप्रायः । न चायं न्यायः पूर्वोत्तरयोर्भवितुमर्हति; अनुबन्धचतुष्टयभेदाद् जिज्ञासाद्वयस्य ॥

जिज्ञासाद्वयेऽप्येकानुबन्धचतुष्टयायोगः

तत्र यद्यपि वेदार्थविचारत्वोपाधिना वेदान्तार्थजिज्ञासायामपि वेदत्वेन वेदान्ताध्ययनं साधारणमध्ययनविध्यवगतमधिकारितावच्छेदकम् , असाधारणं तूत्तरमीमांसायां कर्मफलास्थिरत्व-ब्रह्मफलनित्यत्वनिर्णयात्मकनित्यानित्यवस्तुविवेक-शम-दमादिसम्पत्ति-वैराग्य-मुमुक्षाणामधिकारतावच्छेदकत्वम्; इति सिद्धब्रह्मविषयकत्व-मोक्षफलकत्वाद्यनुबन्धचतुष्टयं भिन्नमेव। न च धर्मजिज्ञासायामपीदमधिकारितावच्छेदकम् , तत्प्रयुक्तं चैकशास्त्रत्वम् ; अन्यथा धर्मजिज्ञासायामप्यध्ययनमिव सर्वमिदमप्यधिकारितावच्छेदकमापद्येत । उत्तरमीमांसा तु धर्मविद्योभयस्थानमिति धर्मजिज्ञासाऽधिकारितावच्छेदकस्यापि तथात्वविवक्षणे न दोषः ॥

अनेन 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन जैमिनीयकर्मविचारस्यापि शारीरकतृतीयाध्यायतुरीयपादशेषत्वमिति' श्रुतप्रकाशिकाऽपि—परास्ता । तथात्वेऽप्येकप्रबन्धतामात्रेण शारीरकतृतीयतुरीयपादार्थविचारानन्तर्यम् , "अथातो धर्मजिज्ञासे"त्यत्राथशब्दार्थः स्यात् , अध्ययनसहकृतसाधनचतुष्टयसंपत्त्यानन्तर्यं वा । उभयमपि न श्रीभाष्यस्य संमतम् । अतः कथञ्चन कर्तृभेदे, तदैक्ये वैकप्रबन्धत्वेऽपि नैकशास्त्र्यम् । शास्त्रपदमपि यदि प्रबन्धपरम् , कामं भवतु, तथाप्यधिकार्यादिभेदमूरीकृत्य वेदार्थविचारत्वोपाधिनैकशास्त्र्यं विरुद्धम् । इदमेवाभिप्रैति परिमलः—तस्मादपेक्षितं हि वेदार्थविचारत्वोपाधिकल्प्यमैकशास्त्र्यं नातिविरुद्धम् , इति प्रौढ्या तदभ्युपगमेऽपि न कश्चिद्विरोधः" इति । इदमनेनावगम्यते—यदैकशास्त्र्यनिषेधस्य लक्ष्यं नात्र कर्मविचारानन्तर्यस्याथशब्दार्थत्वज्ञापनम् ॥

### प्रौढिवादमाश्रित्य भूषणेनापि साधनचतुष्टयसंपत्त्यानन्तर्यार्थत्वपक्षस्त्रीकारः, परंतु न निर्विशेषप्रतिज्ञेति तत्स्वीकारः, तन्निरासश्च

भूषणं तु तत्रापि स्वस्य न निर्भर इति वदति। तत्तु श्रीभाष्यादिविरुद्धम्। न चात्रान्यानन्तर्यं भूषणमप्यथशब्दार्थं वदति। तत्र यदि भूषणमपि साधनचतुष्टयसम्पत्त्यान्तर्यमेवात्राथशब्दार्थं मन्यते, तथापि यदि सविशेषब्रह्मजिज्ञासैवात्र प्रस्तुता, न निर्विशेषप्रतिज्ञा प्रौढिवादमात्रमाश्रित्य; तर्हि शान्तः कोलाहलः, श्रीभाष्यानुयायिनां कर्मविचारानन्तर्याथशब्दार्थत्वानुबन्धी। यथा च "अथातो ब्रह्मजिज्ञासे"त्यत्र न सविशेषब्रह्मजिज्ञासामात्रम्; देवतामीमांसयैव तस्या अपि गतार्थत्वात्, तथोपपादितमधस्तात्, उपपादयिष्यते चोत्तरत्र ॥

### तत्र तत्रोत्तरमीमांसायां तदुक्तमिति निर्देशायोगाच्च परिमलेन प्रौढिवादमाश्रित्यैकप्रबन्धतास्वीकारः, न तु शास्त्रैक्यस्य न्यायभेदात्

परिमलस्तु—धर्मजिज्ञासासूत्रस्य सकलवेदार्थविचारप्रतिज्ञापरतामात्रेण शास्त्रस्य गतार्थत्वं नोपपद्यते; इह व्युत्पादयिष्यमाणानां सिद्धब्रह्मपरवाक्यार्थनिर्णायकन्यायानां पूर्वतन्त्रव्युत्पादितन्यायेभ्यो विलक्षणत्वात्, इति शास्त्रारम्भप्रतिज्ञैक्येन वक्तृभेदेऽप्येकप्रबन्धतामात्रमापाद्यते, व्युत्पाद्यन्यायमात्रदृष्ट्या तु जिज्ञासाद्वयमपि पृथगेव ॥

तदाशयस्तु—पूर्वतन्त्रव्युत्पादितश्रुति-लिङ्गादिस्वरूपमन्यत्, उत्तरमीमांसागतं तु तदपरम्। एवमुभयोस्तत्प्राबल्य-दौर्बल्यविचारक्रमोऽपि विलक्षणः। तत्र "तदुक्तं तदुक्तमि"ति ब्रह्ममीमांसायां सूत्रणं तु कथञ्चन तयोर्वेदार्थविचारत्वोपाधिनैकनिबन्धत्वं साधयितुं समर्थम्, न तु तदप्येकान्ततः शास्त्रैक्यं पूर्वतन्त्रन्यायेनैवैकशास्त्र्यवादे। गतार्थत्वात् व्यर्थं "तदुक्तमि"ति सूत्रणम्। न हि न्यायसाम्ये विनाऽधिकाशंकां तस्यैव न्यायस्य सूत्रणम्, कुत्रापि धर्मजिज्ञासायाम्, ब्रह्मजिज्ञासायां वा। "तदुक्तं" "तदुक्तमि"ति सूत्रणमेकमेव पर्याप्तं कारणं शास्त्रानैक्ये ॥

### एक आत्मन इति सूत्रं शास्त्रैक्याविरोधि

शरीरातिरिक्तात्मस्वरूपसाधनं तु पूर्वतन्त्रे न सौत्रम्, वेदाध्ययनवत्तस्य मीमांसाद्वयाधिकारोपयोगित्वं त्वर्थसिद्धमेव। उत्तरमीमांसायामेव

तत्स्वरूपसाधनाशयस्तु सूत्रस्वारस्यनिरूपणावसरे विवेचितम्। तेन च ज्ञायते—कर्माधिकारः स्थूलशरीरातिरिक्तस्य लोकत एव सिद्ध्यति—जाग्रत्स्वप्नावस्थाद्वय-पर्यालोचनयापि; तथापि ब्रह्मविद्याविचारनिष्पाद्यमात्मस्वरूपं त्वध्यारोपापवादन्यायेन पूर्वतन्त्रे स्वर्गकामादिविध्यनुपपत्तिसिद्धं लोकान्तरगमनयोग्यमात्मस्वरूपं सिद्धवत्कृत्य शरीरातिरिक्तं निरूपयितुमेव—"एक आत्मनः शरीरे भावादि"ति सूत्रमुत्तरमीमांसायाम्। अतो नात्र पूर्वतन्त्रसिद्धस्यैवानुवादः। इत एवाऽऽकृष्य शरीरातिरिक्तात्मसाधनं पूर्वमीमांसायामिति तु तयोरेकप्रबन्धत्वेन वा, कर्माधिकारान्यथानुपपत्तिसिद्धस्यात्मस्वरूपस्यानुवादमात्रेण वेत्यन्यदेतत्॥

वस्तुस्थितिस्तु—नात्र कर्मविचाराधिकारिमात्रस्य जिज्ञासा; अन्यथा पूर्वतन्त्रसिद्धार्थानतिरिक्तस्वरूपस्यात्र जिज्ञासायां तथैवात्रापि तत्सूत्रणं वितथम्। अत एवात्र बन्ध-मोक्षाधिकारसिद्धये देहातिरिक्तात्मसद्भावः समर्थ्यत इति भाष्यभामत्यादिकम्॥

अनेन ज्ञाप्यते—बन्धाधिकार्यात्माऽन्यः, मोक्षाधिकारी चात्माऽन्यः। तत्र द्वयोरपि वैरूप्येऽप्येकत्र जिज्ञासा, एकत्रानुवादः, अपरत्र विधिरिति, स्वरूपं तूभयत्रैकमेव। तत्र बन्धाधिकार्यौपाधिकः, मोक्षाधिकारी तु सर्वोपाधिविरहितं संविन्मात्रप्रतीच्छः। व्यक्तं चैतत्—"यद्यपि बुद्धिपूर्वकारी नात्मनः परलोकसम्बन्धमज्ञात्वा प्रवर्तते; तथाप्यशनायाद्यतीतमात्मतत्त्वं नाधिकारेऽपेक्ष्यते; तस्याधिकारेऽनुपयोगादित्यादि भाष्ये। अतो नानेन पूर्वोत्तरमीमांसयोरैक्यम्; विषयभेदात्॥

अपशूद्राधिकरणादिपौनरुक्त्यानुपपत्तिः शास्त्रैक्ये, अतो न
कर्मविचारानन्तर्यमथशब्दार्थः

अपशूद्राधिकरणम्, देवताधिकरणं वोभयोर्यदि भिन्नविषयं भूषणानुवादोक्तरीत्या, तावताऽपि शास्त्रभेद एव सिद्ध्यति, येनाधिकारिभेद एव साधितो भवति, इति कर्मविचारानन्तर्यपक्षस्य तथाऽनुवादः प्रतिकूल एव॥

एकत्रोक्तस्यान्यत्रोक्तिः शास्त्रैक्य एवोपपद्यत इति भूषणं वदति। तत्र कुतो न पौनरुक्त्यम्, पौनरुक्त्यस्यादोषत्वे कथं वा शास्त्रपर्यवसानम्? न्यायसामान्ये हि न्यायविचारात्मके शास्त्रे विनाऽधिकाशङ्कां पौनरुक्त्यं

दोषायैव, अधिकाशङ्कायां तु सत्यं तद् न दोषाय; न्यायान्तरसूत्रणार्थत्वात् ॥

तत्र च कर्मविचारानन्तर्यस्यैवाथशब्दार्थत्वेऽपशूद्राधिकरणम्, देवताधिकरणं वा वितथम्। कर्मविचारमनपेक्ष्य साधनचतुष्टयसम्पन्नस्यैवाधिकारित्वे तु कर्मविचाराधिकारप्रयोजकं वेदाध्ययनं विनाऽपि ब्रह्मविचाराधिकारो मा भूदिति शङ्कावारणार्थम्, कर्मविचारेऽनधिकारेऽपि ब्रह्मविचारेऽधिकारो भवितुमर्हतीति निरूपणार्थं चैवाधिकरणद्वयम्, इत्यधिकरणद्वयमिदं कर्मविचारानन्तर्यं नाथशब्दार्थ इति विवेचयति ॥

### परिमलस्य, शतभूषण्या वा न शास्त्रैक्ये तात्पर्यम्

शतभूषण्या परमतोक्तरीत्यैकशास्त्र्येऽभ्युपगमेऽपि तदभिमतकर्मविचारानन्तर्यार्थत्वपरित्यागः स्वभिमतमभिप्रेत्यैव; परिमलेऽपि ह्यनुबन्धचतुष्टयभेदमङ्गीकृत्यैकग्रन्थत्वं पुराणानां सर्वेषां पुराणत्वेनेव, मीमांसात्वेन मीमांसैक्यं च "पुराण-न्याय-मीमांसे"तिवचनसिद्धमभिप्रेत्यैव, नैकाधिकारिविषयकत्वादिकमपेक्ष्य। तत्र भूषणं श्रीभाष्यमन्यद्वा यद्यधिकारिभेदमङ्गीकृत्यैव कथञ्चन वेदार्थविचारत्वोपाधिमात्रेणैकशास्त्र्यमभिप्रैति, तर्हि स्वागतमैकशास्त्रवादस्य; परन्तु नेदं परिमलाभिप्रेतमपीति मन्तव्यम्। अभ्युपगच्छति च भूषणम्—"तथापि भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन कर्मविचारानन्तर्यार्थत्वस्याप्रसक्तेरि"ति परिमलानुवादेन ॥

### परिमलोदरणं शास्त्रभेदमेव साधयति; न च तेन प्रयोजनम्, अद्वैतमते त्वस्ति प्रयोजनं शास्त्रभेदस्वीकारस्य

एतदेवाजागलस्तनायमानमैकशास्त्र्यं भूषणमपि स्वीकरोति, इति यदि परिमलोक्तरीत्या कर्मविचारानन्तर्याथशब्दार्थत्वं परित्यजति, तर्हि कथमथशब्दार्थविचारे विप्रतिपत्तिः? किं वा प्रयोजनं श्रीभाष्यस्य, भूषणस्य वैकशास्त्र्यस्य परिमलाभिमतस्यैव स्वीकारेण स्वघातकेन ॥

ऐकशास्त्र्यवादनिरासप्रयोजनं त्वद्वैतिनाम्, न केवलमधिकारिभेदव्यवस्थापनम्, किन्तु विषयभेदनिरूपणमपि। न हि धर्मजिज्ञासाविषयसाध्यधर्म एवात्र जिज्ञास्यः; किन्तु सिद्धं ब्रह्मैवात्र जिज्ञासाविषय इति संप्रतिपन्नम्। सिद्धत्वं च ब्रह्मणो दध्यादेरिव क्रियाशेषत्वमप्यभिप्रेत्य

वा, तदनपेक्ष्य वा। आद्ये किमर्था ब्रह्मजिज्ञासा पृथक् सूत्रणीया। यदि तूपासनादिक्रियाशेषतां विना ज्ञानमात्रेण फलमपि ब्रह्म, इति न क्रियाया गन्धमात्रस्याप्यत्रानुप्रवेशः, तर्हि न केवलत्वं कर्ममीमांसायाः, किन्तु देवतामीमांसाया अप्यविषयो निर्विशेषं ब्रह्मैव विषयतया, फलतया चैकान्ततः सिद्धमिति जिज्ञासासार्थक्यम्। व्यक्तं चैतद् भाष्य एव समन्वयसूत्रान्ते। अत ऐक्यज्ञानं यदि न शास्त्रार्थः, किन्तु कर्मोपजीव्युपासनमेव, तर्हि किमनयाऽपरयाऽपि जिज्ञासया ?

पूर्वोत्तरमीमांसयोर्लक्ष्यभेदेऽपि कर्मोपासनाकाण्डयोरपि
प्रामाण्यम्, अद्वैतमतेऽपि तत्रैव प्रतिष्ठानात्

तत्रैक्यज्ञानं परमं लक्ष्यम्, अवान्तरं तु यथाऽधिकारं विविदिषार्थतया, ज्ञानार्थतया वा कर्मयोगः, भक्तियोगोऽपि लक्ष्यमेव। अत एव भाष्यम्—"ब्रह्मजिज्ञासे"ति प्राधान्येन प्रतिज्ञा, तदुपयोगिनां जिज्ञासा त्वर्थसिद्धेति न पृथक् प्रतिज्ञा तेषामपेक्ष्यत इति। अतः कर्मकाण्डः, उपासनाकाण्ड इति च समाख्या तन्मात्रप्राधान्येन, ऐक्यज्ञानशेषतया। ज्ञानकाण्ड एव तु सर्वेषां प्रतिष्ठा। अत एव—"तत्त्वमसी"ति कर्मोपासनाकाण्डार्थानुवादपूर्वकं जीवेश्वरैक्योपदेशः। अत एव—

"सन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।"

इति कर्म-सन्यासयोरुभयोरपि तत्तदधिकारभेदेन व्यवस्था। परमार्थतस्तु—तयोरेकत्र फलत्वमेवेति निरूप्योभयोरपि पर्यवसानमैक्य एवेति विवेचितम्—

"एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति॥"

इति। तत्र कर्मयोगाधिकारी भक्तियोगाधिकारम्, भक्तियोगी कर्माविधानेन सह ज्ञानयोगाधिकारं च प्राप्य मुक्तो भवतीति सोपानपरम्परया सर्वस्यापि वेदस्यैक्यज्ञाने प्रतिष्ठेति गीयते॥

कर्मणाम्, उपासनायाश्च ज्ञानोपयोगप्रकारः

तत्र कर्मणां ज्ञानप्रतिबन्धककल्मषनिर्हरणार्थतया, भक्तेश्चित्तैकाग्र्यसाधनविधया च ज्ञान उपयोगः। एवं कर्मणां भक्तेश्चैक्यज्ञानशेषत्वमभिप्रेत्यैवोपनिषत्सु, पुराणेतिहासादिषु च कर्मयोग-भक्तियोगज्ञानानामेकत्रैकीकृत्योपदेशः। अतो नाद्वैतवादेऽपि कर्मकाण्डम्, उपासनाकाण्डं वा नैकान्तेनाप्रमाणम्, यथायथं यथासम्भवं वा तत्तत्प्रामाण्यात्॥

'विविदिषन्ति' वाक्येन जन्मान्तरीयकर्मणाऽपि ज्ञानोपकारेऽपि
न साक्षात् कर्मणां साक्षात्कार उपयोगः

"विविदिषन्ति" इति वाक्यं ज्ञानप्रतिबन्धकनिरासद्वारा ज्ञानोपयोगं कर्मणामभिप्रैत्याद्वैतवादेऽपि । स्मृतिरप्यत्र—

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥"

इति न निह्नवमर्हति । कर्मणां प्रतिबन्धनिवृत्तिद्वारोपयोगो जन्मान्तरेऽपि भवितुमर्हति, इति 'विविदिषन्ति'वाक्यमात्रेण तत्तज्जन्मन्यनुष्ठानमेव न कर्मणां ब्रह्मविद्याधिकारप्रयोजकमित्येकान्तः । व्यक्तं चैतद् भामत्याम् ॥

तत्र वेदनं न वेदान्तवाक्याधीनं श्रौतं प्रत्यक्षम्, किन्तु विचारपूर्वकं तदर्थानुसन्धानं श्रवणमात्रेण साक्षात्कारपर्यवसायि, न चोक्तवाक्यार्थज्ञाने कर्मणामपेक्षा । साक्षात्कारो हि शम-दमादिसम्पन्नानामुक्तविचारजन्यज्ञानवतामपि, इति न तत्र कर्मणामपेक्षा ॥

संन्यासानन्तर्यं नाथशब्दार्थः, अन्यथा गृहस्थविधुरादीनां ब्रह्मविद्यानधिकारापत्तिः; कर्मवतामेवाधिकारे तु
संन्यासिनां तत्रानधिकारः

तत्र साधनचतुष्टयसम्पत्तावुपरतिरपि वर्तते । सा च सन्यास एवेति केचन, परे तु गृहस्थसाधारणचित्तविक्षेपराहित्यमात्रमिति । तत्र संन्यासो वैराग्यमात्रेणापि भवति विनाऽपि तितिक्षाम्, शम-दमादिकं वेति बहुशः प्रत्यक्षम् । अतः सन्यासानन्तर्यमात्रं नाथशब्दार्थतामर्हति ॥

श्रीभाष्यसिद्धान्ते यदि कर्मवतामेवाधिकारः, तर्हि किं संन्यासिनां ब्रह्मविद्यायां नाधिकारः? अतो न सन्यासमात्रम्, चित्तविक्षेपराहित्यमात्रं वा पर्याप्तम्, किन्तु साधनचतुष्टयसम्पत्तिरपि । सा च गृहस्थानामपि भवति, किं बहुना? विधुराणामपि, देवतानामपि । चित्तविक्षेपरहिता अपि सन्यस्तप्राया एव यदि गृहस्थादयोऽपि, ते तत्प्रयोजकोत्कटवैराग्येण भूषिताः, विना साधनचतुष्टयम्, विनाऽपि कर्मविचारं तत्तत्सिद्धान्तविचारमात्ररसिकास्तु कर्मफलानित्यत्वनिर्णयशून्याः, सत्यम्, बहुशो दृश्यन्ते, तद्दर्शनं तु न किञ्चित्करम् । तेषां न मोक्षफलसिद्धिरिति सर्वत्र समानम् । अद्वैतिनस्तु—

"दिने दिने च वेदान्तश्रवणात् भक्तिसंयुतात् ।
गुरुशुश्रूषया चैव कृच्छ्राशीतिफलं लभेत् ॥"

इति वेदान्तश्रवणं सभक्ति क्रियमाणमदृष्टार्थमसत्यपि तदर्थसाक्षात्कार इति वदन्ति । सर्वथा तु कर्मविचारानन्तर्यं नात्रार्थशब्दार्थः ॥

कृतोपनयनानां साधनचतुष्टयसंपन्नानां सर्वेषामपि
ब्रह्मविद्याधिकारोऽद्वैतसिद्धान्ते

तत्र कर्मजिज्ञासाया इव ब्रह्मजिज्ञासाया अपि वैधत्वेऽपि विरक्तानां विनाऽपि कर्मविचारं स्नात्वा संन्यासाधिकारः, अविरक्तानां तु कर्मकाण्डार्थमात्रविचारेण गृहस्थाश्रमाधिकारः; कर्मानुष्ठानर्थत्वात् कर्मविचारस्येति नैकान्तिकता विचारस्य । ब्रह्ममीमांसाधिकारस्त्वधीतसाङ्ग-सशिरस्कवेदस्यैव, इति धर्मजिज्ञासातो धर्मतत्त्वमिव ब्रह्ममीमांसामात्रेण भाष्यादिविधयाऽनादिसम्प्रदायसिद्धानामेव न्यायानां जैमिनिनाऽपि सूत्रणात् सम्प्रदायतोऽवगमः सम्भवति; अन्यथा देवतानां ब्रह्मविद्याधिकारः कथं कृतजैमिनीयकर्मविचाराणामपि, इति धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासा सूपपन्ना । यथाधिकारं खलु वैधानां व्यवस्था, संन्यासिनां गृहस्थकर्मत्याग इव ब्रह्मचर्यादेव सन्यासयोग्यानामधिकारित्वाद् ब्रह्मजिज्ञासायाः । नैतावतोपनयनादेरपि साधनत्वप्रसङ्गः, विस्तृतं च सिद्धान्तसिद्धाञ्जनेऽकृतोपनयनानां न ब्रह्मविचारः इति "धर्मजिज्ञासायाः प्रागपी"ति भाष्यार्थविवरणावसरे, इति तत एवाधिकमवगन्तव्यम् ॥

उत्पन्नोत्कटवैराग्याणां साधनचतुष्टयसंपन्नानां चोपन-
नयनादिनियमवत् कर्मविचारः संपूर्णो न नियतः,

तत्रोपनयनम्, साङ्गवेदाध्ययनं च वेदार्थविचारत्वाद् ब्रह्मविचारस्य साधनचतुष्टयसम्पन्नानामपि नियमेन, तदनन्तरमेव ब्रह्मचारिणामपि सन्यासाधिकारः । यस्य तूत्कटं वैराग्यमुत्पन्नमात्रस्य, तस्य तूपनिषन्मात्राध्ययनं पर्याप्तमेव, यमेवाधिकृत्य "उपनिषदमावर्तयेदि"त्युपनिषन्मात्राध्ययनविधिः । सूचितश्चायमप्यर्थः सिद्धान्तसिद्धाञ्जने । अतो विरक्तानामधीतवेदानामपि स्नानात् पूर्वं न कर्मजिज्ञासाऽपेक्षा; कर्मानुष्ठानस्यानपेक्षितत्वात् । न्यायानुसन्धानार्थं दर्शनान्तराणामिव मननदृष्ट्या मीमांसाशास्त्रानुशीलनं स्पष्टप्रतिपत्त्यर्थमुपयुक्तांशमात्रविषये न वार्यते । सर्वथा कर्मानुष्ठा-

नार्थं सम्पूर्णजैमिनीयजिज्ञासा ब्रह्मजिज्ञासापूर्ववृत्ततया न नियता। अतो न तदानन्तर्यमत्राथशब्दार्थः ॥

कर्मफलानित्यत्वनिर्णयो न जैमिनीयकर्मविचारे, किन्तु युक्त्युपबृंहितवेदान्तवाक्येन

तत्र कर्मफलानित्यत्वं न जैमिनीये विचारे कुत्रापि। तन्निर्णयो हि— "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति युक्त्युपबृंहितवेदान्तवाक्यानुशीलनेनैव, यद् न पूर्वमीमांसाया विषयः, इति कर्मफलानित्यत्वनिर्णयाय न कर्मविचारापेक्षा। न च स हितोपदेशवचनमात्रेण, येन तत एव ब्रह्मजिज्ञासाऽपि स्यात्, इति ब्रह्मजिज्ञासावैफल्यापातः। तत्र तस्याध्ययनकाल एव प्रतीतत्वेऽपि तन्निर्णयो न जातः; ज्ञानप्रतिबन्धकदुरितप्रतिबन्धात्। निवृत्ते तु कर्मानुष्ठानेन तस्मिन् दुरिते सर्वाधिकारसम्पत्तिरिति सर्वं सुस्थम् ॥

श्रीभाष्यमते रागप्राप्तत्वाद् जिज्ञासाद्वयस्य कर्मजिज्ञासाया उपरमोऽपि स्यात्

तत्र को वा विप्रतिपद्यते धर्मजिज्ञासायाम ? वैधत्वात्तु तस्या नियतैव साऽद्वैतसिद्धान्तेऽपि, श्रीभाष्यसिद्धान्ते तु यत्राक्षरग्रहणमेवाध्ययनफलम, "ज्ञेयश्चे"ति विध्यन्तरमेव विचारे, तत्र सत्यपि विधौ जिज्ञासाद्वयमपि रागप्राप्तमेव, न नियतमित्यभिप्रेयते, इत्युपरमेयुरपि केचन धर्मजिज्ञासायाः, ब्रह्मजिज्ञासायाश्च। हितोपदेशवचनादपि शास्त्रार्थनिर्णयं स्वकर्तव्यं मत्वा, न त्वद्वैतसिद्धान्ते ॥

साधनचतुष्टयसंपत्तिस्तु नियतमधिकारिविशेषणम्; अन्यथा कृतेऽपि कर्मविचारे न फलम्

तथाच विनापि कर्मविचारं ब्रह्मविचारः साधानचतुष्टयसम्पत्तावाऽऽतत्त्वज्ञानमावर्त्यमानः फलाय कल्पते, विनाऽपि साधनचतुष्टयसम्पत्तिं निर्णीतस्याविरक्तस्य पश्चाद्वैराग्यसम्पत्तावपि विना श्रवण-मननाद्यभ्यासं न साक्षात्कारो भवितुमर्हति ॥

तथाचाधीतवेदस्य विचारकुशलस्याक्षोभ्यनिर्णयलिप्सोरादितः कर्मतत्त्वविचारेण कर्मतत्त्वनिर्णयः कामं भवतु, किं वा तेन कर्मविचारेण ब्रह्मविचारस्य कृतं भवति ? ब्रह्मजिज्ञासा हि ततो भिन्नाधिकारिका

भिन्नविषया, भिन्नप्रयोजना च स्वतन्त्रा किमिति धर्मजिज्ञासाया मुखमपेक्षते ॥

कर्मप्रमाणं तत्तच्छाखामात्रम्, ब्रह्मणि तु सर्वा उपनिषदः

तत्र "स्वाध्यायोऽध्येतव्यः" इत्यत्र स्वत्वस्य विवक्षया शाखान्तराध्ययनस्यायोग्यत्वेऽपि 'गुणोपसंहार'न्यायेन 'सर्वशाखाप्रत्यय'नयेन वा तत्तदुक्तांशमात्रस्याचार्यतो ग्रहणं नावैधं कर्मकाण्डे, उपनिषत्सु तु नायं नियमः। अत एव "उपनिषदमावर्तयेत्" इति विना स्वशब्दं तदध्ययनस्य प्रतिप्रसवः; अन्यथेशाद्युपनिषदां सर्वासां भगवत्पादानां भाष्यम्, ततोऽर्वाचीनानामपि स्वतन्त्रं तद्विरुद्धमापद्येत ॥

अतोऽविरक्तानां कर्मकाण्डस्य यावद्वैराग्यं स्वशाखामात्राध्ययनम, विरक्तानां तु सर्वोपनिषन्मात्राध्ययनमिति प्रतिप्रसवविध्यन्यथानुपपत्त्या व्यवस्थाप्यते। तत्र विरक्तावस्थायां दृष्टार्थतया साङ्ग-सशिरस्कवेदाध्ययनं कर्तव्यम्, उपनिषदां तु सर्वासामध्ययनं कर्तव्यम्। न ह्यन्यथा गतिसामान्यनिर्णयः सम्भाव्यते। अतो "धर्मजिज्ञासाः प्रागप्यधीतवेदान्तस्ये"ति सुस्थम्। अधीतसर्ववेदान्तस्येति हि तदभिप्रायः, नोपनिषदतिरिक्तवेदभागाध्ययनं न कर्तव्यमिति तदाशयः ॥

तत्र 'कर्मविचिचारयिषेयं प्रतिबध्नात्येव ब्रह्मविचारम्' इति वदत् भूषणं कथं कर्मविचारानन्तर्यं ब्रह्मजिज्ञासाया वदति?

कर्मविचारस्य ब्रह्मविचारस्य च कथं
पूर्वोत्तरभावः

तत्र कर्मविचारं कश्चित् कामं स्वयमेव वा करोतु, ब्रह्मविचारस्तु गुर्वधीन एवेति श्रीभाष्यमतम्, भगवत्पादराद्धान्तस्तु द्विविधोऽपि विचारो न काम्यः न वा स्वयम्, किन्तु वैधः; गुर्वधीन एवेति; अर्थज्ञानार्थत्वादध्ययनस्य भगवत्पादमते। तत्र श्रीभाष्यसिद्धान्तेऽप्यध्ययनविधेरक्षरग्रहणान्तत्वेऽपि "ज्ञेयश्च" इति विध्यन्तरेण पुरुषार्थानुशासनानुसारेण वैधत्वे कथं विचारद्वयस्यावैधत्वम्? यथाकामं वेति तु चिन्तनीयम् ॥

तत्र कर्मविचारानन्तरं ब्रह्मविचार इति किं श्रौतं वचनमाश्रित्य? उत कारणान्तरेण?

"परीक्ष्य लोकानि"ति वचनं भूषणोक्तरीत्या न
कर्म-ब्रह्मविचारयोः क्रमे मानम्

तत्र भूषणं वदति—"परीक्ष्य लोकान्" इत्यत्र "परीक्ष्ये"ति कर्मविचारानन्तर्यं ब्रह्मविचारे बोध्यत इति श्रौतोऽयं क्रमः—इति। तत्र हि "लोकान् परीक्ष्ये"ति लोकपरीक्षणं श्रौतम्, न तु कर्मपरीक्षणम्। परीक्ष्य तु निर्वेदमायादिति तु परीक्षणस्य निर्वेदसाधनत्वं बोध्यते, न तु ब्रह्मविचारसाधनत्वम्। न च निर्वेदोऽप्युत्कटवैराग्यापर्यायो न ब्रह्मविचारहेतुः। स च यदि वैराग्यपादोपदर्शितः तावता किमायतं कर्मविचारानन्तर्यस्य ब्रह्मविचारे। अतो नात्रोक्तवचनबलात् कर्म-ब्रह्मविचारयोः श्रौतः क्रमः॥

कर्मण उपासनाङ्गत्वे, ज्ञानाद्वारैवाऽदृष्टार्थत्वात् नार्थक्रमोऽप्यत्र

कर्मणामुपासनाङ्गत्वमपि तत्पूर्ववृत्तत्वं न साधयितुमलम्। अङ्गत्वं हि प्रधानफलोपधानशक्तिमादधीत पूर्वमपि, परमपि। अतो नाङ्गत्वानुपपत्त्या कर्म-ब्रह्मविचारयोरार्थक्रमोऽपि। "अग्निहोत्रं जुहोति" "यवागूं पचती"त्यत्र हि होमद्रव्यत्वात् यवाग्वा होमसाधनसम्पादनं पूर्वाङ्गमेव भवितुमर्हति, नोत्तराङ्गम्; दृष्टार्थत्वाद् यवाग्वाः। न च कर्मोपासनस्य दृष्टविधयाऽङ्गम्। तच्चोत्तराङ्गत्वेऽपि निर्वहति। किं वा "यवाग्वा जुहोती"ति होमसाधनतया यवाग्वा इव कर्मणामुपासनाङ्गत्वबोधकमविप्रतिपन्नं प्रमाणम्? "कषाये कर्मभिः पक्वे" "ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" इति तु ज्ञानप्रतिबन्धकनिरासार्थत्वं स्वतन्त्रं कर्मणः फलमाम्नाति। तत्तूपासनोत्तराङ्गत्वेऽपि युज्यते; क्रियमाणेऽप्युपासने फलप्रतिबन्धनिरासार्थत्वात्। उभयफलत्वं हि 'गोदोहन'न्यायेन द्रव्य-कर्मणोरेव। तत्र द्रव्यस्यापि तत्कर्माश्रयणे न फलसाधनत्वात्, अत्र च तदभावः, न च तत्राङ्गाङ्गिभावोऽपि; तन्त्रेणैव तत्र गोदोहनस्य स्वतन्त्रफलस्य तत्र विनियोगात्॥

तत्र फलाभिसन्धिराहित्येनैव काम्यकर्मणां कल्मषनिर्हरणहेतुत्वम्। सर्वथा तु नोपासनापूर्वाङ्गत्वे कर्मणां किमपि प्रमाणम, इति नात्राऽऽर्थः क्रमः॥

कर्म ब्रह्मविचारयोर्न पाठक्रमः

एतेन—पाठक्रमोऽपि—व्याख्यातः। न हि विना शेष-शेषिभावं पाठक्रममात्रं क्रमनियामकम्, अन्यथेष्टि-पशु-सोमानामप्यङ्गाङ्गिभावापत्तेः। न च स्वतन्त्रफलसाधनतया विहितानि कर्माणि कर्मान्तराङ्गतामर्हन्ति॥

सत्यं शेष-शेषिभावाभावेऽपि—"दर्श-पूर्णमासेनेष्ट्वा सोमेन यजेते"ति-श्रौतः क्रमोऽङ्गिनोरपि भवति। न चात्र सोऽपि। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति हि ज्ञानप्रतिबन्धकपापनिरासार्थतया कर्मणामुपयोगं प्रतिपादयति। स च फलाभिसन्धिरहितानां काम्यानाम्, नित्यानां वा कर्मणामित्यन्यदेतत्। न चायं नियमोऽपि—कर्मभागः प्राचीनः, ब्रह्मभागः पराचीनः—इति। उपनिषद्यपि हि नाचिकेतचयनादीनां विधानं दृश्यते, बृहदारण्यके चान्ते सन्तानार्थाः कर्मभेदाः। न च पूर्वत्वमात्रेणाङ्गत्वमिति तूक्तमेव॥

मीमांसयोर्न पाठक्रमोऽपि

अस्तु वा कथञ्चनात्र पाठक्रमः, तावताऽपि न मीमांसयोः पाठक्रमः, इति कथं तयोरङ्गाङ्गिभावः। उत्तरमीमांसापेक्षितन्यायसमर्पणं यथा पूर्वमीमांसायाम्, तथा पूर्वमीमांसापेक्षितशरीरातिरिक्तात्मसाधनन्यायापेक्षा पूर्वमीमांसाया अपि, इति नात्रोपजीव्योपजीवकभावनिबन्धनः पाठक्रमो नियन्तुं शक्यः॥

वेदपाठक्रमानुसारिण्यौ न पूर्वोत्तरमीमांसे

वेदक्रमानुसारेण मीमांसयोरपि क्रमः; मीमांसाया अङ्गत्वात्, वेदास्याङ्गित्वादिति तु न युक्तम्;

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥"

इति वचनं धर्मज्ञाने फले साधनीये वेदस्योपकारकत्वात् सत्यं वेदाङ्गत्वं बोधयतीव, वस्तुतस्तु क्रिययोरेवेतिकर्तव्यत्वादङ्गित्वम्, अङ्गत्वं वा, न तु द्रव्य-क्रिययोः। अत एव "सोमेन यजेते"त्यत्र सोमस्य नेतिकर्तव्यतात्वमिति व्यवस्था॥

ततो 'गुणकामाधिकरण'न्याय एव शरणम्। तत्र च मीमांसामाश्रित्य वेदस्यार्थज्ञानसाधनत्वमिति मीमांसा सत्यमङ्गम्, परन्तु न वेदपाठक्रममनुसृत्य मीमांसाक्रमः पूर्वमीमांसायाम्, उत्तरमीमांसायां वा॥

मीमांसाद्वयस्य नाङ्गाङ्गिभावः

अस्तु वा कथञ्चन कर्मकाण्डविचारमात्रं पूर्वमीमांसायाम्, वेदान्तमात्रजिज्ञासोत्तरमीमांसायामिति; तथापि तत्तद्वेदभाग-तत्तन्मीमांसयोर-

ङ्गाङ्गिभावेन किं वाऽयातमङ्गयोर्मीमांसयोः? न हि तयोरङ्गाङ्गिभावे किमपि प्रमाणमस्ति ॥

न व्याख्येयक्रमेण व्याख्यानक्रमोऽपि

एतेन—व्याख्येयक्रमेण व्याख्यानक्रमोऽपि—परास्तः। न च जैमिनिना शिष्येण पूर्वं पूर्वमीमांसाशास्त्रं प्रणीतम्, पश्चादुत्तरमीमांसा बादरायणेनेत्यत्र किमप्यस्ति प्रमाणम्। सत्यं जैमिनिमतं निरस्यते बादरायणेन, जैमिनिनाऽपि तु बादरायणोऽनूद्यते। सत्यपि तथा क्रमे तयोरङ्गाङ्गिभावाभावे किम्प्रमाणकः क्रमनियमः? विवेचितं चानुपदम्—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"ति ॥

तत्राविरक्तानां विचारकाले प्रथमं कर्मविचारो नियतः, न तु सर्वेषाम्। अतो नात्र क्रमनियमः ॥

प्रतिबन्धकाभावविधया न कर्मविचारपूर्ववृत्तता भूषणोक्तरीत्या

यत्तु—कर्मजिज्ञासाया ब्रह्मविचारप्रतिबन्धकत्वात् प्रतिबन्धकाभावसंपादकतया कर्मविचारापेक्षा—इति, तत्र तत्प्रतिबन्धकाभावः कर्मजिज्ञासाऽभावः, न तु कर्मविचारः, इति कथं कर्मविचारः स्वयं ब्रह्मविचारं प्रयोजयेत्?

पूर्वमीमांसान्यायापेक्षोत्तरमीमांसायामिति भूषणोक्त्यनुवादः

एतेन—ब्रह्मविचारस्य कर्मविचारापेक्षा तदीयप्रथमाध्यायविषयश्रुतिस्मृत्यादिरूपे प्रमाणे, द्वितीयाध्यायविषयार्थकर्मभेदविचारापेक्षोपासनाभेदविचारे, तृतीयाध्यायार्थाङ्गाङ्गिभावस्य परविद्यासु वर्णधर्मेषु, पाशुपतवैश्वानरविद्यादिश्रुतभस्मधारण-प्राणाग्निहोत्रादिषु चाङ्गाङ्गिभावनिर्णये, "नास्य ब्रह्मवित् कुले भवती"ति श्रुतफलान्तरप्रयोजकत्वे, तुरीयाध्यायार्थक्रत्वर्थ-पुरुषार्थत्वचिन्तायाः, "विविदिषन्ती"ति वाक्यश्रुतयज्ञपदार्थः प्रसिद्धो यज्ञो वा, तत्सदृशोऽन्यो वेति निर्णये प्रकरणान्तराधिकरणस्य, दृष्टान्तविधया ब्रह्ममीमांसायामुपन्यस्तन्यायविशेषाणां सूत्रार्थनिर्णये, वेदाध्ययनविधिविचारस्या"ध्ययनमात्रवतः" इति सूत्रार्थनिर्णये च वर्तते इति—परास्तम् ॥

पूर्वमीमांसाप्रथमाध्यायन्यायापेक्षा नोत्तरमीमांसायाः

तत्र न प्रथमाध्यायार्थश्रुति-स्मृतिप्रामाण्यं ब्रह्मविचारस्योपजीव्यम्; शास्त्रयोनित्वस्य ब्रह्ममीमांसायां पृथक् सूत्रणात्, तस्य तन्मूल सर्वप्रमाणो-

पलक्षणत्वात् । अत एव "धर्मं जैमिनिरत एव" "मध्वादिष्वसंभवादनधिकारं जैमिनिः" "परं जैमिनिर्मुख्यत्वात्" "अन्यार्थं तु जैमिनिः प्रश्न-व्याख्यानाभ्यामपि चैवमेके" "परामर्शं जैमिनिरचोदना चापवदति" "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति जैमिनिमतनिरसनमुत्तरमीमांसायां जैमिनिनिरपेक्षत्वम्, तस्य तन्मतानुपजीव्यत्वं च विशदयति; अन्यथा ह्युपजीव्यविरोधो बादरायणस्य स्यात् ॥

पूर्वमीमांसाद्वितीयाध्यायन्यायानपेक्षोत्तरमीमांसायाः

तत्तदुपासनभेदाभेदविचारार्थं स्वयं बादरायणेन तृतीयाध्यायतृतीयपादः सम्पूर्णः प्रवर्तितो गुणोपसंहारपादो नाम, यन्नाममात्रमद्वैतिनां हृदयशूलमिति भूषणादयो मन्यन्ते । अस्तु नाम सा हृदयशूलकथा, यदि द्वितीयाध्यायनिर्णीत एव प्रकारो ब्रह्ममीमांसायामवलम्ब्यते, तर्हि सर्वोऽपि स पादो वितथः ॥

तत्र यद्यपि द्वितीयाध्यायभेदहेतव एवोपासनभेदहेतुत्वेनानुसन्धीयन्त इव "चोदनाद्यविशेषादि"त्यादिपदेन रूपभेदादीनां ग्रहणात्; तथापि नात्र शब्दमात्रसाम्येऽपि त एव यथायथं विवद्यन्ते । तत्र संज्ञाभेदस्तत्तद्विधिघटको विवक्ष्यते, अत्र तूपासनासमाख्यामात्रम् । न च तत्र समाख्यया विधिघटकया कर्मभेदोऽभिप्रेतः । एवं रूपभेदोऽपि । उत्पत्तिशिष्टगुणावरोधे वचनान्तरेण तत्रैव प्रकरणे प्रवृत्तेन तत्र कर्मभेद उक्तः, अत्र तु न तथा, शाखाभेदेनोपासने हि कुत्र गुणस्योत्पत्तिशिष्टता, कुत्र चोत्पन्नशिष्टतेत्यत्र न नियामकं किमपि ॥

अभ्यासोऽपि प्रकरणगत एव कर्मभेदकः । न चात्र शाखाभेदेनोपासनपौनरुक्त्यं भेदोपादकम्, एवमन्यत्राप्यनुसन्धेयम्, इति द्वितीयाध्यायार्थः पूर्वमीमांसायाः, उत्तरमीमांसायश्च नैकः; सर्वथा तु पूर्वमीमांसागतन्यायानामेव गुणोपसंहारपादे विवक्षायां "चोदनाद्यविशेषादि"त्यादि वितथम् ॥

तत्रोत्तरमीमांसायां "चोदनाद्यविशेषादि"त्यादिपदार्थस्तु सम्प्रदायसिद्धो भाष्यकारैर्यथासम्प्रदायमुपपादयितुं शक्यते, एवमपि पूर्वमीमांसासूत्राणामपि परामर्शे न दोषः । बादरायणोऽपि जैमिनिमुखमेव साम्प्रदायिकं भावं ग्रहीतुमीष्ट इति तु न युक्तम् ॥

### पूर्वमीमांसातृतीय-तुरीय-पञ्चमाद्यध्यायन्यायानां नोत्तरमीमांसाया-मपेक्षा, सर्वत्रोभयत्र न्याय-तत्कार्यवैलक्षण्यं च

एतेन—तृतीयाध्यायोऽपि—व्याख्यातः। तत्र हि श्रुति-लिङ्गादिरङ्गाङ्गिभावनिर्णायकं तृतीयादिविभक्त्यादिकं विवक्ष्यते, उत्तरमीमांसायां तु न कुत्रापि तदीयश्रुति-लिङ्गादिकं परामृश्यते, किन्तु विलक्षणम्, नाङ्गाङ्गिभावनिर्णयो वाऽत्र फलम्, इति न तत्रापि बादरायणस्य जैमिन्यपेक्षा, किं बहुना ? चण्डमारुतमपि यथापरिमलमुत्तरमीमांसायाः पूर्वमीमांसोपजीवकत्वनिरासमात्रेण विश्रान्तं तत्रोपजीव्योपजीवकभावमसमर्थयच्च पूर्वोत्तरमीमांसोपजीव्योपजीवककथा कथामात्रं मत्वाऽत्र जोपमास्ते, इति क्रममादाय पूर्वोत्तरमीमांसयोः पौर्वापर्यं दुःसाधम् ॥

भाष्यकारस्तु सविस्तरं पूर्वोत्तरमीमांसयोः क्रमनियामकं किमपि प्रमाणं नात्रावसरतीति विविनक्ति ॥

तत्र कर्मविचार-ब्रह्मविचारयोः श्रौतः क्रमः "परीक्ष्य लोकानि" ति श्रुत्या न संभवतीति पूर्वमुक्तम्। श्रौतो हि क्रमोऽङ्गाङ्गिभावेन, उभयप्राधान्येन वाऽत्र दुस्साधः ॥

### कर्म-ज्ञानयोः, तद्विचारयोर्वा नाङ्गाङ्गिभावः

कर्मविचारस्य, कर्मणां वा ज्ञानप्रतिबन्धकदुरितनिरासद्वारोपकारकत्वेनाङ्गत्वमपि कर्मविचारपूर्ववृत्ततायां न वक्तुं शक्यत इत्यपि विवेचितम्। न च कर्म-ज्ञानयोः, तद्विचारयोर्वा शेष-शेषिभावः। "विविदिषन्ति यज्ञेन दानेने"ति हि विहितानां स्वतन्त्राणां यज्ञानां प्रतिबन्धकनिवृत्तिमात्रं फलमभिप्रैति, न तु तत्फलम्। ज्ञानं वाक्यार्थानुभवरूपं वाक्यस्यैवाप्रतिबद्धस्य फलम्, न यज्ञादेः। अतो न कर्म-ज्ञानयोरङ्गाङ्गिभावोऽत्र ॥

### कर्म नोपासनाङ्गम्

वेदनस्योपासनत्वे कर्मवदुपासनस्यापि पुरुषतन्त्रत्वाद् न यज्ञादिफलमुपासनम्। क्रियाणामङ्गाङ्गिभावः प्रकरणावसेयः—एकस्याफलत्वे, अपरस्य सफलत्वेऽपि नष्टाश्व-दग्धरथवत्। न हि सफलम्, स्वतन्त्रं च परस्पराकाङ्क्षया सम्बन्धमर्हति, येन वाक्यविधयाऽप्यङ्गाङ्गिभावोऽत्र निर्धारयितुं शक्यते। अतोऽत्राप्युपासनाप्रतिबन्धकनिरास एव कर्मणां फलम्, नोपासनाङ्गं कर्म ॥

कर्म-ज्ञानयोः समुच्चयेन नोपकार्योपकारकभावः

अधिकारस्तु 'गोदोहनपशुकाम'न्यायेन द्रव्य-कर्मणोः, न तु क्रिययोः, क्रियामाश्रित्य क्रियान्तरस्य फलसाधनत्वं सत्यमुत्तरक्रियोपकारकत्वमात्रेण भवति। उपकारकत्वं च फले जननीये, इति प्रतिबन्धकनिरासविधया, समुच्चयेन—सन्निपत्योपकारकतया, आरादुपकारकतया, समप्रधानभावेन वोपकारकत्वं वक्तव्यम् ॥

कर्मणां वाक्यार्थज्ञाने नोपयोगः

तत्र समुच्चयपक्षायोगः संप्रतिपन्नः। द्रव्यस्यैव सन्निपत्योपकारकत्वाद् नात्र सोऽपि संभवति। फलोपकारकत्वेनारादुपकारकत्वपक्षस्तु कर्मोपासनयोर्न संभवति; उपासनस्य भगवदनुग्रहद्वारा फलसाधनस्य भगवदनुग्रहोत्पत्तौ नान्यापेक्षा ॥

वाक्यजन्यज्ञानं तूत्पन्नमात्रं तत्सहकारिकारणं प्रमाणम्, श्रवणादिमात्रं वा विहितमपेक्षते, न तु कर्मापि वाक्यार्थज्ञानस्य हेतुः; दृष्टस्यादृष्टानपेक्षत्वात्, इति कर्म-ज्ञानयोः तद्द्वारा कर्मविचार-ब्रह्मविचारयोर्वा न शेष-शेषिभावः ॥

यत्तु—"अथातो धर्मजिज्ञासा" इत्यत्र कथं वेदाध्ययनानन्तर्यार्थशब्दार्थत्वमवधारितम्? तत्र क्रमनियामकश्रुत्यर्थ-पाठ-स्थान-मुख्य-प्रवृत्त्याख्येषु किं वा वर्तत इति—भूषणम्?

"अथातो धर्मजिज्ञासे"त्यत्राध्ययनानन्तर्यार्थत्वं त्वर्थक्रमात्

तत्राद्वैतमतेऽध्ययनविधेरर्थज्ञानार्थत्वात्, वेदेनाधीतेन ज्ञाने जननीय इतिकर्तव्यतया तद्विचारस्य विधानात्, विचारार्थज्ञानयोरङ्गाङ्गिभावाच्चाध्ययनविधिरेव साध्य-साधनभावं विचारार्थज्ञानयोर्ज्ञापयति, इत्यर्थक्रमात् तद्विचारार्थज्ञानयोः क्रमोऽर्थसिद्धः, इत्यध्ययनानन्तरं धर्मजिज्ञासेति युक्तम् ॥

श्रीभाष्यमते तु धर्मजिज्ञासायां वेदाध्ययनानन्तर्यार्थत्वमपि न संभवति

श्रीभाष्यमते त्वध्ययनस्याक्षरग्रहणमात्रपर्यन्तत्वादध्ययनस्य नार्थज्ञानं फलम्, न वा विचारस्येतिकर्तव्यतात्वम्, इति वेदाध्ययनानन्तर्यस्याथशब्दार्थत्वं धर्मजिज्ञासासूत्रेऽपि दुर्लभम् ॥

### ब्रह्मजिज्ञासाया वेदाध्ययन-कर्मविचारोभयानन्तर्यार्थत्वपक्ष-निरासो भाष्य एव

तत्र वेदाध्ययनानन्तर्यं ब्रह्मजिज्ञासाया अप्यध्ययनविधिप्रयुक्तत्वाद् यद्यपि नाबाधम्; तथापि तस्य जिज्ञासाद्वयसाधारणत्वादत्रापि पृथक् प्रतिज्ञावैयर्थ्यापत्त्या न तद् संभवति। अत एव भाष्यम्—"स्वाध्यायानन्तर्यं तु समानम्" इति। साधारणत्वाद् वेदाध्ययनानन्तर्यस्य, तद्विहाय तदनन्तरप्रवृत्तकर्मविचारानन्तर्यार्थतावादमुत्थितमप्युपक्षिप्य भाष्यमेव निषेधति—"नन्विह कर्मावबोधानन्तर्यं विशेषः; ने"त्यादिना॥

### स्वतन्त्रमेव पूर्वमीमांसान्यायानामुत्तरमीमांसायां सूत्रणाद् न तदपेक्षा ब्रह्ममीमांसायाः

परिमलस्तु पूर्वोत्तरमीमांसयोरुपजीव्योपजीवकभावमेवं निरस्यति—शारीरक एव पूर्वमीमांसातोऽधिगन्तव्यं सर्वमधिगमितं बादरायणेनेति, इति न पूर्वमीमांसाऽपेक्षा तत्र। तत्र "अत एव च नित्यत्वमि"ति वेदापौरुषेयत्वव्यवस्थापनम्, "नानाशब्दादिभेदादि"ति भेदसाधनम्, "सर्ववेदान्तप्रत्ययमि"ति शाखाभेदेऽपि विद्यैक्यम्, "श्रुत्यादिबलीयस्त्वाच्चे"ति श्रुतिलिङ्गाद्युपन्यासः इति विशदयतीति पूर्वमुपपादितम्॥

### ब्रह्ममीमांसाया वेदनित्यत्वस्थापनं न लक्ष्यमिति भूषणोपन्यासः

इदमत्र भूषणं लिखति—वेदप्रामाण्यस्थापनाभावे ब्रह्मनिरूपणं न श्रद्दध्यात्, इति तन्निरूपणं यदीष्टं स्यात्, तर्हि प्रारम्भ एव वेदनित्यत्वं सूत्रयेत्—"अत एव नित्यत्वम्" इति, इति सूत्रभङ्गी, तत्सूत्रस्थानञ्च तत्स्थापनस्यान्यादृशीं प्रसक्तिं प्रकटयतः—इति॥

### उत्तरमीमांसायां पृथग् वेदनित्यत्वसूत्रणलक्ष्यम्, कर्मविचारानन्तर्यार्थत्वपक्षस्य सामान्यत उपसंहारश्च

इदमत्र समाधानम्—पूर्वमीमांसायां वेदनित्यत्वस्थापनाद् वेदानित्यत्वशङ्काया नोत्थितिः। तत्र यद्यपि वेदाध्ययनानन्तर्याथशब्दार्थतासामान्येन सर्ववेदसाधारणविचारोऽपि पूर्वमीमासागत एवात्रापि भविष्यति; वेदनित्यत्वातिरिक्तवेदान्तप्रामाण्यासंभवात्, पृथक्शास्त्रतायामपि वेदनि-

त्यत्वव्यवस्थापनमत्र वितथम्, तथाप्यत्र शास्त्रयोनित्वसूत्रप्रथमवर्णक-प्रतीततदनित्यत्वशङ्कावारणार्थम्—"अत एव च नित्यत्वम्" इति सूत्रं ब्रह्ममीमांसायामिति तु तत्त्वम्। अतः शास्त्रयोनित्वसूत्रे प्रथमवर्णकस्येदमेव सूत्रं मूलम्; अन्यथोभयवैयर्थ्यमापद्येत। सर्वथा त्वेकवेदार्थविचारत्वोपाधि-नैकशास्त्र्येऽप्यनुबन्धचतुष्टयभेदाद् नात्र कर्मविचारानन्तर्यमथशब्दार्थः; अन्यथा शम-दमाद्यानन्तर्यमपि "अथातो धर्मजिज्ञासे"त्यत्रापि स्यात्। तदेवं सामान्येन कर्मविचारानन्तर्यार्थत्ववादो निरस्तः॥

### संकर्षकाण्डे शतभूषणीसंगृहीते श्रीभाष्यानुयायिनां दृष्ट्या न प्रामाण्यमिति भूषणोपन्यासो मीमांसा-पादुकाद्यवलम्बेन

तत्र विशिष्य विचारप्रसङ्गेन भूषणं पूर्वलिखितमेव पुनरपि लिखति—योऽयं शतभूषण्याः प्रश्नः—अथशब्दस्यानन्तर्यार्थत्वे, विंशतिलक्षण्या अप्यैकशास्त्र्ये च कथं संकर्षकाण्डानन्तर्यं नाथशब्दार्थः—इति, नायं प्रश्नः संभवति; तस्यास्माभिरिष्टत्वात्—इति॥

अयमत्राशयः—यत् संकर्षकाण्डोऽपि द्वादशलक्षणीशेषः कर्मविचार एव, तस्य पृथगुपासनापरत्ववर्णनं तु नावश्यकम्। अत्र "स विष्णुराह ही"ति संकर्षकाण्डान्तिमवाक्ये तु न निर्भरः। अयं हि तत्त्वविदां माध्वानां सम्प्रदायः, न तु विशिष्टाद्वैतिनाम्। अयं तु परोक्तानुवादमात्रम्। न च स्वतन्त्रोपासनापरत्वं परमतेऽपि। अत एव "मध्यः काण्डश्च लुप्त-स्थितिरि"ति मीमांसापादुका। उपलभ्यमाने तु पूर्वोदाहृतानि वाक्यानि संकर्षकाण्डे नोपलक्ष्यन्ते। तत्र काशकृत्स्नकृतसंकर्षकाण्डमेकम्, श्रीमाध्वो-दाहृतं संकर्षकाण्डमपरमिति तु विमर्शकानां हृदयम्। एकत्रोपासनादिकं काममुपदिश्यतां नाम। कर्मकाण्डशेषस्तु काशकृत्स्नीय एव प्रमाणम्। स तु न प्रमाणमुपासनाविषये। अत एव—"देवताकाण्डं च कर्मकाण्ड-शेषतया भाष्यकारैः परिगृहीतम्" इति शतदूषण्याम्। "एवं तर्किते कर्मणि संकर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूप-भेद-गुण-प्रकर्षैर्निरूप्यत्" इति तत्त्वटीकायां चोक्तम्। सारांशस्तु संकर्षकाण्ड एकः कर्मशेषः, अपरो देवतामीमांसा। तत्र कर्मशेषस्यैव षोडशलक्षण्यामन्तर्भावः प्रामाणिकः। स च काशकृत्स्नकृतोऽन्यकृतो वा न वार्यते, परन्तु देवता-मीमांसा नाम संकर्षो नोपलभ्यते। उपलब्धोऽपि स श्रीमाध्वानामेव

प्रमाणम्। काशकृत्स्नकृतसंकर्षकाण्डो लुप्तः। "स विष्णुराह हिं स विष्णुराह ही"ति तदुपसंहारे शतदूषण्यनूदितेऽपि न निर्भरः। अतस्तेनैव गतार्थत्वाद् न सविशेषविचारः स्वतन्त्रः पृथगपेक्ष्यत इति शतभूषणीवादो न युक्तः—इति॥

शतदूषणन्यनूदितसंकर्षकाण्डः काशकृत्स्नकृतो न द्वैतिनाम्,
येषां देवतामीमांसा शेषादिकृतिः, इति नात्र श्रीभाष्यादीनामनिर्भरः, इति "अथातो ब्रह्मजिज्ञासे"ति पृथक्
प्रतिज्ञा निर्विशेषस्यैव

तत्र शतदूषणी "स विष्णुराह हि स विष्णु राह हि तद् ब्रह्मेत्याचक्षते" इति विचारयिष्यमाणमुपचिक्षेप इति तत्त्ववृद्धाः" इति देवतामीमांसां स्वमतोपबृंहणार्थमेवोदाहरति। वदति चान्यत्र भूषणोक्तरीत्या संकर्षकाण्डो लुप्त इति। लुप्तोऽप्ययमनुपलब्ध इति कृत्वैव सकर्षान्ते गतानीमानि वाक्यान्युदाहरति। सति चैवं कथं तत्र तेषाम्, अन्येषां वा न निर्भरः?

इदमेवात्र पृच्छ्यते—किं महाचार्याः, ये शतदूषणीकाराणां कुलदेवतेति भूषणेन प्रशस्यते, उक्तशतदूषणीवाक्यविवरणावसरे शतदूषणीकाराणाम्, स्वस्य वा तत्र न निर्भर इति वदन्ति, अन्ये वा केचन भूषणं वर्जयित्वा? इति तत्त्ववृद्धास्ते माध्वा वा भवन्तु, अन्ये वा, शतदूषण्या स प्रमाणीकृत एव, इति वितथोऽत्र ग्रन्थविस्तरः। माध्वा एव तत्त्वविदः, अन्ये श्रीभाष्याद्योऽतत्त्वविद इति तु न भूषणं भूषणस्य॥

देवताकाण्डः, सकर्षकाण्डश्च न भिन्नः, किन्त्वेक एवेति शतदूषणी मन्यते। कर्मशेषः साम्प्रतमुपलभ्यमानः कस्येति न ज्ञायते। स हि जैमिनीय इति भूषणमनुवदति। "जैमिनीयेन षोडशलक्षणेने"त्यत्र जैमिनीयपदं देवतामीमासांशमात्रे काशकृत्स्नीयमिति व्याख्येयमिति तु तत्त्वटीका। सैवात्र यदि षोडशीलक्षण्यन्तर्गता, तर्हि "एवं तर्किते कर्मणि संकर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूप-गुणप्रकर्षैर्निरकृष्यत्"इति तत्त्वटीकाऽपि काशकृत्स्नीयदेवतामीमांसामेव संकर्षकाण्डमत्रमभिप्रैति। तत्तत्कर्माराध्यदेवतास्वरूपं तु तत्तद्देवतारूपेण परिच्छिन्नमपि तत्त-

च्छरीरकपरमात्मस्वरूपेण गुणोत्कर्षवत् । सा च गुणोत्कर्षस्य परा काष्ठा विष्णुरेव, तदेव ब्रह्मेत्येव तत्त्वटीकाशय इति वक्तव्यम् ॥

तत्र तत्त्ववृद्धानां वाक्यमपि शतदूषण्याहृतमपि न न प्रमाणम् , इति कुतो वा तत्र न निर्भरः ?

अन्यः संकर्षकाण्डः कर्मशेषमात्रं परिमलादावुद्धृतं वर्ततां वा, न वा; नात्र निर्भरः। "जैमिनीयेन षोडशलक्षणेने"त्यत्र संगृहीतः सकर्षकाण्डो देवतामीमांसा पूज्यप्रवरकाशकृत्स्नकृतिरेवेत्यत्रैव तत्त्वटीकाकाराशयः। सति चैवं तेनैव गतार्थत्वात् किमर्थं सविशेषब्रह्ममात्रजिज्ञासा "अथातो ब्रह्मजिज्ञासे"त्यत्रेति प्रश्नो भूषणेन सविस्तरमन्यथाऽन्यथाऽऽख्यानेनापि नोत्तरितः ॥

संकर्षकाण्डान्तरस्य जैमिनीयस्य प्रामाण्यमुपलभ्यमानरूपेणैव वा, अन्यथा वेति विचारो नात्र प्रकृतः। काशकृत्स्नीयदेवतामीमांसायामपि 'स विष्णुराह हि स विष्णुराह हि" इति शास्त्रसमाप्तिद्योतकोऽभ्यासो दृश्यत इति शतदूषण्यनुवादेन विज्ञायते ॥

तदेवं "जैमिनीयेन षोडशलक्षणेन संहृतं शारीरकशास्त्रमि"ति जैमिनीयपदमवयुत्यानुवादेन काशकृत्स्नीयस्याप्युपलक्षणम्। स च देवतामीमांसाऽपरपर्यायः—"स विष्णुराह हि स विष्णुराह ही"ति शास्त्रसमाप्तिद्योतकाभ्यासेनोपसंह्रियते, इति सविशेषोपासनस्य पूर्वत एव सिद्धत्वात् "अथातो ब्रह्मजिज्ञासे"ति प्राधान्येन निर्विशेषब्रह्मजिज्ञासैवेति सिद्धम् ॥

तत्र च यदि शास्त्रैक्यवादमनुसृत्य "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दः पूर्वप्रकृतानन्तर्यपर एवेत्याग्रहः, तर्हि संकर्षविचारानन्तरमित्येव तदर्थो भवितुं युक्तः, न तु कर्मविचारानन्तरमिति सुस्थम् ॥

### जैमिनीय-काशकृत्स्नीययोरेकीकृत्य वर्णनं तयोः क्रियापरतया प्रामाण्यसाम्येन, शारीरकस्य ततः पृथक्करणं तु तस्य सिद्धार्थत्वमात्रेण प्रामाण्येन च

अत्र विंशतिलक्षण्या एकशास्त्रत्वे "संहृतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति किमिति पृथक्करणं षोडशलक्षण्याः, शारीरकस्य च ? कुतश्च षोडशलक्षणेन मीमांसाद्वयस्यैकीकरणम्—जैमिनीयधर्ममीमांसायाः काशकृत्स्नीयदेवतामीमांसायाश्च ?

इदमत्र तत्त्वम्—जैमिनीयकर्मविचारस्य कर्मस्वरूपातिरिक्तदेवतास्वरूपे वस्तुसति न तात्पर्यम्; तथाप्युपासनमपि कर्मरूपत्वात् तस्य चोपास्यस्वरूपासत्त्वेप्युपपत्तेः, क्रियाविधिशेषतयैव देवतानाम्, किं बहुना? ब्रह्मणोऽपि सविशेषस्य प्रामाण्यम्। न च तस्यापि स्वरूपतः सत्त्वम्, उपनिषदस्त्वर्थवादमात्रमिति जैमिनीयोऽभिप्रायः॥

काशकृत्स्नाशयस्तु—सत्यं क्रियाविधिशेषतयैव वेदान्तानां प्रामाण्यम्; अक्रियापराणां निर्विशेषस्वरूपमात्रपराणां च काममप्रामाण्यमर्थवादत्वं वा भवतु; तथाप्युपासनाक्रियाशेषतया प्रतिपाद्यदेवतास्वरूपे विष्णुपर्यन्ते सविशेषे ब्रह्मण्यपि प्रामाण्यमबाधम्—इति॥

तत्रोपास्यं हि देवतास्वरूपं विष्णुपर्यन्तं प्रायेण तत्क्रतुनयेन, अन्यथा वा फलमपि शास्त्रेषूपदिश्यते, इति न तदपह्नवो युक्तः। तथा च क्रियाविधिशेषतया प्रामाण्यं जैमिनीयकर्मविचार-काशकृत्स्नीयदेवताविचारयोः समानम्, इतिकृत्वैव षोडशलक्षणेनेति तयोरेकीकरणम्। जैमिनीयकर्मविचारे समाप्तिद्योतकाभ्यासः, काशकृत्स्नीयविचारेऽपि समाप्तिद्योतकाभ्यासोपलम्भोऽप्युभयोरपि विषयभेदमनुपदोक्तं द्रढयति। काशकृत्स्नस्तु स्वयं निर्विशेषवादं न वारयतीत्यन्यदेतत्॥

अतो निर्विशेषब्रह्मश्रौततायां परमुभयोरपि विप्रतिपत्तिः, तद्विचारस्तु बादरायणाचार्याधीनः, तस्यैव तत्राधिकारादिति तयोरुपरमः। उत्तरोत्तरविचारेषु पूर्वपूर्वेषां न वस्तुतो विप्रतिपत्तिः, किन्त्वैकमत्यमेव सर्वेषामौपनिषदार्थनिर्णये, इति तु सम्प्रतिपन्नमैकशास्त्र्ये, शास्त्रभेदे वा। अत एव शारीरकमिति षोडशलक्षणीतः पृथक्करणम्॥

### शारीरकसमाख्ययाऽपि ब्रह्ममीमांसाया निर्विशेषपरत्व एव

अत्र शारीरकपदं न शरीरिविचारपरम्, किन्तु शरीरे भवस्यात्मनोऽज्ञातस्य निर्णयात्मकमित्यज्ञातार्थे 'कन्' प्रत्ययादवगम्यते। तत्राज्ञातं शारीरमहङ्काराद्युपाधिविरहितं स्वयंज्योतिः संविद्रूपं निर्विशेषमेव, न तु सविशेषः परमात्मा विष्णुः; तस्य ज्ञातत्वात् संकर्षकाण्डेन॥

तत्र यदि शारीरकं स्वरूपं निर्विशेषम्, तर्हि तद्विचारस्य प्राचीनविचारद्वयेन कथं संहतिरिति शङ्का तु वेदार्थविचारत्वोपाधिना विचारत्रयस्याप्यैक्यमिति परिहर्तव्या, इति वृत्तिकारवचनमपि नात्र व्याहतम्॥

### वृत्तिकारदृष्ट्याऽपि न शास्त्रैक्यम्

"बोधायनश्चायं वृत्तिकारः, उपवर्षो वा स्यादि"ति तत्त्वटीकादृष्ट्या तूपवर्षाचार्याणां वृत्तिरेवेयमिति प्रतीयते। उपवर्षाचार्याश्च शुद्धाद्वैतपक्षपातिनः श्रीभाष्यमतोपासनमेव मोक्षसाधनं मन्यन्त इति समन्वयाधिकरणभाष्यमप्यद्वैतैकदेशिमतपरं न दुष्यति। भवतु वा तत्रान्यो वृत्तिकारः, भगवत्पादास्तु न वृत्तिकारमतं प्रामाणिकमभिप्रयन्ति, इति भगवत्पाददृष्ट्या न संहतं शारीरकं षोडशलक्षणेन। सर्वथा तु न कर्मविचारानन्तर्यं ब्रह्ममीमांसाया अथशब्दार्थः॥

### जैमिनेः सविशेषपारमार्थिकतायां न तात्पर्यम्

वस्तुतस्तु—न जैमिन्यभिप्रेतोऽयं सविशेषब्रह्मविचारः, येन तदीयेन विचारेण ब्रह्मविचारस्यैक्यं स्यात्। बादरायणोऽपि नायं जैमिन्यभिमत इति तन्मतं निरस्यतीति पूर्वं तत्तत्सूत्रोपन्यासेन निरूपितम्। "अन्यार्थं तु जैमिनिः" "साक्षादप्यविरोधं जैमिनिः" इत्यादौ सत्यं जैमिनिमतमेव सिद्धान्तः, परन्तु न स जैमिनिः पूर्वमीमांसाकृत्, किन्त्वपर एव पूर्वमीमांसायामेव पूर्वपक्षतया शबरस्वामिना भगवता 'नित्येषु यथाशक्त्यधिकरण'नये "कर्मभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यादि"ति पूर्वपक्षसूत्रे परामृश्यत इति शतभूषण्यामत्रैव सन्दर्भे निरूपितम्॥

"परं जैमिनिर्मुख्यत्वादि"ति तु पूर्वपक्षसूत्रम्, न सिद्धान्तसूत्रमिति सूत्रस्वारस्यसमर्थनावसरे विशदीकृतम्। ब्रह्मात्मैक्याम्नानं तु कर्त्रात्मपरमदर्थवाद इति पूर्वपक्ष इति तदाशयः॥

### जैमिनेरुपनिषदर्थवादत्वपरत्वायोगः

न हि तदा कर्त्रात्मज्ञानार्थवादत्वस्योपपत्तिः। तथापि जीवात्मनोऽकर्तृत्वम्, न तु कर्तृत्वमिति कर्त्रात्मस्तुतिपरत्वमुपनिषदामस्तु वा, ब्रह्मात्मैक्यविवक्षायामेव जीवस्तावकता जैमिन्यभिप्रेतेति; तावतापि जैमिनिरत्र पूर्वपक्षी, न तु सिद्धान्ती। न च बादरायणोऽत्र तदैक्यपक्षं निरस्यति, किन्तु तदैक्यविवक्षायां न विशिष्टपरत्वमुपनिषदामिति तदैक्यपक्षस्य, अकर्त्रात्मभावस्य च न कोऽपि संस्पर्श इति नार्थवादतेत्येव। अधिकमत्र सूत्रस्वारस्यसमर्थनावसरे "अधिकं तु" इति सूत्रार्थवर्णनेन व्यक्तीकृतम्॥

### कर्मविचारे न कर्मफलानित्यत्वादिविचारः

सर्वत्र हि प्रायेण भूषणं शतभूषणीसमाधानप्रकारान् दूरीकृत्य केवलं पूर्वपक्षमात्रं संगृह्णाति, सिद्धान्तप्रकाराः शतभूषण्या अप्रकम्प्या इति मत्वा ॥

### ब्रह्मचर्यादेव संन्यस्तानां च नाधिकारापत्तिः कर्मविचारानन्तर्यवादे

न चात्यन्तविरक्तानां तदहरेव सन्यासयोग्यानां साधनचतुष्टयसम्पन्नानां ब्रह्मचर्यादेव संन्यस्तानां संजातमोक्षाभिलाषाणां कर्मविचारेणास्ति किमपि प्रयोजनम् , इति तेषां ब्रह्मविचाराधिकारो न स्यात् कर्मविचारानन्तर्यवादे । न च कर्मविचारजन्यज्ञानस्य ब्रह्मविद्यायामुपयोगलेशोऽपि । न हि कर्मफलानित्यत्वनिर्णयार्थम् , मोक्षाभिलाषार्थं वा कर्मविचारापेक्षा । कर्मविचारे तत्फलानित्यताया अनिर्णीतत्वात् , मोक्षाभिलाषाया अपि कर्मविचारानधीनत्वात् । श्रीभाष्यमते हि कर्मविचारः काम्य एव, न नियतः, इति कुतो वा संन्यासायोगः ? कुतो वा ब्रह्मचर्यमात्रेण संन्यस्तोऽपि कर्मविचारे न नियन्तुमलम् ? न च संन्यासयोग्यकर्मकलापः पूर्वमीमांसायाम् , न वा तेषामपि वेदनाङ्गत्वे किमपि प्रमाणम् । सत्यम्, संन्यासात् पूर्वं केषाञ्चन ब्रह्मचारिणां कर्मविचारः सम्भाव्यते; तथाप्यकृतकर्मविचाराणां विरक्तानामपि ब्रह्मचारिणां तन्नियमने न किमपि प्रमाणम् । देवतानां ब्राह्मणत्वादिशरीरधर्मानभिमानिनां वा कथं कर्मणि, तद्विचारे वाऽधिकारः ?

### ब्रह्मजिज्ञासा न परिशिष्टधर्मजिज्ञासा

न च जैमिनिविचारितांशमपहाय परिशिष्टधर्मजिज्ञासैव बादरायणेन कृता, तदा हि तथैव सूत्रणं स्यादिति भाष्य एवायं पक्षः प्रतिक्षिप्तः ॥

परिशिष्टोऽपि धर्मो यदि सविशेषब्रह्ममात्रम् , तर्हि सोऽपि संकर्षद्वारा काशकृत्स्नेनैव कृतः, इति किं बादरायणस्य कृत्यम् ? साध्यधर्मपदमपहाय ब्रह्मपदं प्रयुञ्जानस्य बादरायणस्य परिशिष्टधर्मजिज्ञासैव लक्ष्यमिति कुतोऽवगम्यते ?

### विचारावैधत्ववादे कर्मविचारस्य न नियतपूर्ववर्तित्वम्

वस्तुतस्तु—विचारावैधत्ववादिनां मते न कर्मविचारोऽपि नियतः, इति कथं नियतपूर्ववृत्तत्वं कर्मविचारस्य ? अद्वैतमतवैधत्वं श्रीभाष्य-

सिद्धान्तस्य कथमुपकरिष्यति ? स एव पक्षो यदि सांप्रतं परिगृह्यते, तर्हि परिगृह्यन्तां सर्वेऽपि तदीया एव विचारप्रकाराः ॥

### देवतानां जन्मान्तरीयेण कर्मविचारेण ब्रह्मविचाराधिकारे मनुष्याणामपि स न कथम् ?

देवतानां ब्रह्मविचाराधिकारः स्वयम्प्रतिभातवेदत्वात् विनोपनयनम्, विना कर्मविचारं वा साधनचतुष्टयस्य संपत्तिमात्रेण संभवति भगवत्पादसिद्धान्ते, इति यदि जन्मान्तरीयेण कर्मविचारेणैव निर्वाहः, कथं नेयं व्यवस्थाऽऽजानजानां देवानाम्, "विविदिषन्ति" इत्यस्य वा का गतिः ? अन्येषामपि कथं जन्मान्तरीयकर्मानुष्ठानेन, कर्मविचारेण वा न निर्वाहः ? इतीह जन्मनि कृतकर्मविचाराणामेव ब्रह्मविचाराधिकार इति कथा कथामात्रम् ॥

### श्रीभाष्यसिद्धान्ते विचारावैधत्वायोगः, अन्यथा कर्मविचारनियतपूर्ववृत्तत्वानिर्वाहः

तत्राध्ययनविधेरक्षरग्रहणमात्रार्थत्वं वा, अर्थज्ञानार्थत्वं वेति विचारो यदि विचारस्य रागप्राप्तस्यावैधत्वाभिप्रायेण, तर्हि नेदं युक्तम्; अक्षरग्रहणार्थत्वेऽप्यध्ययनस्य वैधत्वमकामेनापि स्वीकर्तव्यम्; "ब्राह्मणेन निष्कारणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्चे"ति ज्ञानार्थमपि तदध्ययनविध्यन्तरस्य सत्त्वेनाध्ययनस्याक्षरणग्रहणमात्रार्थत्वेऽपि न विचारवैधत्वं सुवारम्। व्यक्तं चैतद् ऋग्वेदभाष्यभूमिकायां सायणाचार्यैरुपपादितं भाट्टमतनिरसनपूर्वकं पुरुषार्थानुशासनवचनान्यवलम्ब्य। सर्वथा तु न विचारावैधत्वम्। अत्र पक्षद्वयेऽपि फलभेदस्तु विचारस्य समावर्तनपूर्ववृत्तत्वनियम-तद्भावौ ॥

तत्राक्षरणग्रहणार्थत्वे यथासमयमनुष्ठास्यमानकर्मभागमात्राध्ययनं सति संशये, अन्यथा त्वर्थलोपात् बाधः, इति यदि तत्तदुपयुक्तकर्मविचारमात्रं कर्तव्यम्, असन्दिग्धानां तु वाक्यानां विचारो नापेक्षितः, तर्हि तु पक्षद्वयेऽपि रागप्राप्तत्वमर्थसिद्धमेव। जैमिनीयकर्मविचारः सर्वोऽपि कल्पद्वयेऽपि यदि न नियतः, तर्हि जैमिनीयकर्मविचारानन्तरमेव ब्रह्मजिज्ञासेति नियमनं कथम् ? तत्रार्थज्ञानार्थत्वपक्ष उपनिषदामर्थवादत्वापत्तिः, पक्षान्तरे तु नेति मत्वा पक्षान्तरानुसरणेऽपि भक्षितेऽपि लशुने न रोगशान्तिः ॥

अद्वैतसिद्धान्तेऽप्यध्ययनस्याक्षरग्रहणपर्यन्तत्वेऽपि न विचारा-
वैधत्वम् , इत्यधिकारिभेदाद् मीमांसाभेदः

औपनिषद आत्माऽन्यः, कर्ममीमांसाविषय आत्माऽन्यः, । तत्राद्यो-ऽकर्ता, अभोक्ता, संविन्मात्रः, एकश्च, द्वितीयस्तु कर्ता, भोक्ता, अहमर्थः, नाना च । नानात्वं तु तस्यौपाधिकं शरीरभेदमात्रेणेत्युपनिषदां जीवा-त्मातिरिक्तेश्वरानङ्गीकारेण, तदङ्गीकारेऽपि जीवेश्वरैक्यपक्षाभिप्रायेण वाऽर्थवादत्वकल्पनाया नावसरः । वहु पराक्रान्तमध्वरमीमांसाकूतूहल-वृत्त्यादौ प्रकृते विषये, इति श्रीनारायणसरस्वतीनाम् , सायणा-चार्यादीनां वाऽद्वैतसिद्धान्तपक्षपातिनामप्यध्ययनाक्षरग्रहणमात्रार्थत्व-वादो न विरुध्यते । तस्य पक्षस्याभ्युपगमेऽपि विचाररागप्राप्तत्वकथा तु नावैधत्वमभिप्रेत्य भवितुमर्हति, किन्तु पूर्वोक्तरीत्या । सर्वथा तु कर्म-विचारपूर्ववृत्तत्ववादोऽयं नोपपद्यत इत्यत्रैव निर्भरः, न त्वध्ययन-विध्यक्षरग्रहणमात्रार्थत्व-तदर्थज्ञानार्थत्वकल्पयोरन्यतरत्र, इत्यनुवन्धचतु-ष्टयान्तर्गतप्रथमानुवन्धाधिकारिभेदात् , पूर्वोत्तरमीमांसयोर्भेद इति तु सिद्धम् ॥

कर्म-ब्रह्मविचारयोः फलभेदान्न कर्मविचारस्य पूर्ववृत्तता

न केवलमधिकारिभेदात् , किन्तु फल-जिज्ञास्यभेदादपि तयोर्भेदो भगवत्पादैर्भाष्ये विशदीकृतः ॥

अत्रेदं भूषणं वदति—भगवत्पादभाष्य उक्तः फलभेदोऽद्वैतिनामपि न सामस्त्येनेष्टः; विविदिषाद्वारा कर्मणां ब्रह्मविचारसम्बन्धाद् अभ्युदय एव फलमित्यस्याभावात्—इति ॥

तत्र कर्मणां विविदिषायां ज्ञानप्रतिवन्धकनिवृत्तावेवोपयोगः, न तु साक्षात् ज्ञाने, मोक्षे वा, इति नित्यानामपि निःश्रेयसार्थत्वम् , काम्यानां त्वभ्युदयार्थत्वमात्रम् । न हि प्रतिवन्धकनिरासमात्रं पर्याप्तं मुख्यसाधन-संपत्त्यभावे; अन्यथा कर्मणामेव मोक्षसाधनत्वम् , नोपासनायाः, ज्ञानस्य वेत्यापद्येत । सत्यां तु साधनसम्पत्तौ तन्मात्रस्यापि सहकारिकारणत्वमेव, न निःश्रेयसहेतुत्वम् । ज्ञानोत्पत्तिद्वारा तु निःश्रेयसहेतुत्वमबाधम् , परन्तु तदपि ज्ञानस्यैव तत्; इति ज्ञानस्यैव निःश्रेयसहेतुत्वात् । तत्र च विचार-स्यैव साधनत्वात् , विचाराधिकारितावच्छेदकत्वस्य च पूर्वोक्तरीत्याऽभावाच्च

न कर्मविचारानन्तर्यमथशब्दार्थः। न हि तदा विचारस्य मोक्षफलकत्वम् ॥

कर्म-ब्रह्मविचारयोर्जिज्ञास्यभेदाद् न कर्मविचारपूर्ववृत्तता

जिज्ञास्यभेदस्तु प्रसिद्ध एव—पुरुषतन्त्रोपासनाशेषः सविशेषं ब्रह्म, प्रमाणतन्त्रज्ञानमात्रगोचरो निर्विशेषं ब्रह्म, साक्षाद् विधिविषयस्तु पुरुषतन्त्रं कर्मेति ॥

न चेदं निर्विशेषं ब्रह्म धर्मजिज्ञासाविषयः, संकर्षकाण्डविषयो वा, साक्षात्, परम्परया वा पुरुषतन्त्रधर्मत्वाभावात्, इति विषयभेदाद्, न शास्त्रैक्यम् ॥

सत्यम्, धर्मपदं वेदार्थपरम्, तथापि न वेदार्थत्वेन धर्मो धर्मजिज्ञासाविषयः, "चोदनालक्षणोऽर्थो धर्मः" इत्युत्तरसूत्रेण साक्षात्, परम्परया वा पुरुषतन्त्रस्यैव जिज्ञासाया नियमनात् ॥

न च निर्विशेषं ब्रह्म तथा; तस्य ज्ञेयैकस्वरूपस्य साक्षात्, परम्परया वा प्रमाणतन्त्रत्वात्। ज्ञेयत्वे च तस्य प्रमाणेन तद्विषयाज्ञाननिवृत्तिमात्रं विवक्ष्यते, प्रमाणतन्त्रवृत्तिमात्रविषयत्वं वा, न पुरुषतन्त्रक्रियाशेषत्वं कयाऽपि विधया ॥

धर्मजिज्ञासाविषयत्वं न ब्रह्मणः

धर्मजिज्ञासासूत्रविषयवाक्यं "स्वाध्यायोऽध्येतव्यः" इति। तत्तु वेदसामान्याध्ययनविधिमभिप्रैति। अतस्तत्र वेदार्थमात्रपरत्वम्। जिज्ञासाविषयस्तु धर्मो न ब्रह्मापि; अन्यथा संकर्षकाण्डान्ते सूत्राभ्यासः, पुनर्जिज्ञासान्तरारम्भः, पुनः समाप्तौ प्रत्यध्यायं पदावृत्तिः, शास्त्रान्ते सूत्रावृत्तिश्चानुपपन्ना स्यात् ॥

ब्रह्ममीमांसायां प्रत्यध्यायं सूत्राऽऽवृत्त्यादिकं कर्मजिज्ञासया साकमसम्बन्धादिकं गमयति

तत्र ब्रह्ममीमांसायां प्रत्यध्यायं पदावृत्त्याऽपीदमवगम्यते, न पूर्वेण विचारेण कोऽपि सम्बन्ध इति। सर्वथा तु धर्मपदस्य वेदार्थपरत्वमात्रेण सर्ववेदार्थजिज्ञासाधिकारी नाथशब्दार्थस्तत्र; अन्यथा शम-दमाद्युपेतत्वमपि धर्मजिज्ञासाधिकारितावच्छेदकं स्यादिति पूर्वमुक्तम् ॥

### भामत्यां वेदार्थविचारत्वोपाधिना धर्मजिज्ञासाविषयत्वं शास्त्रभेदस्यैवोपपादकम्

भामत्यां स्वाध्यायाध्ययनविधिनैव धर्मजिज्ञासेव ब्रह्मजिज्ञासाऽप्याक्षेप्तुं शक्यत इति यदुक्तम्, तदिदं वेदार्थविचारत्वोपाधिना तदुपक्षेपमात्रम्, न तु धर्मजिज्ञासैव ब्रह्मजिज्ञासेत्यपि ॥

व्यक्तं चैतत्—"स्वाध्यायानन्तर्यं तु समानमि"त्यत्र भामत्याम्; अन्यथा "अथातो ब्रह्मजिज्ञासे"ति पृथक् प्रतिज्ञा वितथा। तथा चात्र भामती—"अथातो धर्मजिज्ञासे"त्यनेनैव गतमिति नेदं सूत्रमारब्धव्यम्, धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवद् ब्राह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यात्" इति ॥

इदं हि भामतीवाक्यं वेदाध्ययनानन्तर्यार्थत्वं ब्रह्मजिज्ञासासूत्रे निरसितुं प्रवृत्तम्, न तु तत् समर्थयितुम्। तच्च"थातो ब्रह्मजिज्ञासे"ति पृथक्सूत्रायोगेन। श्रीभाष्यानुयायिनस्तु बहवोऽत्र पूर्वापरसन्दर्भमनालोच्य भामत्या अप्यैकशास्त्र्ये सम्मतिरिति योजयन्ति ॥

### द्वादशलक्षणीविषयो धर्मो न ब्रह्मजिज्ञासाविषयो भामतीदृष्ट्या

न चात्र धर्मशब्दस्य जहदजहल्लक्षणया वेदार्थमात्रोपलक्षणत्वम्, किन्तु स्वयं वेदार्थपरत्वम्; अन्यथा धर्मशब्दमुख्यार्थः कः? यदि क्रिया, तच्छेपो वा, कुत इदमवगतम्? यद्युत्तरसूत्रात्, तर्हि पूर्वसूत्रेऽपि स एव ह्यर्थो विवक्षणीयः; अन्यथा "ब्रह्मजिज्ञासे"त्यत्रापि प्रथमं ब्रह्मपदं जात्यादिपरम्, "जन्माद्यस्य यतः" इत्युत्तरसूत्रे जात्यादिसाधारणी प्रतिज्ञेत्याऽऽपद्येत। अतः सामन्यतो वेदार्थजिज्ञासा "स्वाध्यायोऽध्येतव्यः" इति विधिवाक्यविषयत्वाभिप्रायेण, पश्चात्तु धर्मशब्दार्थनियमनमित्येव युक्तम्। सर्वथा तु द्वादशीलक्षणीविषयः, षोडशलक्षणीविषयो वा "अथातो ब्रह्मजिज्ञासे"ति ब्रह्मजिज्ञासाविषयविलक्षणः ॥

पूर्वोद्धृता भामती हि धर्मपदेन ब्रह्मणोऽपि विवक्षायां ब्रह्मजिज्ञासासूत्रवैयर्थ्यमापादयति ॥

### भामती-विवरणयोर्धर्म-ब्रह्मजिज्ञासयोः पौनरुक्त्या-पत्तिरिति शङ्काया असंभवः

तथाच अतोऽत्र भामतीकारोऽपि पञ्चपादिकाकृदिव वेदार्थलक्षकत्वं धर्मपदे स्वीकृत्य तावता ब्रह्मजिज्ञासासूत्रस्य न पुनरुक्ततेति लिखद् भूषणं कथं न भामतीम्, पञ्चपादिकां वा स्वेच्छयाऽन्यथयति ? पञ्चपादिकाऽपि भूषणाऽनूदिता धर्मजिज्ञासेत्यस्य वेदार्थविचार इत्यर्थेऽपि पूर्वमीमांसायां यावद्विचारितम्, तावद्वेदार्थप्रतिज्ञैव तत्र, न तु ब्रह्मप्रतिज्ञाऽपि, इति न पौनरुक्त्यमिति विषयभेदमेव धर्म-ब्रह्मजिज्ञासयोर्व्यवस्थापयति। परिशीलयतु भूषणमप्यत्र विवरणादिपञ्चपादिकाव्याख्याः सर्वाः प्रकाशिताः॥

### पूर्वोत्तरमीमांसयोः क्रियातच्छेष-तदशेषवेदार्थविषयत्वेन विषयभेदाच्छास्त्रभेदः

सर्वमिदं शास्त्रैक्यवादं धर्मपदेन वेदार्थमात्रविवक्षायामपि निरस्यति। सर्वथा तु "अथातो धर्मजिज्ञासे"त्यादिना संकर्षान्तेन साक्षात्, परम्परया वा क्रिया,तच्छेषरूपवेदार्थविचारः, ततः "अथातो ब्रह्मजिज्ञासे"ति वेदार्थस्य साक्षात्, परम्परया वा क्रियाविध्यशेषस्य, केवलं ज्ञानमात्रेणाज्ञाननिवर्तकेन निवृत्ताज्ञाननिर्विशेषसंविन्मात्रजिज्ञासा, इति जिज्ञास्यभेदः पूर्वोत्तरयोर्मीमांसयोः स्फुटतरः॥

### सिद्धान्तसिद्धाञ्जनस्य भामती-विवरणप्रस्थानतो न वैलक्षण्यम्

एतेन—धर्मशब्दस्य सिद्ध-साध्योभयविधधर्मवाचित्वात्, ब्रह्मणोऽपि धर्मशब्देन ग्रहणमिति सिद्धान्तसिद्धाञ्जनमपि—व्याख्यातम्। तदपि हि धर्मशब्दस्य "चोदनालक्षणोऽर्थः" इत्युत्तरसूत्रात् पूर्वमीमांसायां क्रिया-तच्छेषान्यतरवेदार्थपरत्वम्, "ब्रह्मजिज्ञासे"त्यत्र ब्रह्मपदस्य सिद्धवेदार्थपरत्वं चाभिप्रेत्यैव, इति फलतो न भामती-विवरणप्रस्थानतः प्रस्थानान्तरम्। तत्र साध्यपदं क्रिया-तच्छेषान्यतरपरम्, सिद्धपदं तु क्रिया-तच्छेषान्यतरत्वहीनज्ञेयमात्रपरम्, इति न दध्यादीनामप्युत्तरमीमांसाया विचारापत्तिः॥

### पूर्वमीमांसाया अदृष्टापेक्षया फलसाधनं धर्मो विषयः, उत्तर-मीमांसायां तु तद्विपरीतमिति जिज्ञासा-भेदात् शास्त्रभेदः

एतेन—शास्त्रतो यस्य साधनत्वमेव गम्यते, स एव धर्म इति—परास्तम्। न च निर्विशेषं ब्रह्म धर्मजिज्ञासाविषयो धर्मो नाम, किन्तु वेदार्थरूपो धर्मः। शास्त्रावगतफलसाधनताकं धर्म इति "चोदनालक्षणोऽर्थो धर्मः" इति लक्षितधर्ममीमांसाविषयक्रिया-तच्छेषाभिप्रायम्॥

अदृष्टस्यापि धर्मशब्दार्थत्वं धर्मजिज्ञासाविषयधर्मत्वाभिप्रायेण। न च ब्रह्मजिज्ञासायां ज्ञानस्याज्ञाननिवर्तकत्वमदृष्टापेक्षम्। "चोदना पुनरारम्भः" इति सूत्रं हि विधिविषयक्रियाणामेवादृष्टापेक्षां साधयति, न तु तदपि सिद्धदृष्टार्थदध्यादिद्रव्यमप्यभिप्रेत्य। सर्वथा त्वदृष्टानपेक्षमोक्षसाधनज्ञानपरवेदान्तवाक्यार्थविषयिणी ब्रह्मजिज्ञासा धर्मजिज्ञासाविलक्षणैव; जिज्ञास्यवैलक्षण्यात्॥

### धर्मो भगवत्संकल्पः, निर्विशेषम्, तज्ज्ञानं वा मुख्योऽपर एव वेदान्तार्थः

यत्तु—वेदान्ते भगवत्संकल्पादनतिरिक्तमेव वेदान्तशास्त्रार्थः—इति, तदिदं जैमिन्यभिमतापूर्वस्थानत्वं भगवत्संकल्पस्य, स च जैमिन्यभिमतधर्ममभिप्रेत्य। अत एव—"धर्मं जैमिनिरत एव"इति जैमिनेरेवात्र पूर्वपक्षः, ब्रह्मजिज्ञासाविषयस्तु ब्रह्म, तदवगतिर्वा साक्षात्, परम्परया वा नापूर्वं स्वकार्यसाधनायापेक्षते। न चोपासनमेव ब्रह्मवेदनपदार्थ इति व्यक्तमधस्तात्॥

तत्र भगवद्विभूतिः, महाविभूतिर्वा व्यापकः, सविशेषः परमात्मा स्वसंकल्पद्वारा फलसाधनम्, धर्मशब्दार्थश्चेत्यत्र को वा विसंवादः? यः संकर्षकाण्डस्य मुख्यो विषयः। न चैतावता "परं ब्रह्म परं धाम" इत्यादिना निर्दिष्टं निर्विशेषं ब्रह्मापि स्वयं फलरूपं फलसाधनम्, येन फलसाधनत्वोपाधिना तदपि धर्मजिज्ञासामुख्यविषयो धर्मशब्दार्थः स्यात्। एतेन —"कृष्णं धर्मं सनातनमि"त्यपि—व्याख्यातम्॥

### जिज्ञास्यभेदात् शास्त्रभेदोपसंहारः

निष्कर्षस्तु धर्मजिज्ञासायां "चोदनालक्षणोऽर्थो धर्मः" इत्युत्तरसूत्रात् साक्षात्, परम्परया वा विधिविषयताम्, विधेयतां वाऽर्हन् वेदार्थ एव

विषयः, तद्विपरीतं तु ब्रह्मजिज्ञासायाः। सति चैवं जिज्ञास्यभेदात् मीमांसाभेदः सुस्थः ॥

### पूर्वोत्तरमीमांसार्थनिष्कर्षः

अयमत्र विषयविवेकः—"अथातो धर्मजिज्ञासे"त्यादि संकर्षान्तं षोडशलक्षणमेकं शास्त्रम्। यत्र याग-दान-होमादिकम्, उपासनं च साक्षाद् विषयः, तच्छेषश्च सिद्धपदार्थो दध्यादिः, सविशेषं चोपास्यं ब्रह्म। "अथातो ब्रह्मजिज्ञासे"ति तु तद्विपरीतं प्रमाणतन्त्रं केवलं ज्ञानमेव ज्ञेयं तत्त्वं विषयीकरोति ॥

### ऐकशास्त्र्यवादे जैमिन्यभिमतं कर्मणां फलदातृत्वं विरुद्धम्, शास्त्रभेदे तु नैवम्

अत एव समन्वयसूत्रे प्रतिपत्तिविधिविषयतया शास्त्रेण ब्रह्मसमर्पणं पूर्वपक्षीकृत्य स्वप्रधानं ब्रह्म जिज्ञास्यमिति व्यवस्थापितम्। श्रीभाष्यमते तु विधेयोपासन-तच्छेषयोः संकर्षान्तेन जिज्ञासितत्वात् समन्वयसूत्र उपासनानामपीतिकर्तव्यतया धर्मत्ववर्णनं वितथम्, असङ्गतम्, पुनरुक्तं च, इति प्रतिपत्तिविधिपक्षनिराकरणम्, धर्मशब्दवाच्यत्वसमर्थनं च व्याहतम् ॥

ऐकशास्त्र्यवादे हि "धर्मं जैमिनिरत एव" इति जैमिनिमतेन पूर्वपक्षः, न तु जैमिनिमतस्य निरसनमपीति स्थितिः, इति कथं कर्माणि तदाराध्यदेवतास्वरूप-तत्प्रीत्यादिविकलेभ्योऽपि फलं ददातीति फलदाने कर्मणां प्राधान्यापत्तिः?

> "यो यो यां यां तनुं भक्त्या श्रद्धयाऽर्चितुमिच्छति ॥
> तस्य तस्याचलां भक्तिं तामेव विदधाम्यहम् ॥
> स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥
> लभते च ततः कामान् मयैव विहितान् हि तान् ॥"

इति हि स्वाराध्यदेवतास्वरूप-तत्प्रीत्यादिविकलेभ्योऽपि तत्तच्छ्रद्धानुगुणं भगवानेव फलं ददाति, न तु कर्माणि स्वयमिति गायति। अतः फलदाने प्राधान्यं न कथमपि कर्मणाम् ॥

निर्विशेषप्राधान्ये द्वादशलक्षण्याः, षोडशलक्षण्या वा धर्मापेक्षं फलदातृत्वम् , शारीरकस्य तु धर्मानपेक्ष-मिति विशेषः

अत एव—जैमिनिमतनिरासोऽत्र। यदि द्वादशलक्षण्यभिप्रायं कर्मणां प्राधान्यम् , संकर्षदृष्ट्या तु देवताप्राधान्यमत्राभिप्रेतम् , एवमपि तत्त्वज्ञानाभिप्रायमपीश्वरसंकल्पापेक्षं फलदातृत्वमिति तु बाधितम्। तत्त्वज्ञानं हि स्वतोऽज्ञाननिवर्तनक्षमं सर्वोपाधिनिरसनमात्रे नेश्वर-संकल्पमपेक्षते। निर्विशेषं ब्रह्म तद्विषयः, न तूपास्यं सविशेषं ब्रह्मेति सर्वमिदं निर्विशेषतासिद्धान्ते न प्रतिकूलम्॥

उपास्यदेवतायाः फलदाने प्राधान्यमपि ज्ञानद्वारेति शास्त्र-भेदस्य तत्त्वम् , यत्रैव गीताया अपि तात्पर्यम्

"यमेवैष वृणुते तेन लभ्यः" इति सगुणोपासनमपि ब्रह्मभावमेवो-पासनप्रीतभगवद्दत्तज्ञानयोगद्वारा प्रापयति। तथा च गीता—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥"

इति। सर्वथा तु फलदान उपास्यसविशेषस्य प्राधान्ये न विप्रतिपत्तिः॥

"फलमत उपपत्तेरि"त्यस्याद्वैत एव सार्थक्यम् , नान्यत्र

तत्र "फलमत उपपत्तेः"इति शास्त्रभेदपक्ष एवोपपद्यते। तत्राद्वैत-सिद्धान्ते सविशेषविचारोऽप्यवान्तरतात्पर्यविषयः, इति वेदान्तदृष्ट्या सविशेषोपासनवत् कर्मणामपि फलदातृत्वं भगवत एव, न कर्मणां स्वत इति व्यवस्थापयितुं तत्सूत्रम् , अन्यथा क्रियात्वाविशेषाद् उपासनेऽपि भगवतो न फलदातृत्वम् , किन्तूपासनस्यैवेत्यापत्त्या सविशेषब्रह्मसत्ता व्यावहारिक्यपि न स्यात् , इति जैमिनीयमतं समन्वयसूत्रे निरस्तं पुनरुत्तिष्ठेत्। अत एवात्र जैमिनिमतनिरसनम् , भगवतः सविशेषस्यैव सर्वत्र फलदातृत्वव्यवस्थापनं च॥

उत्तरमीमांसाविषयः, फलं चैकम् , नैवं पूर्वत्र

तत्र सविशेषं ब्रह्माधिकृत्यावशिष्टाः सर्वेऽपि विचारा उत्तरमीमांसायां विचार्यन्ते। ते हि सविशेषं ब्रह्मोपहितात्मना भिन्नमपि वस्तुगत्या निर्वि-

शेषमेव, न च तत्र ब्रह्मभेद इति सूचयितुम्। व्यक्तं चैतदानन्दमयाधिकरणप्रसङ्गे। तथा चाज्ञाननिवृत्तिमात्रे शास्त्राणां पर्यवसानाद्, निवृत्ताज्ञानं संविन्मात्रमेव विषयोऽपि, फलमपि ॥

### अनुष्ठानानपेक्षस्य ज्ञानस्यैव ब्रह्मजिज्ञासायां फलत्वम्, धर्मजिज्ञासायां तु नैवम्

धर्मजिज्ञासायास्तु संकर्षान्ताया न विषयः, फलं चैकम्। तत्क्रतुन्यायोऽपि नोपास्येन परमात्मना समानधर्मत्वं मुक्तौ सविशेषोपासनपरमार्थतायाम्। अत एव सूत्रम्—जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्चे''त्यादि, यत्तु विधेयज्ञानफलम्। मोक्षस्तु प्रमाणमात्रतन्त्र-विध्यतन्त्रसाक्षात्कारमात्रप्रयुक्तानावृतसंविन्मात्रम्, इति जिज्ञास्यभेदः फलभेदश्चोत्तरमीमांसायाम्, इति न पूर्वोत्तरमीमांसयोरैक्यम्; अनुबन्धचतुष्टयभेदादिति सिद्धम्। इदमेवाभिप्रेत्य भाष्यम्—"सिद्धं फलं ज्ञानम्, नानुष्ठानापेक्षम्" इति ॥

### अद्वैतिनां ज्ञानमात्रफलत्वं स्वसिद्धान्तसिद्धवत्कारेणेति भूषणाक्षेप-परिहारौ

अत्र भूषणं वदति—इदं स्वमतसिद्धवत्कारेणेति, निरसनप्रकारस्तु तस्य ब्रह्मज्ञानस्यापि ध्यानरूपस्यानुष्ठानसापेक्षस्यैवास्माभिरङ्गीकारात्—इति। इदमत्रावधेयम्—यद् भूषणमप्यत्र स्वमतसिद्धवत्कारेणैव प्रत्युरतीति। आस्तामियं कथा—प्रस्तुतैकशास्त्र्यकथैव परीक्ष्यते ॥

### एकव्याख्येयव्याख्यानत्वेन नैकशास्त्रता

सा हि शतदूषण्यादिना एकव्याख्येयव्याख्यानत्वेनापि समर्थ्यते। न चैकव्याख्येयव्याख्यात्वेनैकशास्त्र्यम्। द्वैत-विशिष्टाद्वैत-शुद्धाद्वैतादीनां सर्वेषां नैकोपनिषद्व्याख्यानानामैकशास्त्र्यं नाम। न चात्रैकव्याख्येयव्याख्यानत्वमपि; "चोदनालक्षणधर्मविचारत्वं षोडशलक्षण्याः, ज्ञान-तद्विषयब्रह्मवाक्यव्याख्यानत्वं तु प्राधान्येनोत्तरमीमांसायाः। प्रसङ्गात्, सङ्गतिविशेषाद्वा न्यायस्वरूपनिर्णयार्थतया वा देवताधिकरणापशूद्राधिकरणमतान्तरनिरासादिकमिव सविशेषविचारोऽपि निर्विशेषवाक्यप्राधान्यं नोपहन्ति ॥

अयमेव न्यायस्तत्तद्भाष्यव्याख्यानानामेकशास्त्रतायामपि। न चात्रोपकाराभेदोऽपि। इदमेवाभिप्रेत्य शतभूषणी—एकव्याख्येयव्याख्यानत्वेनै-

कशास्त्रतायां सर्वेषां वेदाङ्गानाम्, सर्वेषां विद्यास्थानानां चैकशास्त्रताऽऽपत्तिरिति ॥

ऐकशास्त्र्यस्वरूपनिष्कर्षो भूषणाभिमतोऽतिव्यापकः

यत्तु—क्रमविशेषनियामक-सङ्गतिविशेषविशिष्टावान्तरार्थव्यावृत्तासाधारणोपकारार्हमुख्यैकार्थत्वं ह्येकशास्त्रत्वम्—इति, तदिदं वेदान्तसूत्रभाष्येषु सर्वेषु खण्डनमण्डनपरेष्वविशिष्टम् ॥

पूर्वमीमांसायाः, उत्तरमीमांसायाश्च नैकमुख्यार्थता, न वाऽत्रावान्तरार्थस्य जैमिनि-बादरायणोभयविरुद्धस्य परस्परमविरोधः; अन्यथा हि बहुषु विषयेषु जैमिनिमतनिरसनं नोपपद्यते। मतान्तरनिरसनं यद्यपि प्रकृतार्थोपकारकं भवितुमर्हति, जैमिनिमतस्यैवोत्तरमीमांसायां निरसनं कथं जैमिनीयविचारस्योपकारकम्?

यथा चोत्तरमीमांसायां साङ्ख्यादिविरुद्धमतनिरसनेऽप्येकशास्त्रताऽवान्तरसङ्गतिविशेषेण, एवं ब्रह्मसूत्रे वेदान्तादिव्याख्यानरूपभाष्याणामपि स्वस्वसिद्धान्तोपकारार्थमेव मतान्तरनिरासात् कथं नैकशास्त्रता?

यदि तत्तदभिमतप्रधानार्थभेदाद् भिन्नशास्त्रता, तर्हि जैमिनि-बादरायणसिद्धान्तयोरपि प्रधानयोर्भिन्नत्वात् कथं न भिन्नशास्त्रत्वम्? कर्मब्रह्मजिज्ञासयोर्जिज्ञास्यफलभेदसाधनात् परस्परसिद्धान्तानङ्गीकारेण परमतनिरसनमकिञ्चित्करम् ॥

अङ्गानाम्, विद्यास्थानानां च प्रधानोपकारकत्वमुपकारप्रकारभेदेऽप्यविशिष्टम्, इति तेषां परस्परस्यैकशास्त्रताऽयोगेऽपि प्रधानेन सह कथं नैकशास्त्र्यम्?

न चोत्तरमीमांसया पूर्वमीमांसाया उपकारलेशोऽपि। तत्रोभयोरपि वेदार्थविचारत्वेन प्रतिपाद्यार्थप्राधान्यं कुत्र? कुतो वा? विद्यास्थानत्वेऽपि सर्वेषां विष्णुपराणाम्, शिवादिपराणां वा परस्परमेकवाक्यतया योजनमर्हतां कथं नैक्यम्? कथं वा स्मृतीनां सर्वासां परस्पराविरोधेन धर्मतत्त्वं मीमांसान्यायेन विवेचयतां परस्परं मीमांसाशास्त्रेण सह नैक्यम्? न चोत्तरमीमांसाऽऽराध्यसविशेषमात्रपरा, कर्ममीमांसाऽपि संकर्षान्ताऽऽराधनमात्रपरेति कस्या अनयोः प्राधान्यमित्यत्र किमपि न नियामकमस्ति ॥

विरुद्धार्थकत्वेन मीमांसाद्वयस्य भेदः, पूर्वोक्तलक्षणविरहात्

वस्तुतस्तु पूर्वोत्तरमीमांसयोर्विरुद्धार्थकत्वाद् नैकप्रधानोपकारकत्वम्। तत्र शबर-कुमारिलादिमतानुसारेणोत्तरमीमांसा न शास्त्रमेव; उपनिषदामर्थवादत्वात्, जैमिनि-बादरायणयोर्दृष्ट्या तु विरुद्धार्थत्वं स्फुटम्; उत्तरमीमांसायां जैमिनिमतस्य निरसनात्। उपवर्ष-भास्करादिदृष्ट्यैकशास्त्रता तु न श्रीभाष्यस्यापि; ज्ञान-कर्मसमुच्चयानङ्गीकारात्। स्वतन्त्रजिज्ञासत्वाच्च कर्म-ब्रह्मजिज्ञासयोर्नाङ्गाङ्गिभावोऽपीति तु विवेचितम्, इति कथं पूर्वोत्तरमीमांसयोः कयाऽपि विधयैक्यम्?

भास्करसिद्धान्तेन परेषां विरोधाद् नैकशास्त्रता

तत्र भास्करभाष्यं ब्रह्मणः स्वरूपपरिणामं स्वीकुरुते, इति तन्मतं श्रीभाष्यनिरस्तत्वात् श्रीभाष्यसिद्धान्तविरोधि, एवं ज्ञान-कर्मणोः समसमुच्चयवादे; विशिष्टस्यैव मोक्षसाधनत्वस्य तन्मते स्वीकारात्। व्यक्तं चैतत् भास्करभाष्ये समसत्ताकभेदाभेदवादी भास्करः, विशेषस्तु कार्यात्मना भेदः, कारणात्मनाऽभेदः—इति। शास्त्रसंप्रदायप्रवर्तकत्वेनोपवर्षाचार्यस्य तद्भाष्य उपन्यासात् भास्करोपवर्षाचार्ययोरेकसिद्धान्तता॥

"दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन"।

इति कुमारिलभट्टवार्तिके तूपवर्षवृत्तिनीत्याऽऽत्मवादोपसंहारात् तत्राप्युपवर्षसिद्धान्त एव विवक्ष्यते। तन्मते च—

"ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान्।"

इति वार्तिकत आत्मविभुत्वस्य स्वीकाराद् आत्माणुत्ववादिनां स हृदयशूलम्॥

न च भास्करमतेनैक्यमद्वैतसिद्धान्तस्य कुत्राप्यद्वैतपरमसिद्धान्ते, तदनुबन्धिनि वा। शास्त्रैक्यवादादेः श्रीभाष्यमत इव वस्तुतो ज्ञान-कर्मसमुच्चयाद्यामयनिरसनेनोपवर्षाचार्यादयः परिरक्ष्यन्त इति भूषणं लिखति, परन्तु ज्ञान-कर्मसमुच्चय उपवर्षाचार्याणां मुख्यः प्राणः, इति मुख्यप्राणनिरसनं कथम्?

अध्ययनविधेरक्षरग्रहणार्थत्वेऽपि विचारस्य वैधत्वाद्
वेदाध्ययनानन्तर्यार्थत्वोपपत्तिः

तत्राध्ययनविधेरक्षरग्रहणमात्रार्थत्वपक्षे वेदविचारत्वमध्ययनसंस्कृतस्यैव वेदत्वाद् वेदार्थविचारे रागतः प्रवृत्तिरपि वेदाध्ययनमन्तरा न भव-

तीत्यभिप्रेत्यैव पूर्वमीमांसायां वेदाध्ययनानन्तर्यमथशब्दार्थः। तत्र मीमांसायाः प्राप्तिर्ज्ञेयश्चेति विधित इति पूर्वमुक्तम्। 'ज्ञेयश्चे''ति विधिस्तु—"ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्चे''ति। न चेदं स्वाध्यायवाक्य इव स्वपदघटितमाम्नायते। अतस्तन्मूलं को विधिरन्ततो गत्वा श्रीभाष्यसिद्धान्तदृष्ट्याऽधीतानधीतसर्वशाखोपनिषद्विचारं गोचरयति? इदमेवाभिप्रेत्य पूर्वोत्तरमीमांसयोरधीतानधीतसर्वशाखोपनिषद्विषयविचारः, न स्वाध्यायाध्ययनविधिसिद्धस्यैव व्याख्यानम्। अयं चार्थः—'अध्ययनविधिसिद्धे'ति वेदस्य विशेषणात् विशदीकृतः। अतः परमतरीत्येदम्॥

न चात्र वेदाध्ययनानन्तर्याथशब्दार्थताविरोधो धर्मजिज्ञासायाम्; "उपनिषदमावर्तयेत्" इति विधिमद्भिर्नैवोपनिषद्विचार इति पूर्वोक्तार्थोऽप्यत्रानुसन्धेयः। न चात्रापि पक्षे मीमांसाया नेतिकर्तव्यतात्वम्, "ज्ञेयश्चे''ति विधौ तस्या इतिकर्तव्यतात्वेनान्वयात्॥

परिमलस्यान्यथा ग्रहणेनाद्वैतमतनिरसनं परेषाम्

न च पूर्वमीमांसकानां सर्वेषामप्यक्षरग्रहणार्थत्वपक्षो विरुध्यते। न चात्रापि विचारवैधत्वविरोधः। न च मीमांसयोरेकव्याख्येयव्याख्यानत्ववादः कोऽप्यद्वैतमते, तथा भूषणस्य पूर्वाचार्यग्रन्थनयनं तु तदनावर्जमेवं विविनक्ति; सर्वोऽपि परिमलार्थोऽन्यथैव भूषणेन, अन्येन वा गृहीत्वैवाद्वैतमतनिरसनात्॥

वस्तुतस्तु परिमलः शास्त्रैक्येऽपि कर्मविचारपूर्ववृत्ततां निरस्यति

स्पष्टं भूषणेनानूदितः परिमल एवैकनिबन्धत्वेऽपि कर्मविचारानन्तर्यवादं निरस्यति। निरस्ते च तस्मिन् ऐकशास्त्र्यमिति नाममात्रमकिञ्चित्करम्। अतो भागद्वयस्यैकप्रबन्धतैव परिमलाभिप्रेता, नैकशास्त्रता। अत एव तत्रैव कर्मविचारपूर्ववृत्ततानिरासः, शास्त्रैक्यवादश्च। न च मुख्ये, सार्थके च शास्त्रैक्ये कर्मविचारपूर्ववृत्ततानिरासः सविस्तर उपपद्यते। अतः परिमलस्यापि न श्रीभाष्याद्यभिमतमैकशास्त्र्यं भूषणोक्तरीत्या संमतम्॥

मीमांसाद्वयस्य न्यायविशेषनिष्कर्षमात्रं लक्ष्यम्, न सर्ववेदार्थनिर्णयः साक्षात्

तत्र कृत्स्नोऽपि वेदः सत्यमेको महान् वृक्षः, तस्य पार्श्वभेदेन सहस्रम्, एकशतम्, तथा नाना नाना च शाखा बहवः सन्ति। तत्र

महतो वृक्षस्य सवस्य विचारो न धर्ममीमांसा, न वा ब्रह्ममीमांसा। तत्र सन्दिग्धानि कानिचन वाक्यानि न्यायतो निर्धारयितुं मीमांसाद्वयम्। तन्निर्णीतैश्च न्यायैः सर्वाणि वेदवाक्यानि निर्णीतप्रायाणि। न्यायविशेषनिष्कर्षमात्रं मीमांसाद्वयस्य लक्ष्यम्॥

ऋगादिभेदेन तत्रापि शाखाभेदेन मन्त्र-ब्राह्मणात्मना चैकस्यैव वेदस्य नानाविभागा विराजन्ते॥

सर्वेषां वेदानामद्वैतमेव मुख्योऽर्थः

तत्र सर्वेषां वेदानां परमात्मनिर्णयावसाने न विसंवादः। विसंवादस्तु तत्र संविन्मात्रस्वरूपे परमात्मनि कथं सर्वेषां पर्यवसानमिति। तत्र 'तत्त्वमसि' वाक्ये तत्पदेनोपासनाकाण्डप्रतिपाद्यस्य, त्वम्पदेन कर्मकाण्डाधिकारिणश्चौपाधिकस्य साक्षात्, तत्तत्काण्डप्रतिपाद्यस्य वस्तुगत्याऽद्वितीये पर्यवसानं यथाश्रुतम्; "सर्वे वेदा यत्पदमामनन्ति" इति यथार्थं निर्विशेषचैतन्यमात्रस्यैव परमार्थत्वात्॥

सोपानक्रमेण सर्वेषां वेदानामद्वैतेनाविरोधः

तत्र सृष्टिवाक्यानामपि तत्पदार्थस्वरूपलक्षणादिविधया निरूपणेन न भिन्नवाक्यता। सर्वथा तु वेदार्थविचारत्वेन मीमांसात्वेन, वा मीमांसयोरैक्ये न विसंवादः, मुख्यलक्ष्यमोक्षसोपानक्रमबोधकतया वा सर्वेषामेकत्र पर्यवसानं भवतु। अनुबन्धचतुष्टयैक्यं तु नोभयोः। वेदार्थविचारत्वोपाधिकमैकशास्त्र्यं नात्र किञ्चित्करमिति भामत्यादौ व्यक्तम्॥

रागप्राप्तत्वे वा यावदपेक्षमेव मीमांसा यदीतिकर्तव्यता, तर्हि षोडशलक्षणीविचारानन्तरमेव ब्रह्मजिज्ञासा। ब्रह्ममीमांसाकालेऽपि यावदपेक्षं कर्मविचारोऽपि कर्मानुष्ठानानधिकारेऽपि कथं न संभवति? कर्मविचारापेक्षायामपि न तस्य सम्पूर्णस्य पूर्ववृत्तत्वनियमः, येन कर्मविचारानन्तरमेव ब्रह्मविचारः सिद्ध्येत्॥

अपेक्षामात्रेणैक्ये सर्वेषां सर्वत्र किञ्चिदपेक्षयैक्यापत्तिः

तदपेक्षणमात्रेणैकशास्त्र्ये सर्वेषां दर्शनानां तत्तन्मतनिरासार्थं तत्तद्दर्शनप्रक्रियादीनामपेक्षणात् खण्डनग्रन्थेन खण्डनीयग्रन्थस्यापि पूर्वोत्तरमीमांसयोरिवैक्यं स्यात्। सर्वदर्शनसंग्रहादिन्यायो नात्र भवितुमर्हति; तन्न्याय-

मात्रेणैव तस्यैकग्रन्थत्वमात्रम्, नैकशास्त्र्यम्; प्रतिभागं विषयाधिकारि-प्रयोजनानां भेदात्। न च तत्र प्रथमप्रकरणपठनानन्तरमेव द्वितीयादिप्रकरणमध्येयमिति नियमः, तादृशं चैकशास्त्र्यं यदि भिन्नकर्तृकयोरपि मन्यते, तर्हि कामं मन्यताम्। कर्मविचारानन्तर्यनियमः परं परित्यज्यताम्। तत्रैवाद्वैतिनां निर्भरः, न नामनि ॥

### फलजिज्ञास्यभेदप्रयुक्तशास्त्रभेद एव निर्भरः

सति चैवं फल-जिज्ञास्यभेदाधीनः शास्त्रभेदो दुर्निवारः। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति हि न्याय एकमुख्यविषयतायाम्, अङ्गाङ्गिभावेनैकप्रधानार्थत्वे वा प्रसरति। न च कर्म-ब्रह्मविचारयोरुभयोरपि तथा। न च ब्रह्मजिज्ञासा-कर्मजिज्ञासयोरङ्गाङ्गिभावः, कर्म-ब्रह्मज्ञानयोर्वेति भामत्यां "कर्मविचारानन्तर्यं तु विशेषः" इत्यत्र विवेचितम् ॥

### सर्वथा तु कर्म-ब्रह्मविचारयोर्न पूर्वोत्तरभावः

ज्ञानशब्देनोपासनाया एव विवक्षायामपि कर्मण उपकारकत्वमात्रम्, नाङ्गत्वं श्रुति-लिङ्गादिनयेन। तत्र "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" "दर्श-पूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"तिवद् नात्र कर्म-ब्रह्मजिज्ञासयोः स्वतन्त्रयोः पूर्वापरीभावः श्रूयते। कर्मविचारो हि कर्मस्वरूपज्ञानार्थः कर्मार्थः, इति सत्यपि कर्म-ब्रह्मज्ञानयोरङ्गाङ्गिभावे तत्तद्विचारयोस्तत्तज्ज्ञानमात्रतयोपक्षीणतयाऽन्यार्थयोर्द्वयोः परस्परमङ्गाङ्गिभावोऽप्रामाणिकः ॥

### कर्मविचार-ब्रह्मविचारयोरवैधत्वेनापि नाङ्गाङ्गिभावः

सत्यपि कर्म-ब्रह्मज्ञानयोरङ्गाङ्गिभावे कर्मविचार-कर्मणोर्ब्रह्मविचार-ब्रह्मज्ञानयोरिव साक्षात् कर्म-विचाराभ्यां पौर्वापर्यं न संभवति। तत्र कर्मविचारस्यावैधत्वे, ब्रह्मविचारस्य च तथात्वे कथं तत्रावैधयोरङ्गाङ्गिभावोऽपि ? उपकारकत्वमात्रं तु कर्मविचारस्य कर्मज्ञाने, ब्रह्मविचारस्य ब्रह्मज्ञाने ॥

### 'गुणानां च परार्थत्वादि'ति न्यायेनापि कर्मविचारो न ब्रह्मविचारोपयोगी

तत्र कर्म-ब्रह्मविचारयोर्नाङ्गाङ्गिभावः; 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादि'ति न्यायात्, इति स्थिते कर्मविचार-ब्रह्मविचारयोः कथमङ्गाङ्गिभावः ? न हि दर्श-पूर्णमासाङ्गत्वेऽपि प्रयाजानुयाजयोः प्रया-

जाङ्गमभिक्रमणादिकमनुयाजाङ्गम्। न हि लोकेऽप्येकयजमानकयोः सेवकयोः परस्परं सेव्य-सेवकभावमनापन्नयोरेकस्य सेवकोऽन्यस्य सेवकतामर्हति। अतः कर्मणो ब्रह्मज्ञानाङ्गत्वेऽपि कर्मविचार-ब्रह्मविचारयोर्नाङ्गाङ्गिभावः, येन तयोरैकशास्त्र्यं स्यात्। कर्मणामुपासनया मोक्षे जननीये प्रतिबन्धकनिरासार्थत्वेनाङ्गत्वमुत्तराङ्गत्वेऽप्युपपद्यते, इति कर्मविचारपूर्ववृत्तत्वमसंभवि। ब्रह्मज्ञानं तु साक्षात्कारात्मकमविधेयमिति सिद्धान्ते तु कर्म-ज्ञानयोरङ्गाङ्गिभावकथा सुदूरे॥

कर्म-ब्रह्मविचारफलयोः स्वतन्त्रयोः प्राधान्याप्राधान्य-
निर्णयासम्भवः

तत्र जैमिनिः कर्मविचारस्य फलं कर्मज्ञानमाह, एवं बादरायणोऽपि ब्रह्मविचारस्य ब्रह्मज्ञानम्, न तु कर्मविचारफलं ब्रह्मज्ञानम्, ब्रह्मविचाफलं वा कर्मज्ञानम्। तत्तद्विचारस्य स्वतन्त्रं फलं तत्तत्स्वरूपादिज्ञानमेव, इति तत्तत्फलयोः कस्य प्राधान्यं कस्याप्राधान्यम्, तत्तद्विचार्ययोर्वा कस्य प्राधान्यमिति तु तत्तद्विषयकप्रमाणान्तराधीन एव निर्णयः॥

प्रमाणान्तरं तु विचार्ययोरङ्गाङ्गिभावनिर्णायकं विचारयोरप्यङ्गाङ्गिभावं न निर्णेतुमलम्। "अर्थैकत्वादि"ति न्यायेनापि न शास्त्रैक्यवादः संभवति। न च विचारयोरङ्गाङ्गिभावनिर्णायकं श्रुति-लिङ्गादि, क्रमनियामकं श्रुत्यर्थ-पाठादिकं वा किमप्यत्र प्रमाणमिति भाष्य-भामत्यादौ व्यक्तम्॥

द्वादश-षोडशलक्षणे मध्यमाधिकारिविषयौ; उत्तरोत्तर-
साधनत्वात् पूर्व-पूर्वयोः

क्षुद्रफले कर्मविचारे प्रथमं प्रवर्तयितुं व्यासेन गुरुणा शिष्यस्य जैमिनेः पूर्वमीमांसायां प्रेरणाद् ज्ञायते—द्वादशलक्षणी, षोडशलक्षणी वा मध्यमाधिकारिणमपेक्ष्यैव, न तूत्तमाधिकारिणम्। यथा भक्तियोगेऽधिकारं प्रापयितुं कर्मयोगस्य, तथा ज्ञानयोगेऽधिकारप्रापणार्थं भक्तियोगस्य च। तदुक्तम्—

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्॥"

इति। स च मध्यमाधिकारी गुरुणोत्तमाधिकारी क्रियते, इति मध्यमाधिकारिविषयं शास्त्रं नोत्तमाधिकारिकम्, यथाऽऽपद्धर्माधिकारी, न गौणधर्माधिकारमर्हति, गौणधर्माधिकारी वा मुख्यधर्माधिकारम्॥

तत्र प्राप्तमुख्यधर्माधिकारस्य गौणकर्माधिकारनिवृत्तिवत् प्राप्तज्ञानयोगाधिकारिणः प्रतिबन्धनिरासार्थं कर्मयोगावश्यकतायामपि निवृत्ते प्रतिबन्धके न कर्मानुष्ठानावश्यकता कयापि विधया—समसमुच्चयविधया वा, विषमसमुच्चयविधया वा, इति न कर्मणां ज्ञान उपयोगोऽद्वैतमते, इति भिन्नाधिकारिकत्वाद् न कर्म-ब्रह्मविचारयोरैकशास्त्र्यम्। मध्यमाधिकारावस्थायां कर्मानुष्ठानस्येह जन्मनि परत्र वा प्रतिबन्धकनिरासार्थमपेक्षायामपि नियतं ब्रह्मविचारपूर्ववृत्तत्वमिहैव जन्मनि त्यज्यते ॥

कर्मविचारेण ब्रह्मविचारापादकं किमपि न व्युत्पाद्यते,
येन तत्पूर्ववृत्तता स्यात्

स्यादेतत्—कथं कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तता? यदि सापेक्षतया, तर्हि ब्रह्मविचाराधिकारापादकं किं वा कर्मविचारेण साध्यते? न च कर्मफलानित्यत्वनिर्णयः कर्मविचाराधीनः; कर्मविचारे तस्याभावात् ॥

कर्मफलानित्यत्वनिर्णायकः कोऽपि न्यायो न जैमिनीये, प्रत्युत
कर्मफलनित्यत्वमेव वचनेनावगम्यते, इति कर्मफला-
नित्यत्वनिर्णायकतया न पूर्ववृत्तता तस्य

अत्र भूषणं लिखति—कर्मफलमेव नित्यम्, तस्मात् ब्रह्मेति किञ्चिदस्तीति मन्तव्यमिति जैमिनिर्नोपदिदेश। अतो विरुद्धं तत्त्वं न संभवति। जैमिनिर्हि—"स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति स्वर्गमुत्कृष्टं सुखं निश्चिनोति, "फलस्य कर्मनिष्पत्तेः तेषां परिमाणतः फलविशेषः स्यात्" इति यथायथं परिमितं निर्णयति—इति।

अस्तु, किमनेन साधितं भवति? स्वर्गफलमुत्कृष्टमिति, चातुर्मास्यप्रकरणपठितं तु वाक्यम्—"अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती"ति चातुर्मास्यफलस्याक्षय्यत्वमाम्नाति। सर्वथा तु कर्मकाण्डेऽसंदिग्धमेकमपि वचनं कर्मफलानित्यत्वोपदेशपरं नास्ति, न वा जैमिनीयं सूत्रमपि किमपि स्वर्गानित्यत्वप्रतिपादकमत्र कर्मविचारे वर्तते, इति कुतो वा कर्मफलानित्यत्वनिर्णयः? येन कर्मफलानित्यत्वनिर्णयार्थं कर्मविचारापेक्षा। ततोऽधिकं ब्रह्म वर्तते वा न वेत्यत्र कर्मकाण्डस्यास्तु नामौदासीन्यम्। संकर्षकाण्डस्तु सविशेषं ब्रह्म वदतीति त्वन्यदेतत् ॥

कर्मफलानित्यत्वाम्नानं तु वेदान्तेष्वेव, न कर्मकाण्डे

तत्र कर्मफलानित्यत्वमसन्दिग्धेन वेदान्तवाक्येनैव "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्याकारेणावगम्यते, इति सत्यपि पौर्वापर्ये ब्रह्मविचाराधिकारयोग्यतोपधायकं यावत् किमपि कर्मविचारेण नाधीयते, तावत्तस्याधिकारितावच्छेदकत्वं न संभवति। कर्मविचारे जैमिनिः, सत्यम्, कर्मफलेषु स्वर्ग एवातिशयित इत्येतावन्मात्रं वदति, न तु तस्यानित्यत्वमपि॥

तदनित्यता हि वेदान्तवाक्यमात्रस्यासंदिग्धस्य पर्यालोचनया। सा तु वेदान्ताध्ययनमात्रेणापि भवति। अत एवोक्तं भाष्ये—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति। सर्वथा तु नित्यानित्यवस्तुविवेकस्य, वैराग्यस्य वाऽधिकारितावच्छेदकस्य कर्मविचारानधीनत्वाद् न तदानन्तर्यार्थता युक्ता। "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यपि वेदान्तार्थ एव, न तु कर्मकाण्डार्थः, पूर्वमीमांसानिर्णीतो वा॥

अधिकारिविशेषणानां सर्वेषां ब्रह्मजिज्ञासात एवावगमः

इदमुपलक्षणम्—वैराग्य-नित्यानित्यवस्तुविवेक-शम-दमादीनां मुमुक्षान्तानां सर्वेषां साधनानां वेदान्तवाक्यत एवावगमः, न कर्मविचारेणेत्यभिप्रेत्यैवाधीतवेदान्तस्येतिपदं भगवत्पादानाम्। न हि स्वर्गफलकत्वमात्रेण कर्मणामल्पास्थिरफलत्वनियमः। "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति सर्वप्रेमास्पदत्वं स्वर्गस्यैवोच्यमानं स्वर्गस्यैव परमपुरुषार्थत्वमभिप्रैति। अल्पास्थिरफलत्वमुपासनाया अपि समानम्॥

न चैकान्तेन वेदान्तानामपि मोक्ष एव फलं लक्ष्यम्; ओंकारोपासनादावन्यत्राप्यल्पास्थिरफलत्वदर्शनात्, उद्गीथाद्युपासनानामपि न मोक्ष एव फलम्॥

कर्मणाम्, विचारस्य वा ब्रह्मजिज्ञासायामुपयोगोऽपि ब्रह्मसीमांसैकावसेयः शम-दमादेरिव

"विविदिषन्ती" ति वाक्यमपि वेदान्तवाक्यमेव, तद्विचारोऽपि ब्रह्ममीमांसायामेव, न कर्ममीमांसायाम्, इति कर्मविचारेण कर्मणां न ब्रह्मविचाराङ्गत्वमपि, इति तदपि कर्मविचारस्य ब्रह्मविचाराङ्गत्वे न प्रमाणमिति त्वन्यदेतत्॥

तत्तत्कर्मण इव तत्तदुपासनस्य पृथक् पृथक् फलमित्यपि समानमेव मीमांसाद्वयेऽपि कर्ममीमांसासूत्राणि "अङ्गवत् क्रतूनामनुष्ठानम्" न वा सम्बन्धात् स्यात् विद्यार्थत्वात् "कर्तुर्वा श्रुतिसंयोगात्" इत्यादीनि ब्रह्मविचारे कर्मविचारोपयोगं कर्मणामल्पास्थिरफलत्वं न स्पृशन्त्यपि ॥

न चात्र निर्णीतानां न्यायानाम्, विषयाणां वाऽत्र सम्बन्धलेशोऽपि ॥

पूर्वमीमांसायां देवतानां शरीरनिरासः, उत्तरमीमांसायां तु तद्विपरीतम्, अतो विरोधादपि न कर्म-ब्रह्मविचारयोरुपकार्योपकारकभावः

षष्ठे तिर्यगधिकरणे "कर्तुर्वा श्रुतिसंयोगात् विधिः कात्स्न्र्येन गम्यते" इति "न देवतानां देवतान्तराभावात्" 'नर्षीणामृष्यन्तराभावादि'ति पूर्वमीमांसासिद्धान्तो जैमिन्यभिमतो देवतानां शरीराभावाभिप्रायेणेति भगवत्पादाशयः, भूषणादिमतं तु देवतानां देवतान्तराभावादनधिकारः, न तु विग्रहाभावादित्येव जैमिनिमतम्, सिद्धान्तस्तु देवतानामपि तदन्तर्याम्युपासनं न विरुद्धमिति ॥

जैमिनि-बादरायणयोर्देवताविग्रहे विरुद्धसिद्धान्तत्वम्

इदमेवात्र पृच्छ्यते किमनेन विवक्ष्यते—किं जैमिनिमतनिरसनं बादरायणेन न कृतमिति ? उत शबरस्वाम्यादीनां विग्रहाभावसिद्धान्तोऽप्रामाणिक इति । नाद्यः; उत्तरमीमांसायां बहुशो जैमिनिमतस्य निरसनात्, अन्त्यस्तु न प्रकृतविचारोपयोगीति न परीक्ष्यते । परन्तु भगवान् शबरस्वाम्यप्रमाणम्, स्वमतमेव प्रमाणमिति कथा स्वस्यैव शोभेत ॥

अन्तर्यामिण एव कर्मोद्देश्यत्वनिरासः

तत्र सिद्धान्तोऽन्तर्यामीति पक्षेऽप्यन्तर्यामी सर्वशरीराधिष्ठानं संविन्मात्रं वा, विशिष्टः, सर्वव्यापकः, सविशेषः परमात्मा वेत्यन्यदेतत् । देवतानामपि स्वस्वान्तर्याम्युपासनापेक्षया सर्वान्तर्याम्युपासनमेव सफलम् । न हि जीवानामपि स्वस्वान्तर्याम्युपासनविधानमेव सिद्धान्तः ॥

एतेन—हिरण्यगर्भादीनामिन्द्रादिदैवत्याश्वमेधानुष्ठानमपि—व्याख्यातम् । तेषां यज्ञानुष्ठानं हि—

"ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।<br>ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥"

इति निर्दिष्टमश्वमेधादि ज्ञानयज्ञमात्रम् , न तु जीवानामिव तत्तद्द्रव्यक-तत्तद्देवतोद्देश्यकयज्ञानुष्ठानं ब्राह्मणत्वादिशरीराभिमानिनोऽधिकृत्य विहितम् ॥

जैमिनेरपि देवताविग्रहाभाव एव सिद्धान्तः, न तु व्याख्यातॄणामेव
सर्वथा तु पूर्वमीमांसानन्तरा नोत्तरमीमांसा

यत्तु—देवताधिकरणे व्याख्यातृभिर्देवताविग्रहे निषिध्यमानेऽपि न जैमिनिस्तथा लक्ष्यते—इति, इदमपि व्याख्याप्रकारमात्रम् , न तु जैमिनिस्तथा लक्ष्यत इति तु परे ॥

स्यान्नाम—देवताऽप्राधान्यवादो जैमिनिमते, तत्प्राधान्यवादो बादरायणस्येति । एतावताऽपि नोभयोर्विरुद्धसिद्धान्तता । किं वाऽनेन व्याख्याप्रकारेणान्यत् विना जैमिनि-बादरायणयोर्विरुद्धत्वं साध्यते । सर्वथा तु कर्मणामल्पास्थिरफलत्वं न कर्मविचारे, इति धर्ममीमांसायाः पूर्ववृत्तत्वम् , तया कर्मफलानित्यत्वनिर्णयेनेति चण्डमारुतोक्तं न क्षोदक्षमम् ॥

कर्मफलानित्यत्वनिर्णयः "तद्यथेह"तिश्रुतिवाक्यत एव,
न कर्मविचारेण

उक्तं च पूर्वम्—"तद्यथेह कर्मचितः" इति न कर्मकाण्डगतं वाक्यम् , न वा तद्विचारस्तत्रेति । सति चैवं तेनैव वाक्येन युक्त्यनुगृहीतेनोपपत्त्युपबृंहितेन कर्मास्थिरफलत्वनिर्णयाद् न तदर्थं कर्मविचारोपक्षेति वदन्ती शतभूषणी निरुपद्रवा । "अक्षय्यं ह वै चातुर्मास्ययाजिनः" इत्यर्थवादः, "तद्यथेह कर्मचितः" इति वस्तुस्थितिकथनम् , उभयमपि श्रुतिवाक्यमेव, परन्तु प्रथमं प्रतिज्ञावाक्यमात्रमन्यपरं च, द्वितीयं त्वनन्यपरं श्रुतिवाक्यमपि, तात्पर्यग्राहकोपपत्त्युपबृंहितमपि, इत्यस्यैव स्वार्थसाधकत्वम् ॥

भूषणं तु वदति—"अक्षय्यमि"त्यादिश्रुत्या नित्यत्वेनावगतस्य दृष्टान्तबलेनानित्यसाधनायोगात् , विचारैव तस्य निर्णेयत्वात्—इति, परन्तु स्वयमपि विचारैव कर्मफलनित्यत्वं साधयतीति न पारयति । स्यान्नामात्रया काऽपि कथा ॥

### कर्मफलानित्यत्वनिर्णयार्थमपि न कर्मविचारापेक्षेति न तत्पूर्ववृत्तत्वम्

इदमेवात्र पर्यनुयुज्यते—यदि न कर्मविचारः साक्षात्कर्मफलानित्यत्वं न मीमांसते, कर्मफलानित्यत्वबोधकं श्रुतिवाक्यमुपपत्त्युपबृंहितमपि न तत्प्रमाणयति, तर्हि ब्रह्मजिज्ञासाधिकारोपयोगिकर्मफलानित्यत्वनिर्णयः कथं परीक्ष्य निर्णेष्यते ? किं श्रुत्या, उत प्रत्यक्षादिप्रमाणेन ? यत् कर्मफलनित्यत्वबोधिकां श्रुतिं बाधितुं क्षमेत ? का वा सा परीक्षा ? एतदर्थं पुनरपि परीक्षाऽऽवश्यिकेति केन प्रमाणेनावगम्यते ? अतो न कर्मविचारानन्तर्यमथशब्दार्थः । विशदं चैतत् भाष्ये—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"त्यत्रत्या भामती विस्तरेण विवेचयति । सिद्धान्तसिद्धाञ्जनं तु ततोऽप्यतितराम् ॥

### साधनचतुष्टयपूर्ववृत्तत्वमात्रमत्रोच्यते; कर्मविचारसहभावासहभावनियमस्तु न विवक्ष्यते

अनेन हि कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्वनियमो वार्यते, न तु कर्मविचाराभावविशिष्टसाधनचतुष्टयसंपत्तेरेवाधिकारिविशेषणत्वमुच्यते, न वा कर्मविचारविशिष्टसाधनचतुष्टयसम्पत्तेः, किन्तु नियतपूर्ववृत्तित्वात् साधनचतुष्टयमात्रमधिकारिविशेषणमिति ॥

एतेन—"धर्मजिज्ञासायाः प्रागपी"त्यादि भगवत्पादभाष्यम्—अध्ययनस्यैव वैधत्वेऽपि विचारस्य वैधत्वाभावात् कर्मविचारं विना ब्रह्मविचारकरणेऽपि न प्रत्यवाय इत्येतावदेव ज्ञापयति; यतो नात्र धर्मजिज्ञासाविरहविशिष्टब्रह्मविचारेच्छा ब्रह्मविचारकारणम् । तत्र धर्मविचारेच्छाविरहो धर्मविचारस्य निष्पन्नत्वाद्वा, विचारफलस्य कर्मफलानित्यत्वनिर्णयस्य प्रकारान्तरेण सम्पन्नत्वाद्वेति । तदाशयस्तु ब्रह्मज्ञाने कर्मणामनुपयोग इति सिद्धान्तस्यैवासिद्धिः । कर्मफलानित्यत्वनिर्णयायेव तदनुष्ठानार्थमपि तद्विचारस्य कर्तव्यतया विचारनिष्पन्नताप्रयुक्त एव विचारेच्छाविरहः, इति कर्मविचारानन्तर्यं प्राचीनव्याख्यातं समीचीनमेवेति श्रीभाष्यहृदयमिति—परास्तम् । सत्यम्, इहैव जन्मनि विनापि कर्मविचारं ब्रह्मविचारे सत्यां साधनचतुष्टयसम्पत्तौ फलसिद्धिः; ब्रह्मजिज्ञासानपेक्षत्वाद् धर्मजिज्ञासायाः, ब्रह्मजिज्ञासाधिकारकारणकर्मफलानित्यत्वस्य निर्णयात्, ब्रह्मज्ञाने कर्मणाम्, तद्विचारस्य वाऽनुपयोगस्य पूर्वं व्यक्ती-

करणात्, कर्मफलानित्यत्वनिर्णयाय कर्मविचारस्यानपेक्षणात्, पूर्वोक्त-युक्तिवर्गाच्च न कर्मविचारानन्तर्यमथशब्दार्थः ॥

धर्मजिज्ञासायां बौद्धधर्मव्यतिरिक्तस्यैव धर्मपदार्थत्वाद् वेदाध्यय-नात् पूर्वमपि न ब्रह्मविचारापत्तिः

तत्र—"अथातो धर्मजिज्ञासे"त्यत्र 'सर्वं वाक्यं सावधारणमि'ति न्यायेन—अथैवेत्यवधारणेऽध्ययनानन्तरमेव धर्मजिज्ञासा, न तु ततः प्रागिति सूत्रार्थः। तत्र "धर्मजिज्ञासे"त्यत्रावधारणविवक्षायां त्वध्यय-नानन्तरं धर्मजिज्ञासैव, नान्यत् किमपीति सूत्रार्थः। तत्रान्त्ये पूर्वकाल-व्यवच्छेदः, द्वितीये कार्यान्तरव्यवच्छेदः। तत्राऽऽद्ये धर्मविचारनियमात् स्नानात् पूर्वं न विचारनियमः; प्राक्कालव्यवच्छेदाभावात्, आद्ये तु बौद्धधर्मविचारोऽपीत्याशङ्क्य समाहितं शावरे भाष्ये—"तादृशीं धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न संभवती"ति। परमार्थभूषणं तु—तत्रैतद्भाष्यावतरणिकाविधया प्रवृत्तं वार्तिकार्थमादाय प्रश्नमात्रमुपक्षिपति, न तु भगवतः शबरस्वा-मिनोऽत्रोत्तरं संगृह्णाति, किन्तु कामपि नूतनां कथामुपस्थापयति। इदमेवात्र पर्यनुयुज्यते—किं वा स्वसिद्धान्तसमर्थनार्थम्, अद्वैतसिद्धान्त-निरासार्थं वा तत्त्वमाविष्कृतं भूषणेन? को वा श्रीभाष्यकाराणाम्, भूषणस्य वाऽत्र कल्पोऽभिप्रेत इति विविच्यतां भूषणेन ॥

तत्र प्रथमे कल्पे विनाऽध्ययनं यदि न कर्मविचारः, तर्हि अध्ययना-नन्तर्यमथशब्दार्थो विवक्ष्यते। तत्तु संप्रतिपन्नम्। द्वितीयपक्षादरणे कथं बौद्धादिधर्मविचारायोगः?

यत्तु द्वितीये प्राग् ब्रह्मविचारे तद्विरोध इति, तत्रेदमेव पृच्छ्यते—धर्मजिज्ञासायाः प्राग् ब्रह्मणोऽपि वेदार्थत्वात् धर्मविचारायोग इव ब्रह्म-विचारस्याप्ययोगः। प्राग् धर्मेतरजिज्ञासा खलु व्यवच्छेद्या, न धर्म-जिज्ञासाऽपि, इति को वा विरोधोऽत्र। अत एव शावरभाष्यं "तादृशीं धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदध्ययनमन्तरेण न संभवती"ति। यदि धर्मशब्देन ब्रह्मणोऽग्रहण उक्तदोष आपाद्यते, वेदाध्ययनानन्तरं बौद्धादिधर्मविचारापत्तिवदिति, तर्हीदमेव स्मरतु भूषणमेतदर्थमेव वेदार्थो धर्म इति भामत्यादौ विवेचितम्। तथा

चोक्तद्वितीये बौद्धादिधर्मविचारापत्तिरेवापादयितुं शक्यते, न ब्रह्मविचारापत्तिः; तस्येष्टत्वात्। तत्र द्वितीयकल्प आपादितदूषणपरिहारार्थं भूषणमेव यतिष्यते ॥

### चण्डमारुतस्यापि पूर्वमीमांसानुपजीवित्वमुत्तरमीमांसाया-मविरोध एव

चण्डमारुतमपि पूर्वमीमांसानुपजीव्यकत्वं पूर्वपक्षरूपं परिमलसिद्धान्तगतमनूद्य तदनिरसनेनैव स्वीयं विवरणमुपसंहरदुत्तरमीमांसायाः पूर्वमीमांसानुपजीवित्वं हृदयेनाद्रियत इति शतभूषणी वदति ॥

भूषणं तु—शारीरकसूत्र एव प्रत्यक्षं पूर्वमीमांसोपजीव्यत्वं प्रत्यक्षमीक्ष्यत इति विप्रलब्धमात्रमिति—वदति। परिमलरीत्या शारीरकसूत्राण्येव गृहीत्वा तदनुपजीव्यकत्वमनूद्यैव चण्डमारुतं जोपमास्ते, इति प्रत्यक्षं समीक्ष्यापि कथं वाङ्मात्रेण भूषयितुं भूषणं यतते ?

### जीवकर्तृत्वादिविचारस्याद्वैतमते सौत्रत्वोपपत्तिः

जीव-ब्रह्मैक्यविवक्षायाम् "जगद्व्यापारवर्जम्" "भोगमात्रसाम्यलिङ्गाच्च"इत्यादिना मुक्त्यवस्थायां जीवस्वरूपं यन्निरूपितम्, तत एव निर्वाहात् किमिति द्वितीयाध्यायतृतीयपादे जीवोत्क्रान्ति-कर्तृत्वादिविचारो वितथ इति भूषणं पृच्छति। तत्र कर्तृत्वादिवैशिष्ट्यं यदि वास्तवम्, तर्हि तदकर्तृत्वादिश्रुतिविरोधपरिहारोऽपि कथं न वितथः? कर्तृत्वादिवैशिष्ट्यं तु प्रत्यक्षेणापि सिद्धमिति "कर्ता शास्त्रार्थवत्त्वादि"त्यपि वितथम्, इति श्रीभाष्यमतस्यैव न सौत्रत्वम्। अद्वैतमते जीव-ब्रह्मैक्यानुपपत्तिपरिहारार्थमध्यासभाष्ये कल्पितमेव कर्तृत्वम्, औपाधिकं वेति यद् भाषितम्, तदिदं सूत्रारूढम्। तत्र वस्तुत उत्क्रान्तिश्रुत्यविरोधे, किमर्थं वोत्क्रान्तिसमर्थनं तुरीयाध्यायेऽपि ? अतो ज्ञायते—जीवस्य व्यावहारिकं स्वरूपमौपाधिकम्, परमार्थतस्तु संविन्मात्ररूपतेत्येव सौत्रं हृदयमिति ॥

### चिन्मात्रस्याकर्त्रादिस्वरूपस्यासौत्रत्वमिति भूषणस्य शङ्का

अत्र भूषणं पृच्छति—उत्तरमीमांसायां चिन्मात्रमकर्त्रभोक्त्रात्मस्वरूपमेव निर्णीतमिति कुत्र प्रत्यपादि ? वदति चानन्तरम्—प्रत्युत "ज्ञोऽत एव" "कर्ता शास्त्रार्थवत्त्वात्" "भोगमात्रसाम्यलिङ्गाच्च"इति

ज्ञातृत्व-कर्तृत्व-भोक्तृत्वादिकमेव सौत्रम्, न तु चिन्मात्रत्वाकर्तृत्वा-भोक्तृत्वादि—इति ॥

### द्वितीयाध्यायतृतीयपादस्त्वम्पदार्थशोधनपरश्चिन्मात्रात्मनः सौत्रत्वमवगमयति—ज्ञातृत्व-ज्ञानत्वादीनामौपाधिक-त्वानौपाधिकत्वविवेचनेन

तत्र द्वितीयतृतीयपादो हि "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" "चराचरव्यपाश्रयस्तु" इति जीवात्मनित्यत्वानित्यत्वोभयविरोधपरिहारार्थं प्रवृत्तः स्वरूपतो नित्यत्वम्, औपाधिकमनित्यत्वमिति प्रक्रम्य तेनैव न्यायेन मध्ये ज्ञातृत्व-ज्ञानस्वरूपत्वयोः, उत्क्रान्त्यनुत्क्रान्त्योः, कर्तृत्वाकर्तृत्वयोः, अंशत्वानंशत्वयोश्च श्रुतिविरोधं परिहरति। तत एव तत्र पादे स्वरूपविचारस्य सङ्गतिः; अन्यथा वस्तुसज्जीवस्वरूपमात्रविचिचारयिषायां स्वप्नाद्यवस्थापरीक्षावसर एव तस्य सङ्गतिः ॥

"चराचरव्यपाश्रयस्तु" इत्युत्पत्तिश्रुतिविरोधस्य औपाधिकत्वादुत्पत्तेः परिहारे तेनैव ज्ञातृत्वमौपाधिकम्, न तु वस्तुतः, एवमुत्क्रान्ति-गत्यादिकमप्यौपाधिकम्, न स्वरूपत इति व्यवस्थापनमधिकरणद्वयेन। तत्र सर्वमेकमधिकरणं वा, अधिकरणद्वयं वेति त्वन्यदेतत्। तत्रान्ते "तद्गुणसारत्वादि" त्यौपाधिकमेवाणुत्वम, न केवलमणुत्वम्, किन्तु कर्तृत्व-भोक्तृत्वादिकं सर्वं जीवस्य गुण इति सामान्यतो विविच्य, विशिष्य कर्तृत्वादिविचारोऽपि तथैवेति व्यवस्थापयति द्वितीयाध्यायतृतीयपादः ॥

ततश्च "ज्ञोऽत एवे" ति पृथगधिकरणं वा भवतु, एकं वाऽधिकरणम्? उभयथापि स्वतो ज्ञानस्वरूपमेवात्मा। "अत्रायं पुरुषः स्वयं ज्योतिः" "विज्ञानघनः" "प्रज्ञानघनः" "भूतमात्राः प्रज्ञामात्रेऽर्पिताः" इत्यादिश्रुतयो गमयन्ति ॥

### धर्मभूतज्ञानाश्रयत्वेन ज्ञातृत्वम्, तत्तु न परमार्थतः, किन्तु स्वरूपत्वमेव पारमार्थिकम्

तस्य ज्ञानाश्रयत्वं तु धर्मभूतज्ञानाश्रयत्वेनैवेति संप्रतिपन्नम्। अत एव—

"ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः।"

इति विष्णुपुराणम् । तत्र धर्मभूतज्ञानमन्तःकरणधर्मभूतवृत्तिरूपं वा, नित्यं किञ्चनात्मन एव धर्मो वेत्यन्यदेतत् । विष्णुपुराणं तु 'परमार्थतः ज्ञानस्वरूपमि' ति ज्ञानाश्रयत्वं न परमार्थत इति वदति ॥

'ज्ञानमुत्पन्नम्' इत्यनुभवोऽपि सर्वानुभवसिद्धः । अतो हि गुणसारत्वादेव ज्ञातृत्वं बुद्ध्यात्मनोः परस्परतादात्म्याध्यासेनेत्यवचनसिद्धम् । अयमेव न्यायो जीवाणुत्ववादेऽपि; तत्र सर्वस्यौपाधिकस्यैवोत्क्रान्ति-गत्यादिकं न स्वरूपत एव जीवस्येति सिद्धान्तात् कथमत्र न विषयभेदः ? अत उभयस्यापि तद्‌गुणसारत्वेनैवोपपत्तिरिति वक्तव्यत्वात्, "तद्‌गुणसारत्वादि" ति सिद्धान्तसूत्रस्यैव मध्यमणिन्यायेन "ज्ञोऽत एव" "कर्ता शास्त्रार्थवत्त्वात्" "अंशो नानाव्यपदेशात्" इत्यादौ सर्वत्रान्वय इत्येव युक्तम् । अत एवात्र भाष्ये कर्तृत्वादीनामप्यत्र तद्‌गुणसारत्वेनौपाधिकत्वं व्यवस्थापितम् ॥

"कर्ता शास्त्रार्थवत्त्वादि" ति तु कर्तृत्वाध्यासस्य काष्ठानिरूपणार्थम्; तस्यौपाधिकत्वस्य न्यायतोऽनेनैव सिद्धत्वात् "तद्‌गुणसारत्वादि"-त्यस्योत्क्रान्तिमात्रविषयत्वमिति शङ्कावारणार्थम्—इति । "ज्ञोऽत एवे"-ति सूत्रे पूर्वोद्धृतं विष्णुपुराणं जीवात्मनः परमार्थतः चिन्मात्रत्वे प्रमाणम् ॥

### "कर्ता शास्त्रार्थवत्त्वादि"ति सूत्रस्यौपाधिककर्तृत्व एव तात्पर्यम्, तत्रैव श्रुत्यादीनां समन्वयात्

"एतेन—कर्ता शास्त्रार्थवत्त्वादि" ति सूत्रमपि—व्याख्यातम् । इदं हि सूत्रम्—

"हन्ता चेन्मन्यते हन्तुं हतश्चेत् मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥"
"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥"
"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ता'ऽहमि'ति मन्यते ॥"
"कार्य-कारणकर्तृत्वे प्रकृतिर्हेतुरुच्यते ॥"

"यजेत स्वर्गकामः" इत्यादिश्रुति-स्मृतीनां जीवात्मनः कर्तृत्वाकर्तृत्वाम्नानस्य विरोधं परिहर्तुमिति सम्प्रतिपन्नम् ॥

### जीवस्य कर्तृत्वमेव, नाकर्तृत्वमित्यत्र श्रीभाष्यसिद्धान्तः

तत्र श्रीभाष्यसिद्धान्तः—प्रकृतेः कर्तृत्वे मुमुक्षोः प्रवृत्त्यनुपपत्तिः, "यजेत" इत्यात्मनेपदानुपपत्तिः, आत्मनोऽकर्तृत्वे शास्त्रवैतथ्यापातश्च। एतेन—भोक्तृत्वमपि—व्याख्यातम्, इति कर्तैव जीवात्मेति ॥

### यावद्ब्रह्मसाक्षात्कारमौपाधिकं सर्वं कर्तृत्वादि श्रीभाष्यत इवाद्वैतेऽपि, ततस्त्वकर्तृत्वाद्यविरोधः

अद्वैतिनस्त्वत्र शास्त्रार्थवत्त्वादिहेतुना शास्त्राधिकारिणो जीवस्य कर्तृत्वं यावच्छास्त्राधिकारमूरीकुर्वन्ति, परन्तु शास्त्राधिकारनिवृत्तौ तदपि निवर्तते। शास्त्राधिकारस्तु शास्त्रपदेन तत्त्वमस्यादिमहावाक्यान्येव गृह्यन्ताम्, सर्वाणि वा श्रुति-स्मृत्यादिप्रमाणानि, आब्रह्मसाक्षात्कारं कर्तृत्वम्, तत्तु प्रकृतितादात्म्येन, न तु स्वतः। तथा चौपाधिकमेव कर्तृत्वम्। न चैवं सति जीवस्यान्तःकरणादितादात्म्येऽन्तःकरणादिबन्धनिवृत्तये, मोक्षाय वा प्रवृत्त्यनुपपत्तिः, न वाऽऽत्मनेपदानुपपत्तिः, नापि वा शास्त्रवैयर्थ्यापत्तिः। अतश्चौपाधिकं कर्तृत्वम्, परमार्थतोऽकर्तृत्वम्; परमार्थतो जीवस्यानावृतसंविन्मात्रत्वात्। तथा चेदं कर्तृत्वमपि ज्ञातृत्वाणुत्वादिवत् तद्गुणसारत्वेनैव, इत्यभिप्रेत्यैव तद्गुणसारत्वसूत्र एवाकृष्य व्याख्यातं भाष्ये ॥

### "यथा च तक्षोभयथे"ति पृथगधिकरणप्रयोजनमद्वैतमते

तत्र चिन्मात्रत्वम्—

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।"

इति विष्णुपुराणे तस्य परमार्थतायाः स्पष्टं वर्णनात् भवतु नाम परमार्थम्, औपाधिकं ज्ञानाश्रयत्वमपि; कर्तृत्वस्याहमर्थधर्मताया एवात्र साधनात्, अहमर्थातिरिक्तस्वरूपाभावात् कथमात्मनोऽकर्तृत्वं स्वाभाविकम्, तत्कर्तृत्वस्यैव स्वाभाविकत्वादित्यधिकाशङ्कावारणार्थं कर्तृत्वमौपाधिकमेवेति निर्णयार्थं पृथगधिकरणं "यथा च तक्षोभयथा" इति ॥

### नाहङ्कारः, न वा चिन्मात्रम्, किन्तूभयं मिलितमेव कर्तृ इति नानुपपत्तिरद्वैतमते

तेन च सत्यम्, अहमर्थस्य कर्तृत्वम्, अहमर्थस्त्वहङ्कारतादात्म्याध्यासापन्नं संवित्स्वरूपं न मुख्यात्मा, किन्तु मिथ्यात्मा। इदमाश्रित्यैवाध्यास-

भाष्यम्। न चाहङ्कारः, बुद्धिर्वा स्वप्नदृष्ट्या, सुषुप्तिदृष्ट्या वा स्वयमुपलब्धा भवितुमर्हति, उपलभ्यमानत्वादिति भाष्ये व्यक्तम्। विवेचयिष्यते चेदमुपरिष्टात्। अत एव जीव-ब्रह्मैक्योपदेशः श्रुतिषु, इति न कर्तृत्वम्, भोक्तृत्वं वा जीवस्य स्वाभाविकम्॥

भोगमात्रसाम्यं गौणमुक्तिरित्यद्वैतम्

एतेन—"भोगमात्रसाम्यलिङ्गाच्चे"ति सूत्रमपि—व्याख्यातम्। इदं हि ब्रह्मलोकम्, वैकुण्ठलोकं वा प्राप्तान् मुक्तानधिकृत्येति सम्प्रतिपन्नम्। इयं च मुक्तिर्गौणी, न मुख्येत्यद्वैतराद्धान्तः। अत एव—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥"

इति तल्लोकाधिपतिना सह क्रियमाणब्रह्मजिज्ञासानां तदन्ते मुक्तिः स्मर्यते, इति तेषामप्यस्ति शास्त्राधिकार आपरममुक्ति। इदमेवाभिप्रेत्य देवताधिकरणम्, मृत्यु-महेन्द्रादीनामात्मविद्योपदेशादिकम्, "देवैरत्रापि विचिकित्सितं पुरा" इति च। अतो नोक्तसूत्रविरोधोऽपि, इति ब्रह्ममीमांसा जीवात्मानं चिन्मात्रमकर्तृ, अभोक्तृ चेति बोधयति॥

"एक आत्मनः" इति सूत्रस्याप्यद्वैताभिमतमुक्तात्मस्वरूप एव तात्पर्यम्, सार्थक्यं च

"एक आत्मनः शरीरे भावादि"त्यधिकरणभाष्यमेतदाशयमेव। श्रीभाष्यसिद्धान्तेऽप्यत्रोपास्यविशेषणस्य मुक्तात्मनोऽप्यपहतपाप्मत्वादिस्वरूपस्य ब्रह्मविद्याङ्गकर्मसु कर्तृत्वबुद्धित्यागावश्यम्भावेन चिरानुवृत्तकर्तृत्वादिबुद्धिनिवृत्तेः, तद्विरुद्धापहतपाप्मत्वानुसन्धानमन्तरेणासंभवाच्चापहतपाप्मत्वादिगुणक एवोपास्यविशेषणमिति व्यवस्थाप्यतेऽत्र सूत्रे॥

तत्र कर्तृत्वबुद्धिमात्रनिवृत्तिर्वा, कर्तृत्वस्यापि निवृत्तिर्वेत्यन्यदेतत्। तत्राद्वैतमतेऽकर्तृत्वं स्वाभाविकमिति निरूपितम्। अतो न केवलस्थूलशरीरातिरेकमात्रमस्याधिकरणस्य लक्ष्यम्, किन्तु मुक्त्यवस्थापर्यन्तयोग्यस्थूल-सूक्ष्मकारणशरीरातीतं तुरीयमेवात्मनः स्वरूपमस्य लक्ष्यम्, स्थूलशरीरातिरेकनिर्णयस्तु दृष्टान्ततयाऽनुवादमात्रमिति व्यक्तमन्यत्र॥

न चात्रापि सूत्र उक्तार्थविवक्षायाम् "आनन्दादयः प्रधानस्ये"ति ब्रह्मस्वरूपानुसन्धानस्य शिक्षिततयोक्ताधिकरणवैयर्थ्यम्। तत्र शिक्ष्यमा-

णजीव-ब्रह्मैक्योपपादनार्थं जीवस्याहमर्थमुख्यत्वनिषेधस्याऽऽवश्यकत्वेनावैयर्थ्यात्, अन्यथाऽहमर्थस्य जीवस्य कथं ब्रह्मणैक्यमिति शङ्का न परिहृता स्यादिति नोक्ताधिकरणवैयर्थ्यम्। न च देहातिरिक्तात्मवादसमर्थन एव भगवत्पादतात्पर्यम्; तस्योपलक्षणतया सर्वशरीरातीतस्वरूपव्यवस्थायामेव तात्पर्यात्। अत एव भाष्यम्—"इह चेदं चोदनालक्षणेषूपासनेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते—कृत्स्नशास्त्रशेषत्वप्रदर्शनाय" इति। इदं मोक्षस्वरूपोपपादनायेत्यस्याप्युपलक्षणम्। पूर्वाधिकरणसङ्गतिमुपपादयितुमेवोपासनेषु विचार्यमाणेष्विति पदम्। अत एवोक्तसूत्रोपक्रमभाष्यम्—"इह देहव्यतिरिक्तस्याऽऽत्मनः सद्भावः समर्थ्यते—बन्ध-मोक्षाधिकारसिद्धये" इति, इति नात्र भगवत्पादभाष्यविरोधः। कर्माधिकारोपयुक्तः, उपासनाधिकारोपयुक्तश्च "कर्ता शास्त्रार्थवत्त्वात्" इति कर्तृत्वादिविशिष्टः, मुक्तस्तु तद्विपरीत इत्यौपाधिकानौपाधिकात्मस्वरूपमेव लक्ष्यम्, न त्वौपाधिकमात्रम्। तत्र स्थूलदेहातिरेकोपन्यासो दृष्टान्ततया; तस्य लोकसिद्धत्वात्, शास्त्रतोऽनिर्णेयत्वाच्च ॥

### वेदान्तानामकर्त्रात्मस्वरूपमेवार्थः

श्लोकवार्तिकमपि कर्मकाण्डविषयो जीवात्मा बद्धोऽन्यः, मुक्तस्तु ततो विलक्षण इत्येव वदति—

"दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन।"

इति। तेन चावगम्यते—कर्माधिकारिकर्तृत्वादिविशिष्टलक्षणजीवव्यतिरिक्त एव मुक्तात्मेति ॥

तत्र मुक्त आत्मा भास्करमतेऽपि ब्रह्मरूप एव, न ततो भिन्नोऽद्वैतमत इव। ब्रह्मस्वरूपं तूभयत्र नैकमिति त्वन्यदेतत्। अतोऽप्यवगम्यते—वेदान्ते विचार्यमाण आत्मा कर्तृत्वादिरहित एवेति ॥

तत्र श्रीभाष्यमतेऽपि कर्तृत्वबुद्धिर्निवर्तत इत्यनुपदमेवोक्तसूत्रभाष्यमनुसृत्यैवोक्तम् ॥

### कुमारिलस्य श्रीभाष्यसिद्धान्ते तात्पर्यासंभवः

तत्र कुमारिलेनास्मदीय एव वेदान्तसिद्धान्तोऽनूदित इति भूषणं लिखति, अन्यस्तु स्वसिद्धान्त एवेति। इदमेवात्र पृच्छ्यते—कर्माधिकारिणः कर्तृत्व-ज्ञातृत्वादिविशिष्टात् किं वा स्वरूपं विलक्षणं वेदान्तप्रतिपाद्यं श्रीभाष्यसिद्धान्त इति, कथं च—

"ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् ।"

इति वृत्तिकारमते सर्वगतत्वाद्युपदेश उपपद्यते ?

### कुमारिलनिर्दिष्टात्मस्वरूपं भास्करादीनाम्, न श्रीभाष्यस्य; अतो न श्रीभाष्याभिमतैकशास्त्र्यस्योक्तं वार्तिकं मूलम्

यत्तु भाष्ये—"शास्त्रप्रमुख एव प्रथमे पादे देहातिरिक्तास्यात्मनोऽस्तित्वमुक्तम्, सत्यमुक्तं भाष्यकृता, न तु तत्रात्मास्तित्वपरं सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वं तदाक्षेपपुरस्सरं प्रतिष्ठापितम्। इत एवाकृष्याऽऽचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्। अत एव भगवतोपवर्षेण प्रथममेवात्रात्मास्तित्वाभिधाने प्रसक्ते शारीरके वक्ष्याम इत्युद्धारः कृतः"इत्यादि, किमेतेन स्वाभीष्टं भूषणं साधयति? यद्यैकशास्त्र्यं भगवत्पादानामप्यभितमिति, उत शास्त्रैक्यवादोऽतिप्राचीन इति। आद्यं तु स्वयमेव भाष्यकृता तन्निरासाद् बाधितम्। द्वितीये तु को वा वदति—नान्येषामपि शास्त्रैक्यमिति। उक्तञ्च पूर्वमेव श्रीभाष्यप्रतिद्वन्द्विनामुपवर्षाचार्याणाम्, तत्सम्प्रदायमनुजीवतां भास्करादीनामपि शास्त्रैक्यमिति। यदेव खण्डितं भास्करभाष्यवाक्यान्येव यथायथमनूद्य गीताभाष्ये भगवत्पादैः॥

शास्त्रप्रमुखे भाष्यकृता निर्दिष्टः कश्चनैकशास्त्र्यवादी ततोऽवगम्यते। न चैतद् भगवत्पादानामपि शास्त्रभेदवादिनामात्मस्वरूपम्, दृष्टान्तार्थं तदनुवाद इति तूक्तमेव। इदमेव चित्रम्—यद् ज्ञान-कर्मसमुच्चयवादो नोरीक्रियते, ऐकशास्त्र्यं परं श्रीभाष्येण स्वीक्रियत इति। भगवत्पादानां तु कर्मविचारानन्तर्यनिषेधो नैकशास्त्र्यमूरीकृत्य॥

### अनुबन्धभेदात् शास्त्रभेदेऽपि कथंचनैकशास्त्र्ये न विप्रतिपत्तिरद्वैतेऽपि

तत्र यद्यनैकशास्त्र्यस्य कर्मविचारानन्तर्यस्य चाविरोधं भूषणमभिप्रैति, तर्हि कुत ऐकशास्त्र्यवादस्य समर्थनेन कर्मविचारानन्तर्यं तत् सिद्धान्तयति? यद्यैकशास्त्र्यमिति नाममात्रम्, अनुबन्धचतुष्टयभेदात्तु शास्त्रभेद एव, तर्हि कामं सन्तुष्यतां तन्नाम्ना, तस्यानुपयुक्तस्य साधनेन च। न च भगवत्पादानामपि नामनि विद्वेषः, किन्तु कर्मविचारानन्तर्यपक्षनिषेध एव निर्भर इति चर्वितचर्वणम्॥

बृहत्या अपि शास्त्रैक्यवादो वस्तुगत्या न संमतः

तत्र बादरायणाभिप्रेतमात्मस्वरूपं द्वितीयाध्यायतृतीयपादार्थसमालोचनेनानुपदमेव निर्णीतम्, येन जीव-ब्रह्मैक्यं सुस्थितम्। बृहतीवाक्यं तु स्पष्टं विज्ञानमात्ररूपत्वं कर्मविचारानुपयुक्तमित्येव बोधयति ॥

बृहती स्वयं जगन्मिथ्यात्वं दूषयति—"यस्तु ब्रह्मविदामेष निश्चयः—यद्रुपलभ्यते, न तत् तथ्यम्, यन्नोपलभ्यते, तत्तथ्यम्—इति, न स परिहासवादः; "नमस्तेभ्यः, विदुषां नोत्तरं वाच्यम्" इति, तत्र 'ब्रह्मविदामिति' विशेषणम्, विदुषामिति च। अत्र कर्मविचारप्रसङ्गे विज्ञानमात्रस्वरूपात्मवादस्यानुपयोगवर्णनं सर्वमसङ्गतं स्यात् ॥

सर्वथा तु शास्त्रैक्यवादो न प्रभाकरस्यापि संमतः; यतो विषयभेदं तयोरयमपि वदति। तत्र प्रभाकरेणाऽद्वैतसिद्धान्तो यदि भूषणोक्तरीत्या निरस्यते, यदि वा शतभूषणीदृष्ट्या भूष्यते, उभयथाऽपि शास्त्रैक्यवादस्तस्यापि विरुद्ध इति तु स्पष्टम् ॥

'पुराण-न्याय-मीमांसे'त्यत्र मीमांसात्वेनैक्यं पुराणादीनां
पुराणत्वादिनेव नाद्वैतेऽपि विप्रतिपन्नम्

एतेन—

"पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥"

इति स्मृतिरपि—व्याख्याता। तत्र मीमांसेति शब्दप्रयोगमात्रेण मीमांसैक्यं स्वाभिमतमिति भूषणं वदति, तेन च स्वागतमेव भूषणस्य ॥

यत्तु—तत्र शतभूषणी 'धर्मस्य, विद्यानां च स्थानानि' इति धर्मविद्यास्थानपृथक्करणमपि धर्म-विद्यास्थानयोर्भेदं दर्शयतीति—वदति, तत्रेदं भूषणम्—तत्र पूर्वोत्तरमीमांसयोर्भिन्नत्वे पञ्चदशत्वप्रसङ्गः—इति। तत्र पुराणानां पुराणत्वेनेव मीमांसाया अपि मीमांसात्वेनैक्यमिति शतभूषणीसमाधानं भूषणं न साम्प्रतमनुसन्धत्ते ॥

धर्म-विद्यास्थानत्वेनाष्टाविंशतित्वमिष्टमेव

भवतु—यदि विद्यास्थानत्वेन, धर्मस्थानत्वेन च अष्टाविंशतिविद्यास्थानात्वापत्तिरिति भूषणम, तर्हि तयोर्भिन्नविषयत्वस्य स्वयं स्मृतावेवोक्तत्वाद् विषयभेदमादायाष्टाविंशतित्वमिष्टमेव—धर्मस्य स्थानानि चतुर्दश, विद्यायाः स्थानानि चतुर्दशेति योजनेन तत्स्वीकारस्यैवौचित्यात्। कृत्वा

चिन्तया तु वेदार्थविचारत्वोपाधिना मीमांसात्वादिना साधारणेन रूपेण चतुर्दशत्वमपि नानुपपन्नम् ॥

भेदवादस्तूपकारभेदात्, अन्यथा त्वैक्यमेव, मीमांसयोस्तूपकारभेदः, अतः शास्त्रभेदः

उपकारभेदात् भेदवादः, यत्र नोपकारभेदः, तत्रैक्यमिति समायाति। तत्र च कथं मीमांसयोरपि न भेदः; तत्राप्युपकारभेदात्। कथं वा पुराणानामेकतत्त्वपराणां नैक्यम्? धर्मशास्त्राणां वा भेदः? न च शारीरकस्य धर्मस्थानत्वम्; शारीरकसमाख्याविरोधात्, अन्यथा धर्म-विद्या-स्थानत्वेन भेदनिर्देशः कथमुपपद्यते?

पुराणानां सात्त्विकादिभेदेन प्रामाण्याप्रामाण्यायोगः

एतेन—पुराणानां सात्त्विकादिभेदोऽपि—व्याख्यातः। इदमेवात्र पृच्छ्यते—यदि पुराणानां सात्त्विकादिभेदेन वस्तुगत्या भेदः, तर्हि "पुराण-न्याय-मीमांसे"त्यत्र कथमेकेन पुराणपदेन सर्वेषां निर्देशः? यदि पुराणत्वेन, विषयभेदेन भेदस्तु तत्रापि, तर्हि समं मीमांसापदेऽपि। मोक्ष-साधनोपदेशः सर्वत्र पुराणेषु समानः, इति मोक्षवर्णनं सात्त्विकेष्वेव पुराणेष्विति वर्णनं स्वाभिमानमात्रविजृम्भितम् ॥

संकर्षकाण्डविषयेऽन्यथाऽन्यथा भूषणोपन्यासाः

संकर्षविषये वक्तव्यं सर्वं पूर्वमेव चर्वितम्। तत्र भूषणं वदति—'स विष्णुराह हि स विष्णुराह हि तद् ब्रह्मेत्याचक्षते' इति संकर्षकाण्डं नाचार्यैरुदाहारीति, परन्तूरीकरोति संकर्षमेतदर्थकं शतदूषण्यामुदाहारि, परं तु न तत्र निर्भर आचार्याणामिति। कदाचित्तु वदति—नेदं संकर्ष-वाक्यमादरणीयम्। अन्यत्र वदति—माध्वानामिदं न श्रीभाष्यानुयायिनां प्रमाणमिति। अपरत्र वदति—काशकृत्स्नकृतं संकर्षकाण्डमन्यत्, तत्तु लुप्तमिति मीमांसापादुकासहस्रे लिखितम्। इतरत्र लिखति—जैमिनीय-मेकं संकर्षकाण्डम्, अन्यत्तु काशकृत्स्नकृतमिति। तत्त्वटीकाकृत उदाहरणं शतदूषण्यामुदाहृतं न श्रद्धेयमिति। क्वचन वर्णयति—अस्तु ताव-दयं संकर्षः काशकृत्स्नकृत इति। अथापि जैमिनीयं संकर्षान्तरम्, प्रवचनमात्रं तस्य काशकृत्स्नेन तद्वैशद्याय, काशकृत्स्नोक्तिबलादेव जैमिनेरपि सेश्वरत्वसिद्धिः—इति ॥

परन्तु जैमिनीयसिद्धान्तस्तेनेश्वरो नाङ्गीकृत इति कृत्वैव भगवत्पाद-भाष्यमिव श्रीभाष्यमपि तन्मतनिरसनेनैव सिद्धान्तं समन्वयसूत्रे स्थाप-

यति। सति चैवं जैमिनीयमीमांसाऽपि सेश्वरमीमांसेति कृत्वा पूर्वोत्तरमीमांसयोरैकशास्त्र्यमभिनवं सेश्वरमीमांसाख्यं धर्ममीमांसापदार्थं मत्वा भूषणमभिप्रैति ॥

यत्तु—शारीरके 'तदुक्तनिर्देशः' 'प्रदानवत्' इति दृष्टान्तमुखेन जैमिनीयन्यायस्य, संकर्षन्यायस्य वा निर्देशः पूर्वोत्तरमीमांसयोर्भेदं साधयतीति—शतभूषणी, तत्र भूषणदूषणपरीक्षा पूर्वमेव कृता ॥

तदुक्तनिर्देश-दृष्टान्तोदाहरणादीनां शास्त्रभेदसूचकत्वमेव

तत्र शतभूषण्याशयः—पूर्वोत्तरमीमांसैक्ये, न्यायैक्ये वा "अत एव प्राणः" इतिवदधिकाराकाङ्क्षायामतिदेश एव सौत्री शैली, न तु "तदुक्तमि"ति "तद्वदि"ति वा। न चैतादृशी कुत्रापि धर्ममीमांसायाम्, ब्रह्ममीमांसायां वेति। भूषणं तूक्तं किमप्यविमृश्य 'तदुक्तमि'ति शास्त्रान्तर्गतविषयापेक्षमिति वदति। न हि सूत्रेषु संदिग्धवाक्यविचारपरेषु तत्तदुचितन्यायव्यवस्थापनपरेषु पृष्टापृष्टकथा कुत्रापि, येन पृष्टस्योत्तरम्, तदुक्तमिति, अपृष्टस्योत्तरम्—दृष्टान्त इति विभाग उपपद्येत ॥

शब्दसाम्यमकिञ्चित्करं शास्त्रैक्ये, येन
साङ्ख्य-योगैक्यमपि

शब्दसामान्येन शास्त्रैक्यवादं स्वतन्त्राणां विमर्शकप्रवराणां पद्धतिमास्थाय भूषणं विमृशतीव, यामेवानुसृत्य माण्डूक्योपनिषदादीनामपि बौद्धसिद्धान्त एव तात्पर्यमिति विमर्शकानां केषाञ्चन सिद्धान्तः। न हि शब्दसाम्यमर्थक्रियाकारि ॥

न हि गीतायां साङ्ख्यपदं, योगपदम् वा दृष्ट्वा साङ्ख्य-योगयोरेव गीतायास्तात्पर्यम्, न तु श्रीभाष्यसिद्धान्तोऽपि गीतासिद्धान्त इति भूषणं मन्यते, येन—कर्मयोगम्, भक्तियोगम्, ज्ञानयोगं च साङ्ख्यसिद्धान्तः इति मत्वा ताभ्यामप्यैक्यं गीतायाः स्यात् ॥

अंशविशेषे साम्यं नैक्य प्रयोजकम्, अन्यथा पाशुपत-पाञ्चरात्रयोरप्यैक्यापत्तिः

यत्तु—"साक्षादप्यविरोधं जैमिनिः" इति जैमिनिमतमपि बादरायणः सिद्धान्ततया मन्यते, इति तयोरविशेषात् शास्त्रैक्यम्—इति, तत्र शतभूषणी वदति—न ह्यविरोधमात्रेणैक्यम्; अन्यथांऽशविशेषे पाशुपतपाञ्चरात्रयोरपि ब्रह्ममीमांसयाऽविरोधात् तयोरप्यैक्यमापद्येतेति ॥

तत्र भूषणं पाञ्चरात्र-ब्रह्ममीमांसयोरेवाविरोधः, न तु पाशुपतेनेत्येतावन्मात्रमभिधाय शतभूषणीं पाशुपतेन सह घटनं सर्वाचार्यबहिष्कृत-पाशुपतपक्षपातस्य हृद्गतस्य प्रदर्शनमिवेति वदति, इदं तु केवलं पाशुपत-निन्दनमात्रम्। प्रश्नोत्तरं त्वंशतोऽविरोधेऽपि यद्यैक्यमपि साधयेत्, तर्हि सर्वत्रैक्यमापद्येत। तत्र पाशुपतदृष्ट्या पाञ्चरात्रे, साङ्ख्यदृष्ट्योभयत्र, बौद्धादिदृष्ट्या तन्त्रान्तरे, अंशतस्तु कुत्रचनाविरोध इति स्थिते कथं पूर्वोत्तरमीमांसयोरैक्यम्?

वस्तुतस्तु—बादरायणसमुद्धृतपूर्वमीमांसामतमपि पूर्वपक्षतया शबरस्वामिना व्याख्यातोऽपर एव जैमिनिरिति शतभूषणी—लिखति। भूषणं तु कर्मभेदे तु जैमिनिरिति सूत्रस्य "कर्माभेदं तु जैमिनिरिति" पाठस्यैवौचित्यं विलिख्य स्वयमप्यूरीकरोति, अत्र सूत्रे पूर्वपक्षी जैमिनिरन्यः एव पूर्वमीमांसाकृतः—इति। परन्तु सर्वत्रैवात्रापि शबरस्वामिनोऽपि प्रमाद एवैवं व्याख्याने। तत्र कर्मभेदे इत्येव सूत्रपाठः, कर्माभेदमिति तु मुद्रणप्रमादमात्रम्, तथापि तस्यापि प्रदर्शनेन भूषणस्याधमर्णा शतभूषणी॥

इदं तु संप्रतिपन्नम्—शबरादिसंमतोऽपरो जैमिनिर्वर्तते, तमेव बादरायणः स्वसिद्धान्तविरोधिनमत्र गृह्णातीति न दुर्वचम्॥

अथान्ते—तत्त्वटीकायामुपवर्ष-बोधायनयोरैक्यं नोक्तम्, प्रक्षिप्तवाक्यं कतिपयग्रन्थमुद्रितं विलोक्य तथैव गृहीत्वा दूषणं न कर्तव्यमिति मित्रप्रवरं भूषणमुपदिशति। श्रुतिप्रकाशिका-तत्त्वटीकासहितानि वृन्दावनादि-प्रकाशितानि देवनागरी-ग्रन्थाक्षरमुद्रापितानि सर्वाणि प्रक्षिप्तवाक्य-घटितानीति वर्णनं न हठवादः॥

शतभूषण्यपि तत्त्वटीकोक्तावपि—उपवर्ष-बोधायनयोरैक्यं तदीयात्म-विभुत्वाणुत्वसिद्धान्तविरोधेन निरस्यति। भूषणं तु तस्य वाक्यस्याप्रामाण्यमेव प्रकारान्तरेण समर्थयति—प्रक्षिप्तं तद्वाक्यमिति। सर्वथा तु न पूर्वोत्तरमीमांसयोरैक्यवादो युज्यते, किन्तु तयोर्भेदवाद एव समादरणीयः॥

॥ इति शास्त्रभेदोपपत्तिः॥

---

# अविधेयज्ञानोपपत्तिः

श्रोतव्यादिवाक्येषु विधेयाविधेयज्ञानविवेकः, ज्ञान-
विधेयत्वनियामकं च

पुरुषतन्त्रं ज्ञानं विधेयम् , प्रमाणजन्यं ज्ञानं न विधेयमिति संप्रतिपन्नम्। "आत्मा वा अरे द्रष्टव्यः" इत्यत्र 'द्रष्टव्यः' इत्यत्र न विधिरित्यपि संप्रतिपन्नम्। तत्र सर्वत्र न विधिरिति भामती। "श्रोतव्यो निदिध्यासितव्यः" इत्यंशत्रये विधिः—अपूर्वविधिर्वा, नियमविधिर्वा, परिसङ्ख्याविधिर्वेति सन्ति प्रस्थानभेदाः। न केवलं "द्रष्टव्यः"इत्यत्र, किन्तु 'श्रोतव्यो मन्तव्यः' इत्यत्रापि न विधिः, 'निदिध्यासितव्यः' इत्यत्रैव विधिरिति तु श्रीभाष्यम्। सर्वत्र क्रियाया एव पुरुषतन्त्राया विधेयत्वे न विसंवादः॥

तत्र ज्ञानमपि क्रियारूपम् , परन्तु न विधेयमिति भामती, विवरणं तु 'श्रोतव्यः' इत्यादौ तात्पर्यनिर्णयानुकूलव्यापारस्यैव श्रवण-मननादिपदार्थत्वाद् विधेयत्वम् , न तु ज्ञानस्य। ज्ञानं तु द्रष्टव्यपदोपात्तं साक्षात्काररूपम् , तावन्मात्रे न विधिरिति तु विवरणादिप्रस्थानान्यपि। तत्र विधेयत्वं तस्यैव, यत् करणं सत् फलस्य कस्य चनोत्पादकम्। तत्र श्रूयमाणस्य कस्यचन फलत्वेनान्वये संभवति तस्यैव फलत्वम् ; अन्यथा तु फलं कल्पनीयम्॥

श्रीभाष्यमते निदिध्यासनस्यैव विधेयत्वम् , श्रवणादावनुवाद-
मात्रम् , तव्यप्रत्ययानुपपत्तिश्च, अद्वैतमते तु नैवम्

तत्र श्रीभाष्यमते ध्यानस्यैव विधेयत्वेन, तस्यैव दर्शनसमानाकारध्रुवानुस्मृतिरूपत्वानुवादमात्रं यदि द्रष्टव्यपदेन, तर्हि तस्य "निदिध्यासितव्यः" इत्यनेनैव सिद्धत्वाद् द्रष्टव्यपदवैयर्थ्यम्। "श्रोतव्यो मन्तव्यः"इति च व्यर्थम् , "निदिध्यासितव्यः"इति पदार्थस्यैवावस्थाविशेषाणां श्रवण-मनन-दर्शनरूपत्वेनानुवादो नामान्तरेण तद्वैयर्थ्यवाद एव॥

तत्र यदि प्रथमावस्था श्रवणम् , तर्हि 'द्रष्टव्यः'इति कथं दर्शनस्यान्तिमस्य प्राथम्यम्? अद्वैतसिद्धान्ते तु "द्रष्टव्यः"इति फलनिर्देशः। श्रवणादीनि साधनानि। तत्र फलस्य करणसाध्यस्य करणान्तरसत्त्वेऽपि फलेच्छयैव करणे व्यापारात् फलस्यादौ निर्देशोऽनुकूल एव। 'निदिध्यासितव्यः'

इत्यस्यैव विधित्व इतरेषामनुवादरूपत्वे तु फलं किमपि दुर्ज्ञानम्। सर्वथा ज्ञानस्य प्रमाणतन्त्रस्यैव न विधेयत्वमित्यादि शतभूषण्यां व्यक्तम्॥

### तव्यप्रत्ययस्याहार्थेऽपि प्रयोगात् श्रवणादौ प्रमाणतन्त्रे न विधेयत्वनियमः "विष्णुरुपांशु यष्टव्यः" इत्यादाविव

तत्र "द्रष्टव्यः"इत्यत्र तव्यप्रत्ययोऽपि दर्शनस्य विध्यनर्हत्वात् प्रमाणतन्त्रे तत्र कुण्ठितशक्तिर्न विधिपरः। न चायं नियमः—यत्तव्यप्रत्ययो विधिपर एवेति; "विष्णुरुपांशु यष्टव्यः"इत्यादौ तव्यप्रत्ययस्याविधिपरत्वात्॥

### "विष्णुरुपांशु यष्टव्यः" इत्यतः श्रवणादीनां वैषम्यशङ्का-समाधाने

अत्र भूषणम्—"उपांशुयाजमन्तरा यजती"ति वाक्यत एव विहितत्वात् तत्र विष्णुवाक्यादौ विधिविषयत्वमनूद्यत इतीष्यते, न तु बाधकमिति, इह तु प्रमाणतन्त्रे ज्ञाने विधिविषयत्वं न भवतीति भवदिष्टत्वादन्वयबाध इति वैषम्यमिति—वदति॥

तत्र "विष्णुरुपांशु यष्टव्यः"इत्यादौ देवतायाः प्रमाणान्तरप्राप्तत्वात् न विधिः, किन्तु "उपांशुयाजमन्तरा यजती"ति विधेरर्थवादत्वमात्रमित्युपांशुयाजाधिकरणसिद्धान्तः; तत्रापि प्राप्तेऽर्थे विधेर्बाधेनैवाविधित्वस्वीकारात् विधिबाध उभयत्रापि समानः। विध्ययोग्यत्वं 'द्रष्टव्यः श्रोतव्यो मन्तव्यः' इत्यंशत्रयेऽपि निदिध्यासनविधिप्राप्ततया श्रीभाष्यमतेऽपि स्वीक्रियते, केवलं त्रयाणामेषामनुवाद्यत्वेन विधिशक्तिप्रतिबन्धादविधित्वमेव श्रूयमाणेऽपि तव्यप्रत्यये स्वीक्रियते, अतस्तव्यप्रत्ययस्यैकान्तेन न विधिपरत्वमिति श्रीभाष्यस्यापि मतम्॥

### "एकं वृणीते द्वौ वृणीते" इत्यन्त्यो न्यायोऽत्र श्रीभाष्यमतस्य प्रतिकूलः, नानुकूलः

तत्र तेनापि—"विष्णुरुपांशु यष्टव्यः"इत्यादिवाक्यमेव शरणं कर्तव्यम्, इति कथं तद्वाक्यवैषम्यम्? तथा च यदि ज्ञानस्य विधिविषयत्वं श्रीभाष्यमते न विरुद्धम्, तर्हि कथं श्रवणादावपि न विधिः? "एकं वृणीते द्वौ वृणीते त्रीन् वृणीते" इति त्रयाणां वरणे द्वयोरपि वरणमर्थसिद्धमिति प्रथमयोरनुवाद इति न्यायस्तु नाऽत्र दर्शनसमानाकारध्रुवानुस्मृतावेव—निदिध्यासनपराकाष्ठात्वेन दर्शन एव सर्वेषामन्त-

भावात् "द्रष्टव्यः" इत्यत्रैव विधिः, न तु 'निदिध्यासितव्यः' इत्यत्रेति वैपरीत्यमेवोक्तन्ययादापद्येत। तत्र दर्शनं प्रमाणतन्त्रं साक्षात्कारो मुख्य-मिति कृत्वा यदि न तत्र विधिः, तर्हि निदिध्यासनरूपत्वमपि तस्य बाधि-तम्, इति कथं निदिध्यासनस्यैव द्रष्टव्यपदेनानुवादः ?

अद्वैतमते श्रवणादिविधिपक्षेऽपि दर्शने न विधिः

अद्वैतसिद्धान्ते हि श्रवणादीनां वाक्यजन्यज्ञानरूपत्वपक्ष एवा-विधेयत्वम्, न तु तात्पर्यावधारणानुकूलविचारपरतायाम्, इति श्रवणादीनां तेन रूपेण विधेयत्वं न विरुद्धम्, तत्फलं तु साक्षात्कारः, इति श्रवणादि-विधिपक्षे तदादृत एकस्यैव तव्यप्रत्ययस्यानुवादः, न तु बहूनाम्; बहु-बाधस्यान्याय्यत्वात्, इति दर्शनानुवादेन श्रवणादिविधिपक्ष एव युक्तः। तत्र च द्रष्टव्य आत्मा फलम्, श्रवणादीनि साधनानि॥

द्रष्टव्यपदस्य फलसमर्पकत्वादविधेयपरत्वम्

तत्र—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥"

इति वचनाद् ज्ञातत्वोपलक्षितस्यैवाऽऽत्मनो मुक्तित्वात् 'द्रष्टव्यः' इति फलांशनिर्देशः; अध्ययनस्याक्षरग्रहणमात्रार्थपक्षे स्वाध्ययस्य फलस्या-प्यादौ श्रवणात्। अत एव 'द्रष्टव्यः' इति प्रथमं निर्देशः, इति धर्मजिज्ञासा-विषयवाक्यसाम्यम्॥

आशयस्तु—भाव्यत्वं भावार्थस्य गुणविधावेव "दध्ना जुहोति" इत्यादाविव, प्रधानविधौ तु भावार्थस्य करणत्वमेवेति भावार्थाधिकरणे व्यक्तम्। अतो भाव्यत्वमेव 'द्रष्टव्यः' इत्यस्य वृत्त्युपहितत्वेन युक्तम्, न तु भावार्थत्वम्॥

श्रीभाष्यमते 'द्रष्टव्यः' इति न भाव्यार्थः, न वा भावार्थः

श्रीभाष्यमते तु करणस्यैव निदिध्यासनस्यावस्थाविशेषविशिष्टस्य 'द्रष्टव्यः' इत्यनेनानुवादादफलो विधिः, इति विधित्वमेव न स्यात्, इति विश्वजिन्न्यायेन स्वर्गार्थमेव निदिध्यासनं स्यात्। एतेन—भाव्यत्वा-दिवत् भावार्थत्वस्यापि संभवात्, तदसंभवे तुल्ययुक्त्या तस्याप्यसंभ-वादिति—परास्तम्॥

### विवरणमते ज्ञानस्य विधेयत्वमेव, परन्तु प्रमाणतन्त्रत्वम्, अक्रियात्वं च, भामतीप्रस्थाने तु क्रियात्वेऽपि श्रवणादीनां न विधेयत्वमपि

विवरणमते श्रवणादिपदमपि क्रियापरमेव; पुरुषतन्त्रत्वात्। अतो विधेयत्वमव्याहतम्, परन्तु न तदुपासनारूपम्, अतः श्रवणादीनां विधेयत्वेऽपि द्रष्टव्यपदं फलसमर्पकतया स्वर्गकामादिवदनुवाद्यत्वेऽपि फलपरम्। श्रीभाष्यमते तु निदिध्यासितव्यपदार्थस्यैवावयुत्यानुवादः, इति वैयर्थ्यम्; अन्यथा सर्वत्रोपासनविधौ द्रष्टव्यादिपदप्रयोगापत्तिः। अतः सर्वपदसार्थक्यम्, बहूनां तव्यप्रत्ययानां विधिपरत्वं चाद्वैतसिद्धान्त एव। भामतीप्रस्थाने तु मानसक्रियात्वेन धात्वर्थतया साक्षात्कारस्याप्युपासनाया इव क्रियात्वेऽपि न विधेयत्वम्, क्रियात्वं तु साक्षात्कारस्य प्रमाणजन्यत्वादखण्डाकारवृत्तावुपचारमात्रेण, यथा श्रीभाष्यमते धर्मभूतज्ञानस्य धात्वर्थस्य ॥

इयान् विशेषः—संकोच-विकासापन्नं द्रव्यमपि धर्मभूतं ज्ञानं संकोचविकासावस्थामात्रेण जन्यत्वेन धात्वर्थ एव। संकोच-विकासावस्थाया अत्रान्तःकरणभागस्य द्रव्यस्यापि जन्यत्वोपचारेण धात्वर्थत्वमिति समानम्। अतः प्रमाणतन्त्रस्य ज्ञानस्य पक्षद्वयेऽपि क्रियात्वमबाधम् ॥

### ज्ञानं प्रमाणतन्त्रमविधेयं च क्रिया वा, द्रव्यं वेति श्रीभाष्याद्वैतयोर्विशेषः

न चात्र संकेतमात्रम्; लोकानुभवस्तु बहिर्निर्गतवृत्त्यभिप्रायत्वेऽपि नोपपद्यते। बुद्धिर्ज्ञानमित्यनर्थान्तरमित्युक्तिस्तु यदि ज्ञानमात्मगुण इत्याशयेन, तर्हि श्रीभाष्यसिद्धान्तोऽपि बाधितः, धर्मभूतज्ञानार्थत्वे तु लोकानुभवविरोधोऽपि। 'ज्ञानमुत्पन्नं नष्टमि'त्यनुभवस्य तु वारिधिरेव काष्ठा। न हि गौतमोक्तं सर्वं साध्विति श्रीभाष्यसिद्धान्तोऽपि। ज्ञानस्वरूपे गौतमाननुसरणमुभयत्र समानम्। विवरण-भामतीप्रस्थानयोः फलस्य क्रियात्व-तदभावाभ्यां वैषम्येऽपि दर्शनांशे फलत्वे, अपुरुषतन्त्रत्वे च साम्यमेव। श्रीभाष्यमतेऽपि प्रत्यक्षादिज्ञाने प्रमाणतन्त्रे, उपासनायां च धर्मभूतज्ञानत्वाविशेषेऽपि प्रमाणतन्त्रत्व-पुरुषतन्त्रत्वलक्षणवैषम्यं धर्मभूतज्ञाने समानम् ॥

### प्रमाणतन्त्रस्य दर्शनस्य फलस्याविधेयत्वम् , पुरुषतन्त्रश्रवणादीनां तु विधेयत्वमिति विवरणमतम्

सिद्धान्तलेशसंग्रहे तु विधेयत्वं क्रियाया एव, यत्रोपासनादौ विधिः श्रवणादाविव, तत्र वेदनपदवाच्यत्वे समानेऽपि तत्र पुरुषतन्त्रे क्रियात्वम् , प्रमाणतन्त्रे तु ज्ञानत्वमात्रम् , न क्रियात्वमिति समानम् । अतो विवरणमतेऽपि फलं दर्शनं न विधेयम् , साधनं श्रवणं विचाररूपं पुरुषतन्त्रक्रियारूपं भावार्थत्वात् विधेयमिति व्यवस्था । न चैतावता वेदनापरपर्यायं ज्ञानमविधेयमेवेत्यद्वैतसिद्धान्तः । यथायथं पुरुषतन्त्रत्व-वस्तुतन्त्रत्वाभ्यां हि विधेयत्वाविधेयत्वे । तत्रोपासनं पुरुषतन्त्रं विधेयम् , इति न सविशेषोपासनं यत्र विवक्षितम् , तत्रोपासनपदवाच्यस्य ज्ञानस्य विधेयत्वे विप्रतिपत्तिः, किन्तु "द्रष्टव्यः" इत्यत्र दर्शनस्य फलत्वेन न विधेयत्वं प्रस्थानद्वयेऽपीति विवेकः ॥

### ब्रह्मवेदनं साक्षात्काररूपं न विधेयम् , किन्तु ध्यानमेव

अयमेव न्यायो "ब्रह्मविदाप्नोति परमि"ति वाक्ये ब्रह्मवेदनेऽपि, यत्र वेदने न विधिश्रवणम् । निष्कर्षस्तु साक्षात्कारहेतुर्ध्यानं दृष्टविधया, अदृष्टविधया वा विधेयमेव, साक्षात्कारस्तु न विधेय इति विवरणस्यापि सिद्धान्तः श्रीभाष्यमत इव । स च यदि साक्षात्कारोऽविद्यानिवृत्तिमात्रेण शान्ताकाङ्क्षः, तर्हि केवलं फलमात्रम् , न विधेयस्य ध्यानस्यैवावस्थाविशेषः, येन सोऽपि साधनकोटिप्रविष्टो विधेयतामर्हेत् ॥

### अद्वैतमते दर्शनं स्वतन्त्रम् , न तु ध्यानस्यावस्थाविशेषः

तत्राद्वैतसिद्धान्ते निदिध्यासनप्राधान्ये, श्रवणप्राधान्ये, त्रितयप्राधान्ये, किं बहुना ? दर्शन-श्रवण-मनन-निदिध्यासनानां निर्विशेषविषयकाणां चतुष्टयस्यापि प्राधान्येऽपि साक्षात्कारः स्वतन्त्रः, न तु कस्याप्यवस्थाविशेषः फलम् । अत एव न विधेयोऽपि ॥

तत्र सविशेषोपासनहेतुकसविशेषसाक्षात्कार इव निर्विशेषनिदिध्यासनहेतुकोऽप्यदृष्टविधया, दृष्टविधया वा सविशेषोपासनहेतुकनिर्विशेषसाक्षात्कारः फलं न विधेयम्—इति ॥

### ध्याने साक्षात्कारकल्पे विधिः, मुख्यसाक्षात्कारे तु न विधिः

न च फलं विधेयमिति श्रीभाष्यसिद्धान्तोऽपि। तत्रासदर्थविषयकभावनाजन्यः कामिनीसाक्षात्कारः साक्षात्कारकल्पः; सदर्थविषयकध्यानहेतुकसाक्षात्कारो मुख्यः साक्षात्कारः, तत्र सत्त्वम्, असत्त्वं च संनिकर्षासंनिकर्षाभिप्रायम्। तत्र श्रवणादिजनितनिर्विशेषात्मतत्त्वसाक्षात्कारस्तत्संनिकर्षनिबन्धनः, तन्निवर्त्यो वा मुख्यसाक्षात्कारो दृष्टाज्ञाननिवृत्तिरूपफलहेतुत्वादपि। तत्र सविशेषोपासनमपि तथा यदि साक्षात्कारहेतुः, तर्हि तत्रापि मुख्यसाक्षात्कारत्वे ध्यानहेतुकत्वेऽपि न विसंवादः; अन्यथा तु तत्रापि साक्षात्कारकल्पत्वमेव। तादृशं ध्यानमभिप्रेत्यैव ध्यानं दर्शनसमानाकारध्रुवानुस्मृतिरूपमिति व्यवहारः। तस्य च साक्षात्कारकल्पस्य ध्यानावस्थाविशेषस्य विधेयत्वं न विप्रतिपन्नम्; साधनावस्थातोऽनतीतत्वात्। सिद्धावस्थः खलु साक्षात्कारः फलं नाम॥

तत्रात्मतत्त्वं संनिकृष्टं प्रमाणेन साक्षात्करणयोग्यम्, इति श्रवणादिना तत्साक्षात्कारे दृष्टविधया जायमाने सति विवरणप्रस्थाने श्रवणादिविधेयत्वम्, साक्षात्कारस्य फलैकरूपस्य न विधेयत्वम्॥

### सविशेषोपासना न साक्षात्कारकल्पः, तेन नाज्ञाननिवृत्तिः, श्रवणादिना त्वज्ञाननिवर्तकसाक्षात्कारः

तत्र घटादिसाक्षात्कारस्थलेऽप्यज्ञाननिवृत्तिफलमनुभवसिद्धम्, इति तेन नयेन श्रवणादिनाऽऽत्मतत्त्वसाक्षात्कारेऽप्यज्ञाननिवृत्तिर्न सुवारा। श्रुतिस्तु श्रावयति—साक्षात्कारो विना श्रवण-मनन-निदिध्यासनानि नैवात्मानं लभत इति। न च साऽप्रमाणं भवितुमर्हति। सविशेषब्रह्मोपासनमप्यावर्त्यमानं यदि दर्शनसमानाकारं भवति; सविशेषस्यावस्तुत्वात्, तर्हि निर्विशेषं परमार्थवस्त्वपि श्रवणाद्यावृत्तिमहिम्ना कथं न साक्षात्कर्तुमलम्। अत एव सूत्रम्—"आवृत्तिरसकृदुपदेशादि"ति। निर्विशेषं न वस्तु, सविशेषमेव वस्तु, आद्यं प्रत्यक्षायोग्यम्, द्वितीयमेव तद्योग्यमिति तु कथामात्रम्॥

### निर्विशेषस्यैव परमार्थत्वम्, तत्साक्षात्कारेणैवाज्ञाननिवृत्तिश्च

तत्राद्वैतसिद्धान्ते निर्विशेषमेव परमार्थसत्, सविशेषं तु व्यावहारिकं सत्, यस्य परीक्षोपरितने प्रकरणान्तरे। तत्र साक्षात्कारोऽस्ति, अज्ञाननि-

वृत्तिस्तु न प्रत्यक्षेति चित्रमिदं वचनम्। साक्षात्कारस्य फलमज्ञाननिवृत्तिः प्रत्यक्षम्। तत्र पूर्वमज्ञातस्य भानमात्रम्, तत्राज्ञानं साक्षिभास्यम्, तन्निवृत्तिस्तु तदावृतार्थप्रकाशानुपपत्त्याऽनुमीयते॥

### ध्यानस्यापि साक्षात्कारकारणत्वम्

वस्तुतस्तु—ज्ञानस्यैव तत्राज्ञाननिवृत्तित्वाद् ज्ञानसाक्षात्कारस्यापरोक्षत्वादज्ञाननिवृत्तिरपि प्रत्यक्षैव। तत्र दृष्टविधयैव ध्यानं निर्विशेषविषयकम्; निर्विशेषात्मतत्त्वस्य संनिकृष्टत्वात्, तत्साक्षात्कारकारणत्वात्। सविशेषविषयं तु तद् भगवदनुग्रहवशाद् अदृष्टविधयोपासनाकाले ध्येयाकारेण तत्र तस्यासंनिकृष्टत्वात् साक्षात्कारसाधनं कामं भवतु॥

### श्रवणादीनां साक्षात्कारसाधनत्वोपपत्तिः

तत्र ध्यानस्य दर्शनसमानाकारता यदि दृष्टविधयाऽभ्यासपाटवेनाऽसंनिकृष्टेऽपि विषये, तर्हि का वा कथा संनिकृष्टविषये निरन्तरपटुतमसंस्कारसहिताभ्यासातिशयेन ध्यानं साक्षात्कारमेव दृष्टविधयैव जनयिष्यतीति। अतोऽत्र श्रवणादीनां दृष्टविधयैवात्मतत्त्वसाक्षात्कारहेतुत्वम्, साक्षात्कारश्च फलं न विधेय इति। यथा च फलत्वेऽपि तस्य तव्यप्रत्ययोपपत्तिः, तथा पूर्वमुपपादितम्॥

### तव्यप्रत्ययस्याहार्थत्वस्यापि सत्त्वाद् न द्रष्टव्यादिस्थले तव्यप्रत्ययेनैकान्ततो विधिः

वस्तुतस्तु—तव्यप्रत्ययस्य नैकान्तेन विधिरेवार्थः, किन्त्वहार्थेऽपि सोऽनुशास्यते। तत्र योग्यतावशादर्थव्यवस्था। अत्र च साक्षाद् विध्ययोग्यत्वं फलरूपस्य संप्रतिपन्नम्, इत्यहार्थत्वे पर्यवस्यति, इति न फलत्वेऽपि तव्ययानुपपत्तिः॥

### साक्षात्कारस्य भाव्यत्वेनैवान्वयः, न साधनत्वेन, अतो न दर्शनं विधेयम्

फलं साक्षात्कारः स्वर्गकामादिपदबोध्यस्वर्गादिवद् भाव्यतयैव भावनायामन्वेति, न तु यागादिकमिव साधनतया, इति न तस्योद्देश्यस्यापि विध्यन्वययोग्यता। न हि विध्यन्वयमात्रेण विधेयत्वं नाम, किन्तु कार्यत्वातिरिक्तसाधनत्वादिकारकविशेषरूपेणान्वयेन। न च साक्षात्कारस्य भावनायां भाव्यत्वातिरिक्तसाधनत्वादिरूपेणान्वयः, येन तस्यापि विधेयत्वं स्यात्॥

### श्रवणादीनां न भाव्यत्वं स्वर्गादिवत्, किन्तु साक्षात्कारस्यैव

श्रवणादिकं तु साधनत्वेनान्वीयमानं विधेयमेव। फलं हि सर्वत्र साधनाधीनम्। साधनं तु पुरुषव्यापाराधीनत्वात् पुरुषतन्त्रम्, न तु मुख्यं फलमपि, किन्तु पुरुषतन्त्रमिति हि व्यवस्था; अन्यथा विना साधनानुष्ठानं फलोत्पत्तिरापद्येत। अतः प्रवृत्तिविषयत्वं श्रवणादेरेव, यस्य विधेयत्वम्, यत्र होमादौ विधेयेऽपि फलत्वम्—"दध्ना जुहोती" त्यादिस्थले, तत्र भाव्यत्वेनान्वयेऽपि तत्र दध्यादिना होमादेः फलसाधनयोग्यताऽऽधानमात्रम्, न तु स्वर्गादिवत् फलत्वम्। तत्राद्वैतसिद्धान्ते साक्षात्कारो मुख्यमेव फलम्, अज्ञाननिवृत्तिरपि साक्षात्काररूपतयैव फलम्। व्यक्तं चैतदन्यत्राविद्यानिवृत्तिपरत्वाच्छास्त्रस्येति ॥

### भामती तु विषयाभिमुख्यतो व्यावर्तनेन आत्माभिमुखीकरणार्थं वस्तुस्थितिकथनमेव श्रोतव्यादिवाक्य इति वदति

तत्र भामती "श्रोतव्यो मन्तव्यः" इत्यादिवाक्यमात्मतत्त्वविजिज्ञासया कर्मयोगोपासनादिषु पुरुषतन्त्रेषु नितरामासक्तं तत्तदुपासनाद्यनुष्ठानेऽप्यप्राप्तात्मतत्त्वज्ञानं पुमांसमात्मतत्त्वसाक्षात्कारोपायं वेदान्तवाक्यानि, तदर्थोपपत्तिरूपं मननं च प्रमाणमात्रमुपदिशति—ज्ञाने प्रमाणमात्रस्य सोपपत्तिकस्य तात्पर्यानुसारेण परिशीलनमात्रं पर्याप्तम्, न चोदनातन्त्रोपासनादिमात्रेणेष्टसिद्धिः, इति प्रमाणमात्रोपदेशोऽत्र, न तु ज्ञानस्य कृत्यसाध्यस्य कर्तव्यतयोपदेश इत्यभिप्रेति, न तु दर्शनविरोधिप्रवृत्तिं मा कार्षीरिति कार्यान्तरपरिसङ्ख्यानमाशेते, इति कथमत्र जघन्या वृत्तिर्वस्तुस्थितिकथनेऽपि? न च तत्रापि भिन्नवाक्यता; साध्य-साधनानुवादमात्रत्वात्। श्रीभाष्यमते त्वर्थमात्रबोधकत्वमेकेनापि तव्यप्रत्ययघटितेन वाक्येन निर्वहतीति व्यर्थानि विधिपरतव्यप्रत्ययघटितानि वाक्यानि बहूनि ॥

### श्रीभाष्यमते 'द्रष्टव्यः' इत्यस्यैव विधित्वमिति भूषणसिद्धान्ते श्रोतव्यादिवैयर्थ्यम्

एतेन—'द्रष्टव्यः' इत्यस्यैव विधित्वमास्ताम्, इतराणि वा तदुपपादकानि भवन्तु, श्रीभाष्यस्यापि न विधिवाक्येदन्तायां निर्भर इति भूषणम्—अपास्तम्; उक्तयुक्तेरेव ॥

"द्रष्टव्यः" इत्यस्य वा, "निदिध्यासितव्यः" इत्यस्यैव वा विधित्वे फलकल्पनं वाक्यशेषवशेनामृतत्वप्राप्तिरिति न युक्तम्। तत्र यथाभाष्यं

"निदिध्यासितव्यः" इत्यस्यैव विधित्वे, 'द्रष्टव्यः' इति पदस्यैव फलसमर्पकत्वे च संभवति; वाक्यशेषवशेन फलकल्पनस्यायोगात्, 'द्रष्टव्यः' इत्यस्य विधित्वेऽपि "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति वाक्यवैयर्थ्यम्; दर्शनसमानाकारध्रुवानुस्मृतिरूपपरकाष्ठाफलध्यानस्य विधिसिद्धस्योपपादनानपेक्षणात्, तदुपपादकत्वं श्रवण-मनन-निदिध्यासनानां तत्करणत्वेन, अन्यथा वा उभयथाऽपि, नात्र ध्यानमात्रविधिः, किन्तु दर्शनमुद्दिश्य श्रवणादिविधानमित्यापत्त्या दर्शनस्य मुख्यस्यैव फलत्वमेव वरम् ॥

श्रीभाष्यमतेऽमृतत्वफलकत्वं श्रोतव्यादिवाक्ये न सिद्ध्येत्
अद्वैतमते त्वाऽऽत्मदर्शनस्यैवामृतत्वाद् नासिद्धिः

तत्र पूर्वममृतत्वप्राप्त्युपायमात्रं यद्यपि दृष्टम्; तथापि नात्मदर्शनातिरक्तममृतत्वम्; तस्यैवाज्ञाननिवर्तकस्य फलत्वात्, इति ससाधनामृतत्वस्वरूपपरतयोक्तवाक्यप्रवृत्तिरिति वक्तव्यम्; "अपाम सोमममृता अभूमे"ति वाक्यानुसारेण सोमस्याप्यमृतप्राप्तिहेतुत्वात्, तत्फलं स्वर्गादिकमेवामृतमिति शङ्का स्यात्, तेन च वेदान्तवाक्येनाऽऽत्मस्वरूपसाक्षात्कारोऽपि तदर्थ एवेति शङ्का स्यादित्युभयनिरूपणमत्रापेक्षितं नोपपादितं स्यात्, तेन चाऽऽत्मदर्शनं स्वर्गादिभ्योऽप्युत्तमं फलमिति सिद्ध्यति; अन्यथा स्वर्गादितुल्यमेवामृतत्वमात्मनिदिध्यासनस्य स्यात्, ततश्च उपासनारूपक्रियासाध्यत्वात् स्वर्गादेरिवानित्यत्वमपि स्यात् ॥

अद्वैतमते न मोक्षानित्यत्वापातः

अद्वैतमते तु पूर्वसिद्धस्यैवानाद्यावरणेन स्वयंज्योतिःस्वरूपप्रकाशमप्यप्रकाशमिवास्ति, इत्यनावृतसंविन्मात्रतयाऽवस्थानमावरणनिवृत्तिमात्रेणासिद्धत्वभ्रमनिवृत्तिमात्रेण सिद्धमिव भवति, इति नोपासनाफलस्योपासनासाध्यत्वमिव मुख्यं साध्यत्वमिति नानित्यत्वापातः ॥

न च ज्ञानमिवोपासना साक्षादज्ञाननिवर्तिका दृष्टविधया, किन्तु भगवत्संकल्परूपादृष्टविधया, इत्यदृष्टविधया कर्मसाध्यस्येवोपासनासाध्यस्याप्यनित्यत्वापत्तिर्दुर्वारा ॥

एतेन—अद्वैतमतेऽपि मोक्षस्य साध्यत्वेऽनित्यत्वापत्तिरिति—परास्तम्; मोक्षस्यासाध्यत्वात्, अविद्यानिवृत्तिमात्रस्य ज्ञानसाध्यत्वेऽपि मोक्षस्य स्वप्रकाशानावृतात्मस्वरूपस्य नित्यसिद्धत्वेन नानित्यत्वापत्तिः ॥

### अद्वैतमते प्रमाणतन्त्रज्ञानाधीनाज्ञाननिवृत्तिर्वा मोक्षः

तत्राविद्यानिवृत्तिमात्रमद्वैतमते तन्निवृत्तिरुपोपलक्षितब्रह्मरूपमात्रमिति सत्यं मोक्षः, श्रीभाष्यमते तु तस्या मोक्षप्रयोजकत्वेऽपि न मोक्षस्वरूपत्वम्; जगद्व्यापारवर्ज-ब्रह्मापृथक्सिद्धापहतपाप्मत्वादिविशिष्ट-तदपृथक्सिद्धशरीरात्मताया एव मोक्षत्वात् ॥

न च कर्मणा, उपासनेन वाऽविद्याया निवृत्तिः शुक्तिरजतादिस्थले दृष्टचरी, किन्त्वधिष्ठानसाक्षात्कारेणैवेति हि लोकसिद्धम्। अविद्याऽनिर्वचनीयता तूत्तरत्र विशदा, इति नाविद्यानिवृत्तिमात्रमुपासनासाध्यो मोक्षः। ज्ञानं ह्यज्ञानस्य दोषस्य नाशकम्, यथा शुक्तिरजतादिज्ञाने चिकित्सादिना काचादिनिवृत्तौ चक्षुषा शुक्तित्वज्ञानेऽज्ञाननिवृत्तिर्लोकसिद्धा, न ज्ञानेन दोषस्य निवृत्तिः; तन्निवृत्तौ शुक्तितत्त्वज्ञानम्, शुक्तितत्त्वज्ञाने दोषनिवृत्तिरित्यन्योन्याश्रयात्, ब्रह्मज्ञाने तु नैवम्; प्रमाणजन्यत्वमात्रेण ज्ञानस्याज्ञाननिवर्तकत्वात्, ज्ञानाज्ञानयोर्विरोधात्। तत्राविद्याया दोषविधया न निमित्तकारणत्वमात्रम्, किन्तु परिणामविधयोपादानत्वमपि विवरणमते। न चात्र शुक्तिरजतादिस्थल इव दोषनिवृत्त्यधीनं तत्त्वज्ञानम्, किन्तु प्रमाणमात्रतन्त्रम् ॥

### काचादिदोषसाम्यं नाज्ञानस्य, इति दोषस्याप्यज्ञानस्याधिष्ठानज्ञानेन निवृत्तिरविकला

भामतीमतेऽपि ब्रह्मावरकस्याज्ञानस्य प्रमाणजन्यवृत्त्युपधानमात्रेणैव निवृत्तिः, तत्र ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभाव उभयोरप्येकोपाधित्वेन। न हि काचादेः, ज्ञानस्य च भिन्नाश्रययोरेकोपाधित्वम्; काचनिवृत्त्यनन्तरकालस्य ज्ञानस्य काचैकानाश्रयत्वात्, ज्ञानाज्ञानयोस्तु नैवम्; उभयोरेकाश्रयत्वात्। अतो न काचादिदोषसाम्यमज्ञानस्य ॥

### काच-कामलादिवदज्ञानस्य न ज्ञाननिवर्त्यत्वायोगः

तत्र यद्यपि शुक्तिरजतादिस्थले काचो दोषः, न तु शुक्तित्वाज्ञानम्, जगद्भ्रमहेतुस्तु दोषोऽज्ञानमेव, दोषश्च। तच्च न तत्त्वज्ञानातिरिक्तेन नाश्यते तत्र। तथाप्यविद्याऽपि दोषत्वान्नाधिष्ठानज्ञानानिवर्त्यतामर्हति; काचादीनामिवाधिष्ठानावरकत्वेनैवाविद्याया दोषविधयैव भामतीमते कारणत्वात्, ज्ञानाज्ञानयोरेव विरोधित्वस्य दृष्टान्ते दर्शनाच्चाविद्यातिरिक्त-काच-कामलादिन्यायो नात्र प्रसरति ॥

दोषभेदेन निवर्तकभेदात् काच-कामलादिन्यायो नात्र

भामतीपक्षे ह्यविद्याया यत्र निमित्तकारणत्वमात्रम्, तत्राज्ञानत्वातिरिक्तदोषत्वाकार एव न संभवति। दोषत्वं हि शुक्तितत्त्वावरकत्वेनैव काच-कामलादीनाम्। तथाचावरकत्वप्रयुक्तत्वात् दोषत्वव्यपदेशस्य भामतीमतेऽप्यविद्याया आवरकत्वातिरिक्तशक्त्यनङ्गीकारेणावरक-तन्निवर्तकयोर्विरोधस्य लोकसिद्धत्वात् काच-कामलादौ शस्त्र-काचाद्योरेव परस्परविरोधित्वेनैव निवर्त्य-निवर्तकभावात्, दोषसामान्यविरोधित्वस्यैकत्र कुत्राप्यदर्शनाच्चाज्ञानस्य दोषस्य ज्ञानेनैव निवृत्तिः; अन्यथा कामलादेः शस्त्रचिकित्सया, काचस्य कामलौषधेन च कथं न निवृत्तिः? एकत्र दोषस्य शस्त्रचिकित्सानिवर्तकत्वात्सर्वेषु दोषेषु शस्त्रचिकित्सैव कर्तव्या स्यादिति शस्त्रचिकित्सातिरिक्तं चिकित्साप्रकरणं सर्वं वितथं स्यात्, अथवा शस्त्रचिकित्साप्रकरणमनर्थकं स्यात्। अतो ज्ञानैकविरोधिनो दोषस्य न ज्ञानातिरिक्तेन निवृत्तिरिति सुस्थम्॥

विवरणमतेऽधिष्ठानज्ञानेनाविद्याया आवरण-विक्षेपशक्तिद्वय-
नाशोऽसति बाधके शुक्तिरजतादाविव

विवरणमते तु—यद्यप्यज्ञानस्यावरणशक्तिः, विक्षेपशक्तिश्चेत्यंशद्वयम्; तत्राधिष्ठानज्ञानेनावरणशक्तिमात्रं नाशमेतुमर्हम्, येनाविद्याया दोषत्वम्, तथापि भामतीमत इवात्राविद्याया आश्रयविषयभेदानङ्गीकाराद् ब्रह्माश्रयाया आवरकशक्तिमत्या अविद्याया ब्रह्मज्ञानेन निवृत्तौ विक्षेपशक्तिमात्रेणासति बाधकेऽविद्याया आश्रयाभावेन, ब्रह्मविवर्तोपादानमन्तरेण तदुपादानताया अयोगेन चावरणशक्तिनाशकस्यैव विक्षेपशक्तिनाशकत्वस्यापि स्वीकरणीयत्वाद् नानुपपत्तिः, यथा शुक्तिरजतादौ॥

तत्र हि—शुक्तित्वाज्ञानं काचसध्रीचीनं रजतोपादानं शुक्तित्वावरकं चावरणविक्षेपशक्तिद्वयवत् शुक्तित्वज्ञानेन नाश्यते, एवमेवात्रापि। इयान् विशेषः—शुक्तिरजतादिस्थलेऽपि काचादेरिव शुक्तित्वाज्ञानस्याप्यावरकत्वात् तत्र काचादिकं शुक्तित्वावरकं शुक्तित्वसमसत्ताकम्, अज्ञानं शुक्तित्वावच्छिन्नचैतन्याऽऽवरकम्, यदेव रजतोपादानमपि। तत्र दोषोऽज्ञानस्य सहकारिकारणमिति विशेषोऽपि। अत एव शुक्त्यवच्छिन्नचैतन्यविवर्तोऽपि रजतम्॥

### शुक्तित्वज्ञानेन काच-कामलादिदोषानिवृत्तिरसमानविषयकत्वात् नैवमज्ञानस्य ज्ञानेनानिवृत्तिः

तत्र शुक्तित्वज्ञानेन न काचस्य निवृत्तिः; शुक्तित्वज्ञान-काचयोरनेकाश्रयत्वात्, शुक्तित्वावच्छिन्नचैतन्यस्य काचानधिष्ठानत्वाच्च। अत एव समानाविषयकत्वात् शुक्तित्वज्ञानेन न काचादिनिवृत्तिः, किन्तु अन्येन शस्त्रादिना। शुक्त्यवच्छिन्नचैतन्यविषयकशुक्तित्वज्ञानाज्ञानयोस्तु निवर्त्य-निवर्तकभावः; समानविषयकत्वात्, समानाश्रयकत्वाच्च। व्यक्तं चैतत्सिद्धान्तलेशसंग्रहे॥

तथा च तत्र यथा दोषविधया निमित्तकारणं परिणामविधयोपादानकारणं च तूलाज्ञानमावरण-विक्षेपशक्तिद्वयविशिष्टं तत्त्वज्ञानेन निवर्त्यम्, नान्यनिवर्त्यम्; अन्यथा तत्रापि शस्त्रादिनैव कथं नाज्ञानं नाशमियात्?

सति चैवं सर्वत्र भ्रमेऽज्ञानस्यावरण-विक्षेपशक्तिद्वये, आवरणशक्तिमात्रे वा ज्ञानाज्ञानयोरेव निवर्त्य-निवर्तकभावः; अज्ञानातिरिक्तस्यैव दोषस्य ज्ञानातिरिक्तनाश्यत्वमिति विपरीतनियमस्यैव स्वीकारात् नाज्ञानस्य ज्ञानातिरिक्तनाश्यत्वम्॥

अतश्च न जगद्भ्रममात्रे, किन्तु सर्वेषु भ्रमेष्वविद्या भावरूपा, आवरण-विक्षेपशक्तिद्वयवती विवरणमते, भामतीमते त्वेकरूपा, इत्युभयरूपाया अपि ज्ञानैकनाश्यत्वम्। तत्रोभयरूपत्वे तत्तदवच्छिन्नचैतन्यावरकत्वेन दोषत्वम्, चैतन्याश्रयत्वेनाज्ञानत्वेनोपादानत्वम्, काचमात्रदोषत्वं व्यावहारिकशुक्तित्वांशमात्रप्रतिबन्धकत्वेन, न चैतन्यांशप्रकाशप्रतिबन्धकत्वेनेति सर्वत्रैकरूप्यम्। अत एव काच-कामलादेरधिष्ठानज्ञानाबाध्यत्वम्, किन्तु तदतिरिक्तनाश्यत्वम्। तेन च तस्य कारणात्मनाऽवस्थितिः। तूलाज्ञान-रजतयोस्तु बाध इति सर्वं सुस्थम्॥

### अविद्याया दोषत्वमात्रेण भ्रमोपपत्तौ कुतः स्वरूपनाश इत्यादिशङ्काः

एतेन—दोषत्वावस्थाप्रहाणेनाविद्या शाश्वती भवतु; दोषत्वाभावे भ्रमायोगात् तत्त्वज्ञानवैयर्थ्यम्, अवस्थान्तरभावापन्नाविद्यासद्भाव इष्टापत्तिः, काचस्य रज्जुत्वावरणत्वायोगः, रज्जुज्ञानप्रतिबन्धकतत्त्वज्ञानानुदयापत्तिः, तथा ज्ञानान्तरसाध्यत्वापत्तिः, लोके काचादिनिवृत्त्यर्थमिव ब्रह्माज्ञाननिवृत्त्यर्थं प्रयत्नवैयर्थ्यापत्तिः, अनिर्वचनीयस्याज्ञानस्याप्रामाणि-

कत्वम् , कर्मातिरिक्ताविद्यायां प्रमाणाभावः, दोषस्य निवृत्त्यर्थमौषधस्वीकारवैयर्थ्यम् , निवृत्ताविद्यानां कथं जीवन्मुक्तत्वव्यपदेशः ? प्रपञ्चमिथ्यात्वे कर्मसु प्रवृत्त्यनुपपत्तिरित्यादि—परास्तम् ॥

असत्स्थलेऽज्ञानस्यावरण-विक्षेपशक्तिद्वयनाशो दृश्यते, अतः स एव न्यायोऽविद्यायामपि, इति सर्वात्मना तन्नाशः

अविद्या हि दोषत्वाकारेणोपादानत्वाकारेणोभयात्मनाऽपि नश्यति, न त्वेकेनापि रूपेण तत्त्वसाक्षात्कारानन्तरं वर्तते, इति न तन्निवृत्तये तत्त्वज्ञानमपेक्षितम् ; रज्जुसर्पभ्रमादौ दोषसहितरज्जुत्वाज्ञानस्यैव कारणत्वात् रज्जुत्वाकारवृत्तिप्रतिबन्धेन काचादेः, तदवच्छिन्नचैतन्यावरकत्वेन तूलाविद्यायाश्चोभयोरपि दोषत्वात् काचनिवृत्त्यर्थं तत्त्वज्ञानातिरिक्तमपेक्ष्यते । दोषत्वं हि काचादेः रज्जुचक्षुःसंयोगदशायां रज्जुत्वाकारप्रतिबन्धकत्वेन, इति न कारणान्तराद् रज्जुतत्त्वाज्ञानम् , किन्तु काचादिदोषप्रयुक्तम् । सत्यां सामग्र्यां तदावरकस्य तदज्ञानप्रयोजकत्वस्य कार्यप्रतिबन्धकत्वात् । अत एव काचादिदोषेण रज्जुत्वाज्ञानम् , इति तदज्ञाननिवर्तनार्थं न तत्त्वज्ञानापेक्षा; अधिष्ठानतावच्छेदकप्रतिबन्धकत्वाभावादविद्यायाः । न चायमेव न्यायोऽविद्यायाम् ; तस्याः संविन्मात्रप्रकाशप्रतिबन्धिकाया निवृत्त्यर्थं तत्त्वज्ञानस्यैवापेक्षणात्—इति ॥

अविद्याया अपि दोषत्वेऽपि तन्निवृत्त्यर्थं काचादिनिवृत्त्यर्थमिव प्रवृत्त्युपपत्तिः

तत्र लोके काचादिदोषनिवृत्त्यर्थं शस्त्रचिकित्सादौ प्रवृत्तिः, एवं रज्जुतत्त्वाज्ञाननिवृत्त्यर्थं प्रमाणव्यापारे; अज्ञानस्य प्रमाणजन्यवृत्तिमात्रनिवर्त्यत्वात् , जगद्भ्रमे त्वविद्यातिरिक्तदोषाभावाद् अज्ञानस्यैव दोषत्वात् , प्रमाणजन्यज्ञानस्यैवाज्ञाननिवर्तकत्वाच्च तेनैवाविद्यानिवृत्त्यर्थं प्रवृत्तिरविरुद्धा ॥

अनिर्वचनीयत्वादज्ञानस्य तत्त्वज्ञानैकनिवर्त्यत्वम्

अज्ञानं चेदमनाद्यपि तत्त्वज्ञानमात्रनिवर्त्यम् ; रज्जुतत्त्वाद्यज्ञानस्यैव जगदुपादानाज्ञानस्यापि भावरूपत्वानिर्वचनीयत्वादेः साधयिष्यमाणत्वात् । लोके हि—रज्जुसर्पादिस्थले भावरूपस्य तूलाज्ञानस्यैव रजतात्मना परिणामत्वेन तज्जनकत्वस्य दर्शनाद् जगतोऽप्यनिर्वचनीयस्यानिर्वचनीयाऽविद्यापरिणामत्वेन तदुत्पादकत्वमूरीकर्तव्यम् ॥

### कर्मणोऽविद्यात्वानुपपत्तिः

न चेयमविद्या कर्मैव; तस्या जीवाश्रितायाः जीव-ब्रह्मोभयावरणत्वायोगात्, ब्रह्माश्रितप्रकृतेरेवानादेरविद्यात्वस्वीकारेणोपपत्तौ शरीरादिनिर्वर्त्यकर्मणोऽविद्यात्वानुपपत्तिः। व्यक्तीकरिष्यते चेदमुपरिष्टात्, इति नाविद्यायाः कर्मणा, उपासनेन वा निवृत्तिः। तत्र कर्मणाऽविद्यानिवृत्तिवादः कर्मणैव कर्मनिवृत्तिवादः। कर्मान्तरेण कर्मान्तरनिवृत्तावनवस्था। ईश्वरसंकल्पवशाद् यदि कर्मरूपाविद्यानिवृत्तिः, तर्हि तत्रापि यदि कर्मापेक्षा, तर्हि सैवाऽनवस्था, तन्नैरपेक्ष्ये च वैषम्य-नैर्घृण्यापातस्तत्र॥

### अद्वैतमते जीवन्मुक्त्युपपत्तिः तत्त्वज्ञानस्याविद्यानिवर्तकत्वेऽपि

कर्मणा कर्मनाशे प्रतिजीवं नानाऽविद्याकल्पनापत्तिः। "अविद्या-कर्मसंज्ञाऽन्ये" त्यस्य कर्मरूपाविद्यापरत्वाभावो विष्णुपुराणपरीक्षावसरे व्यक्तीकरिष्यते। श्रीभाष्यमते स्थितप्रज्ञानाम्, गुणातीतानामिव च जीवन्मुक्तानामपि प्रारब्धशेषेण व्यवहारोपपत्तिः। व्यक्तीकरिष्यते चेदं बाधितानुवृत्त्युपपत्तिप्रकरण उत्तरत्र। ब्रह्मव्यतिरिक्तमिथ्यात्वनिश्चयवतो व्युत्पन्नस्य परोक्षज्ञानिनः, अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कारसाक्षात्कारवतो जीवन्मुक्तस्यापि समाधितो व्युत्थितस्य षष्ठभूमिकापर्यन्तं वर्णाश्रम-कर्माधिकारादिकमद्वैतमते नानुपपन्नम्। क्षुत्पिपासादिप्रयुक्तभोजनादिकमपि तथा। अज्ञाने काच-कामलादिवैषम्योपपादनमद्वैतसिद्धान्तस्य भूषणम्, येन लौकिकभ्रमादिव्यवस्था, व्यावहारिक-प्रातिभासिकव्यवस्था च व्यवतिष्ठते। न चाविद्याया ज्ञानेतरनिवर्त्यत्वं लौकिकानुभवविरुद्धम्, न वा काच-कामलादिवदधिष्ठानज्ञानानिवर्त्यत्वापत्तिर्वा॥

### काच-कामलादीनाम्, अज्ञानस्य च विशेषः, येनैकस्याधिष्ठानज्ञानानिवर्त्यत्वम्, अपरस्य तु तन्निवर्त्यत्वम्। अतो व्यावहारिक-प्रतिभासिकव्यवस्थाऽपि

तत्र काच-कामलादिकं शुक्तिसमसत्ताकं न शुक्तिज्ञानबाध्यम्, शुक्त्यवच्छिन्नचैतन्येऽनध्यस्तत्वात्। रजतादिकं तु तदधिष्ठानाज्ञानकार्यं शुक्त्यवच्छिन्नचैतन्याश्रितं तु शुक्तिज्ञानबाध्यम्। तत्र यथा शुक्तिज्ञानं तदज्ञानस्य बाधकम्, एवं ब्रह्मज्ञानं ब्रह्माज्ञानस्य बाधकम्; उभयत्राधिष्ठानतदज्ञानादीनां विषमसत्ताकत्वात्॥

न चैवं सति काचादेरिव रज्जुसर्पादेरपि व्यावहारिकत्वापत्तिः; दोषविधयैव कारणत्वेऽप्यविद्याया अविद्यात्वानपायात्। रज्ज्वाद्यज्ञानानामेव तत्तदधिष्ठानज्ञाननिवर्त्यत्वम्। तत्र रज्जुसर्पादिकमिव तदुपादानं तूलाज्ञानमपि ब्रह्मप्रमेतरबाध्यत्वात् प्रातिभासिकम्। अतो न तन्निदर्शनेन रज्जुसर्पादेरपि सत्यत्वापत्तिः ॥

तत्र तूलाविद्या प्रातिभासिकी, मूलाविद्या तु व्यावहारिकी, इत्युभयत्राज्ञान-तत्कार्ययोः समसत्ताकत्वापादनमिष्टापादनम्। न चात्राद्वैतव्याघातः; ब्रह्मेतरस्य सर्वस्य मिथ्यात्वात्, तत एवाद्वितीयत्वाच्च ब्रह्मणः ॥

काचादीनामपि व्यावहारिकत्वाद् मूलाविद्यानिवृत्तौ निवृत्तिः,
इति नाद्वैतव्याघातः

तत्र काचादिकं न रजताधिष्ठानविवर्तः, इति न रजतवत् तदधिष्ठानज्ञाननिवर्त्यम्। एवं मूलाविद्या निर्विशेषज्ञानबाध्या, काचादिकमपि, उभयोरेकाधिष्ठानकत्वात्, एकाधिष्ठानज्ञानबाध्यत्वाच्च। ब्रह्मेतरसर्वप्रयोजकमूलाविद्यानिवृत्तौ काचादीनामपि निवृत्तिरेव, इति न तत्त्वज्ञानानन्तरमपि काचादिदोषाणामनुवृत्तिः ॥

न चाविद्याया ज्ञानेतरबाध्यत्वम्, अतो न सविशेषज्ञानबाध्यत्वम्

न चाविद्यायाः ज्ञानेतरबाध्यत्वम्, येन तदेव वरं स्यात्? किञ्च तदज्ञानेतरत्? यदुपासनम्, तत्रापि हि—आप्रायणमावृत्त्यादिक्लेशसहनेनैवात्मा क्लेशयितव्यः, परन्तु स्वीकृतेऽपि क्लेशे नोपासनेनाविद्यानिवृत्तिः, इति भक्षितेऽपि लशुने न रोगशान्तिः। यदि जन्मान्तरेषु कुत्रचन भगवदनुग्रहवशादविद्यानिवृत्तिर्भवितेति विश्वासः, तर्हि भक्ष्यतां प्रत्यहं लशुनभारः सहस्रशो भगवति सर्वं भारं समर्प्य। सविशेषज्ञानमेव श्रौतमिति तदुपासनमेव यदि वरम्, तर्हि यदृच्छयोपपन्नं पुरुषप्रयत्नानपेक्षं प्रमाणमात्रपरिशीलनायत्तं सुकृतलब्धं च निर्विशेषज्ञानमपहाय निर्विशेषात्मतत्त्वज्ञानं न कुत्रापि श्रुतौ लभ्यत इति व्याजेन यथाकामं व्यवह्रियताम्—'यद्भावि तद्भवतु' इति भावेन ॥

सगुणोपासनमपि निर्विशेषसाक्षात्कारोपायत्वबुद्ध्या वरमेव

वस्तुतस्तु—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इति—वचनं प्रपद्य सगुणोपासनेनैव कालो याप्यताम् । तेन च—

"ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।"

इति वचनानुसारं यथासमयमद्वैतवासना भविता । धर्ममीमांसाकर्ता जैमिनिः—ईश्वरोऽस्ति वा न वेति विमृश्याऽन्ततः शिक्षयत्यपि सेश्वर-मीमांसायाम्, इति यदि सेश्वरमीमांसाप्रभावेणेश्वरैकशरणो भवितेति विश्वासः, तर्हि "अथातो ब्रह्मजिज्ञासे"ति निर्विशेषजिज्ञासां विश्वस्य निर्विशेषपरा भवन्तु—

"न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति ।"

इति भगवद्वचनं स्मरन्तः । अधिकं तु सविशेष-निर्विशेषवादे भविष्यति ॥

### उपासनस्यैव विधेयत्वम्, न तु ज्ञानस्य

निष्कर्षस्तु—श्रोतव्यादिवाक्येन ज्ञानं विधेयमिति विवरणप्रस्थानम् । इदमपि भाष्यसंमतमिति सिद्धान्तलेशसंग्रहः स्वयं वदति—सौत्रमपि भाष्यारूढमिति च, परन्तु प्रस्थानभेदमात्रम् । न चैतदद्वैतिनां केषामप्य-निष्टम् । अपूर्वविधिर्हि न प्राप्तेऽर्थे । अतो नियमविधित्वम्, प्राप्तत्वं च न विरुद्धमिति हि विवरणसिद्धान्तः ॥

पुरुषतन्त्रमेव विधेयमित्यत्र न भामती-विवरणयोर्विवादः, किन्तु ज्ञानस्य क्रियात्व-तदभावयोरेव । क्रियात्वेऽपि न विधित्वमुभयसंप्रतिपन्नम् । उभयोरपि ज्ञानमात्रं नोपासनारूपं श्रीभाष्याभिमतमित्यत्र तु न विसं-वादः । अतः प्रस्थानद्वयदृष्ट्याऽप्युपासनमात्र एवोपनिषदाम्, ब्रह्ममीमां-साया वेति श्रीभाष्यसिद्धान्तोऽनौपनिषदः, असौत्रश्च । एवं स्थिते किमिति स्वमतविधेयत्वकल्पमेव भूषणं पुनः पुनः स्वादयति ॥

### विधेयत्वपक्षोऽपि विवरणमते न निर्विशेषवादपरिपन्थी

विवरणाचार्या अपि निर्विशेषतत्त्वज्ञानम्, औपनिषदम्, सौत्रं वा सिद्धान्तं समर्थयितुमेव विधेयत्वपक्षं स्वीकुर्वते । विधिर्हि नाम नाप्राप्तप्रा-पणमेव, किन्त्वज्ञातज्ञापनमपि । अत एवौपनिषदो निर्विशेषराद्धान्त इति भगवत्पादानुयायिनः । उपनिषत्पदं तु विद्यापर्यायः । विद्या च साक्षा-त्कारमात्रम्, तेन च निर्विशेषवादः केवलं प्रमाणतन्त्रः, न तु पुरुषतन्त्र इति सर्वेऽप्यद्वैतिनः ॥

### गुणोपसंहारपादो नाद्वैतविरोधी, निर्विशेषवाक्यानामपि तत्र विचारात्

गुणोपसंहारपादः सविशेषविचारमिव, निर्विशेषविचारमपि समाद्रियते। तत्र सङ्ख्यालपत्व-बहुत्वे अप्रयोजके। व्यक्तं चैतद् गुणोपसंहारपादोक्रमे यथासंभवं सगुण-निर्गुणविषयत्वं भवतीति प्रथमाधिकरणसूत्रे भामत्याम्। अत एवाधिकरणत्रयं तत्र—"आनन्दादयः प्रधानस्य" "अक्षरधियां त्ववरोधः" "कामादीतरत्र तत्र चायतनादिभ्यः" इति ॥

### "आनन्दादयः" इत्यस्याद्वैतवाद एव स्वारस्यम्

तत्र "आनन्दादयः प्रधानस्ये"ति सूत्रे श्रीभाष्यं प्रधानपदं गुणिपरमभिप्रैति, अद्वैतं तु मुख्यब्रह्मपरम्। तत्र गुणोपसंहारपादस्य धर्मोपसंहारमात्रपरत्वात् "सर्ववेदान्तप्रत्ययमि"त्यारभ्य धर्मिप्रत्यभिज्ञानं सिद्धवत्कृत्यैव गुणोपसंहारानुपसंहारौ चिन्त्येते, इति गुणिपरत्वे तत्पदं व्यर्थम्—यदि"आनन्दादयः" इत्यादावपि गुणोपसंहारो गुण-गुणिभावमाश्रित्यैव स्यात् ॥

अतः प्रधानपदं मुख्यतात्पर्यविषयं स्वरूपैक्यमभिप्रेत्य शाखाभेदाम्नाततत्तत्स्वरूपमेकमिति निरूपणार्थमेव, न त्वानन्दत्वादिगुणानाम्, आनन्दादिरूपधर्माणां वा निरूपणार्थम्। तत्र च प्रधानब्रह्मस्वरूपानुबन्धिनां स्वरूपाणाम्, गुणानां च शब्दभेदेनेतरव्यावृत्ततयाऽवगतानामुपसंहारविचारः संप्रतिपन्नः ॥

### कारणत्वप्रसञ्जितदोषव्यावृत्तिर्निर्विशेष एव

तत्र ब्रह्मस्वरूपं कारणत्वप्रसञ्जितदोषव्यावृत्तमुपास्यमिति श्रीभाष्यम्। इदं हि कारणत्वातीतावस्थाया ब्रह्मणोऽयोगमभिप्रेत्य, अद्वैतमते त्वतीतकारणतावस्थं स्वरूपं निर्विशेषमेव ब्रह्मस्वरूपं सत्यम्। तत्र कारणत्वप्रसक्ता दोषाः परिणामित्वानृतत्व-परप्रकाशत्व-जडत्व-नियतदेश-कालसम्बन्धित्व-परिच्छिन्नत्व-सापेक्षत्वानीति श्रीभाष्यप्रकाशिका वदति। सर्वं चातीतकारणत्वावस्थे निर्विशेष एव परमात्मनि शास्त्रमहातात्पर्यविषये स्वीक्रियमाण उपपद्यते ॥

### तत्रेदं विचारणीयम्—

किं केवलस्य ब्रह्मण उक्तदोषपरिहारमुखेन प्राधान्यमानन्दत्व-सत्यस्वरूपत्वादिकमङ्गीक्रियते, सूक्ष्मचिदचिद्विशिष्टस्य वा। आद्ये श्रीभाष्यमते

स्वरूपेण कारणत्वस्यानङ्गीकाराद् उक्तदोषाप्रसङ्गः। द्वितीये विशिष्टस्य सत्यानन्दादित्वायोगः। निर्विशेषप्राधान्ये तु सर्वमुपपद्यते ॥

### परविद्याविचारपरम् 'अक्षरधियामि'त्यप्यद्वैत एव स्वरसम्

अत एव—"अक्षरधियां त्ववरोधः" इति सर्वविशेषातीतत्वं ब्रह्मणः प्रतिपाद्यते। तत्र "नेति नेति" प्रतिपादितो निषेधो ब्रह्मणः सप्रपञ्चत्वनिषेध इति श्रीभाष्यप्रकाशिका। तत्र प्रपञ्चविशिष्टस्य नाप्रपञ्चत्वम् , न वा केवलस्य सप्रपञ्चत्वमिति किं वा कुत्र निषिध्यते ॥

### निर्विशेषवादानुगुणवेदान्तवाक्यसंग्रहः

तत्र निर्विशेषवादोपष्टम्भकानि वाक्यानि "एकमेवाद्वितीयम्" "निर्गुणं निष्कलं शान्तम्" "मनसैवानुद्रष्टव्यम्" "नेह नानाऽस्ति किञ्चन" "एकधैवानुद्रष्टव्यम्","एतदप्रमेयं ध्रुवम्" "स एष नेति नेत्यात्मा" "अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" "अगृह्यो न हि गृह्यते" इत्यादीनि। सर्वथा तु तृतीयाध्यायतृतीयपादे सगुणोपासनेषु गुणोपसंहारानुपसंहारस्यैव भूयस्त्वमकिञ्चित्करम् ॥

### सविशेषस्य व्यावहारिकत्वमेव, सविशेषोपासनं स्मृतिरप्रमा, निर्विशेषसाक्षात्कारस्तु प्रमा, तेन निर्विशेषं पारमार्थिकम्

नैतावता सर्वस्यां मीमांसायां निर्गुणपरत्वनिषेधो युज्यते। तत्र सगुणज्ञानमुपासनात्मकमेव, निर्विशेषज्ञानं तु प्रमाणतन्त्रः साक्षात्कारः। तत्र 'यथाक्रतु'न्यायेन, तत्तत्प्रकरणानुसारेण वा निर्विशेषज्ञानस्याज्ञाननिवृत्तिरेव फलमिति निष्कर्षः। "भिद्यते हृदयग्रन्थिः"इत्यादीनामप्यत्रैवोपपत्तिः। तच्च दर्शनं द्रष्टव्यपदोपात्तं न स्मृतिः, किन्तु साक्षात्कार एव; स्मृतौ दर्शनपदार्थत्वस्य व्याघातात्। अत एव न स्मृतिवदप्रमा। शास्त्रजन्यसाक्षात्कारे दर्शनपदवाच्यत्वं "शास्त्रदृष्ट्या तूपदेशः" इति सूत्रसिद्धम् ॥

### 'द्रष्टव्यः' इति मतद्वयेऽपि फलपरमेव, तत्र सविशेषस्य व्यावहारिकत्वमेव

तत्र "द्रष्टव्यः" इत्यत्राविधेयत्वे प्रमाणतन्त्रत्वं प्रधाना युक्तिः। सा तु श्रवण-मनन-निदिध्यासनसाधारणी,'द्रष्टव्यः' इत्यत्रासाधारणी युक्तिस्तु फलपरत्वम्। तत्राविधेयत्वं सर्वसम्मतम्। श्रीभाष्यमतेऽपि ध्यानस्य परिपक्वा-

वस्था हि दर्शनसमानाकारं स्मृतिरूपमपि फलकल्पमेव; तस्याविधेयत्वमपि तत एव; अन्यथा "निदिध्यासितव्यः" इत्यत्रैव विधिः, अन्यत्र सर्वत्रानुवादमात्रमिति श्रूयमाणेऽपि तव्यप्रत्यये कथम्?

दर्शनस्य फलत्वेनैवान्वयाद् न विधेयत्वम्

यद्यपि विधेयानामपि यागादीनां साध्यत्वं तत्तदङ्गापेक्षया भवति; तथापि यत्र फलाम्नानम्, तत्र साध्यत्वव्यपदेशः। करणं यद्यपि साध्यतामर्हति; तथापि यत्र विधेयत्वम्, तत्र तस्य न कर्मत्वेनान्वयः। दर्शनस्य तु स्ववाक्ये श्रुतस्य फलत्वेनान्वय इति स्वीकार एव स्वरसो बहूनां तव्यप्रत्ययान्तानामानर्थक्यपरिहाराय। तस्य तत्र फलत्वेनान्वयस्तु श्रवणादीनां साधनतया विधानान्वयानुपपत्त्या॥

दर्शनस्य फलान्तराभावादपि न विधेयत्वम्; दर्शनसाधनत्वात्

तत्र दर्शनं स्वत एव फलम्, न तस्य फलान्तरम्; ब्रह्मभावस्याज्ञाननिवृत्तिमात्रसापेक्षस्याज्ञाननिवृत्तिरूपत्वेन दर्शनमात्रस्यापि फलत्वौचित्यात्। अत एव—"अथातो ब्रह्मजिज्ञासे"त्यत्र भाष्यम्—"अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्मे"ति। अविद्यानिवृत्तौ तु दर्शनानन्तरं न किमपि कर्तव्यमवशिष्यते, इति तस्य निष्पत्तिमात्रेणाविद्यानिवृत्तेरपि सिद्धत्वात्, तस्य फलाकाङ्क्षाऽभावाच्च न दर्शनस्य फलान्तरसाधनत्वान्वयनिर्वाहार्थं फलत्वेनान्वय इति शङ्का न प्रसरति॥

ध्यानानन्तरत्वेऽपि साक्षात्कारस्य न ध्यानफलत्वम्,
न वा तेन मोक्षः

तत्र यद्यपि साक्षात्कारस्य ध्यानानन्तरभावित्वेऽपि श्रीभाष्यमत इव न ध्यानफलत्वम्; अन्यथा श्रवण-मननयोर्निदिध्यासनपूर्वभावित्वेन तत्फलत्वाविशेषात् कथं निदिध्यासनस्यापि फलत्वेन नान्वयः? न च ध्यानाद् मोक्ष इति भगवत्पादानुयायिनां पन्थाः॥

अन्तःकरणवृत्तेरपि वस्तुगत्याऽऽविद्यकवृत्तित्वेऽपि स्वकारणाविद्यानिवृत्तित्वमव्याहतम्

तत्र—दर्शनमिदं प्रमाणजन्यान्तःकरणवृत्तिः, न तु सुषुप्त्यादाविवाविद्यावृत्तिः, इति प्रमाणजन्यान्तःकरणवृत्तिरूपस्याविद्यानिवृत्तिरूपत्वं न व्याहतम्; प्रमाणजन्याया अन्तःकरणवृत्तेरेवाज्ञानविरोधित्वात्, इति

वृत्तेरविद्यापरिणामत्वाद् नाविद्यानिवृत्तिरुपपन्नेति—परास्तम्। तत्रान्तः-करणमप्याविद्यकम्, तथापि स्वकारणस्यापि कार्येण नाशो वृश्चिकादिषु दृश्यते, कतकरजश्च स्वयं मलमपि मलान्तरं जरयतीत्यादिबहुतरनिदर्शन-सत्त्वाद् नानुपपत्तिः ॥

तत्र वाक्यस्य साक्षात्कारजनकत्वं मनन-निदिध्यासनसहकृतस्यैव "दशमस्त्वमसी" त्यादौ 'रज्जुरि त्याप्तोपदेशादावपि। अतः श्रवणमात्रेण साक्षात्कारस्य कस्यचन पुरुषधौरेयस्योदयेऽपि सर्वेषां ततः तच्छ्रवणमा-त्रेणानुदयो न दोषाय। व्यक्तं चैतत् भाष्ये समन्वयसूत्रे मननादिविधि-सार्थक्योपपादनावसरे ॥

श्रवणमात्रेण विपरीतवासनानामनाशात् तन्निवर्तक-
साक्षात्कारार्थं मननाद्यपेक्षा

तत्र श्रवणं वाक्यार्थज्ञानमात्रं वाक्यार्थविचारमात्रेण भवति। तेन साक्षात्कारजननार्थमेव मननाद्यपेक्षा; विपरीतवासनानां श्रवणमात्रेण निवृ-त्त्यसंभवात्। वासनानां प्रतिबन्धकत्वं विचारस्यावगतिपर्यन्तज्ञानावस्थाप-र्यन्तमेव, न तु वाक्यार्थस्य श्रवणमात्रेणोत्पत्तावपि तन्नाशः। अतो विपरीत-वासनानामवगतिपर्यन्तज्ञानप्रतिबन्धिकानां सत्त्वेऽपि न श्रवणस्यानुपपत्तिः। तत्र मननादीनां साक्षात्कारद्वारा वासनानिवर्तकत्वम्, न तु साक्षादिति नात्र व्याहतिलेशोऽपि ॥

वासनादिप्रतिबन्धनाशार्थमेव निदिध्यासनमपि, येन
साक्षात्कारः

तत्र अपरोक्षसाक्षात्कारस्याम्रेडितस्य मननादिसहकृतश्रवणोत्पन्नस्य 'आवृत्तिरसकृदुपदेश'न्यायेनाऽऽशरीरपातमभ्यस्यमानस्यैव कार्यकरत्व-मिति सूचनार्थं निदिध्यासनम् ॥

तत्र साक्षात्कारश्चाक्षुषो विनाऽपि मननादिकं कार्यकरी भवति। तत्र भेदवासनायां दृष्टायामपि चक्षुःसन्निकर्षबलात् मैत्रभिन्नस्य चैत्रसाक्षात्कारो यद्यपि भवत्येव; तथापि तत्र मैत्रभेदस्य बाधितत्वात् तदभिन्नस्वरूपसाक्षा-त्कारो न भवति। न चात्र स न्यायो जीवेश्वरयोरभेदस्य जीव-ब्रह्मैक्यरूपस्य साक्षात्कारे जननीये, इति भेदवासनायाः प्रतिबन्धकत्वाद् मननाद्यपेक्षां विना न साक्षात्कारजनकत्वम्। ततश्च साङ्गश्रवणाभ्यासेन साक्षात्कारे जातेऽविद्याया इव तत्प्रयुक्तभेदवासनाया अपि निवृत्तिर्न दोषाय ॥

भेदवासनानिवृत्तिः साङ्गेनैव प्रधानेन, नाङ्गमात्रेण, प्रधानमात्रेण वा

न हि श्रवणमात्रं साक्षात्कारकारणम्; मननादिविधिश्रवणात्। तत्र श्रवणमङ्गि, मननादिकमङ्गम्, यदेव सहकारि। न हि प्रधानस्य फलजननेऽङ्गापेक्षायां सत्यां यत्सहकारेण फलजनकत्वम्, तदेव कार्यकारि भवतु, किं प्रधानेनेति शङ्काऽवसरस्त्यपि; अन्यथा सर्वत्राङ्गेनैव निर्वाहात् प्रधानवैयर्थ्यमापद्येत। इष्टापत्तौ च नाङ्गाङ्गिभावः, येन मननादेरङ्गानामेव प्रत्यक्षजनकत्वमस्तु, किमिति शाब्दापरोक्षवादः, अतो नात्र वाक्यस्य मननादिसहकृतस्य साक्षात्कारजनकत्वात्, तद्बलेन भेदवासनानिवृत्तिश्चानुपपन्ना॥

ध्यानमात्रेण न वासनायाः, अविद्याया वा निवृत्तिः

अनेन—भेदवासनानिवर्तकत्वमज्ञाननिवर्तकस्य साक्षात्कारस्यैवेति—व्याख्यातम्; अविद्याप्रयुक्ताया भेदवासनाया अनादेरविद्यायाश्च निवर्तकेनैव हि निवृत्तिरात्मानं लभते। न चेयमविद्यानिवृत्तिः, तत्प्रयुक्तभेदवासनानिवृत्तिर्वा ध्यानमात्रेण संभवति; प्रमाणतन्त्रज्ञानस्यैवाविद्यानिवर्तकत्वेन ध्यानस्य चोदनालक्षणस्य दर्शनसमानाकारस्यापि तदनिवर्तकत्वात्॥

अपरोक्षभ्रमो ह्यपरोक्षसाक्षात्कारेणैव निवर्तते, तेनापि प्रमाणजन्येनैव। अत्र—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"

इति वचनादपरोक्षभेदस्याप्यविद्यायास्तत्प्रयोजिकाया इवानादित्वाद् न भेदवासना जन्या, किन्त्वभेदसाक्षात्कारप्रतिबन्धकत्वमात्रं भेदवासनायाः। तदपि सत्तामात्रेण। अतोऽपरोक्षसाक्षात्कारेणाविद्यानिवृत्तेरेव प्रथममपेक्षणात् तत्सहकारितया मननादिकमप्यपेक्षितम्, इति चाक्षुषसाक्षात्कारात् शाब्दसाक्षात्कारस्य विलक्षणत्वाद् न श्रवणमात्रेण साक्षात्कारोदयापत्तिः। सर्वं चेदं समन्वयसूत्रभाष्ये व्यक्तम्॥

भेदवासनाया निवृत्तिरविद्यानिवृत्त्यैव

तत्र भेदवासनाऽप्यविद्याप्रयुक्ताऽनादिरविद्यानिवृत्त्यैव निवर्तते स्वयमित्युक्तम्, इति नात्र भ्रमनिवृत्त्यनिवृत्तिशङ्का, किन्तु भेदवासना-

निवृत्तिचिन्तैव, इति स्वयमेव न विना साक्षात्कारं निवृत्तिः। अन्यत्तु सर्वमनुक्तोपालम्भनम् ॥

### अविद्यानिवर्तकं च ज्ञानं भेदवासनाया अपि नाशकम्

न ह्यत्रापरोक्षभ्रमस्य साक्षात्कारप्रतिबन्धकत्वं युक्तम्, किन्तु भेदवासनायाः। तत्र चोत्तेजकत्वमेव मनन-निदिध्यासनयोः, इत्युत्तेजकमननादिसहितेन श्रवणेन साक्षात्कारे जाते, तेन पूर्वोक्तरीत्या सोपादाना भेदवासनाऽपि निवर्तते, इत्यनावृतसंवित्स्वरूपमात्रप्रकाशो न व्याहन्यते। शाब्दापरोक्षतायाः सर्वानुभवसिद्धाया अपि सर्वलोकानुभवविरुद्धत्वप्रत्याख्यानं स्वावसरे विशदीभविष्यति। तदिदं श्रवणविधिप्राधान्यमवलम्ब्य परीक्षितम् ॥

### निदिध्यासनाङ्गित्वपक्षोऽपि प्रस्थानान्तरसंमतः, परन्तु तत्रापि साक्षात्कारद्वारैव निदिध्यासनस्य मोक्षोपयोगः, न तु साक्षात्

अद्वैतसिद्धान्तेऽपि "निदिध्यासितव्यः" इत्यत्रैव मुख्यो विधिरित्यपि 'तुष्यतु दुर्जन'न्यायेन 'कृत्वाचिन्तया' वा प्रस्थानभेदोऽपि जागर्ति। विशेषस्तु तत्र श्रवण-मननयोः "श्रोतव्यो मन्तव्यः" इति वाक्ययोरपि तव्यप्रत्ययस्वारस्येनाङ्गविधिः स्वीक्रियते, न तु श्रीभाष्यमत इव "निदिध्यासितव्यः" इत्यत्रैव विधिः, न तु तत्रैव वाक्यद्वयेऽपि सत्यपि तव्यप्रत्ययेऽनुवादमात्रम्। 'द्रष्टव्यः' इत्यत्रानुवादत्वं तु सम्प्रतिपन्नम् ॥

तत्राद्वैतमते दर्शनस्य न विधेयत्वम्, परन्तु फलत्वेन विध्यन्वयो वर्तते, अन्यत्र तु कयाऽपि विधया न विध्यन्वयः। भूषणस्य स्वतन्त्रविवरणस्य दृष्ट्या तु "द्रष्टव्यः" इत्यत्रैव विधिः, परन्तु "निदिध्यासितव्यः" इत्यत्र न काऽपि गतिरिति परं विवेकः ॥

### निदिध्यासनप्राधान्यपक्षे शाब्दपरोक्षवादः

तत्र निदिध्यासनप्राधान्यपक्षे शब्दस्य परोक्षज्ञानजनकत्वमेव। निदिध्यासनसंस्कारसचिवं मन एव हि साक्षात्कारसाधनम्। तत्रापि साक्षात्कारद्वारैव ध्यानस्य मोक्षसाधनत्वम्, "द्रष्टव्यः" इति फलसमर्पकम्। ध्यानस्य पूर्वाङ्गे श्रवण-मनने, यत्सहकारवशाद् मनः प्रमाणमात्मसाक्षात्कारस्य। भेदवासनाया निरासोऽपि पूर्वोक्तविधयैव। श्रीभाष्यमतेऽप्यात्यन्तिक-

भेदवासनानिरासोऽपेक्ष्यते । न चेदानीं मुक्तात्मन इव जीवात्मनः परमात्माऽपृथक्सिद्धता भाति ॥

### श्रीभाष्य-भामतीप्रस्थानयोर्विशेषः

अत एव भूषणमपि— ब्रह्मापरोक्षेण सविलासाविद्यानिवृत्तौ भेदवासना अपि मिथ्यात्वाविशेषाद् निवर्तन्त इति—वदति । तत्र श्रीभाष्यमताद् भामतीमतस्य विशेषः—श्रीभाष्यमते 'निदिध्यासितव्यः' इत्यत्र विधिरिति विधेयोपासनारूपज्ञानवादः, भामतीमतेऽविधेयप्रमाणजन्यज्ञानवादः । तच्च प्रथमं मोक्षोपायतया विहितमिति श्रीभाष्यविरुद्धम् ; निदिध्यासनविधिवादस्यैव श्रीभाष्यारूढत्वात् , तस्य मोक्षसाधनत्वस्योक्तवाक्येऽश्रवणात् , तस्यापि विधेयत्वं न भामतीमते, वेदान्तवाक्यादिप्रमाणजनितवृत्तिमात्राऽऽवृत्तिरूपत्वेन ध्यानस्यापि साक्षात्कारफलकत्वाभावात् ॥

### गीताया मुख्यतात्पर्यमद्वैतसिद्धान्ते

गीता हि श्रुत्यर्थसंग्रहरूपा विहितकर्मयोगोपदेशम् , विहितं ध्यानं सगुणविषयं चोपदिशति, ज्ञानयोगं तु द्रष्टव्यपदवत् विना विधानम् , इति यथायथं ज्ञानमात्रेण ज्ञानयोगस्य पर्यवसानम् , न तु कर्मयोग-भक्तियोगयोरिव कर्तव्यान्तरमुपदिशति; ज्ञानसाधनानामेवामानित्वादीनामनुष्ठानं कर्तव्यम् , न तु ज्ञानमपि कर्तव्यमिति तात्पर्यात् । अत एव "एतज्ज्ञानमिति प्रोक्तमि"ति साधनानामपि ज्ञानत्वेनोपदेशः । "ज्ञेयं यत्तत् प्रवक्ष्यामि" इति ज्ञेयोपदेशातिरेकेण नान्यत् कर्तव्यमित्युपदिशति ॥ चतुर्दशाध्याये—

"परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥"
"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।"
"नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ॥
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ।"
"गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्म-मृत्यु-जरा-दुःखैर्विमुक्तोऽमृतमश्नुते ॥"

इत्यादिना ज्ञानमात्रेण गुणातीतताख्यब्रह्मभावेनैव शास्त्रमुपसंहरति—

"इति गुह्यतमं शास्त्रं मया प्रोक्तं महानघ ।"

"एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥"

इति शास्त्रस्य तज्जनितज्ञानमात्रेण साफल्यम्, न तु कर्तव्यं शास्त्रतत्त्वज्ञानिनः किमपीति ॥

गीतायाः—

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥"
"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।"

श्लोकांशा मुण्डकोपनिषन्मुख्यार्थपरविद्यासमानार्था इति योगशिखोपनिषत् । तत्र ह्यक्षरात् परतः परः = प्रधानात् अक्षरपदवाच्यात् जडप्रपञ्चात् ततः परात् = सर्वसमष्टिशरीरात् हिरण्यगर्भाच्च यत् परमनुपहितं शुद्धं परमात्मतत्त्वम्, ततः परं मुख्यमक्षरम्, तत्तु निर्विशेषं ब्रह्मैवेति केचन विवृण्वते । स एवार्थो योगशिखोपनिषद्यपि दृश्यते—

"क्षरः सर्वाणि भूतानि सूत्रात्माऽक्षर उच्यते ।
अक्षरं परमं ब्रह्म निर्विशेषं निरञ्जनम् ॥"

अलक्षणमतर्क्यमनूपमम्" "इत्यादौ सविस्तरम् । अत्र"उत्तमः पुरुषः" इति पद्योरेवार्थः परमं ब्रह्मेति विवरणम् । तत्र परविद्याविषय एव विस्तरेणानुकृष्यते । अत एव—स्वस्यापि परमब्रह्मत्वं न सगुणेन सविशेषेण वा रूपेण, किन्तु क्षराक्षरातीतरूपेणेति—

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति भगवानुपदिशति—स्वीयमात्मतत्त्वं क्षराक्षरातीतं निर्विशेषमिति ॥

### योगशिखोपनिषदोऽप्यद्वैत एव तात्पर्यम्

स्पष्टं चेदं योगशिखोपनिषत् "अक्षरं परमं ब्रह्म निर्विशेषमि"त्यादि विशेषणवर्गैः संगृह्णाति । अनेन सोपाधिक-निरुपाधिकयोरैक्यम्, जीवत्वेश्वरत्वादिकमप्यध्यस्तम्, न तु परमार्थमिति ज्ञाप्यते । अत एव तत्रैव—

चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचित् ।
जीवत्वं च तथा ज्ञेयं रज्ज्वां सर्पग्रहो यथा ॥
रज्ज्वज्ञानात् क्षणेनैव यद्वद् रज्जुर्हि सर्पिणी ।
भाति तद्वच्चितिः साक्षाद् विश्वाकारेण केवला ॥

उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यद् न विद्यते ।
तस्मात् सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ॥"

इति ब्रह्मणोऽध्यस्तरूपेण सद्वितीयत्वम्, स्वरूपतोऽद्वितीयत्वम्, तस्यैव जीवोपाधिमत्त्वमात्रमध्यस्तम्, न तु जीवस्वरूपमपि—इति व्यक्तम् ॥

गीताया अविधेये ज्ञानयोग एव प्रतिष्ठा, सविशेष-
ध्यानं दर्शनसमानाकारमिति च न विप्रतिपन्नम्

तत्र सगुणस्य भक्तियोगविषयत्वे न विप्रतिपत्तिः, तस्य सविशेषं स्वरूपमेव न तत्त्वम्, किन्तु सर्वोपाधिविनिर्मुक्तं स्वरूपमेव । अत एव गीताया पञ्चदशाध्यायोपसंहारदृष्ट्या ज्ञानयोग एवाविधेये प्रतिष्ठा ॥

न चैतावता योगकाले व्यावहारिकाणामन्येषां यावत्तत्त्वज्ञानं सर्वत्र दर्शनमिव परमात्मनोऽपि सविशेषस्य "वृक्षे वृक्षे च पश्यामि" इत्यदि विरुद्धम् । अतो निदिध्यासनपरकाष्ठाऽपि दर्शनसमानाकारावस्थैव, न तु साक्षाद् मुख्यं दर्शनमिति न विप्रतिपन्नम् ॥

गीताया निर्विशेषसाक्षात्कारमोक्षसाधनतापक्ष एव
स्वारस्यम्, न भक्तियोगे

सर्वत्रापरोक्षभ्रमोऽपरोक्षसाक्षात्कारेणैव निवर्तते । साप्युपाधिनिवृत्त्या न स्वरूपमात्रेण । अयमेव न्यायो दिङ्मोहालातचक्र-पीतशङ्खभ्रमादावपि । यदा च संनिहितस्थलेऽन्यथाख्यातावपि भेदग्रहे सत्येवाभेदभ्रमः, तत्राप्यपरोक्षभ्रमस्य साक्षात्कारेणैव निवृत्तिः, तदा कैव कथा निरुपाधिकभ्रमस्थले, तत्रापि दोषस्याप्यविद्यारूपत्वे ?

"ब्रह्म वेद ब्रह्मैव भवति" इत्यत्र वेदनं तु पूर्वोद्धृतपञ्चदशाध्यायादिगीतावाक्यैर्विशदम्, यद् न भक्तिमात्रम्, किन्तु साक्षात्कार एवेति ॥

"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।"

इत्यव्यभिचरितभक्त्या ज्ञानसाधनकोटौ निवेशस्तु तस्या ज्ञानरूपतां दण्डेन वारयति ॥

"भक्त्या माभिजानाती"ति गीतायाः अद्वैत एव स्वारस्यम्

"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥"

इति गीताऽपि भक्तेर्ज्ञानसाधनत्वमेव द्रढयति । तत्र सगुणभक्तिः—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाऽऽविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"
"ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।"

इत्यादिवचनाद् वैकुण्ठलोकाधिपतित्वादिपरिच्छिन्नरूपाद्युपाधिसम्बन्धप्रयुक्तपरिच्छेदशून्यं जीवाभिन्नं संविद्रूपं च परमात्मानमवतारयतीत्येव योजनीयत्वादद्वैतमत एव स्वरसा ॥

### श्रीभाष्यमते गीताया न स्वारस्यम्

श्रीभाष्यमते त्वपरिच्छिन्नत्वादिस्वरूपोपपादकसत्यकामत्वापहतपाप्मत्व-सत्यत्व-सर्वजगत्कारणानन्दत्वादिसर्वविशेषणविशिष्टतया भगवच्चिन्तनस्यैव भक्तिपदवाच्यत्वात् भक्त्या ज्ञेयं किं वा स्वरूपमवशिष्यते– यदादाय "यावान् यश्चास्मि तत्त्वतः" इति भगवतो गानम् ? अत्र "तत्त्वतः "इति पदं किमभिप्रायेण ? यदि भजनीयं सविशेषं स्वरूपं तत्त्वं स्यात् ॥

### भक्ति-ज्ञान-प्रवेशानां स्वरूपभेदः

"अत एव ज्ञात्वा मां विशति"इत्यपि सार्थकम् । प्रवेशश्चायं "ब्रह्मविदाप्नोति परम्" इत्यत्रेवाप्राप्तत्वभ्रमनिवृत्तिरेव, यस्यैवोपसंहारः शास्त्रान्ते—"ब्रह्मभूयाय कल्पते" इति । न चात्र भक्ति-ज्ञान-प्रवेशानामैक्यम् । भक्तिर्हि सविशेषविषया, ज्ञानं तु निर्विशेषसाक्षात्कारः, प्रवेशोऽज्ञाननिवृत्तिः = एकीभावः = भेदनिवृत्तिर्वेति तेषां स्वरूपभेदात् । तत्र "तत एवे"ति भक्त्यभिप्रायम्, "तदनन्तरमि"ति च ज्ञानानन्तरमिति यथाश्रुतान्वयोऽद्वैतसिद्धान्त एव स्वरसः, न तु श्रीभाष्यकारयोजनायाम् । अत्र भक्तिपदार्थ उभयसंमत एव, इति नात्र भक्तौ न भक्तिरद्वैतमते ॥

### भक्ति-ज्ञान-प्रवेशानां श्रीभाष्याभितार्थायोगः; भक्तियोगस्य ज्ञानसाधनस्य मुक्तिसाधनत्वासंभवश्च

यत्तु—श्रीभाष्यमते भक्ति-ज्ञान-प्रवेशपदार्थाः—भक्त्या = परभक्त्या, मामभिजानाति = परं साक्षात्करोति, ततो मां तत्त्वतो ज्ञात्वा = ततो मां परमभक्त्याऽऽराध्य, विशते तदनन्तरम् = अर्चिरादिना भगवत्पादारविन्दप्राप्तिरिति स्वरसं विवरणं श्रीभाष्य एवेति—भूषणम्, तत्र यदि भक्तिज्ञानाभिज्ञानानामैकार्थ्यस्वीकारः, तर्हि अभिजानातिपदार्थः कथं साक्षा-

त्कारः, तत्र यदि स साक्षात्कारः, तर्हि "ततो मां तत्त्वतो ज्ञात्वा" इति वाक्यादपि कथं न साक्षात्कारः? सर्वेषामैकार्थ्ये किमर्थं त्रीणि पदानि? पर-परमादिरूपेण भक्तौ विभागे किं प्रमाणम्? साक्षात्कारनिबन्धनं ज्ञानमपि पटुतमसंस्कारसचिवसाक्षात्कार एव हि भवितुं युज्यते ॥

अस्तु वाऽ'भिजानाती'ति-निदिध्यासपदार्थो निर्विशेषसाक्षात्कार उत्पन्नमात्रः, 'तद् ज्ञात्वा' इति न तज्जनितः साक्षात्कारातिशयः। ज्ञाधात्वर्थत्वादुभयोरपि साक्षात्काररूपतैव युक्ता, 'मां विशती'ति विशतिपदार्थोऽर्चिरादिना भगवत्पादारविन्दप्रवेश इति व्याख्याने कथं नाध्याहारक्लेशः? ज्ञानिनां विषय उत्क्रान्तिशास्त्राणि न प्रवर्तन्त इति सिद्धान्ते तु नाध्याहारलेशोऽपि। "मां विशती"ति मद्भावाभिप्राय एवेत्यनुपदमेवोक्तम्। अतो न गीताया भक्तियोगमात्रे पर्यवसानम्, अन्यथोक्तभक्त्यभिज्ञान-ज्ञानानां त्रयाणां पौनरुक्त्यं दुष्परिहरम् ॥

'ततः' इत्यस्य सन्निहितज्ञानपरत्वं परित्यज्य भक्तेः परामर्शोऽप्यस्वरसः। 'क्त्वा'प्रत्ययेनैव तदानन्तर्ये सिद्धेऽपि "तदनन्तरमि"ति निर्देशस्तु भक्ताविव नानुष्ठानापेक्षा ज्ञानस्याज्ञाननिवृत्तय इति बोधनार्थम्। व्यक्तं चैतत् जिज्ञासाधिकरणे "चोदनाप्रवृत्तिभेदाच्च" इत्याकरे। 'मां' पदार्थः त्वत्र शास्त्रदृष्ट्या स्वेच्छागृहीतशरीरविनिर्मुक्तनिर्विशेषस्वरूपाभिप्रायम् ॥

"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।"

इति परमभक्तिरेवाव्यभिचारिपदविशेषणात् प्रतीयते। तस्यास्तु ज्ञानसाधनत्वेनैव त्रयोदशाध्याये निर्देशः, अतो नात्र मोक्षसाधनत्वं भक्तेः। न च मोक्षोऽपि भगवत्पादारविन्दप्रवेशः श्रीभाष्यमते। परमात्माऽपृथक्सिद्धसत्यकामत्वापहतपाप्मत्वादिविशिष्टतया परमात्माऽपृथक्सिद्धशरीरतया प्रत्यगात्मभावेन स्वप्रकाशतयाऽवस्थानमेव हि मुक्तिः ॥

आस्तां नाम भूषणादृतेषु निबन्धेषु भक्तिस्वरूपभेदाः सहस्रशः। को वा निषेधतात् विभेदान्। ज्ञानसाधनाव्यभिचारभक्तिरपि तु भक्तिरेव। अतोऽद्वैतसिद्धान्त एवोक्तश्लोकस्वारस्यम् ॥

"ज्ञानी त्वात्मैव मे मतम्" इत्यादीनां श्रीभाष्यसिद्धान्तविरोधित्वम्,

अद्वैत एव स्वारस्यं च

एतेन—"ज्ञानी त्वात्मैव मे मतम्" इत्यपि—व्याख्यातम्। अत्र यथाश्रुतार्थोऽव्याहतः, त्रय्यन्तसिद्धान्तस्य श्रीभाष्याभिमतस्य विरोधी श्रीकृष्णसिद्धान्त इति तात्पर्यचन्द्रिका स्वयं वदति ॥

### "ज्ञानी त्वात्मैव" इति गीताया अद्वैत एव स्वारस्यम्

अत्र—

"मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ।"

इति श्लोकविवरणेनात्रत्यश्रीभाष्यविवरणस्य व्याहतिरपि विशदैव ॥

अत्र भूषणं वैष्णवानां परस्परकिङ्करतासम्प्रदाये परस्परसहस्र-प्रणामततीनाम्, भगवद्भक्तयोरपि तासां च स्वसंप्रदायसिद्धत्वमनेनोपपादयति । अस्तु नाम परस्पराराध्यत्वादिकथा—आत्मन एव परात्मनोऽप्यधिकतयाऽभिनयेन शिष्यार्जनोपायसम्प्रदायानुबन्धिनी । "ब्रह्मविदाप्नोति परमि"त्यादौ प्राप्यतयाऽभिमतं जगत्कारणत्वादिविशिष्टं ब्रह्मस्वरूपं न भूषणस्य, अन्यस्य वा किङ्करः, येन ज्ञानी जीवः परमात्मनोऽप्यात्मा स्यात् ॥

यत्तु—सर्वेषां जीवानां परमात्मत्वाद् 'ज्ञानी'ति विशेषणमनर्थकम्—इति, तत्रेदमेव पृच्छ्यते—यत् श्रीभाष्यमतेऽपि सर्वेषां जीवात्मनां परमात्मशरीरत्वात् को वा विशेषो ज्ञानिन इति ? यदि शुद्धाशुद्धभेदेन जीवानाम्, तर्ह्यद्वैतमतेऽपि समानम् । बहूनां परस्परम्, परमात्मना च सोपाधिकानामस्ति भेदः, उपाधिविरहे त्वनावृतसंविदात्मनाऽभेदः, तत्र परमात्माऽपि ज्ञानी = अनावृतसंविदात्मा स्वात्मेति "ज्ञानी त्वात्मैव मे मतमि"ति वदति, न तु स्वीयेन सविशेषरूपेण, इति नात्र "मे मतमि"ति विरुध्यते । तथाच तात्पर्यचन्द्रिका—"त्र्यन्तसिद्धान्तो भवतु वा, मा वा, कृष्णसिद्धान्तस्त्वयमेव" इति ॥

तत्र यथा सर्वानपि स्वशरीरतया पश्यन्नपि भगवान् 'ज्ञानी त्वात्मैवे'ति वदति, एवमेवात्राप्युपहितं स्वरूपमादायोपदेश्योपदेशकभावोऽपि शास्त्रदृष्ट्याऽभेदाभिप्रायेण, रूपभेदेन वा, इति भेदाभेदव्यवस्था नानुपपन्ना ॥

### अद्वैतमते नोपदेशानुपपत्तिदोषः

तत्रापहताविद्या इव जीवन्मुक्ता अपि प्रारब्धमात्रशेषा उपदेशकत्वमर्हन्तीति व्यक्तीभविष्यत्युत्तरत्र बाधितानुवृत्त्युपपत्तौ, उपदेशोपपत्त्यादौ च । तत्र जीवत्वेश्वरत्वविशिष्टरूपेण जीवेश्वरयोरपि किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिप्रयुक्तभेदस्याद्वैतमतेऽपि मतान्तर इव समानत्वाद् नोपदेशानुपपत्तिरद्वैतसिद्धान्ते ॥

तत्र सर्वशरीरकत्वमात्मनोऽनुसन्दधानो भगवान् स्वाविनाभूतमर्जुनं विनाभूतमिव मत्वा कथमुपदिशतीति प्रश्नस्तु प्रतिबन्दीमात्रम्, परन्तु

यद्यद्वैतमते दोषः, तर्हि श्रीभाष्यमतेऽपि। यदि शुद्धाशुद्धावस्थाभेदेन तत्र व्यवस्था, तर्ह्यत्रापीति 'यश्चोभयोरिति' न्यायापादनमभिप्रेत्यैव ॥

पूर्वोत्तरमीमांसयोर्विधेयाविधेयज्ञानविषयत्वादिना भेदोपसंहारः

यथोत्पन्नमात्राणाम्, नष्टानां च वेदान्तवाक्यानां सहस्रधा पर्यालोचनेऽपि शुद्धप्रत्यगात्मस्वरूपस्य, तस्य भगवदविनाभावस्य च भेदवासनाद्यनेकप्रतिबन्धकवशादज्ञानम्, एवमेवात्रापि। न च वेदान्तवाक्यश्रवणमात्रेण विना विचारम्, मनन-निदिध्यासनानि च वेदान्तार्थसाक्षात्कारः संभवति—यः कोऽपि वा वेदान्तार्थो भवतु। अत एव ब्रह्मजिज्ञासा शास्त्रम् ॥

तथा च जैमिनि-बादरायणयोर्विरुद्धसिद्धान्तत्वाद् जैमिनीयजिज्ञासाया ब्रह्मजिज्ञासया नैक्यम्, संकर्षेणैव सविशेषस्यापि जिज्ञासितत्वात् सविशेषब्रह्मजिज्ञासा, तत्प्रमाण-तत्समन्वयसूत्राणि निरर्थकानि, वेदापौरुषेयत्व-शूद्रानधिकारादिचर्चासु बहुषु च पौनरुक्त्यम्। सर्वमिदमधस्तात् तत्तदवसरे विवेचितम्। तत्र भूषणविमर्शा अपि सविस्तरं विमृष्टाः। सर्वथा तु विधेयज्ञानविषयिण्येव यदि जिज्ञासा, तर्हि ब्रह्ममीमांसा-धर्मजिज्ञासयोरपि विधेयक्रियाविशेषविषयत्वात्, वेद्यस्वरूपमात्रे केषांचन तत्त्वानां जिज्ञासाया आवश्यकत्वेऽपि विशिष्य समन्वयाधिकरणादिना तत्समर्थनं वितथमेव ॥

न चात्र भामतीमते, विवरणमते वा निदिध्यासनस्य मुक्तिसाधनता, किन्तु वेदान्तवाक्येनात्मसाक्षात्कारे जननीये तत्प्रतिबन्धनिरासविधया साक्षात्कारसहकारित्वमेव तस्य प्रस्थानभेदेन विधेयस्य, अविधेयस्य वा। तत्र भामतीमते न कस्यापि विधेयत्वम्, विवरणमते तु साक्षात्कारातिरिक्तस्यास्ति विधेयत्वम्; तथापि न तस्य सविशेषोपासनरूपत्वम् ॥

अत एव चोदनाप्रवृत्तिभेदोऽत्र

श्रोतव्यादिवाक्याभ्यसनमात्रव्यापृतानाम्, तत्त्वजिज्ञासूनां च तत्त्वज्ञानोपायतया वेदान्तप्रमाणोपन्यासः, इति, न प्रमाणप्रदर्शनमात्रेण विधिव्यवस्थाऽपि संभवति। तत्रानुष्ठेये विषये विधिरेव प्रमाणम्, ज्ञेये त्वविधिपरं वाक्यं प्रमाणम्। अतश्चोदनाप्रवृत्तिभेदं सिद्धवत्कृत्य "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रम्, चोदनानपेक्षप्रमाणमात्रमभिप्रेत्य प्रमेयजिज्ञासैवात्र, न विधेयजिज्ञासेति कृत्वा शास्त्रयोनित्वसूत्रमिति विवेकः ॥

न हि वाक्यजन्यज्ञानमात्रे विधिविधेयत्वव्यपदेशः; अन्यथा धर्मचोदनास्वपि विनैव चोदनां मीमांसया ज्ञानमात्रेण निर्वाहेऽर्थवादातिरेकेण तत्तद्यागस्वरूपाणामेव सिद्धवन्निर्देशमात्रेणैवेष्टसिद्ध्या वेदान्तवाक्यापेक्षया विलक्षणं किं वा प्रामाण्यम्? इति धर्ममीमांसा विधिवाक्यप्रधाना नोपपद्यते ॥

ब्रह्ममीमांसातुरीयपादादावावृत्त्युदेशादिकं सर्वमद्वैतमत एव स्वरसम्

तुरीयपाद आवृत्त्युपदेशो हि फलकल्पस्य, फलरूपस्य वा निर्विशेषसाक्षात्काररूपजिज्ञासाशब्दघटकावगतिपदार्थस्य, शाब्दविधया साधनत्वेऽपि वस्तुगत्याऽज्ञाननिवृत्तिमात्रेणोपक्षयात्, ब्रह्मप्राप्तौ न साक्षात्साधनत्वमित्यभिप्रेत्य साक्षात्कारस्याप्यावृत्तस्यैव फलत्वम्। तत्तु सिद्धावस्थायाम्, ततः पूर्वं तु साधनताऽवस्थैवेति ज्ञापनार्थमेव; अन्यथा तृतीयाध्याय एव तच्चिन्ताऽपि स्यात्, न तु साधनत्वमेव साक्षात्कारस्य, विधेयत्वं चेत्यभिप्रेत्य। "विकल्पोऽविशिष्टफलत्वादि"त्येकप्रयोजनसविशेषोपासनाभिप्राय एव, यत्र भेदोऽप्युपासनानामिति संप्रतिपन्नम् ॥

न चायं नियमो निर्विशेषसाक्षात्कारमप्यभिप्रेत्य; तत्र विद्याभेदाभावात्, सविशेष-निर्विशेषज्ञानयोरविशिष्टफलत्वाभावाच्च। स हि न्यायः पुरुषतन्त्रविधेयज्ञानमभिप्रेत्य, न तु श्रोतव्यादिवाक्यविषयमविधेयम्, प्रमाणतन्त्रं वा ज्ञानमभिप्रेत्य। न च मुक्तिफलं सगुणोपासनफलेष्विव, धर्मफले स्वर्गादाविव। तत्र विलक्षणेषु न समुच्चयः, किन्तु विकल्पः। अत एव सूत्रम्—"मुक्तिफलानियमः" इति। श्रीभाष्यमते त्विदं सूत्रं वितथम्; तत्र विद्योत्पत्तिकाल एव फलसंभावनाया अभावात्। ईश्वरप्रसादापेक्षा हि तत्र मुक्तिः। अत एव—"अप्रायणात्" इत्यादिसूत्राणि तन्मते सार्थकानि ॥

॥ इति ज्ञानाविधेयत्वोपपत्तिः ॥

———

# बाधितानुवृत्त्युपपत्तिः

जीवन्मुक्त्यङ्गीकारपक्ष एव बाधितानुवृत्तिर्मतद्वयेऽपि

बाधितानुवृत्तिर्जीवन्मुक्त्यङ्गीकारपक्षे, न तु तदनङ्गीकारपक्षे, इति शतदूषण्या बाधितानुवृत्तिभङ्गवादो जीवन्मुक्त्यङ्गीकारकल्पमादायैव, न तदनङ्गीकारकल्पमादायेति प्रस्थानभेदमुपपादयितुमेवाऽऽदौ तदनङ्गीकारमतेनोपदेशानुपपत्तिशङ्का शतदूषण्या अपि, इति सूचयितुं मतान्तरस्योपक्षेपो वस्तुस्थितिप्रदर्शनार्थमेव शतभूषण्याः; तथापि सिद्धान्तलेशसंग्रहीतानां सर्वेषां कल्पानामद्वैतसम्मतत्वेन जीवन्मुक्त्यङ्गीकारपक्षोऽपि समर्थनीयः; अन्यथा शतदूषण्याः किमर्थं वा बाधितानुवृत्तिभङ्गवादस्योपस्थापनम् ? तथाच जीवन्मुक्त्यङ्गीकारकल्पस्यापि सौष्ठवमुपपादयितुं बाधितानुवृत्त्युपपत्तिचर्चा ॥

तत्र विशिष्टाद्वैतमतेऽपि विना बाधितानुवृत्तिमुपदेष्टृत्वादिकं दुरुपपादम्। तत्रापि ज्ञानेन, निदिध्यासनेन वा दर्शनसमानाकारेण कर्मरूपाविद्यानिवृत्तावेवात्मतत्त्वोपदेष्टृत्वं वक्तव्यम्। तच्च नित्यशुद्धप्रत्यगात्मनो मुक्तस्य भगवच्छरीरमात्रतयाऽवस्थितस्य स्वातन्त्र्याभावात्, स्वीयभौतिककर-चरणादिषु स्वशरीरत्वभावनाया अभावात् कथमुपदेष्टृत्वमिति प्रश्नः प्रतिवन्दीरूपोऽपि समाधेय एव। न च तत्रापि मते सर्वस्य सत्त्वेऽप्युपदेष्टृत्वं स्वशरीरेण भवति; स्वशरीरे आत्मबुद्ध्यभावाद् विशुद्धात्मतायाम्, परमात्मनस्तु कथञ्चनोपदेष्टृत्वं सशरीरस्य भवतु नाम; व्यासादीनां तु कथमुपदेष्टृत्वम् ? अतो यावत् शुद्धप्रत्यगात्मनः स्वशरीरेष्वात्मत्वाभिमानः, तावत्तेषामशुद्धात्मस्वरूपज्ञानमेव वर्तते, इति न ते तत्त्वज्ञानिनः, इति नोपदेष्टृत्वम्, शुद्धप्रत्यगात्मज्ञाने तु सत्यपि शरीरे तत्रात्मत्वबुद्ध्यभावाच्छरीरस्य परदृष्ट्या सत्त्वेऽपि स्वदृष्ट्या तस्य तदशरीरत्वात् सत्तामात्रेणोपदेष्टृत्वमिति वक्तव्यम्। तदिदमद्वैतमतेऽपि समानम्; जीवन्मुक्तदृष्ट्या तस्य तदशरीरकत्वात्। तदुक्तम्—

"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्॥"

इति। इयमेव हि बाधितानुवृत्तिर्नाम॥

### जीवन्मुक्तानां प्रारब्धशेषेण शरीरेणानुवर्तमानेनोपदेष्टृत्वोपपत्तिः, सा च शाब्दापरोक्षवादे, तत्परोक्षवादे च समाना

तत्र तत्त्वज्ञानेन मिथ्यात्वनिर्णयेऽपि शरीरस्य स्वरूपतस्तस्य सत्त्वात्तदुपदेशोपपत्तिः। अन्नपूर्णोपनिषद्धि—

"आत्मज्ञस्यैष विषय आत्मज्ञोऽह्यात्ममात्रदृक् ॥

विषयेषु शरीरादिष्वात्माभिमानं विना व्यवहरन् जीवन्मुक्तः" इति विस्तरेण जीवन्मुक्तं लक्षयन्ती प्रारब्धेतरनिवृत्तावपि प्रारब्धानुवृत्त्यादिकं सर्वं व्यवहारमुपपादयति, इति मिथ्यात्वेन निर्णीतानामपि दग्धपटन्यायेनानुवृत्तिमात्रं जीवन्मुक्तिं मन्यन्ते, इति तेषां समाधितो व्युत्थितानामुपदेष्टृत्वमुपपद्यते ॥

तत्र जीवन्मुक्त्यनङ्गीकारपक्षे परोक्षज्ञानमात्रेणाप्युपदेष्टृत्वमविरुद्धम्, सत्यप्यपरोक्षज्ञाने तत्त्वज्ञानेन सर्वानुवृत्त्योपदेष्टृत्वम्, सर्वव्यवहारानुयायित्वं चेति तु निष्कर्षः ॥

तत्रैकमेव प्रस्थानं समर्थनीयमिति तु न राजाज्ञा; प्रस्थानभेदमात्रत्वेऽपि लक्ष्यैक्येन लक्ष्यप्राप्त्यविरोधित्वादुभयस्य। सन्ति च प्रस्थानभेदा बहुशः श्रीभाष्यमतेऽपि; अन्यथा श्रीभाष्यानुयायिनाप्येकमेव प्रस्थानमनुसर्तव्यं स्यात्। तत्र शाब्दापरोक्षवादानङ्गीकारे शब्देनापि प्रमाणेनैव निर्विचिकित्सपरोक्षज्ञानं प्रमाणतन्त्रमेव स्वीक्रियते, न तु पुरुषतन्त्रमुपासनात्मकं श्रावणं ज्ञानम्। तदेव परोक्षज्ञानं मननसहकारि पुनःपुनराम्रेडितं संस्कारपाटवेन प्रत्यक्षरूपतां वहदपुरुषतन्त्रमज्ञानं निवर्तयतीति स्वीकारात् फलतो न वैषम्यं शाब्दापरोक्ष-तत्परोक्षवादयोः, इति विशिष्टाद्वैतिनां दर्शनादद्वैतिनां दर्शनं विलक्षणम् ॥

### ध्यानस्य नाविद्यानिवर्तकत्वम्, किन्तु दर्शनस्यैव; तस्यैवाभानापादकाज्ञाननिवर्तकत्वाद् जीवन्मुक्तिरविरुद्धा

न चात्र दर्शनसमानाकारता दर्शनस्य, किन्तु प्रधानस्य दर्शनसाधनस्य निदिध्यासनस्यैव। फलं तु दर्शनमेव, न निर्विचिकित्सं परोक्षं ज्ञानं दर्शनसमानाकारा स्मृतिः। न च ध्यानं साक्षादज्ञाननिवर्तकं दर्शनमिव। अदृष्टद्वारा निवर्तकत्वे तु कर्मणाऽपि भगवत्प्रसादद्वाराऽविद्या-

निवृत्तिसंभवात् किं ध्यानेन ? यदि शास्त्रप्रामाण्यात् , तर्हि ज्ञानस्याविद्यानिवृत्तावदृष्टस्य द्वारतयाऽनपेक्षणात् श्रुतावपि यथादृष्टमेव विना कृत्यान्तरम् , अदृष्टान्तरं वा निवर्तकत्वं स्वीकृत्यैव श्रुतिः समर्थ्यताम् ॥

अपरोक्षभ्रमो ह्यधिष्ठानतत्त्वाभानापादकाज्ञानकार्यं 'भाति' व्यवहारयोग्यापरोक्षज्ञानेनैव निवृत्तिमर्हति, न त्वसत्त्वापादकाज्ञाननिवृत्तिप्रयोजकास्तीतिज्ञानमात्रेण; असत्त्वापादकाज्ञानाविषयत्वमात्रप्रयोजकविशिष्टचैतन्यस्यैव परोक्षज्ञानत्वात् , अभानापादकासत्त्वापादकाज्ञानद्वयाविषयत्वप्रयोजकविशिष्टचैतन्यस्यैवापरोक्षज्ञानत्वाच्च, इति न परोक्षज्ञानेनापरोक्षभ्रमनिवृत्तिः; अन्यथा प्रतीतिकालमात्रे सत्त्वप्रतीतावपि तेनाऽभानापादकाज्ञानानिवृत्त्या न बाध्यत्वम् , मिथ्यात्वं वा सिद्ध्येत् ॥

यथा च घटादिज्ञानं नाधिष्ठानतत्त्वविषयकम् , न वा तेन घटोपादानाज्ञानस्य, घटस्य च बाधः, तथा पूर्वमुक्तम् ॥

एतेन—अविद्याख्यदोषस्य मिथ्यात्वात् कथं तदनुवृत्तिरिति—परास्तम्; विद्याया अविद्यानिवर्तकत्वमविद्या-तत्कार्यप्रारब्धेतरनिवर्तकत्वेनैव; श्रुतिप्रामाण्यात् , इति प्रारब्धशेषसत्तायां तस्यानुवृत्तिर्न दोषाय ॥

प्रारब्धशेषाणां न सत्त्वेन भानम् , अतो न बन्धकत्वम् ;
ब्रह्मणोऽनावृतत्वात्

न चैतावता तत्त्वदर्शिनां भ्रान्तत्वम् ; प्रारब्धशेषाणां स्थूलरूपेणानुवर्तमानानामपि कथञ्चन नाशे कारणात्मनाऽवस्थानायोगात् , प्रातिभासिकवत् केवलं भानमात्रम् , न तु सत्तादात्म्यम्; अधिष्ठानस्य ब्रह्मणोऽखण्डात्मना ज्ञातत्वेन तद्विवर्तताया अभावात् ॥

जीवन्मुक्तव्यहारस्वरूपविवेकः, शाब्दसाक्षात्कारेणाज्ञान-
निवृत्त्या बाधितानुवृत्तिश्च

अत एव विक्षेपशक्तिमात्रमविद्याया जीवन्मुक्तावनुवर्तते । अत एव तेषु दग्धपटन्यायः, इति प्रारब्धशेषं पश्यन्नपि जीवन्मुक्तो न पश्यति । तेन च तेष्वासक्त्या न व्यवहरति । परदृष्ट्या तु तस्य व्यवहारप्रतीतिमात्रम् , अतस्तत्त्वदर्शी न भ्रान्तः; न वा प्रमाता, न वा कर्ताऽपि । स हि क्रियमाणं सर्वं कर्म शारीरम् , वाचिकम् , मानसं वा मन्यते, न स्वीयम् । अतो विना ममताभिमानं क्रियमाणं सर्वमन्यकृतमिव मन्यते, तेन च न तत्फलभाग् भवति, यमेवाभिप्रेत्य "कर्मण्यकर्म यः पश्येदि"ति गीता ॥

यत्राप्तोपदेशाद् रज्जुसर्पादिभ्रमनिवृत्तिः, तत्र रज्वादीनां चक्षुषः सन्निकर्षे 'दशमस्त्वमसी'त्यादाविव शाब्दोऽपरोक्ष एव, अथवा श्रवण-मनन-निदिध्यासनसंस्कारपाटवजन्यो मानसः साक्षात्कारः श्रवण मननादिविधिस्थल इवेति व्यवस्था, इति तत्रापि श्रवणकाल एवाज्ञाननिवृत्तिः, इति बाधितानामनुवृत्तावपि तेषां निवृत्तौ न कारणात्मना, न वा स्वात्मनाऽवस्थानम् , इति ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वरूपज्ञाननिवर्त्यत्वं ब्रह्मानन्दपरिष्कृतरीत्या प्रारब्धानामपि समानम् , इति नाद्वैतहानिः ॥

बाधितानुवृत्त्यनुपपत्तिशङ्का-तत्परिहारौ, बाधितानुवृत्तावपि ब्रह्मेतरसर्वमिथ्यात्वोपपत्त्याऽद्वैताहानिश्च

एतेन—अविद्याया अनिवृत्तिर्वा, अंशतो निवृत्तिर्वा, तन्निवृत्तावपि वासनानुवृत्तिर्वा। आद्ये न बाधितानुवृत्तिः। न द्वितीयः; तत्रैकांशपरिशेषः कथम्? तस्यापि मिथ्यात्वेन निवर्तनीयत्वात् ; न तृतीयः; वासनाया अपि तत्कार्यत्वेन मिथ्यात्वाविशेषात् , तत्त्वज्ञानस्याविद्यामात्रनिवर्तकत्वे संचितकर्मणां तदनिवर्त्यत्वप्रसङ्गः, श्रुति-सूत्रादिषु प्रारब्धपरिशेषवचनं तु तस्य यदि ज्ञानानिवर्त्यत्वेन, तर्हि तन्मिथ्यात्वासिद्धिः। न च तत्त्वज्ञानं मिथ्यानिवृत्तये कारणान्तरमपेक्षते; अन्यथा तु तत्त्वज्ञानमात्रनिवर्त्यत्वेन मिथ्यात्वहानिरित्यादि भूषणम्—परास्तम् ;

ज्ञाननिवर्त्यत्वं ज्ञानजन्यनिवृत्तिप्रतियोगिस्व-स्वोपादान-तत्संस्कारान्यतमकत्वम्। तच्च प्रारब्धेतरकार्याणाम् , अज्ञान-तत्प्रयुक्तानादिपदार्थानाम् , विक्षेपशक्तिमात्रेणांशमात्रेण जीवन्मुक्तावनुवर्तमानानां प्रारब्धशेषाणां च यथायथं समन्वितम् ॥

तत्र जीवन्मुक्तानां नाविद्याऽनुवर्तते, किन्तु तदंशमात्रम्। स च विक्षेपशक्तिर्वा, अवस्थाऽज्ञानविशेषो वा, तत्प्रारब्धमात्रोपादानमज्ञानलेशो वा न त्वावरणशक्तिकः, येन ब्रह्मणोऽनावृतस्य विवर्तोपादानता निवर्तते। अज्ञानविषयत्वप्रयुक्तं हि ब्रह्मण उपादानत्वम् ॥

तत्राज्ञानसंस्कारः, तद्वासना वाऽप्यज्ञानलेशपदार्थ एव। तत्राविद्यांशस्य तत्त्वसाक्षात्कारेण निवृत्तिः; प्रारब्धेतरस्यैव तत्त्वज्ञाननाश्यत्वात्

तत्तदवच्छिन्नचैतन्याश्रितम्, तत्तदवच्छिन्नचैतन्यविषयं वाऽज्ञानं मूलाविद्याविशेषरूपं हि घटादिज्ञानेन, यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते तत्तद्धटावच्छिन्नचैतन्यविषयं घटादिज्ञानेन निवर्तते, इति शास्त्रप्रामाण्याद् मूलाविद्याया निवृत्तावप्यज्ञानलेशस्य यावच्छरीरपातमभ्यस्यमानसाक्षात्कारपर्यन्तमनुवृत्तिः। अनन्तरं तु नाशः, बाधो वेति न किंचिदनुपपन्नम्, इति संचितकर्मणाम्, प्रारब्धशेषस्य, अविद्याप्रयुक्तानां च मिथ्यात्वानपायः॥

तत्र प्रारब्धशेषस्य, अखण्डाकारवृत्तेश्चाविद्यानिवृत्तिनाशानन्तरकालिकत्वात्, कारणात्मनाऽवस्थानाभावाच्चाविद्याया इव स्वरूपतो नाशेनैव मिथ्यात्वम्। ब्रह्मव्यतिरिक्तस्य सर्वस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वं न व्याहतम्॥

भगवतो वासुदेवस्य त्वीश्वरत्वाद् न कदापि किञ्चिज्ज्ञत्वम्,
इति न सर्वज्ञत्वहानिः

भगवतो वासुदेवस्याखण्डाकारवृत्त्यैव स्वोपाधिमात्रस्यानाद्यविद्यायाः निवृत्तिरप्रत्यूहा, येन तदैक्यम्, अनेकजीववादे सर्वमुक्तौ तस्यापि संविन्मात्रता च न विरुध्यते। तस्येश्वरत्वान्नाऽसत्त्वापादकम्, अभानापादकं वाऽज्ञानम्, इति न सर्वज्ञत्वविरोधः॥

तत्तु सर्वज्ञत्वं तस्य यावदीश्वरत्वं सत्त्वान्नित्यमेव। अनादित्वाच्च तस्य सर्वज्ञत्वमप्यनाद्येव। तच्च सर्वज्ञत्वं जगत्कर्तृत्वोपयोगि। उपदेष्टृत्वं तु तस्यापि श्रवणादिकारणकलापाधीनापरोक्षज्ञानिन एव। न हि परोक्षज्ञानिनामेवोपदेष्टृत्वम्, नापरोक्षज्ञानिनामिति नियमः॥

निदिध्यासनप्राधान्यपक्षेऽपि साक्षात्कारेणाविद्यानिवृत्तिः

तत्र निधिध्यासनाङ्गित्वपक्षेऽपि श्रवणेन परोक्षज्ञानेऽपि तत्सहकृतनिदिध्यासनवशादपरोक्षज्ञानं केषांचन न विरुद्धम्, परोक्षज्ञानेनाप्युपदेशोपपत्तिरविरुद्धेत्येव तात्पर्यम्॥

"तस्याभिध्यानाद्योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुत्या श्रवणाधीनाविच्छिन्नसाक्षात्कारेणान्तेऽविद्यानिवृत्तिरपि युज्यते; प्रतिबन्धकाभावसहकृतसाक्षात्कारस्यैवाज्ञाननिवर्तकत्वात्, केषाञ्चन प्रारब्धशेषशून्यानां साक्षात्कारेणापि निवृत्त्यविरोधाच्च॥

### श्रवणाङ्गित्वपक्षे केषांचन श्रवणमात्रेणापि साक्षात्कारो न विरुध्यते

तत्र श्रवणप्राधान्यपक्षे भेदवासनानिरासार्थमुत्तेजकमननादिसंस्कारस्याप्यपेक्षा तु नायुक्ता; भेदवासनाया अप्यभावे तु सकृत् श्रवणमात्रेण साक्षात्कारोऽपि निदिध्यासविनाऽपि न मात्रेण संभवति। न च साक्षात्कारं विनाऽविद्यानिवृत्तिः, किन्तु सति साक्षात्कारे प्रारब्धेतराविद्याप्रयुक्तानाम्, अविद्यायाश्च निवृत्तिः। प्रारब्धशेषस्य त्वन्तेऽभ्यस्यमानसाक्षात्काराद् निवृत्तिरिति निष्कर्षः॥

### "भोगेन त्वितरे क्षपयित्वे"त्यस्याप्यनुवर्तमानसाक्षात्कारेण प्रारब्धशेषनिवृत्तिपरत्वम्, अतो न ज्ञानानिवर्त्यत्वम्

"भोगेन त्वितरे क्षपयित्वा" इति सूत्रमपि भोगान्ते सर्वनिवृत्तिरिति निरूपणपरमज्ञानप्रयुक्तयत्किंचिदंशबाधप्रतिबन्धकनिवृत्तौ तावत्पर्यन्तमभ्यस्यमानाविच्छिन्नसाक्षात्कारनिवर्त्यत्वं प्रारब्धकर्मणामित्येवम्परमेव। अत एव—"आवृत्तिरसकृदुपदेशात्" "आप्रायणात् तत्रापि हि दृष्टम्" इति सूत्रेऽविद्यासंस्कारस्य स्वत एव निवृत्तिरित्यादिव्यपदेशोऽपि प्रतिबन्धनिवृत्तौ स्वत एव प्रयत्नापेक्षज्ञानादिसाधनान्तरव्यावृत्त्यभिप्रायः॥

### अनेकजीववाद ईश्वरभावो मुक्तिः

तत्र "तस्याभिध्यानाद् योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यत्र निवृत्तिपदार्थो नाश एव; "तस्याभिध्यानाद्योजनात्तत्त्वभावादि"ति हेत्वन्वयात्, न तु नर्तक्या इव पुरुषस्यात्मानं प्रदर्श्य कार्यत उपरममात्रम्। न हि नर्तक्या अन्याभिध्यानात्तत उपरमः, किन्तु तद्विपरीतं तदभिध्यानतस्तत्तदभिमुखं प्रवृत्तिरेव, न वा तस्याः पुरुषस्यात्मानं प्रदर्श्योपरमानन्तरं पुरुषस्य निर्वेद इवात्रात्मनस्ततस्तस्या निवृत्त्या निर्वेदः। अत एव श्वेताश्वतरे तदनन्तरमन्त्रे निवृत्तमायस्य विश्वैश्वर्यकीर्तनं प्रतिपाद्यते। विश्वैश्वर्यं च निवृत्तमायस्येश्वरभावः; अनेकजीववादे तस्यैव मुक्तात्मस्वरूपत्वात्। न चेश्वराश्रितमायाश्रयत्वात्तत्सम्बन्धो जीवस्य; श्रीभाष्यमते जीवे तदाश्रयत्वतन्निवृत्त्योरुभयोरप्यभावात्। तत्र हि माया नाम प्रकृतिः। सा च भगवतः शरीरम्, न च सा ततो निवर्तते; नित्याचिच्छरीरत्वात् परमात्मनः।

तत एव न मायायाः जीवात्मानं प्रति किंचित्प्रदर्श्योपरमोऽपि; उभयोरपि शरीरत्वेनैकस्यान्यतरं प्रति स्वरूपप्रदर्शनस्यासंभवात् ॥

न चैतावता निर्विशेषवादविरोधः; मायोपहितेश्वरभावस्यैव मुक्तात्मस्वरूपत्वेनोपहितस्वरूपमात्रस्य निर्विशेषत्वाविघातात्, अद्वैतमते तु जीवस्येश्वरप्रतिबिम्बत्वात्, उपाधेश्च मायायाः प्रतिबिम्ब एव स्वदोषाधायकत्वात् तत्त्वज्ञानतो मायोपाधिकदोषनिवृत्त्यौपाधिकभेदप्रतीतेरपि निवृत्त्या बिम्बस्वरूपेणैवावस्थानमुपपद्यते ॥

जीवन्मुक्तीयप्रारब्धशेषसाधारणं ज्ञाननिवर्त्यत्वमिथ्यात्वम्,
तेन च न तेषां स्वत एव नाशाद् क्षणिकत्वापत्तिः

एतेन—ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञान-तत्संस्काराद्यन्यतमत्वरूपं मिथ्यात्वमिति—व्याख्यातम्। यद्यपि ज्ञानप्रयुक्तनाशप्रतियोगित्वं मिथ्यात्वमित्येवालम्; तथापि जीवन्मुक्ताज्ञानलेशस्यापि स्वतो न निवृत्तिः, किन्तु यावत्तद्भोगसमाप्त्यनुवर्तमानेन ज्ञानेनैव नाश इति ब्रह्मसिद्धिसिद्धान्तं सूचयितुं तथोक्तिरिति शतभूषण्यां व्यक्तम्। तेन च संस्कारस्य स्वत एव निवृत्तेर्न ज्ञाननिवर्त्यत्वमिति शतदूषण्याक्षेपपरिहारोऽद्वैतसिद्धान्तसंमतोऽयमिति सूचनमात्रमेव विवक्षितम्। द्वितीये लक्षणे ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञानत्वतत्प्रयुक्तान्यतरत्वमित्येव विवक्षितम्। तत्र वासनानाश इति यथाश्रुतार्थः। स्वत एव वासनाया नाशोऽपि प्रारब्धत्वात्तस्या भोगान्त एव संभवतीति तावत्पर्यन्तमवस्थानस्यावश्यकतया न क्षणिकत्वापत्तिः ॥

सदसद्वैलक्षण्यमिथ्यात्व उभयवैलक्षण्यप्रयोजनं सदसत्ख्याति-
द्वयनिरासः

एतेन—सदसद्विलक्षणत्वं मिथ्यात्वमित्यपि—व्याख्यातम्। तत्र सद्विलक्षणत्वांशेन बाध्यत्वं विवक्ष्यते; तथाप्यसदपि बाध्यमेवेत्यसत्ख्यातिनिरासार्थमसद्वैलक्षण्यनिवेशः। असद्वैलक्षण्यमात्रोक्तौ सत्ख्यातिवादेन ब्रह्मवत् सद्रूपत्वमाशङ्क्येत, अतः ख्यातिद्वयनिरासेनानिर्वचनीयख्यातिसमर्थनमभिप्रेत्योभयवैलक्षण्यनिवेशः। तत एव ज्ञाननिवर्त्यत्वं पूर्वोक्तमपि फलति ॥

प्रारब्धेतरस्यैव ज्ञाननिवर्त्यत्वात् जीवन्मुक्तिः

न ह्यनिर्वचनीयं सर्वं ज्ञाने सति तदैव निवर्तनमर्हतीति नियमः। ज्ञानं जायमानमप्रतिबद्धमेवाज्ञाननिवर्तकम्। तत्र च प्रारब्धावशेषस्य प्रमाणतः

प्रतिबन्धकत्वावगमात् तावन्मात्रनिवर्तकत्वं तद्भोगवासानसहकारेणैवभवितुमर्हतीति युक्तमाश्रयितुम् ॥

### जीवन्मुक्तानां प्रारब्धशेषो न कार्यकारी

तत्राविद्यालेशत्वम् , तत्संस्कारत्वं वा मूलाविद्याया इव प्रारब्धशेषाणां स्वरूपेण नाशेऽपि कारणभावापत्त्या शुक्तिरजताज्ञानवद् रूपान्तरानापत्तिमभिप्रेत्य, इति बद्धानां शुक्तिरूप्यमिव जीवन्मुक्तानां व्यावहारिकमपि न स्वतन्त्रकार्यान्तरोपयोगि । इदमेवाभिप्रेत्य दग्धपटन्यायः । दग्धपटानामिव दर्शनमात्रं व्यावहारिकाणामपि, इति न तद्भोगेच्छाकार्यकारी प्रारब्धभोगशेषः ॥

### जीवन्मुक्तानां वासनामात्रम् , अविद्यालेशो वा । तेन न ब्रह्मोपादानम् , इति न सदात्मना प्रतीत्यापादकम्

तत्राविद्यालेशोऽयं भामतीमते वासनापदव्यपदेश्यः संस्कारः, विवरणमते तु शक्त्यंशमात्रम् । तस्या अविद्यालेशत्वं च प्रतिबद्धावरणशक्तिः, अविशदत्वं वा संसारिणामिव ब्रह्मणो विवर्तमानस्वभावानापादकत्वम् । अतो जीवन्मुक्तानां स्वरूपेण बाधयोग्यानां प्रारब्धानां नामरूपात्मनैव प्रतीतिः, न तु सदात्मना ॥

### बद्धव्यावृत्तजीवन्मुक्तस्वरूपनिष्कर्षः, प्रारब्धशेषमिथ्यात्वोपपादनं च

जीवन्मुक्तानां दृष्ट्या तु छायाचित्राणीव नाम-रूपात्मनैव सर्वेषां प्रतीतिः, न त्वस्ति-भाति-प्रियात्मना । अतो नाभिनिवेशः, न वा जीवन्मुक्तानां प्रेरणा भोगादौ । अतीतस्याननुसन्धानम् , भविष्यदविचारणम् , औदासीन्यं वर्तमान इति हि लक्षणं जीवन्मुक्तानाम् । न चात्र ब्रह्मणोंऽशभेदेनावरणानावरणे; अनावृतसंविद्रूपतया प्रकाशमान एव तस्मिन् प्राक्तनतदीयविवर्तमात्रं केवलं नाम-रूपाऽऽत्मनाऽनुवर्तते यावद्भोगसमाप्तीति निष्कर्षः ॥

एतेन—विवरणपक्षोऽपि—व्याख्यातः; मायापरिणामः प्राचीनः केवलं नाम-रूपात्मना प्रतीयते; अनावृतत्वात्तु ब्रह्मणो न सदाद्यात्मना प्रतीतिरिति । तदिदं सिद्धम्—प्रपञ्चनिवर्तकं तत्त्वज्ञानमावरणशक्तिमात्रवदज्ञान-

निवर्तकं विवरणमते, भामतीमते प्रतिबद्धावरणशक्तिमदज्ञानोपहितत्वं ब्रह्मणो जीवन्मुक्तिदशायाम्। तत्र विवरणमतेऽभ्यस्यमानेन यावद्देहपातमनुवर्तमानेन ज्ञानेन विक्षेपशक्तेरपि नाशाद् मिथ्यात्वम्। एवमेव भामतीमतेऽपि, इति न प्रारब्धशेषाणां मिथ्यात्वविरोधः॥

### अविद्योपधानेऽपि भगवतो न जीवस्येवाऽऽविद्यकदोषभाक्त्वम्

भगवतस्तु तत्तत्सिद्धान्तानुसारेणाविद्योपहितस्योपाधेः प्रतिबिम्बपक्षपातित्वात्, स्वविशिष्ट एव तस्यावरणादिदोषाधायकत्वाच्च यावदुपधि सद्वितीयस्यैवावस्थानात् न "तदैक्षते"त्यादिसंकल्पविरोधः॥

### बाधितत्वानुवृत्त्योरविरोधो जीवन्मुक्तौ

एतेन—बाधितानुवृत्तिपदार्थोऽपि—व्याख्यातः। स हि संस्कारात्मना पुष्पे नष्टेऽपि पुष्पवासनाया इव वासनात्मनाऽनुवृत्तिरिति ब्रह्मसिद्धिः। इष्टसिद्धिस्तु—आवरण-विक्षेपशक्तिमत्या अविद्याया आवरणशक्तिमात्रनिवृत्तावपि विक्षेपशक्तिमात्रस्य, तन्निबन्धनदेहादिप्रतिभासस्य चाऽनुवृत्तिरिति। न चात्र बाधितस्य सर्वात्मनाऽनुवृत्तिः, किन्त्वंशविशेषेण, इति न बाधितत्वानुवर्तमानत्वयोर्विरोधः॥

तत्र बाधितत्वं यदि सदसद्विलक्षणत्वम्, तर्हि जीवन्मुक्तानां सदात्मना घटादीनामभानात्, ज्ञाननिवर्त्यत्वेन बाधितत्वेन ज्ञातानामपि सदसद्विलक्षणत्वरूपेण स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगितया भानाद्वा बाधितत्वम्, अनुवर्तमानं च न व्याहतम्। न हि स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वव्यापकं ज्ञाननिवर्त्यत्वम्। तथा च ज्ञाननिवर्त्यत्वेन निश्चयाभावदशायामपि श्रुतिमहिम्ना समानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वग्रहे तथा गृहीतानां स्वरूपेणावस्थानं न विरुध्यते; यथा पञ्चमप्रकाराविद्यानिवृत्तौ, या न सदसद्विलक्षणा, न ज्ञाननिवर्त्या, न वा "नेह नानास्ति किंचनेति" श्रुतिसिद्धं बाधितत्त्वं वा, मिथ्यात्वं वा न तस्या वर्तते। व्यक्तं चैतत् न्यायरत्नदीपावल्यादौ। तथा च बाधितत्वं वस्तुतः स्वाधिष्ठानतादात्म्येन नास्तीति गृहीतत्वम्, मिथ्यात्वेनानिश्चयादनुवृत्तिश्चेति नानिष्टतरम्, इति विना सत्तादात्म्यं नाम-रूपाद्यात्मनाऽनुवृत्तिः, सदात्मना बाधश्चेति निष्कर्षेऽपि न कोऽपि दोषः॥

जीवन्मुक्तिस्वरूपोपसंहारः

बाधितसजातीयानुवृत्तिरित्यादिविकल्पा अनङ्गीकारपराहताः। जीवन्मुक्तो हि स्वेन कदाऽप्यपरिचितमचिन्तितचरम्, अन्यद्वा सर्वं केवलं नामा-रूपात्मना पश्यति, पश्यन्नपि चक्षुः पश्यति, नाहं पश्यामीतिभावेन व्यवहरति। निष्कर्षस्तु केवलनाम-रूपमात्रदर्शनम्, न तु सर्वस्य सदाद्याऽऽत्मना दर्शनं जीवन्मुक्तत्वम्, इति न जीवन्मुक्त्यसिद्धिरिति सर्वं सुस्थम्॥

॥ इति बाधितानुवृत्त्युपपत्तिः॥



## विविदिषासाधनत्वोपपत्तिः

### विविदिषापदार्थो ज्ञानप्रतिबन्धकपापनिवृत्तिः

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"इत्यत्र कर्मणां विविदिषोपकारकत्वं विविदिषापदस्य ज्ञानप्रतिबन्धकपापनिवृत्तिपरत्वेन; "औषधेन बुभुक्षती"त्यादाविव सन्नर्थस्येष्यमाणप्रतिबन्धनिवृत्तिपरत्वस्यैव युक्तत्वादिति विवरणमतम् ॥

ब्रह्मसिद्धि-भामत्यादिग्रस्थानं तु "गोदोहनेन पशुकामस्ये"त्यत्र साक्षात् पशुफलकत्वेऽपि दर्श-पूर्णमासाङ्गाप्प्रणयनमाश्रित्य गोदोहनस्य फलसाधनत्वाद् दर्श-पूर्णमासार्थत्वमर्थादिति यथा, एवमत्रापि—

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ॥"

इति वचनाद् ज्ञानप्रतिबन्धकपापनिरसनमात्रे न पर्यवसानम्, किंतु तदेकवाक्यतया ज्ञानपर्यन्तं कर्मणामुपयोग इति सिद्धान्तात्, वस्तुतो ज्ञानार्थत्वमपीति। उभयत्रोक्तवाक्ये ज्ञानप्रतिबन्धकपापनिवृत्तिरेव विविदिषापदार्थः, न त्वेकस्यैव पदस्यैकस्मिन् वाक्येऽर्थद्वयवत्त्वम् ॥

### कर्मणां विविदिषार्थत्वपक्षस्य श्रीभाष्याद्वैतोभयसंमतत्वेऽपि न कर्मविचारानन्तर्यपक्षनिर्वाहः

निष्कर्षस्तु—प्रतिबन्धकनिवृत्तौ, विचारे क्रियमाणेऽर्थज्ञानं भवति, विचारस्तु संन्यासानन्तरम्, सन्यासात् पूर्वं गृहस्थावस्थायां वेत्यन्यदेतदित्यादिशतभूषण्यां व्यक्तम्। भूषणं तु शतभूषणीमन्यथा गृहीत्वा विविदिषापदस्य स्वमत इवाद्वैतमतेऽपि साक्षाद्वेदनार्थत्वमेवेति शतभूषण्युक्तमित्यस्थाने सन्तुष्यति। कर्मणां विविदिषयैव समाप्तिरुभयत्र, परन्तु कर्मणा पापनिवृत्तिर्जन्मान्तरीयेणापि कार्यकारिणीति भामतीविवरणयोरुभयत्रापि समानम्, इति कर्मविचारानन्तर्यं नार्थशब्दार्थ इति हि भाष्यमुभयत्र तुल्यम् ॥

भूषणं तु तदन्यथय्य कर्मविचारानन्तर्यार्थत्वं भामत्याऽपि गृहीतमिति शतभूषण्याशयं मत्वाऽकाले हृष्यति। सन्नन्तार्थविवक्षैवात्र, न तदविवक्षा भूषणमत इवेति तु निष्कर्षः ॥

### स्वर्गकामादिवाक्य इव न सन्नर्थस्य विवक्षा

सति चैवं "यजेत स्वर्गकामः" इत्यादौ कामपदवैयर्थ्यं मा भूदिति कामनेव कथं विविदिषैव न फलमित्यादिलेखो निरालम्बः; 'विविदिषे'त्यत्र सन एव 'बुभुक्षती'त्यादाविव प्रतिबन्धकनिवृत्तिपरत्वस्य स्वीकारेणोक्तार्थत्वस्यास्वीकारात्। न हि सन्नन्तपदघटकधात्वर्थस्थल इव कामपदघटितस्थले साक्षाद्धात्वर्थस्य, तत्प्रतिबन्धकनिवृत्तेर्वा साध्यत्वप्रतीतिः साक्षादस्ति ॥

### प्रमाणान्तरप्राप्तत्वात् प्रतिबन्धकनिवृत्तिरेव सन्नर्थः, न तु धात्वर्थः

न चात्र धात्वर्थस्य साधनत्वं भावार्थाधिकरणनयेन, न वा यज्ञादीनामिव विधानमपि, किन्तु प्रमाणान्तरप्राप्तार्थानुवादमात्रम्। अतोऽपि ज्ञायते कर्मणामात्मज्ञानोपकारकत्वं गुणविध्यादाविव न दृष्टविधया, न वाऽदृष्टविधया साक्षादुपयोगः, किन्तु तत्प्रतिबन्धकनिवृत्तिरेव फलमिति। अन्यथा—

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ॥"

इति वाक्यवैयर्थ्यापत्तिः। धात्वर्थो हि फलं तत्रैव, यत्र तस्य प्रमाणान्तरेण फलान्तरसाधनतया प्राप्तिः। यथा "दध्ना जुहोती"त्यादौ, तेन चेदमवगम्यते—यद्वेदनं यज्ञाद्युपकार्यं स्वतः फलरूपं वाऽत्र विवक्ष्यते, द्रष्टव्यपदेन दर्शनमिव। तत्र तत्त्वदर्शनस्याज्ञाननिवृत्तिसाधनत्वेऽपि तस्य कर्मणामिव नानुष्ठानापेक्षा, इत्यभिप्रेत्यैव स्वतः फलत्वम्। अतो न स्वर्गसाम्यम्, होमादिसाम्यं वा। तत्र स्वर्गादीनां फलत्वम्, भोग्यत्वं वा तदतिरिक्तापेक्षम्, नैवं दर्शनस्य तत्फलस्य, अज्ञाननिवृत्तेर्वा, इति प्रमाणजन्यं वेदनमेवाऽत्र विदिशब्दार्थः, न तु पुरुषतन्त्रमुपासनम्; तस्यानुष्ठानापेक्षं साधनस्य स्वतन्त्रफलत्वाभावेन सन्नन्तपदघटकधात्वर्थतया फलत्वेनान्वयासंभवात् ॥

### विदिधात्वर्थो नोपासनम्, किन्तु प्रमाणतन्त्रं ज्ञानमेव, अतो नात्र कर्मणां साक्षात् साधनत्वम्

सति चैवमिच्छायाः फलं वेदनं नोपासनात्मकं भवितुमर्हति। तच्चु प्रमाणतन्त्रं श्रोतव्यादिवाक्यप्राप्तस्वतन्त्रफलात्मकमेव। तत्र च विचाराधि-

कारो ज्ञानप्रतिबन्धकपापनिर्हरणं विना नोपपद्यते, इति विविदिषावाक्यं प्रवृत्तम् ॥

'विविदिषन्ती'त्यत्रेच्छायाः, वेदनस्य वा न फलत्वम् ,
किन्तु प्रतिबन्धनिवृत्तेरेव

न चात्र वेदनेच्छायाः फलत्वं सूक्तम् ; इच्छाया अपि ज्ञानस्येव कृत्यसाध्यत्वात् । अतो वेदनस्योपासनात्मकस्य फलत्वे न सन्नर्थस्यात्र सङ्गतिः । उपासनं फलान्तरसाधनमेवोक्तवाक्ये साध्यत्वेनान्वेति, इति कथं यज्ञादिसाध्यं स्वतन्त्रफलत्वमर्हति । न हि "व्रीहिभिर्यजेते"ति स्वर्गादिसाधनतया विहितयागोद्देशेनाङ्गान्तरविधानेऽपि सन्प्रत्ययः कुत्रापि दृश्यते ॥

सर्वथा तु विधेयज्ञानरूपत्वे वेदनस्य सन्प्रत्ययानुपपत्तिः । न चाविधेयप्रमाणतन्त्रात्मसाक्षात्कारे यज्ञादीनां कयाऽपि विधयोपकारकत्वम् , अपहाय ज्ञानप्रतिबन्धकनिवृत्तिम् । अतो नात्र यज्ञादीनां वेदनेच्छासाधनत्वम् , न वा वेदनसाधनत्वम् , किन्तु प्रतिबन्धकनिरासमात्रार्थत्वम् , इति सन्नन्तार्थोऽत्र प्रतिबन्धकनिरास एव, नेच्छा काऽपि । न चात्रेच्छाप्रतिबन्धनिवृत्तिः सन्नर्थः, किन्त्विष्यमाणज्ञानप्रतिबन्धकनिवृत्तिः ॥

'ओदनेन बुभुक्षती'त्यादिस्थल इव लक्षणया प्रतिबन्धक-
निवृत्तिः सन्नर्थः

यत्तु—शतभूषण्यां वेदनेच्छाप्रतिबन्धकनिवृत्तिरेव विविदिषापदार्थः—इति, तदिदं वेदनप्रतिबन्धकं वेदनेच्छामपि प्रतिबध्नातीत्यभिप्रेत्य, न तु विविदिषापदार्थ इत्याशयेन । विविदिषापदार्थस्तु वेदनप्रतिबन्धकनिवृत्तिरेव, इति नात्र वेदनस्यापीच्छाविषयत्वं पूर्वोक्तरीत्या युज्यते । न चान्यथाऽस्य वाक्यस्य प्रामाण्यम् ; बाधितार्थत्वात् । अत एवात्र लक्षणाऽप्यो'दनेन बुभुक्षती'त्यादाविव ॥

परिमलस्यापि सन्नर्थः प्रतिबन्धकनिवृत्तिरित्येव तात्पर्यम्

एतेन—पूर्वमेव फलेच्छायाः सत्त्वेऽपि संसारदुःखमयत्वनिश्चयपूर्वकतज्जिज्ञासामूलकब्रह्मजिज्ञासा कर्मसाध्येति परिमलोऽपि—व्याख्यातः । तेनापि संसारदुःखमयत्वज्ञानस्यैव वेदनप्रतिबन्धकत्वस्य सूचनेन प्रतिबन्धकनिवृत्तिरेव विविदषापदार्थ इति सूच्यते । सन्पदघटित-

त्वेऽपि परिमलकृता भोजनविषयोत्कटरोगनिवृत्तिरेव भेषजसेवनफल-मिति शिवार्कमणिदीपिकायामिच्छापदार्थघटनं प्रतिबन्धकनिवृत्तिरेव लक्षणया बुभुक्षादृष्टान्तेऽपीति भूषणं स्वयमेव स्वीकरोति। अतो नात्र वेदनं फलम् , तस्य कृतिसाध्यत्वासाध्यत्वविचारस्त्वत्रास्थाने एव; तस्य फलत्वेनान्वयस्यानङ्गीकारात् ॥

"एतेन—विविदिषन्ती"ति सन्प्रत्ययोऽपि—व्याख्यातः। तत्र हि वेदनं यद्युपासनम् , तर्हि तस्य पूर्वोक्तरीत्या फलत्वेनान्वयायोगात् ज्ञानादीनां च तत्साधनत्वायोगाच्च न यज्ञादिकरणिका वेदनभाव्यका भावनेति विधिकल्पना युक्ता; तत्र मुख्यफलस्य फलान्तरासाधनस्य विध्यविषयस्यैव तिङन्तपदेन निर्देशो युक्तः; "असिना जिघांसति 'ओदनेन बुभुक्षति' 'औषधेन बुभुक्षति' इत्यादौ सन्नर्थस्य विवक्षाऽविवक्षे तत्र तत्रेत्यन्यदेतत्। अद्वैतसिद्धान्ते तु वेदनप्रतिबन्धकनिवृत्तिरूपस्य फलत्वस्य विज्ञानात् पञ्चमलकारत्वमपि न दोषाय ॥

वेदनस्य विविदिषायां न भाव्यत्वेनान्वयः

वेदानुवचनकरणकभावनायां वेदनस्य भाव्यत्वेनान्वयो न योग्य इति भूषणं वदति। तत्रान्वययोग्यता तु वेदनप्रतिबन्धकनिवृत्तेः फलत्वविवक्षायामेव, न तूपसनात्मकवेदनभाव्यकत्व इति पूर्वमुक्तम् ;तस्याः कृत्युद्देश्यत्वं कृतिजनकेच्छाविषयत्वमबाधम् ॥

तत्र वेदनमपि यद्यपि कृतिजनकेच्छाविषयतामर्हति, परन्तु साधनत्वेन, न तु मुख्यत्वेन। मुख्यत्वं हि फलान्तरानुबन्धिसाधनत्वेन विध्यन्तराविषयत्वम्। न चोपासनं तथा। विविदिषाकामविधया विविदिषाया एव फलत्वं तु भूषणमपि नोरीकरोति। वेदनमात्रभाव्यतायां धात्वर्थत्वेनैव साधनान्तरसमभिव्याहारे "दध्ना जुहोती" त्यादाविव फलत्वेनान्वये सम्पद्वैयर्थ्यदूषणं दुष्परिहरम्। ततः सना लक्षणया प्रतिबन्धकनिवृत्तिविवक्षैव वरम् ॥

जन्मान्तरीयेणापि कर्मणा विविदिषासाधनत्वं भामतीमते,
इति न कर्मविचारानन्तर्यमथशब्दार्थः

यत्तु—भामत्यां वेदानुवचनस्येव यज्ञादेरपीच्छासाधनतया विधानमिति—उक्तम् , तस्यापि वेदनप्रतिबन्धकनिवृत्तिसाधनतया यज्ञादिविधान

एव तात्पर्यम् । तत्र वेदनं साक्षात्कार एवेति त्वनुसन्धेयम् । अत एव तत्र संयोगपृथक्त्वन्यायः ॥

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ॥"

इति वचनैकवाक्यतया तत्र गोदोहनन्यायेनार्थिकमेव फलं ज्ञानम् , न तु शाब्दमित्युक्तम् । तत एव तदैकार्थ्यम् , नान्यथा । एवं व्याख्यानस्य प्रयोजनं हि जन्मान्तरीयेण, कर्मणा पापक्षये, शमादिसंपत्तौ च ब्रह्मविद्याधिकार इति सूचनमेव ॥

तत्र "विविदिषन्ती" ति वाक्यं प्रतिबन्धकनिवृत्तिमेव कर्मणः फलं बोधयति, यदेव "ज्ञानमुत्पद्यते पुंसामि" ति वाक्येनापि, इति साक्षात् प्रतिबन्धकस्य पापस्यापि जन्मान्तरानुष्ठितकर्मणाऽपि क्षेपणसंभवात् , नेह जन्मनि साधनचतुष्टयसंपन्नानां नियमेन कर्मानुष्ठानम् , तद्विचारो वाऽपेक्ष्यते, इति "ब्रह्मचर्यादेव संन्यस्तानां विनाऽपि कर्मविचारं पूर्वोक्तरीत्या ब्रह्मविद्याधिकारो निर्वहति । तत्र—

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।"

इति वचनं विचारे क्रियमाणेऽप्यक्षीणपापानां कर्मणा प्रतिबन्धकनिवृत्तिमेव बोधयति । सा च यदि जन्मान्तरीयकर्मणैव सिद्धा, तर्हि संन्यासः श्रेयसे भवति; अन्यथा तु वैराग्यमात्रेण संन्यासेऽपि तदाश्रमोचितधर्माचरणं कर्तव्यम् । साधनचतुष्टयस्य संपूर्णायां संपत्तौ त्ववधूताद्यतिवर्णाश्रमसंन्यासोऽपि न दोषाय, परन्तु संपूर्णसाधनचतुष्टयसंपत्तिनिर्णयो दुःशकः, इति परमहंसाश्रमपर्यन्तावस्थैव संन्यासिनोऽपि निःश्रेयसाय । अतो नात्र मुष्टिग्रहणेन कर्मत्यागो विवक्ष्यते ॥

इदमेवात्र पर्यनुयुज्यते—यदिह जन्मनि कर्मानुष्ठानेनैव ब्रह्मविद्यायामधिकार इति किं मुष्टिग्रहणेनैवमर्थवर्णनम् ? अयमेवार्थः स्वरस इति विविदिषापदार्थो ज्ञानप्रतिबन्धकनिवृत्तिरेवेति बुभुक्षुदृष्टान्तेन दृढीकृतम् ॥

यत्तु—ज्ञानस्य फलत्वमिच्छतामस्माकमपि पापक्षयद्वारकत्वमिष्टमिति भूषणम्—तदिदं यदि 'विविदिषन्ति'वाक्येनैव, तत्रापि विविदिषापदस्यैव ज्ञानप्रतिबन्धकनिवृत्तिपरत्वमभ्युपेत्य, तर्हि स्वागतम् ; वेदनार्थत्वस्य परित्यागात् , एकस्य वाक्यस्य विना तन्त्रम् , आवृत्तिं वाऽनेकार्थत्वासंभवाच ॥

### कर्मणां ज्ञान उपयोगः संनिपत्योपकारकतया, नान्यथा

तत्र कर्मणामारादुपकारकत्वं तत्त्वज्ञानोत्पाद इति भामती। उपासनेन सह कर्माण्यनुष्ठेयानि फलसिद्धय इति भास्करः। कर्मणां संनिपत्योपकारकत्वमिति विशिष्टाद्वैतमिति भूषणम्—विविनक्ति। तत्राद्दष्टविधयैवोपकारकत्वं हि प्रयाजादीनामिवाराद्उपकारकत्वम्, व्रीहिप्रोक्षणन्यायेनोपकारकत्वं कर्तृसंस्कारद्वारा, न तु साक्षात् वेदनोपकारकतयेत्यद्वैतसिद्धान्त एव पर्यवसानम् ॥

### कर्मणां संनिपत्याराद्उपकारकत्वयोः फलभेदः, तत्र व्यवस्था च

तत्र भास्करसिद्धान्त उभयोरपि संमतः। कर्मोपकारप्रकारविशेषः परं ज्ञानसाधनचित्तशुद्धिसंपादकतया भामत्युक्तप्रकारेणैव, परन्तु विविदिषाया उद्देश्यकोटिप्रवेशो भामतीमते, वेदनस्योद्देश्यत्वं स्वमते। सत्यप्येवं सन्निपत्योपकारकाराद्उपकारकशब्दभेदमात्रमिति भूषणमभिप्रैति ॥

तत्राद्वैतमते ज्ञानप्रतिबन्धकपापनिवृत्तेरुपयोगश्चित्तशुद्धौ, ततो ज्ञानमिति फलति। तत्र सन्निपत्योपकारकत्वं विहितायाः क्रियाया विनैव विलम्बं स्वकार्यकारित्वेन, क्रियाङ्गद्रव्ये संस्काराधानेन वा; यथा "व्रीहीनवहन्ति" "व्रीहीन् प्रोक्षति" "इत्यादौ। आराद्उपकारकत्वं तु विलम्बेनाद्दष्टद्वारा-स्वकार्यकारित्वेन, प्रधानापूर्वे परमापूर्वजननानुकूलशक्त्याधानेन वा। तच्च कर्मणामद्दष्टविधयाऽन्तःकरणे शुद्ध्याधायकत्वेनेति भामतीमते यद्यपि भवति; तत्रान्तःकरणस्यैव ज्ञानकरणत्वात्, तदपि तु विलम्बेनाद्दष्टविधयैव, इत्याराद्उपकारकत्वमेव युक्तम्, विवरणमते तु शब्दस्यैव प्रमाणत्वान्न सन्निपत्योपकारकत्वसंभावनाऽपि। सर्वथा तु वेदानार्थत्वं न युक्तम् ॥

तत्र प्रधाने कार्यजननानुकूलशक्त्याधायकत्वं यदि प्रधानमन्तःकरणमभिप्रेत्य, तदाऽऽराद्उपकारकत्वमेव युक्तम्। तत्र च कर्मणां प्रयाजादीनां साक्षाद् दर्श-पूर्णमासार्थत्ववत् वेदनार्थत्वाभावात्तत्साधनान्तःकरणशुद्ध्यर्थत्वे, साक्षाच्छब्दे साक्षात्कारजननानुकूलशक्त्याधायकत्वे वा विवक्षिते त्वसंभवः, सन्निपत्योकारकत्वाभावश्च, इति वेदनसाधनोपकारकत्वेऽपि वेदनानुपकारकत्वाद् न कर्मणां वेदनं फलम्, इति वेदनप्रतिबन्धकनिवर्तकत्वमेव युक्तम् ॥

तत्र ब्रह्मजिज्ञासा ब्रह्मावरणनिवर्तकत्वेन श्रोतव्यादिवाक्येन बोध्यते, सा च वेदनप्रतिबन्धकनिवृत्त्याऽऽत्मानं लभते, इति कर्मणां वेदनप्रतिबन्धकनिवृत्तिरेव फलमिति निष्कर्षः ॥

जन्मान्तरीयेण कर्मणापि विचाराद्यधिकारवादो भूषणस्याभीष्ट एवाद्वैत इव, भूषणं तु मतद्वयविरुद्धमुपासनेन कर्मसमुच्चयमपि निषेधति

तत्र भूषणम्–यस्य प्राग्जन्मनि संपन्नं श्रवणम्, तस्य जातमात्रस्य भगवान् स्वत एव वेदनमनुवर्तयति, एवमेव प्राग्जन्मनि कर्मस्वनुष्ठितेषु जन्मान्तरे विविदिषामुत्पाद्य श्रवणे प्रवर्तयतीति वदद्द्वैतसिद्धान्तमेवाद्रियते, यतो विचारार्थं प्रवृत्तस्य न कर्मापेक्षैकान्तेनेत्येवाभिप्रैति। इयान् विशेषः —भूषणं वेदनमुपासनं मन्यते, अद्वैतं तु साक्षात्कारम्, तत्रोपासनेन कर्मसमुच्चयवादो नाद्वैतस्याप्यसंमतः ॥

सर्वथा तु प्रतिबन्धकनिवृत्तिशङ्कया कर्मानुष्ठानमपि केषांचन याज्ञवल्क्यादीनां गृहस्थानामिहैव जन्मनि साधनचतुष्टयसंपन्नानां यावद्गृहस्थाश्रमेऽवस्थानं लोकसंग्रहार्थम्, स्वस्य ज्ञानप्रतिबन्धकनिरासार्थं वा कर्मविचारनियमे न प्रमाणम्। शुकादीनां केषांचन तद्वैपरीत्यमपि हि दृश्यते, इति न कर्मविचारानन्तर्यमथशब्दार्थः, यतो विविदिषार्थत्वं कर्मणामदृष्टवशाद् ज्ञानप्रतिबन्धकनिरासार्थत्वमेव ॥

वेदने साक्षात्काररूपे वाक्यानामिव कर्मणां नोपयोगः

परमार्थतस्तु—वेदनमिदमखण्डाकारवृत्तिर्ब्रह्मावगतिरेव प्रमाणतन्त्रा, न तु पुरुषतन्त्रमुपासनम्। कर्म हि नादृष्टविधयोपकरोति, किन्तु तदर्थविचारद्वारैवेति वक्तव्यम्। तत्र च विचारितानां वेदानां ब्रह्मज्ञाने प्रमाणविधयैवोपकारकत्वम्, इति श्रोतव्यवाक्ये श्रूयमाणं दर्शनमेवात्र तदेकवाक्यतया वेदनं वक्तव्यम्, इति प्रमाणतन्त्रमिदं वेदनम्, न चोदनातन्त्रमुपासनं भवितुमर्हति ॥

तत्र च वाक्येनात्मसाक्षात्कारे जननीये तपोऽनशनयोरिव प्रतिबन्धकनिवृत्तिरेव कर्मसाध्या स्वीकर्तव्या, न तु वाक्यसहकारिता; वाक्येन वाक्यार्थज्ञाने जननीये न कर्मणामुपाकारकत्वं संभवति। व्यक्तमिदं भामत्याम् ॥

बृहदारण्यकतुरीय चतुर्थब्राह्मणप्रकरणसन्दर्भात् संन्यासस्यैव प्राधान्यम् , अतो न वेदानुवचनवत् कर्मणां साक्षाद् वेदन उपयोगः

यत्तु—वेदनमिदमुपासनारूपमिति पूर्वापरसन्दर्भादपि सुज्ञानमिति—भूषणम् , तत्र "एकधैवानुद्रष्टव्यम्" "नेह नानाऽस्ति किंचन" "मृत्योः स मृत्युमाप्नोति नेह नानाऽस्ति किंचन" "एतदप्रमयं ध्रुवम्" "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" "स एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" "सर्वस्य वशी सर्वस्येशानः" "स न साधुना कर्मणा भूयान्नो वाऽसाधुना कर्मणा कनीयानेष सर्वेश्वर: एष भूताधिपतिरेष सेतुर्विधरण एषां लोकानामसंभेदाये"ति प्रत्यगभिन्नं परमात्मानं प्रस्तुत्य श्रूयते—"तमेतं वेदानुवचनेने"त्यादि । उत्तरसन्दर्भस्तु—एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती"ति संन्यासविधिः ॥

तत्र पूर्वसन्दर्भो जीवाभिन्नस्य निर्विशेषस्य, उत्तरसन्दर्भः संन्यासस्य । एवमुपक्रमे—'अनुद्रष्टव्यम्' 'विज्ञाय प्रज्ञाम्' उत्तरत्र 'विदित्वे'ति च श्रूयते । तेन च यस्य वेदने कर्मणामुपयोगः, तस्यैव वेदने संन्यासस्य विधानमिति स्थितौ कथं पूर्वोत्तरौ सन्दर्भौ उपासनाप्रकरणम् , सविशेषप्रकरणं वा तुरीय-चतुर्थब्राह्मणे बृहदारण्यकस्येति ?

सति चैवं न तत्र कर्मानुष्ठानं त्यक्तुं शक्यमिति वदद् भूषणम्—अनन्तरवाक्यविहितस्य संन्यासस्य कां वा गतिं पश्यति, द्रक्ष्यति वा ? यावज्जीवश्रुतिस्तु—अग्निहोत्रादिकर्माधिकारिमात्रविषया ॥

सति चैवं "यज्ञेन दानेने"ति वचनं गृहाश्रमादेव संन्यासाधिकारः, न तु प्रथमाश्रमादिति भूषणं यद्यभिप्रैति, तर्हि ब्रह्मचर्यात् संन्यासविधेः का गतिः ? यदि तु तदङ्गीकारः, तर्हि कर्मणां कथं विविदिषाङ्गत्वम् ? यदि तेषां जन्मान्तरीयकर्मणैव विविदिषानिर्वाहः, तर्हि कथं भूषणेन ज्ञायते—श्रवणात् परस्तादपि कर्मानुष्ठानम् ? इति वाक्येनात्मसाक्षात्कारे जननीये, इह, जन्मान्तरे वा ज्ञानप्रतिबन्धकनिवृत्त्यर्थं कर्मविधानपरमेवेदं वाक्यमिति वक्तव्यम् ॥

भूषणमते ब्रह्मचर्यात् संन्यासविध्यादिविरोधः

इदमेवात्र चित्रम्—यद् भूषणम्—भोगैकबाध्यप्रारब्धकर्मनिबन्धनपापक्षयार्थं कर्मानुष्ठानमिति वदत् प्रारब्धकर्मणामपि कर्मैकनाश्यत्वमभि-

प्रैति, न तु भोगैकनाश्यत्वम्, तदवसानपर्यन्तज्ञानैकनाश्यत्वं वा। ज्ञानप्रतिबन्धकनिवृत्तौ सत्युत्कटवैराग्ये संन्यासस्वीकारो न नियतो गृहस्थानाम्, किं बहुना? विधुरस्याप्यधिकारो वर्तते ब्रह्मविद्यायामिति संप्रतिपन्नम् ॥

सौत्रसन्नर्थस्यौत्सर्गिकत्वम्, नैकान्तः; 'औषधेन बुभुक्षती'त्यादौ व्यभिचारात्, अतो न दोषः

यत्तु—भामत्यां "एतमेव पुरुषधौरेयमधिकृत्य "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदि"ति श्रुतिरि"त्युक्तम्, तदिदमेतदतिरिक्तस्य संन्यासानधिकारपरमिति संप्रतिपन्नम्। एतस्मिन्नेव जन्मनि कर्मानुष्ठान-तद्विचारयोर्ब्रह्मजिज्ञासाधिकारानपेक्षेत्येवैकान्तः ॥

सर्वापेक्षासूत्रमपि विद्यायां कर्मणां प्रतिबन्धक-निवृत्त्योपयोगमेवाभिप्रैति

यत्तु भाष्ये—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" "सहकारित्वेन चे"ति सूत्रयोः कर्मणां विद्यासाधनत्वमुक्तम्, तत्र विद्या न भूषणोक्तमुपासनम्, किन्तु तत्त्वसाक्षात्कारः। तत्र विद्योत्पत्तौ विद्याप्रतिबन्धकनिवृत्त्या कर्मणामपेक्षेत्येव तदाशय इति तत्रैव भाष्य-भामत्यादौ व्यक्तम्—वाक्येन साक्षात्कारे जननीये कर्मणां नापेक्षेत्यादिप्रकारेण ॥

"धातोः कर्मणः समानकर्तृकायामि"ति, सूत्रस्य नाद्वैते विरोधः

तत्र सन्प्रत्ययस्थले कारकाणां क्रियायामन्वयः औत्सर्गिकः, न तु नियतः; "औषधेन बुभुक्षती"त्यादौ व्यभिचारात्। यद्यपि "धातोः कर्मणः समानकर्तृकायां वा" इति सूत्रेण इच्छायां धात्वर्थकर्मत्वे, धात्वर्थेच्छायां समानकर्तृकत्वे सन्प्रत्ययो विधीयते, तेन च "तमेतं विविदिषन्ती"त्यत्र वेदनेच्छयोः समानकर्तृकत्वम्, धात्वर्थनिरूपितमिच्छानिरूपितं च यद्येकम्, तर्हि कर्तुरिव कर्मणोऽपि धात्वर्थेऽन्वयः स्वीकर्तव्यः। अयमेव न्यायः कर्तृव्यतिरिक्तकारकान्तरेष्वपि, इति "यज्ञेन दानेन" इति करणकारकस्यापि धात्वर्थ एवान्वयो वर्णनीयः, इति तृतीयाया अपि कर्तुरिवेच्छायामेवान्वये समानकर्तृकायामिति विरुध्येत। 'असिना जिघांसति' इत्यादीन्यत्र निदर्शनानि; तथापि 'औषधेन बुभुक्षती"त्यादिप्रयोगदर्शनात् प्रथमप्रतीतिमादाय समानकर्तृकत्वमादाय सन्प्रयोगोऽत्रानुस-

न्वेयः। पश्चात्तु औषधकरणकत्वस्य भोजने बाधात् सनो लक्षणया भोजनप्रतिबन्धनिवृत्तिस्तत्र सन्नर्थ आस्थीयते; पदानां वाक्यार्थविशेष इच्छया प्रथमप्रतीतया वाच्यार्थमादायैव प्रकृतिप्रत्ययादिप्रयोगोऽसति बाधके ॥

### वाक्यविशेषे तात्पर्यवशाद् लक्षणा न पर्यनुयोगमर्हति

तत्र—वाच्यार्थस्यान्वयबाधे तु तात्पर्यविषयस्य लक्ष्यार्थस्य विवक्षायां शब्दासाधुत्वानुयोगो न युक्तः। अत एव "तत्त्वमसी"त्यादौ लक्ष्यार्थस्याखण्डस्य विवक्षायाम्, जीवशरीरकः परमात्माऽस्तीत्यर्थविवक्षायां वाऽसीति प्रयोगानुपपत्तिर्न पर्यनुयोगमर्हतीति तत्र तत्र व्यवस्था ॥

अयमेव न्यायः "तत्त्वमसी"त्यादावखण्डार्थे प्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यायोगशङ्कापरिहारेऽप्यनुसन्धीयते; अन्यथा लक्ष्यार्थमादाय सामानाधिकरण्ये प्रवृत्तिनिमित्तभेदाभावादपर्यायत्वेन सहप्रयोगानुपपत्तिशङ्का दुर्वारा। अत एव तत्र प्रथमप्रतीतार्थमादायापर्यायत्वोपपादनं ग्रन्थकृताम् ॥

### "तमेतमि"ति वाक्ये सन्नर्थस्य लाक्षणिकत्वमेव युक्तम्

सति चैवं—"तमेतमि"ति वाक्येऽपि साक्षाद्वेदनस्य कर्मसाध्यत्वस्य पूर्वोक्तरीत्या बाधात्, बुभुक्षादृष्टान्तेन वेदनप्रतिबन्धकनिवृत्तिरेव सन्नर्थ इति विवक्षणाच्च न सन्निधायकसूत्रविरोधः। अतो न यज्ञादिफलत्वं वेदनस्य; विरोधात्। यज्ञाद्यधिकारो हि, सत्यम्, क्रिया-कर्तृ-करणेतिकर्तव्यताप्रपञ्चं तात्त्विकं मन्वानस्य, न तु तमतात्त्विकं मन्यमानस्य। तदुक्तं भाष्ये—'यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियते, तथाप्यशनायाद्यतीतमकर्त्रात्मतत्त्वं नाधिकारेऽपेक्ष्यते, प्रत्युताधिकारविरोधाच्चे'ति। अत्र विरोधप्रदर्शनमधिकारासंभवं बोधयितुम्, अन्यथा कर्मोपासनादावप्यधिकारो न स्यात्। वेदनस्य यज्ञादिफलत्वं भामत्युक्तरीत्या संभवेदेवेत्युक्तम्। इदन्तु निर्विशेषब्रह्मवेदनं भामत्यभिमतं सिद्धवत्कृत्य, न तु भूषणदृष्ट्या शशशृङ्गायमाणम्, इति न शशशृङ्गभञ्जनार्थमेतावानायासः ॥

### भक्तेर्मोक्षो न फलम्, न वा तत्र कर्मापेक्षा

अस्तु वोपासनमेव वेदनम्, तथापि तस्य कर्मसाध्यत्वं न दृष्टविधया, किन्त्वदृष्टविधयेति वक्तव्यम्। न हि भक्तिः साक्षाद् मोक्षसाधनं फलं

नाम। यथा च भक्तिसाध्यस्य ज्ञानस्यैवाविद्यानिवृत्तिरूपमोक्षप्रयोजकत्वात् फलसाधनत्वप्रयुक्तमपि पुरुषार्थत्वम्, न भक्तेः, न वा कर्मणाम्, तथा पूर्वमुपपादितम् ॥

"विविदिषन्ती"त्यत्र वेदनं न फलमित्युपसंहारः

यत्तु—भूषणमत्र वदति—भक्तिवत्कर्मणामपि तज्जन्यसाक्षात्कारात्मकवेदनसाधनत्वस्यैव युक्तत्वात्—इति, तदिदं वन्ध्यायाः दुहितृदर्शनम्, शशशृङ्गधनुर्धरत्वं च भूषणस्य। तत्र भक्तेः साक्षात्कारसाधकत्वं नास्तीति त्रिपुरुषं वन्ध्याया दुहितृदर्शनम्; तथा कर्मणामपि भक्तिसाधनत्वं नास्ति, किन्तु तत्प्रतिबन्धकचित्तमालिन्यनिवृत्तिरेव फलमिति भूषणस्यापि सिद्धान्तात्, साक्षात् कर्मणां भक्तिसाधनत्वास्वीकाराच्च। सर्वथा 'विविदिषन्ती'त्यत्र न वेदनं फलम् ॥

अखण्डसाक्षात्कार एव पुरुषार्थः, न तु भक्त्यादिः

निष्कर्षस्तु—अविद्यानिवृत्तिरूपमोक्षसाधनत्वादखण्डाकारवृत्तिः फलम्, तस्या निवर्त्यत्वेऽपि मुख्यमोक्षसाधनत्वादपि यागादेरिव पुरुषार्थत्वम्। न चैवं भक्तिः साक्षात्कारसाधनत्वेन पुरुषार्थः, सविशेषोपासनस्याज्ञानानिवर्तकत्वात्, भक्तेः ज्ञानसाधनस्य मोक्षासाधनत्वाच्च। ब्रह्म तु स्वयंप्रकाशमावरणनिवृत्त्या फलमिव; नित्यसिद्धस्य नित्यप्राप्तस्य च साधनायोगात्। मुख्यः पुरुषार्थस्त्वनावृतसंविन्मात्रम्, तत्रानावृतत्वांशे वृत्तेरुपयोगः। साक्षात्कारे जननीये त्वनावरणांशोपयोगितया साक्षात्कारस्य वृत्त्यंशजन्यत्वेन जन्यत्वव्यपदेशः ॥

भक्तेरपि गौणमुक्तिसाधनत्वमद्वैतमतेऽपि

तत्र पुरुषार्थत्वव्यवहारस्तु साधकावस्थामाश्रित्य सर्वत्र पुरुषार्थत्वव्यवहारः। अधिकमहमर्थमुक्त्यन्वयप्रकरणे व्यक्तम्। पुरुषापेक्ष्यमाणत्वं च ब्रह्मणः प्रत्यगभिन्नस्यावरणनिवृत्तिमपेक्ष्यैव, यदाऽखण्डानन्दात्मना स्वरूपप्रकाशः। भक्तेरप्युत्कृष्ट-निकृष्टरूपाया उत्कृष्ट-निकृष्टसातिशय-पुरुषार्थसाधनत्वम्। किं बहुना? गौणमुक्तिसाधनत्वमद्वैतिनोऽपि तस्या मन्यन्ते ॥

विदिधातोः पुरुष-प्रमाणतन्त्रज्ञानसाधारण्येऽपि
प्रकरणादिनाऽर्थव्यवस्था

विदिधातुर्हि तत्र तत्र पुरुषतन्त्र-प्रमाणतन्त्रसाधारणमानसक्रियामात्रपरः सत्यं दृश्यते, प्रकरणवशात्तु तत्र निर्णयः। यत्र विधिश्रवणम्,

तत्रोपासनमर्थः, यत्र तु सिद्धवदनुवादमात्रम्, वर्तमाननिर्देशो वा, तत्र प्रमाणतन्त्रसाक्षात्कारः ॥

तत्र "ब्रह्मविदाप्नोति परम्"इत्यत्र न विदिर्विधिपरः, किन्तु सिद्धवदनुवादमात्रम्। अतः प्रमाणतन्त्रसाक्षात्कार एव तत्र विदिधात्वर्थः, यावद्देहाभिमानं तत्तदाश्रमोचितकर्मानुष्ठानं प्रत्यवायपरिहारार्थमनुष्ठेयम्—पुनरपि वेदनप्रतिबन्धो मा भूदिति, न तु कर्माणि तावता ज्ञानसाधनानि, तत्रोपासना-कर्मयोगयोः सहानुष्ठानं ज्ञानयोगप्रतिबन्धनिरासार्थं न कोऽपि वारयति। निष्पन्नयोगस्य कर्मत्यागोऽविप्रतिपन्नः। तत्र योगपदार्थो ज्ञानयोग एव ॥

॥ इति विविदिषासाधनत्वोपपत्तिः ॥

———

# शाब्दापरोक्षवादः

शाब्दपरोक्षापरोक्षत्वादयोः प्रस्थानभेदमात्रम् , नान्यतरेणा-
परस्य विरोधः, इति यथायथं प्रस्थानद्वयस्यापि रक्षण-
मेवाद्वैतिनां कृत्यम्

सर्वत्र सति प्रस्थानभेदे प्रस्थानद्वयस्यापि समर्थनमुभयसंप्रतिपन्नम् ; उभयस्य लक्ष्यैक्यात् । तत्र बहुषु स्थलेषु भामती 'तुष्यतु दुर्जन' न्यायेन प्रतिपक्षमपि स्वीकृत्याद्वैतं समर्थयति । ते यथा—अविद्याया जीवाश्रयत्ववादः, शाब्दपरोक्षवादः, कर्मणां वेदनार्थत्ववादः, शुद्धब्रह्माविषयत्ववादः, ब्रह्मजिज्ञासाया अध्ययनविधिमूलत्ववाद इत्यादयः ॥

तत्र भूषणं शाब्दपरोक्षवादो भामत्यैव निरस्त इति तावतैव सन्तुष्यति, परन्तु प्रमाणजन्यमेव वेदनं विविदिषावाक्यार्थः । तत्र कर्मणां नोपयोग इत्यंशं भामत्या नोरीकरोति । तस्य कुक्कुट्या अर्धांशभक्षणमेव सर्वत्र प्रकरणेषु, तृप्तिश्च तावन्मात्रेण, तत्तदवसरेऽपरमर्धांशं परित्यजति, सन्तुष्यतु कथमपि भूषणम् , इति भूषणस्य शाब्दापरोक्षवादनिरासप्रकरणं भामत्याः सपरिमलाया वस्तुगत्या विषमेव ॥

शतभूषणी हि गुरुचरणानां चरणारविन्दद्वयस्यापि शरणीकरणं महते श्रेयस इति मत्वा चरणद्वयमपि शरणीकुर्वाणा भामतीसिद्धान्तमपि समर्थयति, विवरणप्रस्थानमपि । अयमेव पन्था भूषणेनापि बहुषु प्रकरणेष्ववलम्ब्यते, परन्त्वर्धपथ एव प्रस्थानविशेषमंशतः केवलं परित्यजतीत्याद्यद्वैततत्त्वपरिशुद्ध्यादौ व्यक्तम् । अत्रापि ब्रह्मोपादानतादिप्रकरणेषु, किं बहुना ? स्वपितृपादमपि निगमान्तदेशिकं संकर्षकाण्डादिविषये स्वार्थमात्रदृष्ट्या तिरस्करोति । अस्तु, तत्र शाब्दापरोक्षवादखण्डनं भामतीप्रस्थानमवलम्ब्याद्वैतिभिरेव खण्डनीयमिति भूषणं लिखति, शतभूषणी तु मन्यते, न केवलमद्वैतिनः, किन्तु शतभूषण्यपि, एकं जन्मना, अपरं च विद्यया च गुरुं मत्वा प्रस्थानद्वयमपि समर्थयिष्यति, अस्तु, शाब्दापरोक्षवाद एव दृष्टिर्निक्षिप्यताम् । तत्र प्रथमं प्रत्यक्षलक्षणं वेदान्तपरिभाषायामुक्तं 'तत्त्वमस्यादि'वाक्यजन्यज्ञाने न संभवतीति भूषणोक्तिरेव परीक्ष्यते ॥

परिभाषाया लौकिक-वैदिकशाब्दप्रत्यक्षसाधारणं प्रत्यक्ष-लक्षणमिन्द्रियजन्यत्वातिरिक्तं लक्ष्यम्

तत्र वेदान्तपरिभाषा प्रथमतो घटादिप्रत्यक्षमात्रं लौकिकमादायापीन्द्रियजन्यमेव ज्ञानं प्रत्यक्षमिति वक्तुं न शक्यत इति प्रक्रमते—साक्षिप्रत्यक्षादीनां बहूनाम्, शाब्दापरोक्षस्य च लौकिकस्य समर्थनं कर्तव्यमिति, न तु तत्त्वमस्यादिवाक्यजन्यज्ञानस्यैव प्रत्यक्षत्वं समर्थनीयमिति ॥

परिभाषायाः प्रत्यक्षपरिच्छेदे शाब्दप्रत्यक्षसमर्थनमात्रं मुख्यं लक्ष्यं प्रत्यक्षस्यैन्द्रियकत्वनिरसनस्य। तत्र ज्ञानगतं प्रत्यक्षत्वं विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वमिति घटादिप्रत्यक्षाभिप्रायेण, 'दशमस्त्वमसी'त्यादिलौकिकवाक्यजन्यज्ञानाभिप्रायेण च, न तु 'तत्त्वमसी'ति-वाक्यजन्यज्ञानमात्राभिप्रायेण ॥

अत एव परिभाषायाम्—'सोऽयं देवदत्तः' इत्यत्र देवदत्तावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्याभिन्नतया वाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्, इति लौकिकवाक्यजन्यज्ञाने प्रत्यक्षलक्षणसमन्वयानन्तरम्, एवं 'तत्त्वमसी'त्यादिवाक्यजन्यज्ञानस्यापि; तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वादित्युक्तम् ॥

घटादिप्रत्यक्षत्वादन्यदेव ब्रह्मप्रत्यक्षत्वम्, एकस्य फलव्याप्यत्वात्, अपरस्य वृत्तिमात्रव्याप्यत्वात्

तदाशयस्तु फलव्याप्यस्थले विषयचैतन्यं वृत्त्युपहितचैतन्यं च भिन्नभिन्नदेशस्थत्वे भवति। प्रत्यगात्मनस्तु वृत्त्युपधानमात्रतया प्रत्यक्षत्वम्, यतस्तत्र वृत्त्युपहितचैतन्यातिरिक्तचैतन्यमेव नास्ति, इति न प्रत्यक्षत्वविघातः ॥

निष्कर्षस्तु—विषयतादात्म्यापन्नानावृतसंवित्त्वं ज्ञानप्रत्यक्षत्वं घटादिस्थले, निर्विशेषब्रह्मणः प्रत्यक्षत्वं त्वनावृतसंविन्मात्रत्वम्; तत्र विषयस्येव चैतन्यस्य तदवच्छिन्नचैतन्यासंभवात्। अत एव तत्र प्रमातुरेव विषयतयेत्युक्तम्। तत्र विषयातिरिक्तज्ञानप्रत्यक्षत्वं नास्ति, अनावृतसंविन्मात्रस्य स्वप्रकाशस्य "यः साक्षादि"ति श्रुत्यनुसारेण स्वयंप्रत्यक्षत्वात् ॥

अयमेव न्यायो विषयप्रत्यक्षेऽपि; अनावृतचित्तादात्म्यानावृतसंवित्त्वान्यतरस्यैव विषयप्रत्यक्षत्वात्। व्यक्तं चैतन्न्यायरत्नावल्यादौ ॥

परमार्थप्रकाशिका तु परिभाषाग्रन्थमन्यथा गृहीत्वा किमपि किमपि-वदतीत्यद्वैततत्त्वपरिशुद्धौ व्यक्तम् ॥

### चैतन्य-वृत्तिविभागेन ज्ञानद्वैविध्यं श्रुतिलोकानुभवसिद्धम्, तत्र वृत्तेरौपचारिकं ज्ञानत्वम्, चैतन्यस्य तु मुख्यमिति व्यवस्था

तत्र वृत्तिः, चैतन्यमिति ज्ञानविभागो लोकप्रसिद्ध एव। भूषणं तु वदति—घटावच्छिन्नचैतन्यमप्रसिद्धम्। चैतन्यमात्रम्, वृत्तिमात्रं वा न लोक प्रसिद्धम्—इति। तत्राऽऽद्ये स्थूलचिदचिद्विशिष्टब्रह्मकार्यतावादाय दत्तस्तिलाञ्जलिः। अन्त्ये चैतन्याप्रसिद्धौ सर्वजाड्यापातः। वृत्तिस्तु स्वरूपचैतन्यातिरिक्तोऽन्तःकरणधर्मो न केवलं लोकसिद्धः, किन्तु "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति श्रुतिसिद्धोऽपि; अन्यथा जन्यज्ञानाभावात् प्रमाणकथा कथामात्रं स्यात्। 'ज्ञानमुत्पन्नं नष्टमि'ति सर्वलोकानुभवो जन्यं किञ्चन ज्ञानमनुभावयति, तत्तु वृत्तिरेव ॥

न चायमात्मधर्मः कश्चन पारिभाषिकः संकोच-विकासशाली लोकसिद्धः, प्रामाणिको वेति व्यक्तमन्यत्र। तत्रान्तःकरणधर्मस्यावरणनिवर्तकत्वमात्रेण ज्ञानत्वव्यपदेशः, न तु तदपि चैतन्यातिरिक्तं किमपि मुख्यं ज्ञानम्। अयमेव न्यायो ब्रह्माकारवृत्तावपि। तया ह्यावरणे निवृत्ते सर्वोपाधिशून्यं संविन्मात्रमेव ज्ञानं नाम। तद्धयावृतावस्थायामपि ज्ञानम्, अनावृतावस्थायामपि। आवृतावस्थायां घटाद्युपाध्यवच्छिन्नत्वेऽपि स्वांशे स्वयं प्रकाशमानमपि घटादीनां भासकं तदावरणनिवर्तकोपाध्युपहितंसदेव। सर्वं चेदं वेदान्तपरिभाषायां व्यक्तम् ॥

### प्रत्यक्षादिप्रमात्वं जन्यवृत्त्युपाधिकत्वेन, न तु चैतन्यत्वेन

चैतन्यस्य वृत्त्यवच्छिन्नस्य वृत्त्युपाधिकं प्रमाणजन्यत्वमभिप्रेत्य जन्यप्रमात्वम्। तत्तद्विषयाकारवृत्तिभेद एकस्यैव ज्ञानस्य तत्तदवच्छिन्नत्वेन रूपेण प्रत्यक्षत्वानुमितित्वादीनां भ्रमत्वप्रमात्वादीनां च स्वीकारः ॥

### भूषणस्याद्वैतप्रक्रियाया अन्यथा ग्रहणेनात्राद्वैतमतनिरासः

अत एव 'पर्वतं पश्यामि' 'वह्निमनुमिनोमी'त्यादिलौकिकानुभवोऽपि। भूषणं तु—सर्वमिदमनुभवसिद्धमप्यप्रमाणयितुं यतते। स तु यत्नः सफलो

भविष्यति वा, न वेत्यन्यदेतत्। अद्वैतिनां प्रक्रियामादाय शाब्दापरोक्ष-वादं निरस्यतीति तदभिमानमात्रं दूरीकर्तुमद्वैतप्रक्रियाशिक्षणमात्रमत्र क्रियते ॥

### सत्यां प्रत्यक्षसामग्र्यां शब्दानुमानादिजन्यज्ञानमपि प्रत्यक्षमेव

तत्र पर्वतवह्न्युभयाकारा यदि वृत्तिरेका, तर्हि वह्निमत्पर्वतविषयका-नुमितिरेव जायताम्; यथा कवितार्किकचक्रवर्तिमते भ्रमे—'इदं रजतो-भयाकारैकैव वृत्तिः, परार्थानुमितौ च। न चात्र परिभाषाऽपि विसंवदते—यत् 'पर्वतो वह्निमानि'ति ज्ञानमेकमेव वृत्तिभेदेऽपि। तच्चानुमानप्रमाण-जन्यमेव। ततश्चानुमानजन्यमपि सति चक्षुस्सन्निकर्षे प्रत्यक्षमेव। अयमेव न्यायो 'दशमस्त्वमसी'त्यत्रापि। तत्रानुमानजन्यमपि ज्ञानं चक्षुःसन्निकर्ष-दशायां यथा प्रत्यक्षम्, एवं शब्दप्रमाणजन्यमपि चक्षुस्सन्निकर्षदशायां प्रत्यक्षमेवेति शारीरकमीमांसाभाष्यवार्तिके व्यक्तम् ॥

### प्रातिभासिकप्रत्यक्षत्वनिर्वाहो नेन्द्रियजन्यत्व-प्रत्यक्षत्वप्रयोजकत्वे

परिभाषा त्विन्द्रियजन्यज्ञानस्यैव प्रत्यक्षत्वे मनोऽनिन्द्रियतावादे सुखादीनामपि न प्रत्यक्षत्वनिर्वाह इत्यभ्युच्चयमात्रमभिप्रैति, अन्यथा—'इदं रजतमि'ति ज्ञानस्य रजतांशे प्रत्यक्षत्वं कथम्? न हि तत्र चक्षुः-सन्निकर्षः, अन्तःकरणवृत्तिर्वा वर्तते। सर्वलोकानुभवसिद्धमिदं नालौकिकं प्रत्यक्षं नाम। सूचितं चैतद् भाष्ये—"तथाच लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते" इत्यत्र। अधिकं वार्तिके व्यक्तम् ॥

### साक्षाद् मनोवृत्तिमादायैव प्रत्यक्षत्वम्, न त्विन्द्रियजन्यज्ञानत्वेन

न च कारणवैचित्र्येण प्रत्यक्षत्व-परोक्षत्वव्यवस्था संभवति; अन्यथा शुक्तिरजतादिज्ञानस्यापि कारणवैचित्र्येण परोक्षत्वमेव स्यात्, ज्ञानत्वमेव नास्तीति वा। मनोऽनिन्द्रियत्वकल्पे हि कारणवैचित्र्यात् सुखादिज्ञानमपि परोक्षं स्यात्, मनइन्द्रियत्वेऽपि बाह्यप्रत्यक्षे चक्षुरादिसन्निकर्षः सामग्री, सुखादिप्रत्यक्षे मनःसन्निकर्षमात्रं सामग्रीति सामग्रीवैचित्र्ये सुखादि-ज्ञानमेव प्रत्यक्षम्; साक्षान्मानसवृत्तिसम्बन्धात्, घटादिज्ञानं तु चक्षुरादि-सन्निकर्षजन्यं परोक्षं कथं न स्यात्। तत्र विषयेन्द्रियसन्निकर्षे समानेऽपि मनोधर्मं वृत्तिमादायैव प्रत्यक्षत्वं वक्तव्यम्। न च मनसः साक्षाद् विषयेण

सम्बन्धः, इति कथं प्रत्यक्षता चाक्षुषज्ञानादेः? अतः साक्षाद् मानसवृत्तिसम्बन्धमादाय प्रत्यक्षत्वम्, अन्यथा तु परोक्षत्वमित्येव व्यवस्था स्वीकर्तव्येति घट्टकुट्यां प्रभातम् ॥

परिभाषातात्पर्यं वृत्तिसम्बन्धे सति शाब्दादेरपि प्रत्यक्षत्वमिति

सति चैवं चक्षुस्सन्निकर्षे सति तद्द्वारा निर्गतान्तःकरणवृत्तिविषययोरेकदेशस्थत्वेन तदुभयावच्छिन्नं चैतन्यमेकं प्रत्यक्षमिति स्थितौ चक्षुस्सन्निकर्षे सत्यनुमानादिजन्यमपि ज्ञानं प्रत्यक्षमित्यकामेनापि स्वीकर्तव्यम्, मनःसन्निकर्षे निमित्ते सति प्रत्यक्षयोग्यवस्तुविषयकं ज्ञानं प्रत्यक्षमित्येव परिभाषानिष्कर्षः। व्यक्तीकृतं चैतत्परिभाषायां 'त्वं सुखी'त्यादिवाक्यजन्यं ज्ञानं शाब्दमपि प्रत्यक्षमेवेत्यादिवर्णनेन ॥

अनावृतसंवित्तादात्म्याऽनावृतसंविद्रूपत्वान्यतरस्यैव प्रत्यक्षत्वप्रयोजकत्वम्

अत एव शुक्तौ रजतभ्रमेण तदनुगुणं व्यवहरन्तं भ्रान्तं प्रति निर्गते दोषेऽपि शुक्तिमात्रं पश्यन्तं प्रति 'इयं शुक्तिरि'त्याप्तोपदेशजज्ञानेऽपि प्रत्यक्षत्वम्। तथा चानावृतसंवित्तादात्म्यम्, संविदोऽनावरणमात्रं वाऽवष्टभ्यैव घटादौ, संविन्मात्रे च प्रमाणजन्यप्रत्यक्षत्वव्यवहारः। संविन्मात्रस्यानावृतावस्थायामपि स्वयं चैतन्यत्वेऽपि न लोके प्रत्यक्षत्वप्रसिद्धिः; अप्रत्यक्षघटादितादात्म्येनैव प्रतीतेः ॥

ततश्च संविन् स्वयंप्रकाशाऽनावृतावस्थायाम्, प्रमाणजन्यवृत्त्याऽऽवरणनिवृत्तौ तु स्वप्रकाशमात्रं प्रत्यक्षमेव, 'दशमस्त्वमसी'त्यादौ चक्षुस्सन्निकर्षे सति वाक्यजन्यमपि ज्ञानं प्रत्यक्षमिति सिद्धम् ॥

सति प्रत्यक्षत्वप्रयोजके संवित्तादात्म्यमात्रेण सर्वदा न घटादिप्रत्यक्षापातः

संवित्स्वप्रकाशत्ववादोऽयं केवलं संविन्मात्रमादाय। उक्तं च परिभाषायां चैतन्यांशे प्रत्यक्षत्वमनुमित्यादावपि, भ्रमेऽपि तत्तद्घटावच्छिन्नं तु तत्तदुपाध्यंशे प्रत्यक्षं तदैव भवति, यदा तत्तदाकारवृत्तेः, तत्तद्विषयस्य चैकदेशस्थत्वेन भेदाभावः, संवित्स्वप्रकाशवादमाश्रित्यातीतानागतादितत्तद्विषयावच्छिन्नज्ञानानामपि प्रत्यक्षत्वापादनमिदं कथं भूषणं भूषणस्य ?

निष्कर्षस्तु—चिन्मात्रं स्वप्रकाशं चिद्रूपेण, तत्तदवच्छिन्नरूपेण तु स्वेतरस्वाकारवृत्तिप्रतिफलितसंवित्प्रकाश्यम् , संवित्तु प्रमाणजन्यया वृत्त्याऽऽवरणे भिन्ने सर्वोपाधिविरहितं स्वयंज्योतिरेवावतिष्ठते। तथाच संवित्पदेन—स्वप्रकाशं चैतन्यमात्रं विवक्ष्यते। वृत्तिस्त्वावरणनिवर्तकत्वमात्रेण ज्ञानमित्युपचर्यते। तदुक्तम्—"चैतन्यावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः' इति। वृत्तेश्चैतन्यावच्छेदकत्वे, तया तदावरणनिवृत्तौ वाऽनुमित्यादावपि वृत्तेरियमेव कथा, इति यदि तत्रापि तत्तद्विषयांशेऽनुमेयत्वादि प्रत्यक्षविषयत्वमिव घटादेः, तर्ह्यनुमित्यादिविषयत्वमिष्टमेवेति परिभाषायां व्यक्तम्। सर्वमिदमसंस्पृश्य भूषणमनुक्तोपलाम्भनेन दूषणजालेन ग्रन्थसङ्ख्यां वर्धयति ॥

तथाच स्वयंप्रकाशमपि चैतन्यमनाद्यविद्याकल्पितानादिसदादिरूपेण केनचन स्वाधिष्ठेयघटादितादात्म्येन 'सन् घटः' इत्येव भाति, केनचनानन्दादिरूपेण तदाऽज्ञाने। यथाच स्वप्रकाशस्याप्यज्ञानविषयत्वं नाविकल्पसहम् , तथाऽन्यत्र व्यक्तम्। स्वप्रकाशत्वनिर्वचनं त्वदुष्टं स्वावसरे व्यक्तीभविष्यति। सर्वथा तु चक्षुःसन्निकर्षे सति सन्निकृष्टविषयकं शाब्दमपि ज्ञानं प्रत्यक्षमेव ॥

### 'दशमस्त्वमसी'त्यत्र व्यक्तिमात्रस्य ज्ञानोपदेशः, न तु दशमत्वादेः, इति तदंशे प्रत्यक्षत्वमेव

अत एव 'दशमस्त्वमसी'त्यत्रापि शाब्दं ज्ञानं प्रत्यक्षम्। तत्र हि सर्वेऽपि सन्निकृष्टाः, नैव परिगणिताः। दशत्वसङ्ख्यापूरको कश्चन वर्तते। को वा स इति सन्दिहानं प्रति तद्व्यक्तिमात्रमुपदिश्यते। न हि दशमत्वमपि; तत्रातात्पर्यात् , इति तत्र दशत्वसङ्ख्यायाः, तत्पूरकत्वस्य च ज्ञानार्थं न तद्वाक्यम् , किन्त्वज्ञातव्यक्तिमात्रमुपदेष्टुम् ॥

तत्र च कार्यान्तरव्यग्राणां कंचन नद्यां मज्जन्तं दृष्ट्वा स्वेष्वेवान्यतमस्य मज्जनमिति भ्रमवशेन दशमव्यक्तिविशेषमात्राज्ञानेन परितपतः प्रति तत्स्वरूपोपदेशमात्रपरं हि 'दशमस्त्वमसी'ति वाक्यम्। तेन च स्वरूपमात्रं बोध्यम्। न चात्र चक्षुस्सन्निकर्षमात्रेण तत्स्वरूपस्य ज्ञानम् विनोपदेशं भवति; अन्यथा वाक्यवैयर्थ्यात् ॥

'दशमस्त्वमसी'त्यत्र प्रत्यक्षत्वमेव वाक्यजन्यस्यापि ज्ञानस्य;
चक्षुरादिसंनिकर्षस्यापि सत्त्वात्

एतेन—'दशमस्त्वमसी'तिवाक्यजनितगणनव्यापारानन्तरमेव दशमव्यक्तिग्रहणमिति—परास्तम्; प्रथमत एव प्रथम-द्वितीयादिगणनपूर्वकं स्वातिरिक्तनवपुरुषाणामपि गणनानन्तरं प्रयुक्ते वाक्ये स्वयं स्वातिरिक्तनवपुरुषगणनव्यापारस्यानपेक्षितत्वेन वाक्यादेव तत्र दशमव्यक्तिज्ञाने वाक्येनैव प्रत्यक्षस्य निर्वहणीयत्वात्। तच्च प्रत्यक्षमिति सर्वानुभवसिद्धम्; वाक्यजन्याया अपि वृत्तेर्घटादिप्रत्यक्षस्थल इव चक्षुरादिद्वारा निर्गतान्तःकरणवृत्ति-दशमव्यक्तिविषयोभयावच्छिन्नचैतन्यैक्यस्य प्रत्यक्षत्वनियामकस्य सत्त्वात्॥

तत्र शब्दप्रमाणापेक्षा तु विषयाकारवृत्त्युत्पादनार्थम्। पूर्वं हि चक्षुस्सन्निकर्षेऽपि विषयाकारावृत्तिः प्रतिबन्धकविशेषेण प्रतिबद्धा नात्मानमलभत, वाक्यप्रयोगानन्तरं तूत्पन्ना। तच्च यद्यपि शाब्दवृत्त्यनन्तरमेव ज्ञातुं शक्नोति, परं तु चक्षुःसन्निकर्षोऽपि तत्र वर्तते, इति विषयदेशव्याप्तिस्तदाकारवृत्तेः। अतस्तत्र प्रत्यक्षत्वम्; चक्षुरादिप्रत्यक्षसामग्र्यसमवधाने हि शाब्दज्ञानं परोक्षम्॥

तत्र 'घटमहं जानामी'त्यत्र प्रमातुरप्यात्मनो घटाकारवृत्तिमात्रनिर्गमेऽपि यथा प्रत्यक्षत्वम्; साक्षिणः स्वप्रकाशत्वात्, एवं 'दशमोऽहमि'त्यप्यहमंशे प्रत्यक्षम्। वृत्तिस्तु तत्रात्मतादात्म्यापन्नशरीरविषयिण्येव—यथा'गौरोऽहमि'त्यादौ, इत्युक्तशरीरांशे तदाकारवृत्त्या प्रत्यक्षत्वम्; प्रत्यक्षयोग्यस्यैव प्रत्यक्षत्वात्, 'अहं पुण्यवान्' इति वाक्यस्यापि पुण्यांशे न प्रत्यक्षत्वमन्तरेव तदाकारवृत्तेः सत्त्वेऽपीति परिभाषायां व्यक्तम्॥

तत्रात्मांशे साक्षिप्रत्यक्षत्वम्, शाब्दप्रत्यक्षत्वं तु तत्तादात्म्यापन्नस्य शरीरस्यैव॥

'दशमस्त्वमसी'त्यादौ शरीरांशेनैव प्रत्यक्षत्वं शाब्दम्,
न साक्ष्यंशेन; तस्य स्वप्रकाशत्वात्

अयमेव न्यायोऽन्येषां नवानामपि; तत्रापि शरीरांशस्यैव प्रत्यक्षत्वात्, अयमित्येव तत्र नवपुरुषप्रतीतिः, यो दशमः पूर्वं न ज्ञातः, ना'हमि'ति, तत्र नवानामपि सन्निकृष्टानामयमयमिति शब्देनैव प्रत्यक्षत्वम्, यथेयं शुक्तिरि'त्याप्तोपदेशजन्यस्य 'इयं शुक्तिरि'ति ज्ञानस्य, अन्धस्य तु चक्ष-

स्सन्निकर्षाभावात् परोक्षमेव ज्ञानं शाब्देन एकैकं स्पृष्ट्वा त्वगिन्द्रियेण स्पर्शनकाले त्वन्धस्यापि दशमोऽहमिति ज्ञानं वाक्यजन्यं प्रत्यक्षमेव। न हि प्रत्यक्षभ्रमस्य परोक्षज्ञानेन निवृत्तिरिति व्यक्तं तत्र तत्र ॥

"नाहं गौरः" इति प्रत्यक्षभ्रमो 'देहो नात्मे'त्युपदेशमात्रेण निवर्तते। अन्यथा 'देहो नात्मे'ति परीक्षादशायां विवेक्तॄणामपि देहभूषणार्था प्रवृत्तिर्नोपपद्येत ॥

एतादृशान् परोक्षज्ञानिन एव मनसि निधाय भाष्यम्—"पश्वादिभिश्चाविशेषादि"ति—"व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समानः-" इत्यन्तम्। भामती च—"शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति, न प्रतिपत्तारः। परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते"इति च। अत्र कल्पतरुरपि—अपरोक्षभ्रमो न यौक्तिकबाधादुच्छिद्यते"इति। न च देहात्मप्रत्यक्षबाधकदेहव्यतिरिक्तात्मस्वरूपसाक्षात्कारः प्रारब्धशेषप्रतिबद्धदेहात्मप्रत्यक्षभ्रमबाधकः कुत्रापि दृष्टः। प्रारब्धावशेषप्रतिबन्धकत्वं तु पूर्वमेव विवेचितं बाधितानुवृत्त्युपपत्तिप्रकरणे, इति परोक्षज्ञानेन शाब्देन, अन्येन वा नापरोक्षभ्रमस्य निवृत्तिः ॥

### शाब्दज्ञानं प्रत्यक्षत्वं प्रमाणम्

शाब्दे प्रत्यक्षे प्रमात्वं तु—'दशमस्त्वमसी'त्यादिवाक्यजन्यज्ञानादिति पूर्वमेव निदर्शितम्। श्रुतिरपि तु—"आत्मा वा अरे द्रष्टव्यः" इत्यादिः तत्र प्रमाणं श्रवणप्राधान्यपक्षे, निदिध्यासनप्राधान्येऽपि "शास्त्रदृष्ट्या तूपदेशो वामदेववत्"इति सूत्रम्। तस्याप्यन्यथा नयनेऽपि विवरणप्रस्थानस्येमानि मूलानि, इति नाप्रामाणिकत्वं शाब्दप्रत्यक्षवादस्य। प्रस्थानभेदविषये वक्तव्यमत्रैवोपक्रम एवोक्तम् ॥

### परोक्षस्यापि प्रत्यक्षभ्रमनिवर्तकत्वं भवत्विति शङ्कापरिहारः

अत्र परोक्षस्यापि प्रत्यक्षभ्रमनिवर्तकत्वमस्त्विति पर्यनुयोगासंभवस्यानुपदमेवोपपादितत्वात्, तत्रसङ्गमवलम्ब्य प्रत्यक्षागमयोर्दुष्टत्वादुष्टत्वविभागेन शब्दस्यापि प्रत्यक्षहेतुत्वासंभवोपपादनमनुक्तोपलम्भनम् ॥

### मानसप्रत्यक्षवादः प्रस्थानान्तरम्

तत्र मानस एव प्रत्यक्ष इति वादः प्रस्थानान्तरम्, शाब्दोऽपरोक्ष इति प्रस्थानान्तरमिति विवरणप्रस्थाने परिशीलिते नोक्तग्रन्थविस्तरस्य

प्रसङ्गलेशोऽपि। प्रत्यक्षस्य देहात्मभ्रमनिवर्तकत्वं भामत्याद्यवलम्बनेनोपपादितमेव ॥

### योगस्यापि साक्षात्कारजनकत्वमिति तु शाखान्तरम्, शाब्दापरोक्षवादोऽपि

"वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादीनां शास्त्रार्थध्याननिश्चितार्था इत्यादिविवरणं तु क्लिष्टमेव। "स्वाध्यायचक्षुरुत एकमस्य," "योगो द्वितीयमभिवीक्षणाये"त्यादिकमप्यसंप्रज्ञातसमाधेः, कुत्रचन शब्दस्यापि प्रत्यक्षज्ञानजनकत्वं गमयतः। न चात्र "योगो द्वितीयमभिवीक्षणाये"ति व्यर्थम् ॥

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ॥"

इति योग-ज्ञानमार्गयोर्द्वयोरुक्तत्वात् प्रस्थानभेदेन चक्षुर्द्वयाम्नानम्, अत एव—जाबालदर्शनोपनिषदि—समाधिनिरूपणप्रसङ्गे—

"यः पश्यति चात्मानं केवलं परमार्थतः ॥"

इति समाधौ केवलात्मदर्शनं प्रतिपाद्यते। तथा च मार्गभेदेनात्र चक्षुर्भेदः, न तदुभयं मिलितं चक्षुः, इति नात्र क्रमेणोभयं दर्शनमित्यत्रैव नैर्भर्यं भूषणोक्तरीत्या। तत्र यद्यपि बहुत्र बहूनि चक्षूंषि वर्णितानि; तथापि द्रष्टव्यादिवाक्यैकवाक्यतया शाब्दापरोक्षवादोऽपि प्रामाणिकः ॥

### न केवलं शाब्दस्य, किन्त्वनुमानादेरपि प्रत्यक्षलक्षणलक्षितत्वे प्रत्यक्षत्वमेव, मनोऽपेक्षामात्रमकिञ्चित्करम्

न चात्र शाब्दमेव प्रत्यक्षम्, किन्तु यथायथं चाक्षुषादिकमपि। किं बहुना ? पूर्वोक्तरीत्याऽनुमानम्, अनुपलब्धिरपि प्रत्यक्षमेव प्रत्यक्षलक्षणलक्षितत्वे, नान्यथा। परमार्थप्रकाशिकायाम्—अनुपलब्धेः प्रत्यक्षप्रमाणता निरस्तेति भूषणं लिखति। परन्तु को वा विप्रतिपद्यते, सर्वत्र ज्ञाने मनः कारणम्; तत्परिणामवृत्तेरेवाज्ञाननिवर्तनशक्तिमत्त्वात्—इति ? शब्दोऽपि मनोवृत्तिद्वारेणैव प्रत्यक्षं जनयति, न तु मनःसहितः शब्दोषि न प्रमाणम्, येन मनसैव निर्वाहे शब्दप्रमाणवैयर्थ्यं स्यात्। अन्यथा—यद्यखण्डाकारब्रह्मवृत्तिजननाय मनसः कारणत्वे शब्दप्रमाणवैयर्थ्यम्, तर्हि सर्वप्रमाणवैयर्थ्यम्; प्रत्यक्षादिष्वपि सर्वेषु तत्तद्विषया-

कारवृत्तिजननाय कारणस्यावश्यकत्वेन तत एव निर्वाहात्, किं चक्षुरादिप्रमाणैरपि ?

प्रत्यक्षत्वप्रयोजकमभानापादकाज्ञानाविषयत्वप्रयोजक-
चैतन्यविशिष्टत्वादि, नान्यत्, तत्तु शाब्देऽपि

तत्र वाक्यमाकाङ्क्षादिसहकृतमेव प्रमाणम्, इति प्रमाणप्रवृत्तिदशायामेव न सर्वबाधः, किन्तु तेन प्रमाणेनाखण्डाकारसाक्षात्कारानन्तरमेव, इति न प्रमाणप्रवृत्तिदशायामनन्तभेदज्ञानविरोधः। न चाकाङ्क्षादिरहितं प्रमाणं नाम। तदसहकृतस्याप्रामाण्यं तु नानिष्टम्। प्रमाणजन्यज्ञानस्य प्रत्यक्षत्वाप्रत्यक्षत्वयोरभानापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यत्वम्, अनावृतचैतन्यत्वं वा प्रयोजकम्, न तु यत्किंचित्प्रमाणजन्यत्वमात्रम्; अतीन्द्रियप्रमायाः, परार्थानुमानस्य च सर्वांशे परोक्षप्रमायाः, स्वार्थानुमानेऽपि वह्न्यंशेऽपरोक्षप्रमायाश्चानुत्पत्तिप्रसङ्गात्॥

अत एव 'त्वं सुखी'तिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वम्,
तत्र वाक्यप्रयोगवैयर्थ्यपर्यनुयोगायोगश्च

एतेन—'त्वं सुखी'ति वाक्यजन्यस्य ज्ञानस्य प्रत्यक्षता—व्याख्याता। तत्र यद्यपि सुखं साक्षिभास्यम्, वर्तमानं च; तथापि तत्प्रत्यक्षतादशायां 'त्वं सुखी'तिवाक्यमपि प्रमाणं वा, न वा। आद्ये तद्वाक्यजन्यज्ञानं परोक्षं वा, अपरोक्षं वा। तत्राद्ये प्रत्यक्षे सुखे परोक्षत्वायोगः, द्वितीये वाक्यजन्यं ज्ञानं प्रत्यक्षप्रमेति कथं 'त्वं सुखी'ति वाक्यस्य न प्रत्यक्षप्रमाजनकत्वम्॥

यद्यपि—सुखवर्तमानदशायां सुखिनः स्वसुखाऽऽपरोक्ष्याय वाक्यप्रयोगो नावश्यकः, तथापि केनचनापरमुद्दिश्य तत्प्रयोगावैयर्थ्यात्। वाक्यवैतथ्यमात्रेण तस्य प्रत्यक्षप्रमाजनकत्वं न वारयितुं शक्यते॥

यत्तु—तर्हि शब्दः करोत्विति स्वयं पर्यनुयुज्य स्वयमुत्तरति, समाने विषये प्रत्यक्षसामग्र्याः प्राबल्यात्, किंचित्करोतु—इति, तदिदं परेण तथावाक्यप्रयोगस्य, तदर्थमवगत्योत्तरस्याऽऽनुभविकत्वात् 'त्वं सुखी'ति वाक्यस्यापि प्रत्यक्षसामग्रीत्वात् वाक्यस्य प्रमाणस्याकिंचित्करत्वायोगाच्च न सङ्गतम्; उभयोरपि प्रत्यक्षसामग्रीत्वेन प्राबल्य-दौर्बल्यकथायाः अप्रसरात्॥

"साक्ष्यधीनप्रत्यक्षस्य परोक्षान्तःकरणवृत्तेश्चाभेदः" इति भूषणोक्तिस्तु प्रत्यक्ष एव सुखे परोक्षस्य विरुद्धत्वात्, समाने विषये प्रत्यक्षसामग्र्याः प्राबल्यवर्णनेन साक्षिप्रत्यक्षविरोधे परोक्षवृत्तेरेवानुदयाच्च, प्रत्यक्षस्य वाक्यजन्यत्वेऽविरोधमेव समर्थयति। तत्र यदि साक्षिप्रत्यक्षं न प्रमाणजन्यम्; अतः परोक्षवृत्तेर्न विरोधः, तर्हि प्रत्यक्षवृत्तेरपि प्रमाणजन्यायाः कथं विरोधः?

'दशमस्त्वमसी'त्यत्रापि मनोवृत्तिनिर्गमेण
प्रत्यक्षत्वनिर्वाहः

तत्र सन्निकृष्टे विषये 'दशमस्त्वमसी'त्यादौ सन्निकर्षश्चक्षुरादीन्द्रियसन्निकर्षो मनोनिर्गमद्वारमात्रतयोपयुज्यते शाब्दप्रत्यक्षतायाम्, ब्रह्मणस्तु प्रत्यगभिन्नस्यैव शाब्दप्रत्यक्षत्वात् प्रत्यगात्मदेश एवान्तःकरणस्य विद्यमानत्वाच्च न सुखादिप्रत्यक्ष इवेन्द्रियसन्निकर्षापेक्षा, इति मनोवृत्तिमात्रेण प्रत्यक्षत्वनिर्वाहः॥

शुद्धप्रत्यगात्मनोऽसाक्षित्वाद् न वृत्तिं विना भानम्

तत्र प्रत्यगात्मस्वरूपं शुद्धं न साक्षि, येन विना प्रमाणं प्रत्यक्षं स्यात्। शुद्धं हि नाज्ञानविरोधि; अतोऽज्ञानेनावृतम्, न तथा साक्षि; तस्यान्तःकरणोपहितस्य, प्रमाणानपेक्षनित्यसिद्धान्तःकरणोपहितस्य वा तेन रूपेण सर्वदाऽनावृतत्वाद् न प्रमाणजन्यवृत्तिं विना प्रत्यक्षत्वानिर्वाहः॥

शुद्धचैतन्यस्य सत्यपि सर्वदा सन्निकर्षे तद्भानार्थसस्त्येव प्रमाणापेक्षा

एतेन—शुद्धचैतन्यस्य व्यापकस्य नित्यं मनःसंयोगात् श्रवण-मननवेलायामपि कथं ब्रह्मणो न प्रत्यक्षमिति—परास्तम्; असति भेदवासनारूपप्रतिबन्धे तत्साक्षात्कारस्येष्टत्वस्य, प्रतिबन्धकनिरासार्थमेव मनन-निदिध्यासनोपयोगस्य च पूर्वं सिद्धान्तितत्वात्॥

'गौरस्त्वमि'त्यादिवाक्यजन्यज्ञानं तु शरीरान्तरवयव-
प्रत्यक्षत्वं न प्रयोजयति

अयमेव न्यायः शरीरस्य चक्षुरादिसन्निकर्षदशायां 'गौरस्त्वमि'ति वाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्रापि 'गौरोऽहमि'ति ज्ञानस्य 'गौर-

त्त्वमि'तिवाक्यजन्यस्य प्रत्यक्षत्वस्येष्टत्वात्, शरीरान्तरवयवानां तु सुखादेरिव मानसप्रत्यक्षायोग्यत्वाच्चक्षुःसन्निकर्षाभावेन चाक्षुषप्रत्यक्षायोग्यत्वात् गुरुत्वादेरिवातीन्द्रियत्वाद् न शाब्दप्रत्यक्षत्वम् ॥

सर्वदा शुद्धब्रह्मणो मनःसन्निकर्षेऽपि प्रमाणजन्यवृत्तेरेवाज्ञाननिवर्तनक्षम-प्रत्यक्षत्वाद् न सर्वदा प्रत्यक्षत्वं तस्य

यथा चैवं सति प्रत्यगभिन्नब्रह्मणि विनाऽपीन्द्रियसन्निकर्षं शाब्द-प्रत्यक्षत्वम्, तथाऽनुपदमेवोक्तम्। निर्विशेषस्य, सविशेषस्य वा मानस-प्रत्यक्षत्ववादेऽपि सर्वदा तस्य मनःसम्बन्धाद् विनैव श्रवणम्, मननं वा मनस्सम्बन्धस्य विद्यमानत्वात् किमर्थं वा परमात्मसाक्षात्कारार्थं वेदान्तापेक्षेति प्रश्नस्तु समान एव। तत्र यदि शब्दप्रमाणसहकृतस्यैव मनसः प्रत्यक्षकारणत्वम्, तर्हीदमेवात्र पृच्छ्यते—कुतो वा मनस्स-म्बन्धे सार्वदिके प्रमाणाऽपेक्षेति? ब्रह्मणि प्रत्यक्षलक्षणसमन्वयस्तू-पापादि ॥

प्राभाकरमते "इदं रजतमि"त्यत्र रजतांशे
न प्रत्यक्षत्वापत्तिः

'इदं रजतमि'त्यत्र तु रजतस्यानिर्वचनीयत्वस्याभानापादाज्ञाना-भावात्तदाकाराविद्यावृत्तेः, शुक्त्याकारचाक्षुषवृत्तेश्चैकदेशत्वाद् रजत-प्रत्यक्षत्वनिर्वाहोऽनिर्वचनीयतावाद इव रजतांशे स्मरणत्वेन तस्य प्रत्यक्षत्वं न संभवति, रजतांशे ज्ञानस्य स्मरणरूपत्वे रजत-शुक्त्यो रजताकारस्या-सत्त्वापादकाज्ञानाविषयत्वप्रयोजकाविशिष्टत्वेन, तस्यान्तःकरणदेश एव सत्त्वेन च वृत्तिद्वयस्य भिन्नदेशस्थतया न रजतप्रत्यक्षनिर्वाहः प्राभा-करमते ॥

भ्रमस्थले रजतप्रत्यक्षत्वनिर्वाहोऽनिर्वचनीय-
ख्यातावेव, नान्यत्र

अयमेव न्यायोऽन्यथाख्यातिवादेऽपि; तत्राप्यापणस्थरजतस्यैव संसर्गमात्राध्यासात्, प्रतियोगिप्रत्यक्षं विना संसर्गमात्रस्य प्रत्यक्षत्वा-योगाच्च न प्रत्यक्षत्वनिर्वाहः। सर्वज्ञानयाथार्थ्यवादे श्रीभाष्याभिमतेऽपि रजतं न शुक्त्यवयवनिष्ठम्, किन्तु शुक्तिगतरजतावयवकार्यमेव, इति शुक्ति-रजतयोरेकदेशस्थत्वाभावात्, तत एव तयोस्तादात्म्यप्रतीत्यनुप-पत्तेर्न शुक्ति-रजतवृत्त्योरेकदेशस्थत्वमिति न प्रत्यक्षत्वनिर्वाहः, अतो-

ऽनिर्वचनीयख्यातिरेव युक्ता, यत्र तु रजतप्रत्यक्षत्वं निराबाधम्। सूचितं चेदं सर्वं भाष्ये—"तथा च लोकेऽनुभवः—शुक्तिका हि रजतवदव-भासते" इत्यत्र ॥

अनिर्वचनीयख्यातिमेव "तथाच लोकेऽनुभवः" इति भाष्यं प्रसाधयति

तत्र 'लोकेऽनुभवः' इति पदाभ्यां रजतांशे स्मरणमित्याख्यातिवादः, लौकिकानुभवत्वादलौकिकानुभवविषयत्वं रजतस्येत्यन्यथाख्यातिवादः, शुक्तिका हीति पदादात्मख्यातिवादः, 'रजतवत्' इति वत्कारेण सत्ख्याति-वादः, सर्वज्ञानयाथार्थ्यवादश्च निरस्यते, अनिर्वचनीयख्यातिश्च समर्थ्यते। न चानिर्वचनीयख्यातिं विना प्रत्यक्षत्वनिर्वाहः, इति परमार्थप्रकाशिका-परीक्षापूर्वकमद्वैततत्त्वशुद्धौ विस्तृतम् ॥

शब्दस्य कुत्रचन परोक्षसामग्रीत्वेऽपि सति प्रत्यक्षसामग्रीत्वे प्रत्यक्षजनकत्वमेव

शाब्दप्रत्यक्षवादिनां मते न शब्दः परोक्षज्ञानस्यैव सामग्री, किन्तु प्रत्यक्षज्ञानस्यापि यथासंभवम्; जन्यज्ञानस्य प्रत्यक्षत्व-परोक्षत्वनियाम-कसत्त्वासत्त्वनिर्णयत्वात्, शब्दस्य परोक्षज्ञानसामग्रीत्वस्यैवात्राभावात् परोक्षज्ञानत्वमप्यास्तामिति शङ्का परास्ता। उक्तं च भूषणेन पूर्वं प्रत्यक्ष-सामग्र्या बलवत्त्वम्, इति सत्यां प्रत्यक्षसामग्र्यां परोक्षसामग्र्याः कथं कार्यकारित्वम्?

प्रत्यक्ष-परोक्षसामग्रीसत्त्वेऽपि जन्यज्ञानस्य प्रत्यक्षत्वमेव न परोक्षत्वमपि, इति नोभयानुभवापत्तिः, न वा परोक्षाधिष्ठानज्ञानेऽपरोक्षभ्रमः

सति चैवं प्रत्यक्षे सत्येव विषये यदि परोक्षः प्रकाशः स्यात्, तदा शुक्तित्वप्रकाशेऽपि रजतविषयकः परोक्षप्रकाशः स्यादिति शङ्का नाद्वैति-निबन्धे वर्तते, भाष्यते वा। तत्र प्रत्यक्षत्वेऽसत्त्वाभानापादकाज्ञानद्वयनि-वृत्तिः, परोक्षत्वेऽसत्त्वापादकाज्ञानमात्रनिवृत्तिरित्यद्वैतप्रक्रिया। एवं सति शुक्तित्वप्रत्यक्षतायां केनापि रूपेण कस्याप्यज्ञानस्य शुक्तित्वविषयकस्या-संभवात् कथं शुक्तित्वाज्ञानेनासत्त्वापादकमात्रेण रजतस्य परोक्षभ्रमः संभवति? परोक्षभ्रमे हि परोक्षमेवाधिष्ठानज्ञानं कारणम्, न त्वपरोक्षम-धिष्ठानज्ञानम् ॥

सति चैवं—शुक्तौ 'इदं रजतमि'ति ज्ञानं किं परोक्षं मन्यसे ? येन तद्विषयपरोक्षोपपादनं भवेदिति शतदूषणी शङ्का, यदि शुक्ति-रजतोभयांशेऽपि परोक्षज्ञानमभिप्रेत्य, अथवा शुक्तित्वांशे प्रत्यक्षत्वम्, रजतांशे तु परोक्षत्वमिति। आद्ये इष्टापत्तिः, द्वितीये त्वपरोक्षज्ञानापरोक्षभ्रमनिवर्तकत्वस्य पूर्वोक्तरीत्याऽऽवश्यकत्वाद् नोक्तभ्रमसंभावना ॥

### शुक्तित्वप्रत्यक्षे न रजतभ्रमसंभावना

इदमेवात्र पृच्छ्यते—शुक्तित्वप्रत्यक्षे रजतपरोक्षभ्रमः शुक्तित्वाज्ञानमूलो वा, न वा। आद्ये शुक्तित्वाज्ञानमसत्त्वापादकं वा, अभानापादकं वा। अभानापादकं तु शुक्तित्वप्रत्यक्षदशायां न तत्रावस्थातुमर्हति—यदि परोक्षभ्रमस्योपपादकं नाभानापादकमत्र संभवति। असत्त्वापादकं तु शुक्तित्वप्रत्यक्षदशायां न तत्रावस्थातुमर्हति। यदि परोक्षभ्रमस्योपपादनं प्रत्यक्षज्ञानापेक्षया परोक्षज्ञानस्य प्राबल्यमङ्गीकृत्यैव, तर्हि शुक्तित्वप्रत्यक्षदशायां रजतभ्रमोपपादनं न युक्तम्; उक्तशङ्कायाः पूर्वोक्तरीत्योत्थानासंभवादित्यद्वैतभावानवबोधः कस्येति भूषणप्रार्थनमेव मुख्यं मत्वा विपश्चित एव निश्चिन्वन्तु ॥

### शुक्तित्वप्रकाशे रजतप्रकाशायोगः

अतो नाद्वैतसिद्धान्ते शुक्तित्वप्रत्यक्षे रजतभ्रमस्य संभावनाऽपि। तत्र यदि वस्तुतः प्रत्यक्षत्वेऽपि परोक्षत्वं स्यात्, तर्हि शुक्तित्वप्रकाशेऽपि रजतप्रकाशः स्यादित्यापादनमेव न संभवति; उक्तरीत्या परोक्षस्य, अपरोक्षस्य वा रजतप्रकाशस्यासंभवात्। न ह्यधिष्ठानापरोक्षतायां तत्परोक्षत्वं कुत्रापि, येनोक्तमापादनं सिद्धवत्कृत्य तर्काभासत्वमस्य कृत्वाचिन्तया स्वीकरणेऽपि भवति ॥

न च प्रत्यक्षत्वम्, परोक्षत्वं चैकत्र समानाधिकरणं कुत्रापि। तत्र प्रत्यक्षत्व-परोक्षत्वकथेयं प्रमाणजन्यवृत्तिमादायैव, न तु स्वप्रकाशचैतन्यम्। स्वप्रकाशचैतन्यं हि नाज्ञानस्य विरोधि, इति तत्र तत्रासत्त्वापादकाज्ञानविषयत्वस्य, अभानापादकाज्ञानविषयत्वस्यचाविरोधात् 'सन् घटः इत्यादिप्रतीतौ परोक्षायां स्वप्रकाशत्वासत्त्वापादकाज्ञानाविषयत्वयोः सामानाधिकरण्याच्च शुक्तित्वप्रकाशे रजतप्रकाशः परोक्षोऽपि न भवितुमर्हतीति नाद्वैतिनामिष्टमिदम् ॥

यत्तु—स्वयंप्रकाशं चैतन्यं प्रत्यक्षं श्रवणवेलायां परोक्षज्ञानविषयत्वेनाद्वैतिभिः स्वीक्रियते, तत्रापरोक्षत्वस्य त्रिविधाज्ञानाविरोधित्वात्, प्रमाणाजन्यत्वाच्च न परोक्षज्ञानमात्रविरोधः शुक्तित्वप्रकाशे तु नैवम्। अतः आपादकस्य शुक्तित्वप्रकाशे नेष्टत्वम्। इदं शुक्तित्वप्रत्यक्षदशायां 'इदं रजतमि'तिज्ञानं बाधितार्थत्वाद् न बोधकम्; योग्यताविरहात्; अन्यथा "अग्निना सिञ्चती"ति वाक्यमपि प्रमाणं स्यात् इत्यापाद्यं परेषामनिष्टमेव ॥

'शङ्खः पीतः' इति सोपाधिकभेदभ्रमे भेदज्ञानस्याप्रतिबन्धकत्वादि'दं रजतमि'त्यादिज्ञानस्येव यावदुपाधिनिवृत्ति तद्वृति तत्प्रकारकत्वात् प्रामाण्यमेव, नाप्रामाण्यज्ञानास्कन्दितं तज्ज्ञानम्, नैवं निरुपाधिकभ्रमस्थले सुवचम्; विशेषदर्शनसामग्रीवैकल्यादेव हि शुक्तौ रजतप्रकाशो वक्तव्यः। न च शुक्तित्वप्रकाशे तद्वैकल्यम्, इति शुक्तित्वप्रकाशेऽपि रजतप्रकाशः परोक्षोऽपि दुर्वचः ॥

'सन् घटः' इत्यादिज्ञानेनावस्थाज्ञानानामेव नाशः, अतो न मुक्तिः,
अखण्डाकारवृत्त्या तु मूलाविद्याया निवृत्तौ मुक्तिः

निष्कर्षस्तु—अज्ञानमसत्त्वापादकत्वादिशक्तित्रयविशिष्टं शुद्धचैतन्याश्रितमेकम्। तच्च स्वोपादानकघटाद्यवच्छिन्नचैतन्यं यावन्ति ज्ञानानि तावत्स्वावस्थाविशेषापन्नमावृणोति, तत्तज्ज्ञानेन तु तत्तदवस्थाविशेषमात्रस्य नाशः, ब्रह्मावरकत्वं तु मूलाविद्यारूपेणैव ॥

तत्र सर्वत्र परोक्षज्ञानेनासत्त्वापादकशक्तिमात्रमवस्थाविशेषस्य वा, मूलाविद्याविषयत्वविशेषमात्रं वा निवर्तते, इति श्रवण-मननाभ्यामसत्त्वापादकाज्ञानविषयत्वविशेषा निवर्तन्त आनन्दांशाज्ञानविषयत्वेन साकम्, निदिध्यासनसाहित्ये त्वखण्डसाक्षात्कारेण यावत्पटुतमसंस्कारमभानापादकाज्ञानविषयत्वमात्राणि कानिचन निवर्तन्ते; अभ्यासपाटवे प्रारब्धावशेषस्यापि निवृत्तौ मूलाज्ञानं सर्वात्मना निवर्तते ॥

अत एव श्रवणादीनां पुनः पुनरभ्यासः। किं बहुना ? साक्षात्कारस्याप्याप्रायणमभ्यासः श्रुतिसूत्रसिद्धः ॥

श्रवणमात्रेण नाज्ञानस्य सर्वात्मना निवृत्तिः, किन्तु
साक्षात्कारत्वेनैव

तत्र ब्रह्मणो भानं नामाखण्डाकारवृत्त्याऽऽवरणे सर्वात्मना निवृत्तेऽनावृतस्वयंज्योतिःस्वभाव एव। यावत्प्रारब्धशेषसमाप्ति कानिचनावरणानि

निवर्तन्ते। तेन च विशद-विशदतरादिभावेन प्रकाशः, इति न सकृत् श्रवणेन साक्षात्कारोत्पत्तिमात्रेण वाऽभीष्टसिद्धिः। तत्र निदिध्यासनान्तेनाभानापादकाज्ञानप्रयुक्तावरणलेशस्य प्रथमं निवृत्तिः, तत्पाटवेन तु देहपातान्तेऽसति प्रतिबन्धे सर्वात्मनाऽज्ञाननिवृत्तिः, इति न साक्षात्कारात् प्राक् सर्वाज्ञाननिवृत्तिः, न वा साक्षात्काराभ्यासस्यापि वैतथ्यम् ॥

साक्षित्वेऽप्यात्मनो नाखण्डात्मनो भानम्, आनन्दात्मनाऽभानात् अत एव तत्स्वरूपे विप्रतिपत्तिः

आत्मनस्तु प्रमातृस्वरूपस्य साक्षित्वाद्यद्यपि नासत्त्वापादकमभानापादकं वाऽज्ञानमस्ति; तथापि साक्षिस्वरूपेणाप्यनानन्दतापादकमज्ञानम्, जीवत्वोपलक्षितरूपेण, ईश्वरत्वोपलक्षिताभिन्नरूपेण वाऽसत्त्वापादकम्, अभानापादकम्, किं बहुना? अखण्डब्रह्मात्मना त्रिविधमप्यज्ञानं वर्तते। अत एव श्रवणादिना परोक्षज्ञानेनासत्त्वापादकमेव ज्ञानं निवर्तते, तदा तु परोक्षज्ञानमेव निर्विशेषस्यापीति राद्धान्तः। इदमेवाभिप्रेत्य भाष्यम्—"सर्वो ह्यात्मास्तित्वं प्रत्येति न नाहमस्मी"ति "अस्मत्प्रत्ययविषयत्वाच्च प्रत्यगात्मप्रसिद्धेरि"ति प्रक्रम्य तद्विशेषं प्रति विप्रतिपत्तेरि"त्यन्तम् ॥

सत्यमनेन भाष्येण—एकरूपेण प्रत्यक्षत्वेऽपि रूपान्तरेण परोक्षत्वमिति प्रतीयते; तथापि प्रमातुरौपाधिकस्यानधिष्ठानत्वात्, तेन रूपेणाज्ञानविरोधित्वेऽपि शुद्धरूपेणाज्ञानविषयत्वस्य तावताऽप्यबाधात् तेन रूपेण प्रत्यक्षत्व-परोक्षत्वे विरुद्ध एव। शुक्तिप्रकाशोऽप्यधिष्ठानतत्त्वाप्रकाश इवेति न तस्मिन् सति परोक्षज्ञानोदयः। न हि श्रवणादिदशायां यदा परोक्षज्ञानम्, तदाऽधिष्ठानतत्त्वसाक्षात्कारोऽपि ॥

सत्यज्ञानादिश्रुतीनां व्यवहारदशायामनृतादितादात्म्येन प्रतीत्या ब्रह्मणोऽनृतत्वादिभ्रमनिवारणार्थं प्रवृत्तिः

"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतयस्तु—
"समारोप्यस्य रूपेण विषयो रूपवान् भवेत्।"

इति न्यायेनाऽनृतादिरूपेण भासमानं ब्रह्म "नेह नानाऽस्ती"ति विधयाऽनृतवस्तुतादात्म्यादिप्रयुक्तमनृतत्वं व्यावर्तयितुमेव। तत्र ब्रह्मस्वरूपतः सत्यमनृततादात्म्यमात्रेणानृतवद्भासते—यथेदं रजततादात्म्येन रजतवत्; वस्तुगत्या तु शुक्तित्वमेवेदंपदार्थस्य स्वरूपम्, इति बोधनाय यथा 'इयं शुक्तिरि'त्युपदेशः। तेन च रजतव्यावृत्तिरर्थसिद्धा। एवमेवात्राप्यधिष्ठानतत्त्वनिरूपणमेव लक्ष्यम् ॥

### कारणवाक्यावगतं सद्वितीयत्वं वारयितुं निर्विशेषवाक्यानि

तेन च परविद्यायामिव निर्विशेषतत्त्वमधिष्ठानस्वरूपमज्ञातं वस्तुगत्या सविशेषमिव भासमानमपि परमार्थतो निर्विशेषम्, इति प्राथमिकतत्त्वोपदेशगम्यमत्र सद्वितीयत्वं ब्रह्मणः सर्वविवर्तोपादानत्वेनैव, अधिष्ठानं शुद्धं प्रत्यगभिन्नमेवेति निरूपणार्थमेव—"तस्माद्वा एतस्मादि"त्यादिना "सदेव सोम्येदम्" "यत्तदद्रेश्यमग्राह्यं नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादाविव प्रवृत्तिः ॥

### अन्नमयादिद्वारा पुच्छब्रह्मोपदेशोऽपि वस्तुगत्या जीवस्य व्यावहारिकं सोपाधिकमेव तत्त्वमिति निरूपणार्थमेव। अतो यावत्प्रमाणजन्यज्ञानं ब्रह्मणो नापरोक्षत्वम्

यथा च ब्रह्मवल्याः पुच्छब्रह्मतायामेव तात्पर्यम्, अन्नमयादयः कोशाः पञ्चैव, तथा कठरुद्रोपनिषद्विशदयति। सा हि—

"अस्थिस्नाय्वादिरूपोऽयं शरीरं भाति दोहिनाम्।
योऽयमन्नमयो ह्यात्मा भाति सर्वशरीरिणः॥"

इत्युपक्रम्य—

तथा मनोमयो ह्यात्मा पूर्णो विज्ञानमयेन तु।
आनन्देन सदा पूर्णः सदा विज्ञानमयः सुखम्॥
तथाऽऽनन्दमयश्चापि ब्रह्मणोऽन्येन साक्षिणा।
सर्वान्तरेण पूर्णश्च ब्रह्म नान्येन केनचित्॥
यदिदं ब्रह्म पुच्छाख्यं सत्य-ज्ञानसुखाह्वयम्।
सारमेव रसं लब्ध्वा साक्षाद्देही सनातनम्॥
सुखी भवति सर्वत्र अन्यथा सुखता कुतः।

इत्यादिना सर्वां ब्रह्मवल्लीं निर्विशेषब्रह्मपरतया व्याचष्टे। अतः स्वरूपतोऽज्ञातं प्रपञ्चात्मना ज्ञातं च स्वरूपेणोपदिशति सर्वत्र श्रुतिः, इति सत्यानन्दादिरूपेणोपदेशोऽद्वैतमेवोपबृंहयति। अतः प्रमाणजन्यप्रत्यक्षविषये ब्रह्मणि तत्प्रत्यक्षतादशायां न कुत्रापि परोक्षज्ञानम्॥

### "सन् घटः" इत्यत्रापि न ब्रह्म सर्वात्मना प्रत्यक्षम्, अतो न तत्रापि प्रत्यक्षत्वं परोक्षत्वं च। अतः स्वरूपेण ब्रह्मज्ञानार्थं निदिध्यासनाद्यपेक्षा

'घटोऽस्ति' 'पटोऽस्ती'त्यादावपि न स्वरूपेण ब्रह्मापरोक्षम्, किन्तु सन्मात्रेण प्रकाशमानेनाधिष्ठानतामात्रेण, इति न प्रत्यक्षस्यैव परोक्षतया भानम्। 'सन् घटः' इत्यादिज्ञानं हि 'इदं रजतमि'तिवदधिष्ठानारोप्यभावेनाधिष्ठानतादात्म्यापन्नघटादिविषयकं नाधिष्ठानतत्त्वज्ञानम्, इति शुद्धब्रह्माश्रिताज्ञाननिवृत्तिर्निदिध्यासनादिसहकृतश्रवणजनिताखण्डाकारवृत्त्यैव, न घटज्ञानेन, इति न निदिध्यासनादिवैयर्थ्यम्॥

आप्तोपदेशेन शुक्तित्वप्रकाशो यदि शुक्तित्वसन्निकर्षदशायाम्, तर्हि शाब्दापरोक्षवाददृष्ट्याऽपरोक्षसाक्षात्कारे जाते न रजतावभासानुवृत्तिः, सन्निकर्षे त्वपरोक्ष एव शुक्तित्वप्रकाशः, इति न परोक्षज्ञानेनापरोक्षभ्रमबाधः, इति रजतावभासानुवृत्तिरप्रत्यूहा। अतः सामान्यतः शुक्तित्वप्रकाशे रजतावभासः स्यादित्यापादनं शुक्तित्वप्रकाशस्य परोक्षतामभिप्रेत्य न शक्यम्, येन शतदूषणी संगच्छेत॥

सर्वज्ञानयाथार्थ्यवाद एतादृशशङ्कानां नावसरः। स च श्रीभाष्याभिमतः—न प्रभाकरस्य, कस्याप्यन्यस्य वा, इति नात्र प्रभाकरावष्टम्भः किंचित्करः॥

### परोक्षप्रकाशे विपरीतभ्रमो न भवति

यत्तु—परोक्षप्रकाशेऽपि विपरीतभ्रमो भवतीति वादस्तु लोकप्रसिद्ध इति—भूषणम्, तत् परोक्षभ्रमे युज्यते, नापरोक्षभ्रमे। अपरोक्षभ्रमो हि प्रमातृचैतन्याभिन्नभासमानशुक्त्यवच्छिन्नचैतन्याश्रितशुक्तित्वविषयकतूलाविद्यापरिणामविशेषविषयः शुक्तित्वप्रकाशस्य परोक्षत्वे शुक्त्यवच्छिन्नचैतन्य-प्रमातृचैतन्ययोर्भिन्नदेशत्वेनाभेदायोगात् प्रमातृचैतन्यनिष्ठतूलाविद्यायाः शुक्त्यवच्छिन्नचैतन्यानाश्रितत्वाद् न शुक्ती रजतात्मना परिणमितुं क्षमते, न वा प्रमातृचैतन्याभेदो रजतस्य तत्र संभवति, इति न तत्र प्रत्यक्षतानिर्वाहः, परोक्षभ्रमस्त्वनाप्तोपदेशादिना दुर्वारः॥

जीवन्मुक्तानां घटादिज्ञानं तु बाधितानुवृत्तिमात्रमकिञ्चि-
त्करम्, न त्वधिष्ठानारोप्यविषयकत्वेन तस्य
भ्रमत्वम्

जीवन्मुक्तानां त्वधिष्ठानसाक्षात्कारवतां देहादिप्रतिभासः केवलं शुक्तिं शुक्तित्वेन गृहीतवतामपि रजतभ्रमवासनेव न कार्यकारिणी, मिथ्यात्वेनैव तदानीमपि गृहीतत्वात्। न हि तदा तेषां ब्रह्मस्वरूपावरणम्, किन्तु विक्षेपशक्तिमात्रमविद्याया अनुवर्तते, इति न प्रारब्धावशेषेऽपि सत्त्वेन प्रतीतिः, किन्तु नाम-रूपात्मना प्रतीतिमात्रम्। निरधिष्ठानकं हि तदा घटादिकं प्रारब्धेन प्रतिबन्धान्न साक्षात्कारबाध्यमित्येव तत्त्वम्, अधिकमुत्तरत्र॥

भ्रान्तित्वं हि ज्ञानस्याधिष्ठानारोप्योभयविषयकत्वेनैव, न त्वारोप्यमात्रप्रतिभासेन। जीवन्मुक्तानां तु नाम-रूपात्मनाऽऽरोप्यमात्रप्रतीतिः, न त्वधिष्ठानतया ब्रह्मणोऽपि भानम्, इति न तेषां ज्ञानं भ्रमो नाम; योगिनां प्रत्यक्षं तु वेदान्तोपबृंहितं योगर्धिमूलम्, न योगमात्रमूलम्, इति योगजप्रत्यक्षं स्वतन्त्रमेव प्रमाणमिति "स्मृत्यनवकाशदोषप्रसङ्गादि' ति सूत्रभाष्ये व्यक्तम्। संप्रतिपन्नं चेदं श्रीभाष्यसिद्धान्तेऽपि, यत्रापि श्रुतिविरुद्धापन्यायमूलकत्वेनैव साङ्ख्य-योगयोरप्रामाण्यं मन्यते। भामत्यादौ योगर्धिमहिमवर्णनमपि वेदान्तमूलकत्वमभिप्रेत्यैव, इति वेदान्तानुगृहीतत्वेन योगस्यापि साक्षात्कारहेतुत्वं न केनापि वार्यते। वेदबाह्यो योगो न योग इत्येव सिद्धान्त उभयत्रापि॥

योगोऽपि साक्षात्कारे श्रवणादिकम्,
सगुणोपासनमिव च हेतुरेव

आत्मतत्त्वसाक्षात्कारो यद्यपि योगेनापि भवति; विनापि मननम् परन्तु श्रुतवेदान्तस्यैव तत्र मननादिसहकारेणापरोक्ष्यात् योगासहकारेण साक्षात्काराद् विशेषं मत्वा—

"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव॥"

इति वासिष्ठम्। योगोऽप्यष्टाङ्ग उपनिषत्सु जाबालदर्शनादौ साक्षात्कारसाधनेषु निर्दिश्यते। योगस्य द्वितीयचक्षुष्ट्वमप्यत एव, इति श्रोतव्यवाक्येन दर्शनोद्देशेन श्रवणविधानेऽपि योगस्यापि साक्षात्कारसाधनत्वं न विरुद्धम्। भामत्यादिमतेऽपि योगस्य गतिरेवमेव वक्तव्या, इति नायं

नियमो भामतीप्रस्थानमेव साध्विति। ततो यदि भूषणं भामतीमेवानुसरति, तर्हि काममनुसरत्वापादचूडं तामेव, येन केनापि पथा यद्यद्वैतनिष्ठा भूषणस्य भवत्वित्येव भूषणी कामयते, मा नाम जरत्या अर्धांशभोगमात्रेणैव सन्तुष्यतु। यदि न शक्तिः, तर्हि यथाशक्तिन्यायेन भूषणं व्यवहरतु॥

### दर्शनपदं साक्षात्कारपरमपि

न हि दर्शनशब्दो ब्रह्ममीमांसायां साक्षात्कार एव प्रयुज्यत इति शतभूषणी, अन्ये वाऽद्वैतिनोऽभिप्रयन्ति। यत्र साक्षात्कारपरत्वं संभवति, तत्र न गौणोऽर्थो ग्रहीतव्यः। तत्र श्रोतव्यादिवाक्ये, शास्त्रदृष्टिसूत्रे च तत् संभवति। शाब्दसाक्षात्कारोऽपि प्रत्यक्षत्वप्रयोजके सति विवक्षितुं शक्यते। समर्थितश्च शाब्दापरोक्षवादः प्रसञ्जितसर्वदूषणनिरसनेन तत्र तत्र॥

तत्र भूषणं वदति—न शब्दजन्यप्रत्यक्षविषयं निर्गुणं किंचिदस्ति—इति, तद्यदि भामतीमतमाश्रित्य, तर्हि तन्मतेनैव निर्विशेषं ब्रह्म प्राप्यताम्—"ब्रह्मविदाप्नोति पर"मिति श्रुतिमेवावलम्ब्य। तत्र "ब्रह्मविदाप्नोती"ति वल्लीद्वयेऽपि कुत्रापि विदिधातोर्ज्ञेयब्रह्मस्वरूपमनुकृष्य तत्रोपासनाया अप्रतिपादनात् प्रस्तुतं वेदनं साक्षात्कारः,। "येऽन्नं ब्रह्मोपासते" "ये प्राणं ब्रह्मोपासते" "विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते" "तत्प्रतिष्ठेत्युपासीते"त्यादौ ब्रह्मवल्ल्यां "येऽन्नं ब्रह्मोपासते" त्यादिकमर्थवादो नोपासनप्रधानम्; अन्नमयादिस्तुतिमात्रत्वात्, "तदप्येष श्लोको भवती"ति प्रस्तुत्यैवाम्नानात्, अन्नमयादिरूपेण स्थूलारुन्धतीन्यायेन ब्रह्मज्ञानस्यैव प्रस्तावाच्च॥

### "ब्रह्मविदाप्नोती"ति प्रस्तुतं वेदनं "तद्विजिज्ञासस्वे"ति वचनैकवाक्यतया विचारसाध्यः साक्षात्कार एव

अत एव भृगुवल्ल्यां "तद्विजिज्ञासस्वे" ति ब्रह्मणो विज्ञेयत्वमात्रेण "ब्रह्मविदाप्नोती"ति प्रस्तुतवेदनस्य विज्ञानशब्देनोपक्रमः, प्रतिपर्यायम् "अन्नं ब्रह्मेति व्यजानादि" त्यादिनाऽऽनन्दपर्यन्तं 'व्यजानादि'त्येव निर्देशश्च। "येऽन्नं ब्रह्मेत्युपासते" इत्यस्योपासनापरत्वेऽपि तस्य प्रतीकोपासनामात्रपरत्वेन न ब्रह्मस्वरूपमात्रवेदनमुपासनात्मकं विवक्षितम्॥

एतेन—"तत्प्रतिष्ठेत्युपासीत" "तन्मन इत्युपासीते" त्यादिकमपि—व्याख्यातम्; तस्यापि ब्रह्मवेदनपरत्वाभावात्। अतोऽत्र "ब्रह्मविदाप्नोति

परमि"त्यस्य "तद्विजिज्ञासस्वे"त्यनेनैकवाक्यतया, "तपसा ब्रह्म विजिज्ञासस्वे" ति तद्विज्ञाने विचारस्य साधनतया विधानाद् विचारजन्यं ब्रह्मज्ञानं साक्षात्कारात्मकमेव नोपासनमिति फलति ॥

### वेदनस्य साक्षात्काररूपत्वे तैत्तिरीय-छान्दोग्ययोरेकवाक्यता 'गुणोपसंहार'न्यायेन

अत एवात्मविचारविधिपरे, तत्प्रमाणनिर्देशपरे वा "आत्मा वा अरे द्रष्टव्यः" इत्यादौ दर्शनं साक्षात्कारात्मकमेव विचारफलतया प्रतीयते, इति अथातो ब्रह्मजिज्ञासापदघटितसूत्रे "जन्माद्यस्य यतः" इत्युत्तरसूत्रे च ब्रह्मवल्ली-भृगुवल्लीद्वयविषयकत्वेन प्रतीयमानेऽपि भाष्यद्वयेऽपि श्रोतव्यादिवाक्यस्यैव विषय इति जिज्ञासावाक्यतयाऽनुसन्धानं तैत्तिरीयछान्दोग्ययोरात्मवेदनप्रस्ताव एकवाक्यतां गमयति ॥

### उपासीतपदघटितवाक्यमपि प्रकरणानुसारात् प्रतीकाद्युपासनपरमपि, निर्विशेषसाक्षात्कारपरमपि

"आत्मनमेव लोकमुपासीते"ति प्रतीकोपासनपरं नात्रोदाहरणतामर्हति" "आत्मेत्येवोपासीते"ति 'इत्येव'घटितं निरुपाधिकब्रह्मपरं तु तस्योपास्यत्वायोगात् साक्षात्कारपरमिति भाष्ये व्यक्तम्। अतो ब्रह्मवेदनं "ब्रह्मविदाप्नोती"त्यादौ साक्षात्काररूपमेव, नोपासनारूपम्। निर्विशेषब्रह्मपरे वाक्य उपासीतपदमपि साक्षात्कारपरमिति सर्वमवनद्यम्। भेदसाक्षात्कारस्य न परोक्षज्ञानेन बाधः, किं त्वपरोक्षसाक्षात्कारेणैवेति व्यक्तं तत्र तत्र ॥

### परोक्षदेहात्मविवेको नाज्ञाननिवर्तकः, किन्तु शुद्धप्रत्यगात्मनिर्णय एव

तत्र देहातिरिक्तात्मनिश्चयः शास्त्रीयो यावदखण्डाकारसाक्षात्कारं परोक्षो न देहात्मभ्रमं निवर्तयति, विशेषतस्तु न सूक्ष्मशरीरादविवेकम्; कर्मानुष्ठानस्य स्थूलदेहविवेकमात्रेण निर्वाहात्। अत एव स्वर्गादावपि सूक्ष्मशरीरादिकं सूक्ष्मभूतैः साकमनुवर्तत इति व्यवस्था 'तदन्तरप्रतिपत्ति'सूत्रे तृतीयाऽऽद्ये। अपरोक्षभ्रमः कुत्रापि न परोक्षज्ञानेन निवर्तत इति, बहुश आम्रेडितम् ॥

### अधिष्ठानतत्त्वज्ञानेन सान्तःकरणाज्ञाननाशादद्वैतसिद्धिः

अधिष्ठानतत्त्वज्ञानं हि ब्रह्मप्राप्तिसाधनम्। तच्च भ्रान्त्युपादाननिवृत्ति-द्वाराऽज्ञानप्रयुक्तानामपरेषामपि निवर्तकम्। वृत्तिज्ञानमपि सान्तःकरण-मज्ञानप्रयुक्तत्वेन वृत्तिज्ञानेनैव नश्यति, तदुपादानाज्ञाननाशेन वेत्यन्य-देतत्॥

### अज्ञाननिवर्तकमधिष्ठानज्ञानमेव, नोत्तरज्ञानादि, असमानविषयकत्वात्

तत्र तत्त्वज्ञानमधिष्ठानज्ञानमेव; अज्ञानसमानविषयकत्वात्, न यत्किं-चिद्विषयकम्; असमानविषयत्वेनाज्ञाननिवर्तकत्वाभावाद् यस्य कस्याप्यु-त्तरज्ञानस्य। अतः पूर्वज्ञानस्योत्तरज्ञाननाश्यत्वेन निर्वाहात् तत्राधिष्ठान-ज्ञानमेव तत्त्वज्ञानमिति न नियम इति शतदूषणी न विकल्पसहा॥

भूषणं तु पृच्छति—अधिष्ठानतत्त्वज्ञानमेव तत्त्वज्ञानमित्येतावता निवृत्तिविषये किं साधितं भवतीति? अधिष्ठानज्ञाननाश्यत्वं मिथ्यात्वमि-त्युक्ते भ्रमनिवृत्तिर्नोपपादिता भवति; यत्किंचिदुत्तरज्ञानेनापि तन्नाशदर्श-नादधिष्ठानज्ञानत्वेन कारणत्वाभावात्—इति॥

### मूलाज्ञाननाशं विना भ्रमनाशः सर्वात्मनाऽनाशात् शङ्काविषयमिवानर्थाय स्यात्

तत्र ब्रह्मणः सद्वितीयत्वज्ञानम्, यस्याद्वितीयत्वज्ञानेनैव बाधः। सद्वि-तीयत्वं तु सर्वस्य केनचन रूपेणाज्ञाते स्वयंप्रकाशे तदाश्रिततद्विषया-ज्ञाननिबन्धनमज्ञातांशस्यापि ज्ञानेनैव निवर्तते; ज्ञानाज्ञानयोः समानविष-यकत्वात्। तत एव च ज्ञाननिवर्त्यत्वेन द्वितीयस्य सर्वस्यारोपितस्य मिथ्या-त्वस्य सिद्धिः। सत्यमुत्तरज्ञानेन पूर्वज्ञानस्य नाशो भवति भिन्नविषयकत्वे-ऽपि; तथापि भ्रमोपादानाज्ञाननिवृत्तिमन्तरा न भ्रान्तिबाधो भवति; अन्यथा हि संस्कारात्मना विद्यमाना भ्रान्तिः, भ्रान्तिकार्यस्मृतिरूपा सती शङ्काविषादिकमिव|महते दुःखाय स्यात्॥

### उत्तरज्ञानमात्रनाश्यत्वे भ्रमस्य तत्त्वातत्त्वकथाऽयोगः, अतोऽधिष्ठानज्ञानत्वेनैव ज्ञानस्याज्ञाननिवर्तकत्वम्

अयमेव न्यायः शुक्तिरजतादिस्थलेऽपि; अन्यथा तत्राप्युत्तरज्ञानमात्र-नाश्यत्वे भ्रमस्य, तत्रापि भ्रान्तिनिवृत्तेः सिद्धत्वात् कालान्तरभावितत्त्व-

ज्ञानविवर्त्यत्वस्य निवृत्ते भ्रमेऽसंभवात् तत्त्वज्ञानस्यापि तत्पूर्वभाविज्ञान-मात्रनाशकत्वस्यैवाऽऽपत्त्या तत्त्वातत्त्वकथैवास्तमियात् ॥

तत्र यद्यज्ञानेन सह स्वतन्त्रं विषयबाधकत्वेनैव तत्त्वज्ञानत्वम्, तर्ह्यु-त्तरज्ञानाधीनपूर्वज्ञाननिवृत्तेः स्वोपादानात्मनाऽवस्थितिमात्रम्, मिथ्यात्वं तु भ्रमस्य स्वोपादानात्मना नाश्यत्वमेवाधिष्ठानज्ञानकार्यमित्यङ्गीकारे न कोऽपि दोषः। अधिष्ठानज्ञाननिवर्त्यत्वं स्व-स्वोपादानान्यतरस्यैवेत्यत्रैव निर्भरः, अज्ञाननिवर्तकत्वं त्वधिष्ठानज्ञानत्वेनैव, नान्यथेति हि व्यवस्था ॥

तत्र भ्रम-तद्विषयोभययोरधिष्ठानज्ञानेनैव निवृत्तिर्बाधापरपर्याया, अन्यथा तु भ्रम-विषययोर्निवृत्तिमात्रम्, बाधस्तु तदुपादानात्मनाऽपि नाशा-त्तत्त्वज्ञानेनैव। प्रातिभासिकोत्पत्तिस्तु समर्थयिष्यते ॥

अविद्येतरनाशे तत्त्वज्ञानातिरिक्तमपि कारणम्, अविद्या-
नाशे तु तत्त्वज्ञानमेव हेतुः

तत्र नाशशब्दस्तत्त्वज्ञानातिरिक्तोपायाधीन एवेति नायमेकान्तः। अज्ञाने तत्प्रयुक्तजीवेशभेदादौ च तत्त्वज्ञानमात्राधीनेऽभावेऽपि "अज्ञानं तत्त्वज्ञा-नेन नश्यति" त्यादौ नाशशब्दप्रयोगात्। तथा च गीता—

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।"

इति। प्रातिभासिकस्य विषयस्यापि न तत्त्वज्ञानातिरिक्तेन नाशः। नाश-बाधयोर्वैलक्षण्यं तु तत्र तत्र व्यक्तम्। तत्राज्ञाननिवृत्तिः स्वरूपप्रच्युति-श्चेत्यनर्थान्तरम् ॥

स्वरूपप्रच्युतिः कारणात्मनाऽप्यभाव एव,
तत्त्वज्ञानादेव मिथ्यात्वं च

तत्र तत्त्वज्ञानातिरिक्तनिबन्धनेऽभावे न स्वरूपप्रच्युतिः; स्व-स्वकार-णोभयात्मनाऽभावस्यैव स्वरूपप्रच्युतिपदार्थत्वात्, तत्त्वज्ञानेन स्वोपादान-कारणात्मना विद्यमानस्य कार्यस्याप्युपादानस्वरूपत्वादुपादानाज्ञाननाश एव स्वरूपप्रच्युतिः; अन्यथा तु कारणात्मनाऽवस्थानमित्येव युक्तम्। तच्च मिथ्यार्थ एव युक्तम्; शुक्तिरूप्यादौ दर्शनात् ॥

दृश्यत्वं दृक्तादात्म्यम्, वृत्त्युपहितत्वम्, स्वान्यूनसत्ताकं
वा न व्यभिचारि

मिथ्यात्वं तु प्रपञ्चस्य तत्त्वज्ञाननिवर्त्यत्वरूपं दृश्यत्वहेतुकानुमानेन। तत्र दृश्यत्वं दृक्तादात्म्यमव्यभिचरितमिति न्यायचन्द्रिका। वृत्तिविषयत्व-

मपि मिथ्यात्वे हेतुर्भवतीत्यद्वैतसिद्ध्यादौ व्यक्तम्। तत्र ब्रह्मण्यपि वृत्तिविषयत्वरूपं तद् यद्यपि वर्तते; तथापि ब्रह्मन्यूनसत्ताकं तत् इति धर्म्यन्यूनसत्ताकस्य तस्य विवक्षणाद् ब्रह्मणि व्यभिचारवारणं शतभूषण्यामुपपादितम्, वस्तुतस्तु वृत्तिविषयत्वं वृत्तिविशिष्टत्वमेव हेतुः, ब्रह्म तु वृत्त्युपहितम्, इति, न तत्र व्यभिचारः ॥

### फलव्याप्यत्वं न दृश्यत्वम्

भूषणं तु लिखति—फलव्याप्यत्वं दृश्यत्वमिति शतभूषण्यामुक्तम्—इति न हि शतभूषणी मिथ्यात्वहेतुं दृश्यत्वं फलव्याप्यत्वरूपं कुत्रापि वदति, घटादीनां प्रत्यक्षत्वं प्रमातृसत्तातिरिक्तसत्ताकत्वाभावेन, इति तेषु प्रत्यक्षेष्वध्यस्तत्वमात्रमुपपादितम्, तावता फलव्याप्यस्य मिथ्यात्वं यद्यपि भवति। न हि तावता मिथ्यात्वहेतु दृश्यत्वं फलव्याप्यत्वम्। वृत्तिप्रतिफलितचैतन्यभास्यत्वरूपं न मिथ्यात्वव्याप्तम्। नित्यपरोक्षेषु, अज्ञाने च व्यभिचारात्, फलव्याप्यत्वातिरिक्तस्यैव दृश्यत्वस्यानुमाने हेतुत्वेन सिद्ध्यादावुक्तत्वाच्च ॥

अत्र भूषणं लिखति—अद्वैतिनां वृत्तिपदार्थस्यैव श्रीभाष्यसिद्धान्तेऽनङ्गीकाराद् वृत्तिविषयत्वं दृश्यत्वमेव दुर्वचम्—इति। तर्हीदमेवात्र पृच्छ्यते—किं लोके वृत्तिपदार्थ एवाप्रसिद्धः, किं विशिष्टाद्वैतसंमतमेव दृश्यत्वं न लोकसिद्धमिति ?

### वृत्तिप्रसिद्धिः श्रुत्यादिषु, अतो न दृश्यत्वाप्रसिद्धिः, न च साध्याप्रसिद्धिरपि

वृत्तिपदार्थो हि 'ज्ञानमुत्पन्नं नष्टमि'त्यनुभवात् किमपि जन्यज्ञानं लोकानुभवदृढीकरणार्थं निर्वक्तव्यम्। तत्र च कामादीनामिव श्रुतौ "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इत्यत्र धीरपि कश्चन मनोधर्मः श्राव्यते। सा चाद्वैतिनां, साङ्ख्यानाम्, द्वैतिनां च दृष्ट्या वृत्तिरेव, भूषणस्य तु सा न कोऽपि पदार्थः। पारिभाषिकमपि 'ज्ञानमुत्पन्नं नष्टमि'त्यनुभवसिद्धं न किमपि भूषणेन स्वीक्रियते, अस्तु नाम ॥

साध्यप्रसिद्धिस्तु, निर्विशेषप्रसिद्धिं चाङ्गीकृत्यैव मिथ्यात्वसाधनम्, ब्रह्मणि व्यभिचारापादनं च

भूषणं हि दृश्यत्वहेतुमेव स्वमतप्रसिद्धं किमपीति न लिखति, तेन ज्ञायते–मिथ्यात्वरूपं साध्यं नाप्रसिद्धमिति भूषणं हृदयेनानुमोदते—इति। तच्च शुक्तिरूप्यादौ सिद्धमिति कृत्वा यद्युक्तानुमाने साध्यप्रसिद्धिरङ्गीक्रियते, तर्हि शुक्तिरूप्यादिकं प्रातिभासिकमङ्गीकृतमेव। तेन च प्रातिभासिकी सत्ता स्वयमङ्गीकृता। ब्रह्म तु न बाध्यम्, तन्निर्विशेषमेवाप्रसिद्धं भूषणसिद्धान्त इति त्वन्यदेतत्, परन्तु तदप्यङ्गीकृत्यैव व्यभिचारापादनं परमतरीत्येति वक्तव्यम्॥

ब्रह्मसत्यत्वानुमानमपि भूषणस्य, तस्य सविशेषस्य सत्यत्वासंप्रतिपत्त्या न संभवति। पक्षस्तु व्यावहारिक एव; सत्ताभेदमादायैवोक्तानुमानात्

न च परमतदृष्ट्या मिथ्यात्वाभावः सविशेषब्रह्मणः, इति पारमार्थिकसत्त्वं तस्याप्यङ्गीकृत्यैव दूषणोद्भावनमिति वक्तव्यम्। पक्षस्तु न प्रातिभासिकः, न पारमार्थिकः; किन्तु तदुभयव्यतिरिक्तः 'सन्नि'ति प्रतीतिविषयश्च यावद्ब्रह्मज्ञानमबाधाद् व्यावहारिक इत्यर्थसिद्धम्। तत्र प्रपञ्चगतसत्तायां नामनि विवादेन न किमपि प्रयोजनम्। शुक्तिरूप्यापेक्षयाऽधिकं सत्त्वम्, ब्रह्मापेक्षया न्यूनं सत्त्वं च पक्षस्येति निगदव्याख्यातम्। एतन्मिथ्यात्वानुमानं सत्ताभेदमादाय प्रयोक्तुं शक्यते॥

तत्र दृश्यत्वं न प्रत्यक्षविषयत्वादिरूपं भूषणविकल्पितम्

तत्र वृत्तिविषयत्वमन्तःकरणवृत्त्युपाधिकत्वमात्रम्, नान्यत्—प्रत्यक्षविषयत्वम्, अनुभवविषयत्वम्, ब्रह्मचैतन्यविषयत्वं। तत्राद्यं नित्यपरोक्षे व्यभिचारि। वाद्वितीयेऽनुभवस्य ज्ञानसामान्यपरत्वे साक्षिण्युपहिते, सर्वेषु साक्षिभास्येषु च भागासिद्धिः। अत एव न तृतीयोऽपि॥

मिथ्यात्वं बाध्यत्वं सिद्धं शुक्तिरूप्यादौ, व्यावहारिके साध्यम्

तत्र मिथ्यात्वं रजतस्याज्ञानेन सहैव नाशाद् बाधापरपर्यायाद् बाध्यत्वम्। अयमेव न्यायो रजताकारवृत्तावपि कारणात्मनाऽवस्थितायाम्। अत एव मिथ्याज्ञानं बाधितमिति व्यपदेशः। इदं प्रातिभासिकं सदभिप्रेत्य।

तदपि श्रौतं भाविनं बाधमादाय। व्यावहारिकेषु तु घटादिषु यावदुपादाननाशं निवृत्तिमात्रम्, यदा स्वरूपात्मना तस्यावस्थानम्॥

दोषनिवृत्तावेवाधिष्ठानज्ञानमिति प्रातिभासिकाभिप्रायम्,
नाविद्याऽभिप्रायम्, अतोऽधिष्ठानज्ञाननिवर्त्यत्वम-
विद्याया उपपन्नम्; काचादिवैलक्षण्यात्

यत्तु—भ्रान्तिज्ञानकारणानुच्छेदे तथावस्थितप्रत्यक्षो नोदियादिति—शतदूषणी, तदिदं भ्रान्तिज्ञानकारणदोषानुच्छेद इत्यभिप्रेत्यैव, इति दोषनिवृत्तावेवाधिष्ठानज्ञानं स्यात्। दोषश्चाविद्यैव। अतोऽविद्योच्छेद एवाधिष्ठानसाक्षात्कारः स्यात्, न तु पूर्वमिति। तत्र शतभूषणी-काचादिदोषवैलक्षण्यमविद्यादोषस्य यत्पूर्वमुपपादितम्, तदनुसृत्याविद्यातिरिक्तदोषकारणाभिप्राया. नाविद्यादोषाभिप्रायेति—लिखति। अत्र च पूर्वोक्तमेव सर्वमत्राप्यनुसन्धेयम्॥

यत्तु भूषणम्—आवरणनिवृत्तौ घटादिप्रकाश इति—निदर्शयति, तदपि काचादिनिदर्शनाद् न वैलक्षण्यमभिप्रेत्य। तत्र विवरणमतेऽविद्याया दोषत्वं ब्रह्मण आवरणेन, तस्याविद्यापरिणामात्मना भानेन विवर्तोपादानत्वेन वा, स्वस्य तु स्वत एवोपादानत्वेन तत्तदात्मना परिणामित्वान्न तत्र दोषविधया कारणत्वम्। शुक्तिरूप्यादिस्थले ह्यविद्या तत्त्वज्ञानैकनाश्या दृष्टा, न तु काचादिवत् तत्तदधिष्ठानज्ञानातिरिक्तेन। अतो दोषनाशस्याधिष्ठानतत्त्वज्ञाने हेतुत्वेऽप्यविद्यारूपकारणान्तरनाशोऽधिष्ठानज्ञानादेव। तत्र हि दोषद्वयं कारणम्—काचादि, अविद्या च, इत्यविद्यारूपकारणनाशः सर्वत्राधिष्ठानज्ञानानन्तरमेव; अन्यथा काचादिदोषनाशेऽप्यविद्यारूपदोषस्य सत्त्वेन शुक्तित्वप्रत्यक्षोदयस्तत्रापि न स्यात्। अस्तु वा तत्र शुक्तित्वज्ञानेन काचादिदोषनिवृत्तिरपि भवितुं योग्यमिति। ब्रह्मणि त्वविद्यैकैव दोषः प्रस्थानद्वयेऽपि। तस्य दोषस्य निवृत्तिः केन तत्त्वज्ञानातिरिक्तेन भवितुं शक्या? इति दोषान्तरविषयो नियमो नाविद्यादोषे संभवति; काचादिवत् तन्निवर्तकस्य तत्त्वज्ञानातिरिक्तस्याभावात्॥

भामतीमतेऽविद्यानाशे जगतो ब्रह्मव्यतिरेकेणाभावमात्रम्,
न नाशः। न हि निमित्तकारणनाशात् कार्यनाशः

तत्र भामतीमते, यत्राविद्या दोषविधया निमित्तकारणमात्रम्, तत्र निमित्तकारणस्य तस्य तत्त्वज्ञानादेव निवृत्तिः। इयान् विशेषः—यद्

भामतीमते तत्त्वज्ञानेनाविद्यानाशे ब्रह्मणो विवर्तमानताऽविद्याविषयत्वप्रयुक्ताऽपसरति, जगन्निवृत्तिस्तु तत्र ब्रह्मणो विवर्तमानतापगमात् ब्रह्मव्यतिरेकेणाभावमात्रम् , न तु तत्र निमित्तकारणाविद्याया नाशेन जगतो नाशो नाम। तत्र कारणनाशात् कार्यनाश इति न्यायः कार्यस्य कारणभावमापन्नस्य नाशे; कारणनाशे कारणात्मनाऽप्यभावाद् मिथ्यात्वम् , बाध्यत्वं वा, न निमित्तकारणनाशात् कार्यनाश इत्युक्तम् ॥

### निमित्तकारणनाशात् कार्यनाश इत्यत्र न किमपि प्रमाणम्

तत्र भूषणोक्तेषु दर्शनेषु नैकमपि प्रकृतानुगुणम्। इदं हि वाक्यं शतभूषण्याम्—अविद्यानाशात् कार्यनाशः, अविद्यानाशश्च तत्त्वज्ञानादिति प्रसङ्गमुपलक्ष्य प्रवृत्तम्। अतो जगतः पूर्वं कारणान्तरेण नष्टस्यापि बाधव्यवहारो नायुक्त इति व्यवस्था फलति। भूषणं त्वत्र न काऽपि सङ्गतिरिति निमित्तकारणनाशादपि कार्यनाशो भवतीत्यत्र कानिचन निदर्शनानि गौतमसूत्राद्युपक्षेपेणासङ्गतमपि विषयं निरसनीयं मत्वा वदति। सङ्गतिस्त्वत्र कारणोच्छेदोऽविद्यानिवृत्तिपक्ष उपादानकारणोच्छेद एव विवक्षित इति वाक्येनाप्यवगम्यते। भवतु प्रासङ्गिकीयं कथा ॥

### भामतीमते सद्विवर्तवादः, न तु सत्कार्यवादः, यत्रैव कारणोच्छेदेन कार्योच्छेदः, सत्ताभेदादि च

तेन च भामतीमते जगन्निवृत्तिरविद्यानिवृत्त्यैव स्वीकृतेत्यसदनुवादः। न चात्र निमित्तकारणनाशेन जगन्निवृत्तिः, किन्तु ब्रह्मणोऽनावृतसंविन्मात्रतैव, अविद्योच्छेदेन प्रपञ्चनिवृत्तिस्त्वत्र प्रपञ्चस्य ब्रह्मव्यतिरेकेणाभाव एव। तत्र वेदान्तमते सद्विवर्तवादस्य स्वीकारात् , ब्रह्ममात्रस्य विवर्तोपादानस्य पारमार्थिकत्वस्यैव स्वीकारात् , अविद्याया बाधेन तत्कार्याणामपि बाधात् , ब्रह्मव्यतिरेकेण सर्वाभावमभिप्रेत्यैवोपादानकारणनाशात्कार्यनाशः, न तु सत्कार्यवाद इवावस्थाविशेषादिकम्। सद्विवर्तवादोऽयं ब्रह्मदृष्ट्या, अविद्यादृष्ट्या तु सत्कार्यवादः। तत्र सत्कार्यवादः सर्ववेदान्तसंमतो यावदविद्यासत्त्वं व्यावहारिकत्वमात्रमभिप्रेत्यैव, परमार्थतस्तु तस्या अपि तत्त्वज्ञाननिवर्त्यत्वात् द्रव्योच्छेद इवात्र तस्यासिद्धत्वं तु मतान्तरदृष्ट्या, नाद्वैतदृष्ट्या; मिथ्याभूताया एवाविद्याया जगदाकारपरिणामेन तत्र यावद्बाधं सत्कार्यवादस्वीकारात्। अतः कारणोच्छेदेन कार्योच्छेदोऽव्याहतः ॥

शुक्तिरूप्यादिस्थले भ्रान्ति-तद्विषययोर्बाधस्तत्त्वज्ञानेनैव,
नाशस्तु निमित्तकारणनाशेन

कारणं चात्र परिणाम्युपादानमविद्या, नाऽऽत्मा, यद् विवर्तोपादानमात्रम्। तत्र प्रातिभासिकभ्रान्तौ तूलाविद्यैव भ्रान्तेरप्युपादानम्, व्यावहारिकप्रपञ्चे घटादौ मृदादिपरिणामेऽपि मृदोऽप्यविद्यात्मनैव कारणत्वम्, यथा घटादिकं श्रीभाष्यादिमते प्रकृतिपरिणामः, प्रकृतिविशिष्टब्रह्मपरिणामो वा। तथैवान्तःकरणपरिणामोऽपि वृत्तिरविद्यापरिणाम एव; अविद्यात्मनैव वृत्तिरूपेणान्तःकरणस्यापि परिणामात्। न च शुक्तिरूप्यस्थले रूप्यज्ञानमन्तःकरणपरिणामः, किन्तु तूलाविद्यापरिणामः। अतः शुक्तितत्त्वज्ञानेनान्तःकरणनाशो न दोषाय। अतो भ्रान्तिनिमित्तकारणनाशेन न भ्रान्तिनाशः। तत्र भ्रान्तिनिमित्तकारणं यदि दोषः, तर्हि तन्नाशेन शुक्तितत्त्वज्ञानमेव, न तु भ्रान्तिनाशः। स तु कारणान्तरेण विनष्टोऽपि तदुपादानतूलाज्ञाननाशादेव बाध्यते॥

अयमेव न्यायः संसारोच्छेदेऽपि। सोऽपि संसारोपादानाविद्यासमुच्छेद एव। न च मिथ्यार्थस्य प्रध्वंसो नास्ति। ज्ञानजन्योऽभावः प्रध्वंसाभावः मिथ्यापदार्थस्यापि। स तत्त्वज्ञानजन्य एव। शुक्तितत्त्वज्ञानेन रूप्यतत्कारणोच्छेदो बाधः॥

अविद्यानिवृत्त्यनन्तरमेव तत्त्वज्ञानमिति शङ्कायां
अनुत्थितिरित्युपसंहारः

स च कार्यदृष्ट्या कारणात्मता, अविद्यादृष्ट्या तत्स्वरूपनाशः। भ्रान्तिकारणं तु शुक्तिरूप्यादिस्थले भ्रान्तेरप्यविद्यापरिणामत्वात् तत्कारणाविद्याग्रहणं न विरुद्धम्। न केवलमज्ञानस्य शुक्तिरूप्यादिस्थले विषयोत्पादनमात्रेणोपक्षयः, किन्तु तदाकारवृत्त्यात्मना परिणामोऽपि हि तत्कृत्यम्। सति चैवं प्रपञ्चभ्रमेऽविद्यादोषस्य शुक्तिरूप्यादिस्थल इव तत्त्वज्ञानैकनाश्यत्वादविद्यानिवृत्त्यनन्तरं तत्त्वज्ञानमित्यपूर्वेयं कल्पना॥

तत्र दोषोच्छेद एवाविद्यानिवृत्तिरित्यभिधानम्—यत्राविद्यैव दोष इत्यभिप्रेत्यैव यदि प्रवृत्तम्, न तु तदतिरिक्तदोषतामादाय, तर्हि तत्त्वज्ञानानन्तरं दोषनिवृत्तिरित्येव वक्तव्यम्, न तु दोषनिवृत्त्यनन्तरं तत्त्वज्ञानमिति दोषान्तरस्येव तत्त्वज्ञानातिरिक्तानिवर्त्यत्वादज्ञानाख्यस्य दोषस्य; काच-कामलादिषु तथा दर्शनात्। इदमेवात्र चित्रम्—यत् दोषोच्छेदोऽविद्यानिवृ-

त्तिरित्यत्र चन्द्रद्वित्वादिहेत्वविद्यानिवृत्तिश्चैक इति नोक्तम्, यत्र हेत्वविद्ययोरैक्यम्, तत्रैव दोषोच्छेदोऽविद्यानिवृत्तिरित्येकत्रोक्त्वा, अनन्तरमेवात्मानं विस्मृत्य चन्द्रद्वित्वादिहेतुदोषोच्छेदमन्तरा न तत्त्वज्ञानमिति दृष्टान्तीकृत्याविद्यादोषनिवृत्तिमन्तरा नाधिष्ठानसाक्षात्कार इति व्याहतमेव लिखति भूषणम् ॥

अद्वैतमते भेदवासनाया न दोषत्वम्, किन्त्वविद्याया एव,
भेदवासनानिवृत्तिरभेदज्ञानादेव; न तु
साक्षात् तत्त्वज्ञानात्

यत्तु—नाद्वैतमतेऽविद्याया दोषत्वं नेष्यते, किन्तु भेदवासनायाः—इति, तत्तु विचित्रतरम्; अविद्यादोषत्वमादाय तन्निवृत्त्यनन्तरमेव तत्त्वसाक्षात्कारः स्यात्, तत्त्वज्ञानातिरिक्तनाश्यत्वमेव दोषस्येति कृत्वा ग्रन्थविस्तरस्य वैयर्थ्यात् ॥

अद्वैतमते हि भेदवासनाऽभेदज्ञानप्रतिबन्धकमित्युच्यते, न तु दोषत्व इति, इति दोषविधयाऽप्यविद्याकारणतेत्यद्वैतसिद्धान्तः, इत्यभेदज्ञानेन भेदवासनाया निवृत्तिः, ततः साक्षात्कारः, ततोऽविद्यानिवृत्तिरिति रिक्तं वचनम्, न ह्यभेदावगमातिरिक्तः कश्चन साक्षात्कारः, इति निवृत्तिक्रमोऽयमक्रम एव ॥

अविद्यानिवृत्तिरखण्डाकारसाक्षात्कारमात्राधीनेति यदि स्वीकृतम्, तर्हि कथमविद्यानिवृत्त्यनन्तरमेवाधिष्ठानतत्त्वसाक्षात्कारः ?

ब्रह्मणो वेदान्तावेद्यत्वमुपपन्नम्, तच्च शाब्दं वा, मानसं
वेति तु प्रस्थानभेदः

तत्र शब्दस्य सूक्ष्म-व्यवहितार्थबोधकत्वं शक्त्या लक्षणया वा यथायथं शबरस्वामिनोऽपि । अत एव तत्र "लक्षणाऽपि हि लौकिकी"ति हेतुवन्निगदाधिकरणे निरूपितम्; अन्यथा—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादाविन्द्रपदस्य लक्षणयाऽग्निपरत्वमुपपादितं सौत्रमप्यसंगतं स्यात् ॥

न चैकान्ततो ब्रह्मशब्दस्य, शब्दान्तराणां च निर्विशेषे ब्रह्मणि वृत्त्यनुपपत्तिरिति विस्तरेणोपपादितम् । 'अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये'ति हि भाष्यं निर्विशेषब्रह्मणो वृत्त्युपधानमात्रपरम्, नतु साक्षाद् ब्रह्मबोधकमपीति विवेचयति । ततश्च लक्षणयाऽपीदन्तया ब्रह्म न वाग्वेद्यमित्यभिप्रायो न वाङ्निवृत्तिश्रुतिरित्यभिप्रायस्तु विशद एव ॥

अस्तु वा मानसप्रत्यक्षत्ववादोऽपि ब्रह्मण इति तु प्रस्थानान्तरम्। शाब्दप्रत्यक्षवादोऽप्यस्ति प्रस्थानान्तरमिति खलु प्रकृतम्। वक्तव्यं चात्र सर्वं पूर्वमुक्तम्। आस्तामियं कथा ॥

परोक्षज्ञानेन प्रत्यक्षभ्रमस्य नाभिभवः; ज्वालैक्यप्रत्यक्षं तु ज्वालाभेद-प्रत्यक्षेण बाध्यत इति प्रासङ्गिकं कथान्तरमपि यदि पश्चाद् गत्वा भूषणं मन्यते, तर्हि तदपि परीक्ष्यताम् ॥

ज्वालाभेदानुमानेन न ज्वालैक्यज्ञानबाधः; तत्र भेदज्ञानस्य परीक्षितप्रत्यक्षत्वात्

तत्र हि शतभूषणी ज्वालैक्यप्रत्यक्षं ज्वालाभेदप्रत्यक्षेणैव बाध्यते, दीपासन्निकर्षे ज्वालाभेदानुमानेन तदैक्यभ्रमबाधाभावात्, ज्वालासन्नि-कर्षे तु प्रत्यक्षज्ञानसामग्र्या तस्य प्रत्यक्षत्वमेव, न परोक्षत्वम्। अनुमाने-नैव तत्र भेदग्रह इत्याग्रहेऽपि शाब्दापरोक्षवादिनां दृष्ट्याऽनुमानेनापि सन्निकृष्टे विषये प्रत्यक्षमेव ज्ञानं स्वीक्रियत इति — लिखति ॥

तत्र भूषणं लिखति—ज्वालायां प्रतिक्षणं सामग्रीभेदमपरिशीलयतः सामग्र्यैक्यभ्रान्तिदोषेण ज्वालैक्यभ्रमः, सामग्रीभेदनिश्चये तु तदभावः। उत्पन्नस्य भ्रमस्य तु सामग्रीभेदप्रत्यक्षेण तद्भेदस्यापि प्रत्यक्षत्वात्, प्रत्य-क्षेण पाश्चात्येन परीक्षितेन प्रत्यक्षभ्रमस्य पूर्वस्य बाधः— यथे'दं रजतमि'ति भ्रमस्य 'नेदं रजतमि'ति प्रत्यक्षेण। न च 'नेदं रजतमि'ति ज्ञानमप्यनुमा-नम्, सर्वथा त्वनुमानेनाप्यपरोक्षज्ञानं सति सन्निकर्षे भवितुमर्हतीति न्या-येन ज्वालाभेदज्ञानमपरोक्षमेव ॥

श्रुत्युपष्टब्धानुमानेन प्रत्यक्षबाधो न वार्यते, किन्त्वेकान्ततो नानुमानेन प्रत्यक्षबाध एव

लैङ्गिकज्ञानेन श्रुत्युपष्टब्धेन प्रत्यक्षबाधो नाद्वैतिभिरपि वार्यते, इति नियमेनानुमानं न प्रत्यक्षस्य बाधकम्; अन्यथा—अग्निः, अनुष्णः, पदा-र्थत्वात्, इत्यनुमानेन कथं न प्रत्यक्षबाधः? न च ज्वालैक्यप्रत्यक्षं परीक्ष्य-माणमप्रामाण्यज्ञानानास्कन्दितं भवति। परीक्षायां हि 'नेदं रजतमि'तिवत् तद्भेद एव प्रत्यक्षीक्रियते। सामग्रीभेदस्यापि प्रत्यक्षतया सन्निकर्षे सत्य-नुमानेन प्रत्यक्षमेव भवतीत्यस्य ज्वालाभेदसन्निकर्षे सत्यनुमानेनापि प्रत्य-क्षमेव भवतीत्यर्थः। यतः परीक्षायां तद्भेद एव चक्षुषोऽनुमानेनापि गृह्यते, आनुमानिकवृत्तेरपि चक्षुरादिद्वारा विषयदेशगमनाविरोधात् ॥

एतेन—द्विचन्द्रप्रत्यक्षमपि—व्याख्यातम्। दोषनिमित्तस्य गते दोषेऽप्रतिबद्धचक्षुषाऽपरोक्षमेव ज्ञानम्, न तु परोक्षम्। सत्यामपि प्रत्यक्षसामग्र्यामनुमित्सायां को वा वारयत्यनुमानम्? तत्त्वनुमानं सन्निकृष्टांशे प्रत्यक्षमेव, यथा 'पर्वतो वह्निमानि' त्यत्र पर्वतांशे प्रत्यक्षत्वम्, 'पर्वतं पश्यामी'त्यनुव्यवसायस्यान्यथाऽनुपपत्तेः। व्यक्तं चैतत् शतभूषण्याम्॥

जीव-ब्रह्मैक्यसाक्षात्कारेण जीव-ब्रह्मभेदबाधोऽप्यत एव;

तदनुमानस्य श्रुत्युपबृंहितत्वात्

ब्रह्मसाक्षात्कारस्तु नैन्द्रियिकः; तत्र तस्याव्यापारात्। व्यापारेऽपि तत्र दोषसंभावनया न भ्रमत्वनिश्चयः। औपनिषदत्वे तु तत्प्राबल्यात् तद्बलेन प्रत्यक्षस्य बाध इति निष्कर्षः॥

न च जीव-ब्रह्मभेदोऽपि शास्त्रमुख्यतात्पर्यविषयः, येन भेदज्ञानस्यैन्द्रियकस्याप्यौपनिषदत्वेन प्रामाण्यं समानं स्यात्। व्यक्तीकरिष्यते चेदमागमबाधप्रसङ्गे, निर्विशेषविचारप्रसङ्गे च। शब्दस्य परोक्षज्ञानजनकत्वनियमो हि बहुशो व्यभिचरतीति पूर्वमुक्तम्॥

आगन्तुकदोषजन्यत्वेन भ्रमत्वनिर्णयः क्वचन

तत्र केषांचन ब्रह्मसाक्षात्कारानन्तरं बाधग्रहः, केषांचन व्यवहारदशायाम्, यथा शुक्तिरजतादौ काच-कामलादीनाम्, तेषामागन्तुकत्वात् तद्दोषजन्यज्ञानानामपि व्यवहारदशायामेव बाधनिर्णयः॥

आगन्तुकत्वं नामाविद्यापरिणामत्वम्, जन्यत्वं वा व्यवहारदशायामेव नाशयोग्यत्वम्, सांसिद्धिकतिमिरवतोऽपि तिमिरमेव यदि दोष इति निर्णयः, तर्हि तस्याविद्यापरिणामत्वाद् तज्जन्यत्वान्नाशयोग्यत्वाच्चागन्तुकमेव तत्। तिमिरं हि बहुत्रागन्तुकमपि द्विचन्द्रज्ञाने कारणमिति दृष्टम्, इति सांसिद्धिकतिमिरमपि नाजन्यम्। न च तिमिरमप्यविद्येवानादि, अतोऽन्वय-व्यतिरेकसिद्धमागन्तुकदोषजन्यत्वेनाप्रामाण्यं सर्वत्रेति॥

वैदिके ज्ञाने तात्पर्यानुसारिणि नाप्रामाण्यम्

न चापौरुषेयवेदवाक्यजन्यज्ञानमागन्तुकदोषजन्यमिवाप्रमा भवितुमर्हति; आकाङ्क्षा-योग्यतयोः शब्दधर्मत्वाद्। न तत्र दोषत्वसंभावनापि, तात्पर्यमप्युपक्रमोपसंहारादितात्पर्यलिङ्गावगम्यं शब्दगतमेव। तत्र ज्ञानद्वारोपयोगः तात्पर्यस्यैव। तत्रान्यथाऽन्यथा ग्रहणं यद्यपि संभवति; तथाप्यद्वैत

एव परमं तात्पर्यमिति बहुतरोपनिषत्स्वारस्यादवगम्यत इत्यद्वैततत्त्वशुद्धौ व्यक्तम् ॥

### वेदान्तजन्यनिर्विशेषसाक्षात्कार एव मोक्षसाधनम्

सर्वथा तु वेदान्तमूलकापरोक्षज्ञानस्य मोक्षसाधनत्ववादः शतदूषण्या अपि संमतः। स तु दर्शनसमानाकारो वा, दर्शनमेव वेत्यन्यदेतत्। शब्दस्यापरोक्षज्ञानजनकत्वनिरास एव तात्पर्यं शतदूषण्याः, भूषणस्य च। शतभूषण्याः, अस्य च तु शाब्दापरोक्षवादसमर्थनमपि लक्ष्यम्। शाब्दमपि निर्विकल्पमपरोक्षज्ञानमपि प्रथमतो दर्शनसमानाकारम्, अन्ततस्तु दर्शनमेवेति ह्यद्वैतमतम्। दर्शनसमानाकारतायामेव पर्यवसानमिति तु शतदूषण्यादिः। दर्शनसमानाकारस्तु स्वतो न पुरुषार्थः, न वा दर्शनमिवाविद्यानिवृत्तिद्वारा दृष्टविधया पुरुषार्थसाधनम्। न च दृष्टे संभवत्यदृष्टकल्पना युक्ता। अधिकं तु ज्ञानाविधेयत्वोपपत्तिप्रकरणे व्यक्तीकृतम्। निर्विशेषत्वं हि ब्रह्मणो विशेषाणां मिथ्यात्वेन, तत्तु न केवलं श्रुत्या, किन्तु तदुपपादकेनानुमानेनापि ॥

### श्रुतसिद्धेऽप्यर्थेऽनुमानोपयोगः

भूषणं तु वदति—श्रुतिसिद्धेऽर्थे किमनुमानेनेति पौनःपुन्येन। श्रुत्यर्थतात्पर्यनिर्णय उपपत्तिरपि लिङ्गमिति हि संप्रतिपन्नम्। तत्र यदि मिथ्यात्वानुमानं विनैव मिथ्यात्वनिर्णयो भूषणेनाधिगम्यते, तर्हि कामं सिद्धसाधनत्वेन मिथ्यात्वानुमानं दूष्यताम्, यत्तु शिरसा स्वीक्रियते। किमिति स्वसिद्धस्याप्यर्थस्य भूषणीयस्य दूषणान्तरेण तेन तेन दूषणार्थः प्रयत्नः? यदि तत्र विप्रतिपत्तिः, तर्हि कुतो वाऽनुमानेन किं प्रयोजनमिति प्रश्नः ॥

### तत्त्वमस्यादिवाक्यजन्यज्ञानस्यापरोक्षत्वसाधकानुमान-तद्दूषण-तत्परिहाराः

इममेव न्यायमनुसृत्य शाब्दापरोक्षवादेऽप्यनुमानमद्वैतिनाम्—विमतम्, साक्षात्कारि, स्वप्रकाशार्थोपदेशरूपत्वात्, स्वतः प्रत्यक्षविषयत्वाद्वेति तत्त्वमस्यादिवाक्यजन्यज्ञानापरोक्षतासाधकमनुमानम् ॥

इदं हि तत्त्वमस्यादिवाक्यम्, परोक्षज्ञानजनकम्, वाक्यत्वादिति परेषामनुमानेऽप्रयोजकत्व-व्यभिचार-व्याप्यत्वासिद्धि-प्रतिसाधनादिदूषिततयाऽप्रमात्वनिरूपणप्रसङ्ग उपक्षिप्तमेकं प्रतिसाधनानुमानम्। भूषणं त्वत्र

शतभूषण्यामप्रयुक्तं च स्वेच्छानुसारं किमप्यनुमानं शतभूषण्यभिमतं कल्पयित्वा स्वयमकाण्डताण्डवेनात्मानमानन्दयति ॥

यत्तु शतभूषण्याम्—अत्र वाक्यार्थज्ञानं मनन-निदिध्यासनसहकृत-श्रवणजन्यं विवक्षितम्, तदेव मुख्योपदेशः, न श्रवणमात्रोपदेशो मुख्यः—इत्यादि, तत् विमतं ज्ञानं पक्षं निष्कृष्टुम्, न तु हेतुम्, इति, अत्र तत्त्वमस्यादिवाक्यज्ञानत्वं हेतूकृतमित्यभिप्रेत्यापादितानि सर्वाणि दूषणान्यनुक्तोपलम्भनानि, न वाऽत्र दृष्टान्तोऽपि भूषणनिर्दिष्टः शतभूषण्यामिति, तमादाय दूषणस्यापि नावसरः ॥

शतभूषण्यनुमानं तु—विगीतम्, साक्षात्कारि, स्वप्रकाशार्थोपदेशरूपत्वात्, स्वतः प्रत्यक्षार्थविषयत्वाद्वेति। तत्रोपदेशपदं ज्ञानपरं भावार्थे कृत्यप्रत्ययेन, इति ज्ञानत्वमेवात्र हेतुः। ज्ञानत्वादिति वक्तव्य उपदेश इति तु तस्य वेदमूलत्वसूचनेन तस्य प्रमाणान्तरेण बाधायोग्यत्वं सूचयितुम्, इति न हेत्वसिद्धिः ॥

एतेन—विगीतं ज्ञानम्, साक्षात्कारि, प्रत्यक्षार्थविषयत्वादित्यनुमानमपि—व्याख्यातम्। न चात्र श्रवणे व्यभिचारः; भेदवासनारहितानां श्रवणमात्रेणापि साक्षात्कारसंभवेन तत्र हेतोरपि सत्त्वात्, श्रवणेन साक्षात्कारे जननीये मनन-निदिध्यासनयोर्भेदवासनारूपप्रतिबन्धकनिवर्तनोत्तेजकत्वमात्रेण साक्षात्साक्षात्कारजनकत्वस्य श्रवण एव सत्त्वाच्च ॥

### मननजनित वाक्यार्थज्ञाने साक्षात्कारत्वसाधने बाधः

एतेन—मननजनितवाक्यार्थज्ञानेऽपि स्वतःप्रत्यक्षार्थनिश्चयत्वेन हेतुसत्त्वेन श्रवण-मननजन्यस्यापरोक्षत्वाभावाद् न बाध इत्यपि—व्याख्यातम्। मनन-निदिध्यासनसहकृतश्रवणजन्यज्ञानस्यैवात्र पक्षत्वात्, मननमात्रसहकृतश्रवणजन्यस्यापक्षत्वात् मननजनितवाक्यार्थज्ञानस्यापक्षत्वाच्च तत्र साध्याभावेन बाधाभाववर्णनं कथमनुपपन्नम् ॥

### शब्दमूलके तु मननेऽप्यपरोक्षज्ञानोपपत्तिः

श्रवणं तु शाब्दबोध एव, स्वयम्, अन्यसहकृतं वा, इति शब्दजन्यस्यैव ज्ञानस्य मननं निदिध्यासनं चाङ्गम्, इति शब्दमूलकत्वेनैव, मननस्यापि प्रामाण्यम्। वेदान्तमूलकत्वेनैवानुमानप्राबल्यमप्यत एव ॥

अत एव ब्रह्मजिज्ञासायां श्रवणमूलायाम् , मननमूलायां वा वेदान्तवाक्यान्येव विषया:, इति वेदान्तवाक्येनाकाङ्क्षादिसहकृतेन प्रमाणेन निष्पन्नं वाक्यार्थज्ञानमात्रं श्रवणपदार्थः, न तु वेदान्तवाक्यानां श्रावणं प्रत्यक्षम् ॥

अत्र पक्षे श्रावणविषयेति वाक्यविशेषणं श्रावणपरत्वाभिप्रायम् , अतो न दोषः। यावन्निदिध्यासनं वेदान्तार्थस्यैवावृत्तिः, न तु प्रत्यक्षादिप्रमाणसिद्धस्येत्येवमाशय एव वाक्यस्य ॥

### योगस्य विधेयत्वम्, निदिध्यासनजन्यसाक्षात्कारस्तु न विधेय:

तत्र योगोऽप्युपकारी, प्रत्यक्षादिप्रमाणागम्यसूक्ष्मार्थापरोक्षतायाम् , 'दशमस्त्वमसी'त्यत्र तु प्रत्यक्षयोग्यार्थविषयत्वात् चक्षुर्द्वारा शाब्दवृत्तिनिर्गममात्रेण साक्षात्कारो विना विलम्बम् , विनाऽपि योगं न विरुध्यते ॥

तत्र योगः पुरुषतन्त्रो विधेयः, निदिध्यासनं शब्दप्रमाणतन्त्रस्यैव तत्प्रमाणावगतस्यैव वाऽवगममात्राभ्यासरूपं धारावाहिकज्ञानेष्विव प्रमाणतन्त्रेषु न विधिमपेक्षते ॥

### निदिध्यासनं शब्दापरोक्षधारावाहिकज्ञानमेव, अतः शब्दप्रमाणतन्त्रम्

एतेन—निदिध्यासनस्य शब्दजन्यत्वमसिद्धमिति—परास्तम् ; शब्दजन्यज्ञानस्यैव धारावाहिकस्य निदिध्यासनरूपत्वात् , तस्य च यावद्विरोधिवृत्त्येकत्वान्न निदिध्यासनस्य शब्दाजन्यत्वम् । न हि धारावाहिकेषु द्वितीयादिक्षणावच्छिन्नज्ञानं प्रत्यक्षप्रमाणजन्यम् , प्रमाणान्तरजन्यम् , अजन्यं वा, इति निदिध्यासनस्य, मननस्य चोभयोः सहकारिणोरपि प्रमाणतात्पर्यविषयविषयकत्वात् साक्षाच्छाब्दत्वाभावेऽपि शब्दप्रमाणमूलकत्वाद् गौणं शाब्दत्वम्—यथाऽभिहितान्वयबोधे शाब्दबोधस्य शाब्दत्वम् ॥

अवधानसहितं मनो यत्किंचिदर्थविषयज्ञानजननद्वारेणैव ध्यानायोपकरोति, न त्वप्रामाणिकार्थज्ञानधारानिर्वाहेऽपि तस्य सामर्थ्यम् इत्यभ्या-, ससहकृतस्य मनस एव शब्दसहितस्य प्रामाण्यमिति तु प्रस्थानान्तरम् , शब्दस्यैव तत्र मुख्यं प्रामाण्यमिति तु प्रकृतं प्रस्थानमित्यन्यदेतत् , यच्चर्वितप्रायम् ॥

शास्त्रप्रामाण्यात् शब्दजन्यं ज्ञानं मोक्षसाधनम्; अन्यथा कथमुपासनस्यापि बन्धनिवर्तकत्वम्

बन्धनिवृत्तिसाधनं निर्णेतुं यदि शास्त्रमेव प्रभवति, तर्हि "तत्त्वमसी"त्यखण्डाकारसाक्षात्कार एव मोक्षसाधनमिति कथं न यथाशास्त्रं गृह्यते? तस्य स्वार्थपरत्वकल्पने तु कर्मयोग एव मोक्षसाधनमदृष्टद्वारेति शास्त्रस्यान्यथानयनं जैमिनीयानां कथं निरस्यते? अङ्गीक्रियतामीश्वरो योगिनामिव मते, जगत्स्रष्टा च। किमिति स न कर्मयोगेनैव बन्धनिवृत्तिमादधाति? अतो यदि सर्वं शास्त्रं यथार्थं मन्तव्यम्, तर्हि निर्विशेषसाक्षात्कार एवाविद्याख्यबन्धनिवृत्तिसाधनं शास्त्रप्रामाण्याच्छरणीक्रियताम्। तत्र हि कर्मणां स्वर्गादि फलम्, सविशेषोपासनेन जगद्व्यापारवर्जं सविशेषब्रह्मसाधर्म्यम्, निर्विशेषसाक्षात्कारेणानावृतस्वरूपसंविद्रूपतेति सर्वप्रामाण्यं सुस्थितं भवति, किं वा विद्वेषेणाकिञ्चित्करेण निर्विशेषात्मवादे?

निर्विशेषतावादोऽपि पूर्वाचार्यानुसृतो नाप्रामाणिकः

निर्विशेषात्मवादोऽपि प्राचीनैराचार्यैरलूनैः सनियमं सश्रद्धं च परिपाल्यमानो नाप्रामाणिकः, इति तेषामप्रामाणिकत्वव्यवस्थापनं मुमुक्षूणां प्रमोहनमात्रम्॥

वेदान्तप्रमाणानां साक्षात्, मानसस्य वाऽपरोक्षसाक्षात्कारपर्यवसायित्वोपसंहारः

सर्वथा तु शाब्दापरोक्षवादो वा भवतु, मानसापरोक्षवादो वा, मोक्षसाधनमपरोक्षमेव ज्ञानम्, न तु दर्शनसमानाकारं पुरुषतन्त्रं ज्ञानम्, न वा सविशेषब्रह्मोपासनमोक्षसाधनतावादेनैव शास्त्रसमाप्तिरित्यत्रैव निर्भरः॥

॥ इति शाब्दापरोक्षत्वोपपत्तिः ॥

## साधनचतुष्टयपूर्ववृत्तत्वोपपत्तिः

### साधनचतुष्टयसंपत्तेः पुरुषप्रवृत्तिक्रमेण ब्रह्मजिज्ञासा-पूर्ववृत्तत्वम्

"अथातो ब्रह्मजिज्ञासे" त्यत्राथशब्दार्थः साधनचतुष्टयसंपत्त्यानन्तर्यम्। साधनचतुष्टयं तु—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शम-दमादिसंपत् , मुमुक्षुत्वं चेति ॥

सा ह्यधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तरभाविनी, तथापि पुरुषप्रवृत्तिक्रमस्वारस्यात् कर्मविचारपूर्ववृत्ततयैव तयोरर्थलभ्यत्वम्, इति पुरुषप्रवृत्तिक्रमस्वारस्यं पूर्वोत्तरभावनिर्णायकमिति निश्चीयते ॥

तेनेहामुत्रार्थफलभोगविरागस्य, मुमुक्षायाश्च क्रमः संप्रतिपन्नः। एवं "शम-दमाद्युपेतः स्यादि" ति शम-दमादिसंपत्तिरप्यधिकारिविशेषणमिहामुत्रार्थफलविरागानन्तरमेवात्मानं लभते, इति मुमुक्षातः पूर्वमिहामुत्रार्थफलविरागानन्तरं शम-दमाद्यधिकारिविशेषणं क्रममनुसृत्य ॥

वैराग्यं तु कर्मणामल्पास्थिरफलत्वनिबन्धनम्। अतो नित्यानित्यवस्तुविवेकः ततोऽपि प्राचीनः। तत्र मूलवस्तुनो नित्यत्वविवेकोऽनन्तस्थिरफलमोदेच्छायाम् , अपरेषामनित्यत्वनिर्णयोऽल्पास्थिरफलेषु वैराग्ये, च हेतुरिति कृत्वाऽपि नित्यानित्यवस्तुविवेकादीनां पुरुषप्रवृत्तिक्रमानुसारः संभवति, इति पुरुषप्रवृत्तिक्रमश्चतुर्णां सम्यगुपपद्यते ॥

### कर्मविचारपूर्ववृत्तत्वेनायं क्रमः

अनेन न्यायेन फलविचारस्यापि पूर्ववृत्तत्वं तु कर्मविचारस्य, कर्मफलानित्यत्वनिर्णयस्य च हेतु-हेतुमद्भावाभावात् , पुरुषप्रवृत्तिक्रमेण मुमुक्षातोऽनन्तरम् , इहामुत्रार्थफलभोगविरागतः पूर्वम् , शम-दमादेः पूर्वम् , परं वा क्रमस्यासंभवाच्च न ब्रह्मजिज्ञासापूर्ववृत्तत्वं संभवति ॥

### साधनचतुष्टयपूर्ववृत्तत्वेऽपि न क्रमनियम इति केचन; तथापि विचारकालेऽनुवृत्त्या तस्याधिकारिविशेषणत्वम्, न तथ तत्र कर्मविचारस्य

ततश्च नित्यानित्यवस्तुविवेकादेः पूर्वपूर्वस्योत्तरोत्तरसाधनत्वम् , सर्वेषां नियमेन ब्रह्मविचाराधिकारिविशेषणत्वम् , विचारकालेऽनुवर्तमानत्वादु-

पपद्यते, कर्मविचारस्तु तस्य ब्रह्मविचारसमकालिकत्वस्य बाधाद् नाधिकारिविशेषणतामर्हति। मुमुक्षा ह्यधिकारिविशेषणान्तरसहकृतैवोत्कटा भवति, न तु पूर्वपूर्वाधिकारिविशेषणानामुत्तरोत्तरसाधनानामपि तत्तत्कार्यनिवृत्तौ सुदृढा, उत्कटा वा स्यात्। अतः सर्वेषामधिकारिविशेषणतयाऽन्वयः। तत्र क्रमविवक्षायां न निर्भर इति केचन। अत्रानन्तर्यप्रतियोगिनां जिज्ञासाकालेऽप्यनुवृत्तिरपेक्षिता, यथा वेदाध्ययनानन्तर्येऽप्यधीतवेदत्वमधिकारिविशेषणम्, तथा कर्मविचारानन्तर्यपक्षेऽपि विचारितकर्मणामनुष्ठानं जिज्ञासासमये विवक्षणीयमेव। अतो नात्र चतुष्टयगणनं नानुपयुक्तम्॥

तत्र क्रमनियमो विवरणप्रस्थाने, वार्तिके तु नैवम्

भामती-पञ्चपादिका-वार्तिकादिव्याख्यानानि सर्वाणि पूर्व-पूर्वस्योत्तरोत्तरहेतुत्वमवलम्ब्यैव साधनचतुष्टयसंपत्त्यानन्तर्यमभिप्रयन्ति। तत्र पञ्चपादिका—नित्यानित्यवस्तुविवेकाद् वैराग्यम्, ततो मुमुक्षुत्वम्, तत्साधनं शम-दमादि यावन्नावलम्ब्यते, तावद् ब्रह्मजिज्ञासां कः प्रतिपद्येतेति—वदति। विवरणमप्यत्र प्रसङ्गे साधनकलापाभावे कः प्रवर्तेतेति व्याचक्षाणममुमर्थं द्रढयति॥

अत्र वार्तिकं 'शम-दमादिसंपन्नस्त्यक्तैषणः, विवेकी, मुमुक्षुः सन्नि'ति क्रममिमं नाङ्गीकरोति। एतन्मते तु साधनचतुष्टयसंपत्तिरपेक्ष्यते। तत्र क्रमविचारो निष्प्रयोजन इति भावः॥

मुमुक्षायाः कारणान्तरसिद्धाया एव हेतुत्वमिति पञ्चपादिकांश इति भूषणानुवादोऽसदनुवादः

यत्तु भूषणम्—जिज्ञासायां मुमुक्षा-क्रिययोरेकस्याः कारणान्तरसिद्धायाः पूर्ववृत्ततया हेतुत्वमिति पञ्चपादिकायामुच्यत इति—लिखति। तत्र पूर्वोद्धृतपञ्चपादिकायां नित्यानित्यवस्तुविवेकादिहेतु-हेतुमद्भावात् मुमुक्षुत्वादिसर्वसाधनसंपत्तिरेव विवक्ष्यते। अत एवोपसंहरति—तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यं विवक्ष्यत इति तदुद्धृतं वाक्यमेव नास्ति॥

सर्वेषां साधनानामधिकारिविशेषणत्वमेव नैकसाधनमात्रेण निर्वाहः

सत्यपि तस्मिन्मुमुक्षायास्तदीयपूर्वोद्धृतवचनैकवाक्यतया मुमुक्षापदमन्येषामुपलक्षणमेव। सर्वेषु विवरणेषु साधनचतुष्टयानन्तर्यमेवाथशब्दार्थो

गृह्यते । भाष्यं तु "सत्सु हि तेषु" इति सर्वेषां साधनानां जिज्ञासासमयेऽनुवृत्तिं विशदयति । अस्तु वा पूर्वपूर्वस्योत्तरोत्तरस्वरूपोपाधित्वेन प्रतिपन्नतया मुमुक्षुत्वोपाधित्वाद्धिकारनिमित्तत्वमेवेति तद्विवरणं पूर्वोक्तरीत्या सर्वसाधनसंपत्त्युपहितमुमुक्षाया निमित्तत्वाद् नैकसाधनमात्रेणाधिकार इत्येवावगमयति ॥

गुणोपसंहारन्यायेन सर्वेषां दर्शनविधीनां जिज्ञासाऽधिकरण-
विषयतया तत्तत्प्रकरणपठितानां साधनानामप्युप-
संहारेण साधनचतुष्टयपूर्ववृत्तता

यत्तु भूषणम्—साधनचतुष्टयस्य पूर्ववृत्तत्वानियामकं वाक्यमपि न दृश्यत इति—लिखति । तत्र पञ्चपादिकाविवरणमधोनिर्दिश्यमानमनुसन्धेयम् । तद्यथा—"शास्त्रीयस्य विधेः शास्त्रीयमेव निमित्तं वक्तव्यम् । तत्र "सोऽन्वेष्टव्यः" इति विधिप्रकरणे "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति नित्यानित्यवस्तुविवेको दर्शितः; "परीक्ष्य लोकान् कर्मचितान्" "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति च श्रवणविधिप्रकरण इहामुत्रार्थफलभोगविरागो दर्शितः; "शान्तो दान्तः" इति च दर्शनविधिप्रकरणे शमादयो दर्शिताः; "तद्विजिज्ञासस्वे" ति च विचारविधौ गुरूपसदनं दर्शितम् । सर्वत्र च फलश्रुतयः कामनोत्पादनद्वारा मुमुक्षोरधिकारप्रदर्शनार्थाः—इति ॥

यत्तु—"शान्तो दान्तः" इति दर्शन एव शम-दमादिविधानम्, न जिज्ञासायाम्" इति तत्रेदं बहुश आम्रेडितम्—यदवगतिपर्यन्तं ज्ञानमेव द्रष्टव्यपदविवक्षितं विचारस्य फलम्, विचारश्च श्रवणविधिसिद्धोऽत्र जिज्ञासापदार्थः । तत्राधिकारी हि तत्फलेच्छुः, उक्तसाधनकलापसंपन्नश्चेति सर्वमुपपद्यत इति ॥

अत एव श्रोतव्यवाक्यं भाष्यद्वयस्य विषयः । तत्र सर्वेषां विचारपराणां वाक्यानां गुणोपसंहारन्यायेनैकार्थत्वात्, तत्तत्प्रकरणपठितानां सर्वत्रोपसंहारात् कारणकलापस्यास्य शास्त्रीयत्वम् ॥

श्रीभाष्यमत एवाधिकारिविशेषणनियामकप्रमाणाभावः

श्रीभाष्यमते त्वधिगताल्पास्थिरफलत्वम्, मुमुक्षुत्वम्, कर्मविचारश्चेत्यादीनामानन्तर्यप्रतियोगितासमर्पणपरं किं नाम वाक्यं दृश्यते ? येनोपा-

सनाधिकारिविशेषणमत्र विवक्षितं स्यात्, कथं च जिज्ञासापदस्योपासनापरत्वम् ?

साधनचतुष्टयस्यैव जिज्ञासापूर्ववृत्तता दृष्टविधया

तत्र साधनचतुष्टयं पूर्वपूर्वहेतुकोत्तरोत्तररूपं विद्यायां साधनम्, न चैतेषु सत्स्विव विनोक्तसाधनकलापं कुतूहलमात्रेण क्रियमाणेन मुक्तिसाधनमवगतिपर्यन्तं ज्ञानं कस्यापि समुदेति। एतेषां श्रवणेन विद्याया-मुत्पाद्यमानायामितिकर्तव्यतयोपकारकत्वात् विद्यासाधनत्वं दृष्टविधया; विद्याया दृष्टफलत्वात्, तत्रादृष्टानपेक्षणाच्च। व्यक्तं च नित्यानित्यविवेकेनैव वैराग्यमिति पञ्चपादिका-विवरणयोः, भामत्यां च॥

साधनचतुष्टयस्य समसमुच्चयेनाधिकारिविशेषणत्वम्, नत्वेकैकमात्रस्य

तत्रैकैकमप्यधिकारिविशेषणं समुच्चयविधया, न तु विकल्पेन; सर्वेषा-मुत्पत्तिशिष्टत्वात्। वैराग्यं मुमुक्षुत्वं चोत्कटं नित्यानित्यवस्तुविवेकेऽभ्यस्यमान एव भवति। एवं वैराग्यं शम-दमादीनामपि सम्यक्परिपालने सति, इति समसमुच्चय एवैषाम्॥

अत एव सर्वत्रोक्तसाधनकलापानन्तरमित्यथशब्दव्याख्या। तत्रानित्यत्वविवेकाभ्यासेन वैराग्यम्, नित्यं ब्रह्मेति सामान्यतो ज्ञानेन तत्प्राप्तीच्छा, मुमुक्षा च भवति। एवमपि विचारफलं ज्ञानम्, विना शम-दमादिकं न भवति॥

न च शम-दमादिनिष्पत्तिं विना वैराग्यम्। तत्र विरक्ता अपि मुमुक्षामात्रेण विना शम-दमादिकं न तत्त्वज्ञानमधिगन्तुमीशते, किं बहुना ? उक्तसाधनकलापसमुच्चयं विना नावगतिपर्यन्तं ज्ञानं कुतूहलादिना, कारणान्तरेण वा तत्र तत्र क्रियमाणेन भवति, इत्यवगतिपर्यन्तज्ञानं सर्वेऽप्युक्ताधिकारसंपादनद्वाराऽधिगच्छन्तु, इत्यनुकम्पया—सूत्रम्—"अथातो ब्रह्मजिज्ञासे"ति॥

सामान्यतः सत्यमस्तीति बुद्धिसहितं विशेषतोऽसत्यत्वप्रसंख्यानं नित्यानित्यवस्तुविवेकपदार्थो भामत्यभिमतः

नित्यानित्यवस्तुविवेकपदम्—इदन्तयाऽनित्यस्य निर्णये, नित्यस्य कस्यचन ज्ञानमात्रम्। सामान्यतो नित्यज्ञानसहकृतानित्यत्वप्रसंख्यानसन्त-

तिरिति विवरण-भामतीप्रस्थानयोः समानम्। तत्र भामती—"अनुभवोपपत्तिभ्यां सत्यस्य धर्मिणः, सर्वेषामनुभवोपपत्तिभ्यमसत्यत्वेऽवधारिते, सत्येन केचिद्ग्राव्यमिति ज्ञाने सत्यासत्यविवेको नित्यानित्यविवेक इति व्याचष्टे ॥

तत्र यद्यपि सामान्यतोऽनित्यत्वज्ञानं न वैराग्यायाऽलम्, तद् दृष्टोपपत्तिभ्यां पुनः पुनर्विपरिवर्तितया प्रत्यहमनुभूयमानेष्वसत्यत्वबुद्धिं द्रढयिष्यति। ततश्चासत्यस्य सर्वस्याधिष्टानं किंचिदस्तीत्यधिष्ठानस्वरूपस्य सामान्यतो ज्ञानं भवति, यत्तु दृष्टोपपत्त्यगोचर इति विधयाऽसत्यत्वधर्मिणां विशेषतोऽवधारणसहितसत्यस्वरूपज्ञानमेव नित्यानित्यवस्तुविवेकः। अतो नात्रेदं नित्यमिति नित्यस्येदन्तया ग्रहणमनित्यस्येवेति वैराग्योपायो नित्यानित्यवस्तुविवेकपदार्थः ॥

वार्तिक-भूषणयोर्नित्यानित्यवस्तुविवेके संप्रतिपत्तिः, फलतस्तु ब्रह्मविद्याभरणस्याप्यत्रैकमत्यम्

वार्तिकं तु नित्यादनित्यस्य विवेको नित्यानित्यविवेक इति व्याचष्टे। ब्रह्मविद्याभरणं तु—इदं नित्यम्, इदमनित्यमिति निश्चयात्मकस्य ज्ञानस्य नित्यानित्यविस्तुविवेकपदार्थत्वमङ्गीकृत्यापि नित्यस्य ब्रह्मणः सविशेषमात्रत्व-निर्विशेषत्वान्यतरगौण-मुख्यतात्पर्यनिर्णयार्थं विचार इत्यभिप्रैति ॥

भूषणन्तु—अल्पास्थिरफलत्वादिरूपेणानित्यानां नित्यानन्दस्वरूपब्रह्मतो विवेको वैराग्यहेतुर्नित्यानित्यवस्तुविवेक इति—विवृणोति। नित्यानन्दस्वरूपभिन्नतयाऽनित्यानां कर्मफलानां ग्रहमात्रं वैराग्याय प्रभवति, नित्याद् ब्रह्मणोऽनित्यस्य विलक्षणतया ग्रहणं नित्यानित्यवस्तुविवेकपदार्थो भूषणतात्पर्यविषयो वार्तिकविवरणवत् ॥

तत्तु ब्रह्म सविशेषं वा निर्विशेषं वेति तु नेदानीं विचारवैयर्थ्यमिति ब्रह्मविद्याभरणार्थ एव भूषण-वार्तिक-ब्रह्मविद्याभरणानामाशयः। फलतस्तु सर्वेषामत्रैकमत्यमेव ॥

केषांचन नित्यमपि परित्यज्यानित्यस्यैव समादरणीत्वमनित्यत्वप्रसंख्यासन्तत्यभावेऽकिञ्चित्करम्

यत्तु भूषणम्—

"नित्यमप्यल्पमुज्झित्वा परमानन्दनिर्भरम्।
अनित्यमप्याद्रियन्ते श्लाघन्ते च विवेचकाः ॥"

इति न्यायेन नित्यानित्यवस्तुविवेको न वैराग्यहेतुरिति—लिखति ॥

तदिदमनित्येऽनित्यत्वप्रसंख्यानसन्तत्यभावे, न तु दृष्टोपपत्तिभ्यां तत्तदनित्यस्वरूपप्रसंख्यानेऽवैराग्यं कस्यापि । अत एव भामत्यामनित्यत्वप्रसंख्यानसन्ततिः सामान्यतो नित्यज्ञानसध्रीचीना नित्यानित्यवस्तुविवेक इति विवेचितम् ॥

असत्यत्वप्रसंख्यानेन सह सत्यत्वज्ञानस्यापि विवक्षाकारणं
मिथ्यात्वनिर्णयः, स च विचारात् प्रागप्यानुमानिको
न विरुध्यते, इत्यभिप्रेत्यैवाऽध्यासभाष्यं
भगवत्पादानाम्

तत्र दृष्टोपपत्तिभ्यां शुक्तिरूप्यादिदृष्टान्तेन प्रपञ्चस्यापि मिथ्यात्वप्रसंख्यानं यद्यपि भवितुमर्हति, यथा श्रुतिनिरपेक्षाणां बौद्धानाम्; तथाप्यधिष्ठानं किञ्चिद्विना कथमसत्यत्वनिर्णय इति बुद्धौ मिथ्यात्वप्रसंख्यानमात्रेणापि विरागो भवति । तेन च सत्यस्याधिष्ठानस्य जिज्ञासायां प्रवृत्तिर्भवतीति भामत्याशयः; । तत्र बुद्धौ विपरिवर्तमानमसत्यं स्वानुसंहितं यथार्थं भवतु अयथार्थं वा, सर्वथा तु विरागहेतुरेव । ततो सत्याधिष्ठानावगतौ सर्वबन्धनिवृत्तिः । अतस्तापत्रयपरीतस्य प्राधान्येन सत्यत्वप्रसंख्यानमात्रमेव नित्यानित्यवस्तुविवेकः । तस्य तु मिथ्यात्वनिर्णयः सामान्यतः किञ्चिदधिष्ठानमस्तीतिज्ञानसहकृतासत्यत्वप्रसंख्यानसन्ततिः, इति तदेवाधिकारिविशेषणम् ॥

सर्वमिदमधिकारिविशेषणमधीतवेदान्तविषयमिति बौद्धादिदर्शनेषु निश्चिताप्रामाण्यज्ञानस्य, वेदान्तप्रमाणश्रद्धस्य, इति नास्य ब्रह्मजिज्ञासाधिकारविरोधः । स च मिथ्यात्वनिर्णयो विचारात् प्रागपि पूर्वोक्तरीत्या, इति न भूषणोक्तरीत्या विचारवैयर्थ्यम् ॥

अत एव शास्त्रारम्भे भाष्यकाराणामध्यासभाष्यम्—यत्राध्यासविषयकसंशय-पूर्वोत्तरपक्षाणां संग्रहेणोपक्रमः । तेन चोपोद्घातविधया ब्रह्माधिष्ठानत्वादिकं निरधारि, अनन्तरं तु नेदं बौद्धानामिव स्वबुद्धिमात्रकल्पितम्, किन्तु श्रुतिमूलमिति निश्चयाय श्रुति-सूत्राभ्यामुपोद्घातार्थस्याधिकरणशैल्योपक्षेप इति क्रमः ॥

साङ्ख्याभिमतनित्यानित्यविवेकाद् भामत्यभिमतस्य तस्य विशेषतः, तथाविवक्षायाः प्रयोजनं ब्रह्मलोकान्तवैराग्यसूचनम्

वैराग्यं हि नित्यानित्यवस्तुविवेकेन साङ्ख्यादिभिरपि स्वीक्रियते— यथाश्रुतनित्यानित्यविवेकमादाय, परन्तु नित्यानित्यपदार्थविवेकः, परमार्थतो ब्रह्मव्यतिरिक्तस्य सर्वस्यान्तवत्त्वेनानित्यत्वसूचनं कर्तव्यमिति विवेकार्थमेव सत्यासत्यपरतया नित्यानित्यपदार्थविवरणम्। तेन च साङ्ख्यमार्गेण वैराग्यमपि न श्रेयस इति सूचितं भवति, इति सविशेषोपासनाफलब्रह्मलोकान्तवैराग्यमधिकारिविशेषणमिति ज्ञाप्यते। नित्यपदं सविशेषसाधारणं श्रुतिषु दृश्यते, इति तावन्मात्रेण न शास्त्रसामाप्तिरिति सूचनमप्येवं व्याख्यानस्य लक्ष्यम्। व्यक्तं चैतद् विवरणेऽपि ॥

नित्यपदेन सविशेषोपासनफलान्तवैराग्यविवक्षा भामत्या-
चेकवाक्यतां गमयतीत्यत्र पञ्चपादिकादिसंग्रहः

तत्र नित्यपदं यद्यपि न व्याख्यातम्; तथापि ब्रह्मलोकान्तवैराग्यमधिकारिविशेषणमिति स्पष्टम्। अतस्तान्त्रिकान्तरादस्य विशेषोऽपि सिद्धो भवति। व्यक्तीकृतश्चायमर्थः परिमलेऽपि ॥

अत्र विवरणस्याप्यविरोध उक्त एव। न हि विवरणं नित्यपदार्थमनित्यपदार्थं वाऽत्र विवृणोति; अन्यथा कथं तत्र ब्रह्मलोकान्तवैराग्यहेतुत्वम् ॥

इयमत्र पञ्चपादिका—"तस्माद् यावदस्य हिरण्यगर्भावाप्तिपर्यन्तस्य भोगस्योत्पाद-विनाशाभ्यां विनाशित्वेनानित्यत्वं नावैति"—इति ॥

अत्रेदं विवरणम्—यावदनित्यत्वं नावैति, तावन्नित्यवस्तु न प्रतिपद्यत इत्याद्याह—इति, अनेन ह्यनित्यत्वविवेक एव नित्यानित्यवस्तुविवेके प्रधानः, नित्यविवेकस्तु न प्रधानः ॥

अत एव पञ्चपादिकायाम्—पूर्वोद्धृतवाक्यानन्तरम् - विनश्यदपीदं कूटस्थपर्यन्तमेव नश्यति। अन्यथा निरुपादानस्य पुनरुत्पत्त्यसंभव इत्यादिनाऽधिष्ठानज्ञानसहकृतानित्यवस्तुविवेक एव नित्यानित्यवस्तुविवेक इति निर्धार्यते, तेन च किंचिदस्ति कूटस्थमुपादानमिति ज्ञापनादधिष्ठानातिरिक्तस्योपादानस्य, कूटस्थनित्यस्य च परिणामिनोऽनित्यत्व-

स्यानपायात्। सत्यासत्यविवेक एव भङ्ग्यन्तरेण विविच्यते, इति नात्र विवरण-भामतीप्रस्थानयोर्वैरूप्यम् ॥

नित्यानित्यवस्तुविवेके कर्मविचारो न हेतुः, अतस्सोऽपि नाधिकारिविशेषणम्

तत्र यथा वैराग्यं नित्यानित्यवस्तुविवेकं विना न भवति; न तथा कर्मविचारं विना, येन कर्मविचारोऽप्यधिकारिविशेषणं स्यात् ॥

एतेन—नित्यानित्यविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्त इति श्रीभाष्यम्—व्याख्यातम्। यद्यनेन भाष्येण—कर्मविचारनित्यानित्यवस्तुविवेकादयो मुमुक्षान्ता अधिकारिविशेषणमिति विवक्ष्यते, तर्हि साधनचतुष्टयानुपपत्तिवादस्य लक्ष्यम्, साधनपञ्चकसंपत्त्यानन्तर्यमथशब्दार्थ इति फलति ॥

मुमुक्षामात्रस्याधिकारिविशेषणन्यायः श्रीभाष्यमतेऽपि कर्मविचारस्य नित्यानित्यवस्तुविवेकहेतुत्वम्, तथाऽधिकारिविशेषणत्वं न संभवति

इदमेवात्र पृच्छ्यते—यदि कर्मावबोधस्य विवेकादिद्वारैव साधनत्वम्, तर्हि श्रीभाष्यसिद्धान्तेऽपि कुतो न मुमुक्षामात्रानन्तर्यं नाथशब्दार्थः? किमिति वा तत्र पूर्व-पूर्वस्योत्तरोत्तरसाधनस्याप्यत्र प्रवेश इति?

अपरोऽनुयोगस्तु—(१) कथं कर्मविचारमन्तराद् नित्यानित्यवस्तुविवेको न भवति। (२) को वा नित्यानित्यवस्तुविवेकः? (३) नित्यानित्यवस्तुविवेकादीनामिव कर्मविचारस्याप्यधिकारिविशेषणतया जिज्ञासाकाले सत्ताऽपेक्ष्यते वा, न वा। सतोऽपि तस्य ब्रह्मविचारोपयोगित्वं वर्तते वा, न वेति ॥

कर्मविचारेण नित्यानित्यवस्तुविवेकायोगः

(१) तत्र कर्मकाण्डे कर्मफलानित्यत्वबोधकन्यायानामसत्त्वात्, आपाततोऽपि तद्विवेकस्यासंभवात्, धर्मजिज्ञासूनामपि लोकतो यत्किञ्चित्कर्मफलानित्यत्वानुभवेऽपि स्वर्गस्य यत्किंचित्कर्मफलस्यैव नित्यस्याप्यवगमात्, सामान्यतोऽपि नित्यवस्त्वनुसन्धानस्यासंभवाच्च न कर्मविचाराधीना नित्यानित्यवस्तुविवेकादयः ॥

### वेदानाध्ययनं विना विवेकाद्यसंभवात् तस्याप्यधिकारिविशेषणत्वापत्तिः

(२) नित्यानित्यपदार्थोऽप्यधीतवेदान्तस्येदं नित्यमिदमनित्यमिति निश्चयात्मको यदि विवेकः, तर्हि ब्रह्मविचारात् प्राक् तस्याप्यसंभवः, इति न तस्याधिकारिविशेषणता ॥

(३) न च नित्यानित्यवस्तुविवेकी वैराग्याय भूषणोक्तरीत्या—

"नित्यमप्यल्पमुज्झित्वा परमानन्दनिर्भरम् ।
अनित्यमप्याद्रियन्ते श्लाघन्ते च विवेचकाः ॥

इति न्यायेन न प्रकल्पते ॥

(४) कर्मविचारस्येव साङ्ख्य-योग-न्याय-वैशेषिक-जैन-बौद्ध-पाशुपतादिविचारस्यापि ब्रह्मजिज्ञासाकालिकत्वाविशेषात् को वा विशेषः कर्मविचारस्य ?

### पाञ्चरात्रप्रामाण्यवादिश्रीभाष्यमते पृथग्ब्रह्मजिज्ञासानिर्णयस्वभावादेर्ब्रह्मजिज्ञासावैयर्थ्यम्

वस्तुतस्तु ब्रह्मविचारात् प्राक् पाशुपताद्यागमस्येव पाञ्चरात्राद्यागमस्याप्यवगतत्वेन, तत एव ब्रह्मजिज्ञासाफलस्यापि सिद्धत्वात् श्रीभाष्यमते ततोऽनिर्णीतं किं वा तत्त्वमवधारणीयं परिशेष्यते ? पाञ्चरात्रस्यैव श्रीभाष्यसिद्धान्तत्वे कर्मविचारानन्तर्यं पाञ्चरात्रस्यापीति कुतो न निर्णीयते ? चित्तशुद्ध्यर्थं कर्मानुष्ठानावश्यकतायां तु जन्मान्तरीयेणापि प्राप्तचित्तशुद्धीनां ब्रह्मचर्यादेव प्रव्रजतां कर्मानुष्ठानेन तद्विचारणं भवति वेति भूषणमपि सर्वमिदं विवेचयतु । किं वा प्रयोजनं साधनचतुष्टयमात्रपूर्ववृत्तत्वनिरासस्येति च ?

### ब्रह्मजिज्ञासायां नित्यानित्यविवेकादय इति श्रीभाष्यमते न कर्मविचारः पूर्ववृत्ततयाऽऽक्षिप्यते

यथाचावगतिपर्यन्तज्ञानेच्छाया जिज्ञासापदार्थत्वेऽपि सूत्रेण विचार आक्षिप्तः कर्तव्यतया विवक्ष्यते । तत्र विचारेतिकर्तव्यतया नित्यानित्यवस्तुविवेकादयो विवक्षिताः, न तु साक्षादवगत्यर्थतया श्रोतव्यादिविधिप्राप्तश्रवणाद्यधिकार एवात्र विवक्ष्यते, तथाऽनुपदमेवोपपादितम् ॥

श्रीभाष्यमते ज्ञानमत्र यद्युपासनम्, तर्हि जिज्ञासेति सन्नर्थेच्छायाः विचारपरत्वाभावात् उपासनेच्छायां कर्मविचारस्य कर्मानुष्ठानद्वारोपयोगित्वेऽप्युपासनायामनुपयोगात् कथं कर्मविचारानन्तर्यमथशब्दार्थः ?

अद्वैतमते लोकानां वैराग्यस्याधिकारिविशेषणतयाविवेक्षणेऽपि
सविशेषोपासनविचारोपपत्तिः, तत्फलं तु ब्रह्म-
लोकान्तप्राप्ते गौणमुक्तित्वसूचनम्

नित्यानित्यवस्तुविवेकोऽयं दृष्टोपपत्तिभ्यामात्मानं लभमानः पञ्चपादिकोक्तरीत्या ब्रह्मलोकान्तदृश्यसामान्यमिथ्यात्वप्रसंख्यानसन्ततिद्वारेण, अन्यथा वा निर्णीयते, इति केवलं तथा प्रसंख्यानसन्ततिमात्रेणापि वैराग्यमात्रं साधयति; तथापि—"अत्र ब्रह्म समश्नुते" "न तस्य प्राणा उत्क्रामन्ति" इत्यादिवचनसिद्धा मुक्त्यधिकारिणो विरलाः—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति वचनेन हि ब्रह्मलोकं गतानाम्, किं बहुना? ब्रह्मणोऽपि तल्लोकमधितिष्ठतः, देवानां च ब्रह्मविद्याधिकारस्य शास्त्रतोऽवगमात् सविशेषोपासनमपि ब्रह्मभूयाय साक्षात्, परम्परया वोपकरिष्यति, इति संकर्षकाण्डनिर्णीतस्यापि तस्याप्यनुषङ्गोऽवान्तरतात्पर्यविषयस्यानुवादमात्रम् ॥

तेन च नित्यानित्यविवेकपदेन ब्रह्मलोकान्तदृश्यप्रपञ्चस्य स्वर्गादेरिव मिथ्यात्वेनानिर्णयेऽप्यपरेषु प्रपञ्चेषु वैराग्यं भवत्येव। तत्र येषां नित्यत्वनिर्णयः, तेषां दृष्ट्या तन्मिथ्यात्वनिर्णयोऽपि कर्तव्य इत्यभिप्रेत्यैव सविशेषब्रह्मजिज्ञासाया अप्यत्रानुषङ्गतोऽनुसन्धानम् ॥

न चैवं स्वर्गादावुत्पाद-परिच्छेदाभ्यामनित्यतया निर्णीते तदा नित्यत्वसंशयोऽपि; लोकत एव तदनित्यत्वावगमात्। अतो यदि ब्रह्मलोकान्तेऽप्यनित्यत्वनिर्णयः केषांचन, तर्हि तेषां निर्विशेषब्रह्ममात्रविचारनिष्ठानां न सविशेषविचारस्याप्यस्त्यपेक्षा। अतः सविशेषब्रह्मभावो न मुक्तिः, इति निर्णयोऽपि कर्तव्यः, येषां तत्र संशयः, इत्यादौ, अन्ते च सविशेषविचारः। मुख्यं फलं तु "ब्राह्मेण जैमिनिरि"त्यादिनैवावगतम् ॥

नित्यानित्यवस्तुविवेकस्य विना विचारं पूर्वमेव लोकतो-
ऽवगमः, न च भोक्तुरपि नित्यत्वम् , अनित्यत्वं
वा कर्मजिज्ञासयाऽवगम्यते

नित्यानित्यविवेकोऽयं पूर्वोक्तरीत्या लोकावगत एव, न कर्मविचारावगतः, इति कर्मफलानित्यत्वस्य, किं बहुना ? सर्वस्य जन्यस्य स्वर्गादेरप्यनित्यत्वं लोकत एवाऽवगत्य ब्रह्मविचारे प्रवर्तते ॥

न च कर्मविचारेण स्वर्गाद्यनित्यत्वनिर्णयेन कर्मफलमिव भोक्ताऽपि जन्म-मरणादिचक्रे बम्भ्रम्यमाणो लोकतः, कर्मविचारेण वा नित्योऽवधार्यते; अन्यथा जन्म-मरणाद्यवस्थादर्शनं कथमुपपद्येत—आब्रह्मसाक्षात्कारमनुवर्तमानम् ? अतो न नित्यत्वमात्मनोऽपि ततोऽवगम्यते; अन्यथा लोकान्तरगमनम् , पुनरावृत्त्यादि च कर्मविचारतोऽप्यवगम्यमानः कथमुपपद्यते ? कथं वा नानाजन्मभाक्त्वं जीवानाम् ?

मुमुक्षाया अधिकारिविशेषणत्वोपपत्तिः

मुमुक्षा हि जन्म-मरणाद्यवस्थारहितस्वस्वरूपावगमेच्छैव; अन्यथा मुक्तानामपि पुनरावृत्त्या जन्मभाक्त्वस्य नित्यत्वेनाविरोधे कथं वा मुक्तिकथाऽपि । अतः कर्मफलानित्यत्वनिर्णयेन जन्यफलमात्रे वैराग्यसंभवात् किं वा तदधिष्ठानं सत्यमिति जिज्ञासया ब्रह्मजिज्ञासोपपद्यते ॥

कर्मफलानित्यत्वनिर्णयोऽपि विवरण-भामत्युक्तरीत्या लोकत
एव, न कर्मविचारेण

अथ यदि न कर्मविचारेण कर्मफलानित्यत्वनिर्णयः किंत्वधीतमीमांसस्य कण्ठोक्तानामप्यनेकेषामुपदर्शितानेकन्यायसंचारविवेचनकौशलेन कर्मफलानित्यत्वनिर्णयः, तर्हि लोकत इव दृष्टोपपत्तिभ्यामपि सत्यासत्यविवेकस्य संभवात् नित्यमिदमिति निर्णयाभावेऽपि कर्मफलानित्यनिर्णयेन वैराग्यं वक्तव्यमिति विवरण-भामतीप्रस्थाननीतिरेव भूषण्यादिशरणम् ॥

नित्यस्वरूपनिर्णयस्तु न कर्मविचारेण,
किन्तु ब्रह्मजिज्ञासयैव

नित्यस्वरूपं तु भूषणसिद्धान्तेऽपि न कर्मविचारावसेयम् , किन्तु ब्रह्ममीमांसामात्रावसेयम् , इति तन्निर्णयाय ब्रह्ममीमांसेति समानम् ॥

"अथातो ब्रह्मजिज्ञासे"त्यत्र 'अतः' शब्दसामर्थ्यादित्या-
दिनेहामुत्रार्थफलभोगविरागलाभः

एतेन—इहामुत्रार्थफलभोगविरागो द्वितीयं साधनमपि—व्याख्यातम्; तद्धि नित्यानित्यवस्तुविवेकफलमिति चर्वितचर्वणम्। तत्र "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति श्रुतिवशात् कर्मफलनित्यत्वावगमाद् दृष्टोपपत्तितोऽप्यागमप्राबल्याद् दृष्टोपपत्तिभ्यां नित्यानित्यविवेकासंभवाद् नित्यानित्यविवेकोऽपि न संभवति, इत्यधिकाशङ्कामुपक्षिप्य, अतश्शब्दव्याख्यानविधया श्रुतेरपि दृष्टोपपत्तिसमुपबृंहितश्रुत्यन्तरवशेन कर्मफलमात्रानित्यत्वव्यवस्थापनेन नित्यं ब्रह्माख्यं किमपि तत्त्वं वर्तत इति निरूपणेन दृढीक्रियते—अतः शब्दसामर्थ्यविवेचनपरत्वात्, इति न विवरण-भामतीप्रस्थानयोर्व्याघातः। तेन सिद्धान्ते दृष्टोपपत्तिसमुपबृंहित-'तद्यथेह'श्रुत्यविरोधार्थमक्षय्यत्वमाभूतसंप्लवावस्थानपरं मन्यते, इति नित्यानित्यवस्तुविवेकस्य वैराग्यसाधनत्वे न दोषलेशोऽपि॥

कर्मफलानित्यत्वे 'तद्धास्यान्ततः क्षीयते' इति श्रुतिरपि
प्रमाणम्। न चास्या आत्मज्ञानस्तुति-
परत्वादि

विवरणं हि "यदि ह वा अप्यनेवंवित् महत् पुण्यं कर्म करोति, तद्धास्यान्ततः क्षीयते" इति, न केवलम् तद्यथेहेति श्रुतिः, किन्त्विदमपि श्रुतिवचनं कर्मफलानित्यत्वे प्रमाणयति॥

भूषणं हि—आत्मज्ञानाभावे कर्मफलानित्यत्वपरम्, आत्मज्ञाने तु न कर्मफलं विनश्यतीत्युक्तश्रुत्यर्थ इति वदत् किमेतेन साधयति—किं कर्मफलं नित्यं भवतीति, उत ज्ञानस्तुतिरियमिति। आद्ये कर्मविचारेणापि न कर्मफलानित्यत्वनिर्णयोऽधीतकर्मावबोधस्येति स्वसिद्धान्तविरोधः, कर्मविचारपूर्ववृत्तत्वस्य स्वप्राणस्य स्वयमेव त्यागश्च। द्वितीये तु कथं कर्मफलानित्यनिर्णयः? अतः कर्मफलनिन्दयाऽऽत्मज्ञानस्तुतिपरमेव विवरणोद्धृतं वचनम्॥

भूषणेन ह्यात्मज्ञानप्रशंसाविधयेतरनिन्दाविधया वाऽर्थवाद इत्येवं इत्येव वक्तव्यम्। अर्थवादत्वं त्वस्य कर्मविलक्षणस्यैव ज्ञानस्य प्रशंसया, इत्यद्वैतसिद्धान्तमेवेदं वचनमुपबृंहयति अतो नैतद्वचनमहिम्नाऽपि कर्मविचारानन्तर्यमत्राथशब्दार्थः॥

अथशब्दार्थानन्तर्यप्रतियोगिनित्यानित्यवस्तुविवेकासंभव-
शङ्काव्यावर्तनार्थमतःशब्दोऽद्वैतमते

एतेन—अतः शब्दोऽप्य''थातो ब्रह्मजिज्ञासे''त्यत्र—व्याख्यातः। अथ-शब्दार्थानन्तर्यप्रतियोगिनोर्नित्यानित्यवस्तुविवेकयोः साधनयोरसंभवशङ्का-व्यावर्तनेनाथशब्दार्थानन्तर्यप्रतियोगिनां ब्रह्मजिज्ञासापूर्ववृत्तत्वदृढीकरणा-र्थत्वा'दतः'शब्दस्य। तेन ह्यथशब्दोपात्तसाधनचतुष्टयस्याधिकाशङ्कानिवर्त-नेन ब्रह्मजिज्ञासाहेतुत्वं समर्थ्यते; अन्यथा साधनचतुष्टयसंपत्तेर्हेतुत्वा-दित्येतावन्मात्रविवक्षणेनाथशब्देनैव तस्य लाभाद् वितथोऽतःशब्दः स्यात्, इत्यधिकाशङ्काव्यावर्तनमपि तस्य लक्ष्यमिति भगवत्पादादीना-माशयः॥

उक्तस्यैवार्थस्य पुनरुक्तिरधिकाशङ्कावारणार्थम्
''अत एव प्राणः'' इत्यादौ दृष्टा

अत एव—भाष्यमपि कर्मफलस्य क्षयित्वाद् ब्रह्मणो नित्यत्वादित्येवं विधयैवातः शब्दं योजयति। केवलहेतुत्वमात्रविवक्षायां तु तत्पदं वितथम्। ''अत एव प्राणः'' इत्यत्राकाशाधिकरणेनैव गतार्थत्वेऽप्यतःशब्दपुरस्सरं तस्यैव न्यायस्यानुसंधानमधिकाशङ्कामादायेति संप्रतिपन्नम्। अतः केव-लहेतुत्वविवक्षातोऽधिकाशङ्काव्यावर्तनेन हेतुत्वस्य दृढीकरणमेव तेन वरम्॥

अत्राधिकाशङ्कावारणे मूलं ''तद्यथेहेहि श्रुतिरपी''ति भामतीव्याख्या,
ब्रह्मपदस्य वेदोपस्थापकत्वमपीति मत्वा

''तद्यथेह कर्मचितः'' इत्यादिवेदवाक्यानामनुसन्धानं पूर्वोक्तरीत्या सर्वशाखाप्रत्ययन्यायेनात्र विषयवाक्येऽधिकारिविशेषसमर्पकतया जिज्ञा-सासाधनोपस्थापकेषु वाक्येषु ''तद्यथेह कर्मचितः'' इति वाक्यमपि पुरः-स्फूर्तिकम्, विशेषतश्चाथशब्दव्याख्योपयोगितयाऽनुसंहितम्, इति कृत्वैव भामती, इति ब्रह्मपदेन वेदवाक्यानामपि ग्रहणम्; सूत्रेष्वनेकार्थत्वस्य भूषणत्वात्। तदपि 'तुष्यतु दुर्जनन्यायेने'ति ऋजुप्रकाशिका वदति, इति न तत्र निर्भरो भामतीकाराणाम्। विवरणादयस्तु नैवमत्र व्याचक्षते॥

न चैतावताऽऽत्मस्वरूपं ब्रह्मशब्दार्थो भामत्या परित्यज्यते। स्पष्टं चैतद् ब्रह्मशब्दव्याख्यानावसरे—ब्रह्म च वक्ष्यमाणलक्षणम्—''जन्माद्यस्य यतः''

इति। अत एव न जात्याद्यर्थान्तरमाशङ्कितव्यमि"ति भाष्ये। "अस्ति ब्रह्मशब्दो विप्रजातौ, यथा 'ब्रह्महत्येति। अस्ति च वेदे, यथा "ब्रह्मोज्झमि"ति। तत्र परमात्मेतरवेदादिपरत्वं मा भूदिति व्याचष्ट इत्यवतरणेन भामती हि वेदपरत्वं ब्रह्मशब्दस्य न वाच्यार्थपरतया, किन्तु सूचकत्वमात्रेण। न चात्र निर्भर इति व्यक्तमृजुप्रकाशिकायाम् ॥

### ब्रह्मलोकान्तवैराग्यमप्यधिकारिविशेषणम्

यथाचाद्वैतमते सगुणोपासनफलब्रह्मलोकान्तवैराग्यस्याधिकारिविशेषणत्वेऽपि तस्याप्यवान्तरतात्पर्यविषयस्य विचारो नासङ्गतः, तथा व्यक्तीकृतमधस्तादत्रैव। शारीरकारम्भो हि निर्विशेषात्मतत्त्वानुबन्ध्येव प्राधान्येन, इति न काऽप्यनुपपत्तिः सविशेषोपासनफलान्ते वैराग्येऽपि ॥

### कर्मवत् सगुणोपासनस्याप्युपायत्वात् सविशेषोपासनस्यापि नासङ्गतिः

कर्मफलानित्यत्वनिर्णयोऽपि न कर्मविचारे, येन कर्मविचारानन्तर्यमथशब्दार्थः स्यात्, तदानन्तर्यं हि "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" "विहितत्वाच्चाश्रमकर्माऽपि" "अग्नीन्धनाद्यनपेक्षा" इत्यादौ ब्रह्मविचार एव सूच्यते। तत्र यदि कर्मणोऽङ्गत्वोपपादनार्थं तद्विचारः, तर्हि सविशेषोपासनमप्यदृष्टविधया—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥"

इत्युक्तविधयाऽन्तरङ्गोपायः, इति सोऽपि निर्विशेष जिज्ञासाया उपकरिष्यति। विना फलेच्छां कर्मयोग इव, भक्तियोगोऽपि मोक्षायैव ज्ञानद्वारा प्रकल्पते, इति न सविशेषविचारस्याप्यत्रासङ्गतिः ॥

### नित्यानित्यवस्तुविवेकादीनामुत्तरोत्तरहेतुत्वेनाधिकारिविशेषणत्वम्,

तत्र यद्यपि नित्यानित्यवस्तुविवेक उत्कटविरागं प्रतिष्ठापयन्, विरागश्चोत्कटः शम-दमादिसंपत्तिं दृढीकुर्वाणः, स चोत्कटां मुमुक्षां संपादयन्नधिकारिविशेषणानि; तथाप्यङ्गवैकल्येऽन्यस्यौत्कटत्वभङ्गो भवति, इति सहसमुच्चय एवात्र विवक्षित इति पूर्वमुक्तम् ॥

तत्र शम-दमादिसाधनसंपदित्यत्र संपत्पदं सर्वप्रधानमधिकारिविशेषणं शम-दमादि, नित्यानित्यवस्तुविवेक-विरागयोरुत्कटयोरनुवृत्तावेव पुष्कलं भवति, नान्यथेति सूचनार्थम् । मुमुक्षा तु सर्वेषामविशिष्टा ॥

साधनत्रयाधीनोत्कटमुमुक्षैवाधिकारिविशेषणमिति तु परे

अत्र साधनत्रयसंपत्तिर्नैवाधिकारिविशेषणतामर्हति, किन्तूत्कटमुमुक्षामात्रं साधनत्रयाधीनमितीतरे । अधिकमधस्थात् ॥

तत्र नित्यानित्यवस्तुविवेकदार्ढ्यसंपादकतया कर्मविचारोऽपि पञ्चमोऽधिकारिविशेषणं मा मन्यतामिति सूचनार्थमेव "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति पृथगधिकरणम् । "शम-दमाद्युपेतः" इति च पृथगधिकरणम् । तेनावगम्यते—शम-दमादिकमिव कर्मविचारस्य न जिज्ञासाकालेऽनुवृत्तिर्नियता, किन्त्वपेक्षामात्रमिति । श्रीभाष्यमते तस्यापि नित्यानित्यविवेकोत्पादकतया शम-दमादिवदधिकारिविशेषणत्वे तत्पार्थक्यमनुपपन्नं स्यात् । किं बहुना ? "यज्ञादिश्रुतेरि"त्यादिपदेन शम-दमादिश्रुतेरपि संग्रहोपपत्त्या "शम-दमाद्युपेतः स्यादिति पृथगधिकरणान्तरवैयर्थ्यमपि । अतो ज्ञायते कर्मविचारस्य शम-दमादिवन्नाधिकारिविशेषणत्वमिति ॥

अद्वैतमते कर्मणामपेक्षामात्रम्, सा चातीतानां कर्मणामपेक्षया निर्वहति, न तु विचारकालेऽनुवृत्त्या

न चाद्वैतमतेऽपि कर्मणां सर्वात्मनाऽनुपयोगः; वेदनप्रतिबन्धकनिवर्तकतयोपयोगस्य—

"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ॥"

इति वचनानुसारेण विविदिषार्थत्वस्य साधनात् । अधिकं विविदिषासाधनत्वोपपत्तिप्रकरणे । अतो न भूषणोक्तरीत्योक्तसूत्रयोः पूर्वपक्षोत्तरभावः संभवति ॥

तत्र "सर्वापेक्षा चे"ति सूत्रेऽपेक्षामात्रं सूत्रितम्, "शम-दमाद्युपेतः स्यादि"ति सूत्रशेषे तु—तद्विधेस्तदङ्गत्वादि"ति तदङ्गत्वं च सूत्रितम् । तेन च ब्रह्मजिज्ञासाकाले शम-दमादीनामनुवृत्तिर्नियम्यते, अङ्गाङ्गिनोर्जन्मभेदेन, अङ्गिकालातिरिक्तकाले वा विना प्रमाणविशेषमनुष्ठानस्य प्रधानानुपकारकत्वात् । कर्मणां त्वपेक्षामात्रम्, नाधिकम् । अतो जन्मान्तरी-

येणापि कर्मानुष्ठानेन ब्रह्मविचारोपकारसंभवात् कर्मणाम्, तद्विचारस्य वाऽपेक्षामात्रमकिञ्चित्करम् ॥

### अवगतिपर्यन्ते ज्ञाने विधेयश्रवणादीनामेवोपयोगः, न तु कर्मणां साक्षात्

तत्र—"आत्मन्येवात्मानं पश्येदि" ति विधिरिति विवरणमते 'पश्येदि' त्यस्य 'ब्रह्मजिज्ञासे'त्यत्र वाऽवगतिपर्यन्तसाधनश्रवणपरत्वम् "आत्मा वा अरे द्रष्टव्यः" इति वाक्यैकवाक्यतया नियमपरतया नानुपपन्नम्। भामतीमते तु तेन वेदान्तप्रमाणपरिशीलने बुद्धेरभिमुखीकरणमात्रमिति ज्ञानविधेयत्वोपपत्तिप्रकरणे व्यक्तम्। उभयत्रापि श्रवणाङ्गतया शम-दमादौ पुरुषतन्त्रविधिरविप्रतिपन्नः। अत एव "तद्विधेरि" ति तावन्मात्रे विधिसूचनम्; अन्यथा "सर्वापेक्षा चे" त्यादावपि श्रुतिविचारमात्रत्वाद् ब्रह्मजिज्ञासायाः किं प्रयोजनं "तद्विधेरे" ति सूत्रशेषस्य। अतोऽर्धजरतीय एवात्र शरणं सूत्रमपि मन्यते ॥

### कर्मफलत्यागरूपसंन्यासोऽप्युपरतिपदार्थः, इति साधनसंपन्नानां गृहस्थानामपि ब्रह्मजिज्ञासायामधिकारः

तत्र "शान्तो दान्त उपरतस्तितिक्षुरि" ति वाक्य उपरतिशब्दः संन्यासपरः। स च फलत्यागसाधरणत्वाद् गृहस्थानामपि ब्रह्मविद्याधिकारं नियच्छति। तत्र तत्तदाश्रमिणां तत्तदाश्रमोचितसर्वाङ्गानुष्ठानं तत्तदाश्रमप्रधानकर्मभिः साकं नियतम्, इति न गृहस्थस्य, त्रिदण्डैकदण्ड-काषायवस्त्रधारणादिकं सदारस्यापि, न वा संन्यासिनोऽपि स्वपुत्र-कलत्रादिपोषणम्, गृहस्थवदेव जीवननिर्वाहः इत्यप्रासङ्गिकोऽयं भूषणस्यायासः ॥

### विना शमादिकं न मुमुक्षा, सत्यपि शम-दमादेः कर्मयोगादावप्युपयोगेऽपि

एतेन—मुमुक्षाऽपि—व्याख्याता। सा हि सर्वोपाधिशून्यानावृतसंविद्रूपेच्छा। तत्र हि साधनमावरणनिवर्तकतया प्रमाणतन्त्राऽखण्डाकारवृत्तिः। स तु वेदान्तश्रवण-मनन-निदिध्यासनाधीनेत्युत्सर्गः। तदधिकारस्तु शमादिसंपन्नस्यैव। तत्र कर्मयोगेऽप्यस्ति शम-दमाद्यपेक्षा, सविशेषोपासनेऽपि, परन्तु न तत्र शम-दमादेरङ्गत्वम्, ब्रह्मजिज्ञासायां तु तदङ्गमपि। सविशेषोपासनमद्वैतमतेऽपि कर्मापेक्षमेव, न तु तदुपासकस्य कर्मत्यागः ॥

### श्रवणमात्रेण न देहात्माभिमाननिवृत्तिः, इति सर्वाश्रमिणां ब्रह्मविद्याधिकारः

न च तावता ब्रह्मजिज्ञासायामनुपयोगः शमदमादेः। अत एव सूत्रकारो विशिष्य सूत्रयति—"शम-दमाद्युपेतः स्यादि" ति। न च निर्विशेषब्रह्मविचारकाल एव देहाभिमानादिनिवृत्तिः, तत्प्रयुक्ततत्तदाश्रमाद्युचितकर्माधिकारो वा नियमेन वार्यते। तत्र गृहस्थानां तदाश्रमकर्मापेक्षा, संन्यासिनां तु सर्वदा शम-दमाद्यपेक्षा नियता, न तु गृहस्थानामिव तत्तदाश्रमकर्मानुष्ठानकाल एवेति नियमः॥

गृहस्था अपि सदा शान्ताः कर्माणि कुर्वाणा अपि ब्रह्मविद्याधिकारिण एव, यथा जनक-याज्ञवल्क्यादयः, इति मुमुक्षायाः शमादिना समुच्चयोऽव्याहतः॥

सूत्रकारस्तु प्रथमाध्यायेन शारीरकमीमांसां निर्विशेषब्रह्मानुबन्धिनीं प्राधान्येन सूत्रयति। तदेव तस्यैव प्रधानं लक्ष्यम्। तत्र सविशेषविचारस्य विष्णौ पर्यवसानं चापरस्य सूत्रकारस्य कृत्यम्, येन कृतं स्वीयं कृत्यम्—यथा कर्मविचारकृत्यं स्वीयं जैमिनिना कृतम्। अत एव शारीरकनाम्नैव ब्रह्ममीमांसा॥

### धर्म-ब्रह्मजिज्ञासानां न परस्परापेक्षा

तत्र धर्ममीमांसाविषयो धर्मः, एवं संकर्षकाण्डार्थः सविशेषोपासानम्, शारीरकमीमांसाविषयस्तु प्रत्यगभिन्नं संविन्मात्रं तत्त्वम्। शारीरत्वं ह्यात्मनः सर्वान्तरत्वेन, सर्वाधिष्ठानत्वेन च प्रत्यगभिन्नस्य परमात्मन एव। अतो विषयभेदादधिकारभेदाच्च धर्मब्रह्ममीमांसानां न सापेक्षता॥

### शारीरकमीमांसाख्याऽद्वैतानुबन्धिन्येव स्वरसा

अज्ञातार्थे कन्प्रत्ययो ह्ययमहमर्थं शारीरमज्ञातं ज्ञापयितुमेव स्वीयं शास्त्रमित्यभिप्रैति। किं वा कर्तव्यमवशिष्टम् सूत्रकारस्येतोऽप्यन्यत्—

"यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते॥"

विश्वस्यते सूत्रकारो ब्रह्मभूयं गतो चिरजीव्येव ब्रह्मात्मना, न तु तस्य चिरजीवितायाः विघातः स्यात्॥

### विनाऽपि साधनसंपत्तिं ब्रह्मविचारः पापनिर्हरणार्थं प्रायश्चित्तम्

अत्र भूषणं परिपृच्छति—साधनचतुष्टयाभावे ब्रह्मविचारः कथं न वितथः? बहवः साम्प्रतमद्वैतविचारं साधनचतुष्टयाभावेऽपि कुर्वन्तीति प्रत्यक्षम्—इति। अमुं परिप्रश्नं दूरदर्शिनी भाष्यभावप्रकाशिका पूर्वमेव प्रतीक्ष्यैवं लिखति—मुमुक्षुत्व-तत्साधनशम-दमोपरति-तितिक्षा-समाधान-सम्पन्नो यावन्नालम्ब्यते, तावद् ब्रह्मजिज्ञासां कः प्रतिपद्यते? कथंचिद् दैव-वशात् कुतूहलाद्वा यथाश्रुतबुद्ध्या वा प्रवृत्तोऽपि न निर्विचिकित्सं ब्रह्म तत्त्वेनावगन्तु शक्नोति; यथोक्तसाधनसम्पत्तिविरहात् अनन्तर्मुखचेता बहि-रेवाभिनिविशमान इति। अयमेवार्थः आम्रेडितो भाष्यभावप्रकाशिकायां चित्सुखाचार्यैरपि—"कथंचित् कुतूहलादिना प्रवृत्तस्यापि फलपर्यन्तज्ञा-नानुदयात् फलविपर्यय इत्युक्तमिति। विवरणं तु तत्र शूद्रयागादिवत् फलपर्यन्ता न स्यादिति वर्णयति—

"दिने दिने च वेदान्तश्रवणाद् भक्तिसंयुतात्।<br>
गुरुशुश्रूषया चैव कृच्छ्राशीतिफलं लभेत्॥"

इति पापनिर्हरणार्थं साधनचतुष्टयसंपत्तिहीनानामपि वेदान्तश्रवण-मिति च ज्ञापयति। न चादृष्टार्थमेतादृशं वेदान्तश्रवणं फलपर्यन्तमपीति तु निश्प्रचम्। विनाऽपि साधनचतुष्टयसंपत्तिं गुरूपसत्तिस्तु यथासंप्रदायं ग्रन्थग्रन्थिविभेदेन वेदान्ततत्त्वावगमार्थम्, उक्तविधया पापनिर्हरणार्थं च; अन्यथा हि स्वेच्छानुसारमन्यथाऽन्यथा वेदान्तार्थग्रहणेन, विप-रीतबुद्ध्या च वेदान्ततत्त्वार्थनिर्णयाद् वञ्चितः सर्वोऽपि भवेत्। अत एव कुतूहलार्थं दैववशात्, अन्यथा वा वेदान्तविचारे प्रवृत्तानामपि गुरूपसत्तिः सर्वस्य-साधनसंपन्नस्य, तदसंपन्नस्य वा॥

### कर्मविचारपूर्ववृत्तत्वानियमोपसंहारः

तत्र कर्मविचारः, कर्म वा जन्मान्तरानुष्ठितमपि चित्तशुद्ध्यादिद्वारा ब्रह्मविचारे सत्यमुपकरिष्यति, तथापीहैव जन्मनि तत्कर्तव्यमित्यनिय-मात्, तस्य पूर्वोक्तरीत्या नियताधिकारिविशेषणनित्यानित्यविवेकादेरिव विचारकालिकत्वानियमाच्च न तदानन्तर्यमथशब्दार्थ इत्युक्तम्॥

### कथञ्चिदपेक्षामात्रेण पूर्ववृत्तत्वे कथं न वेदाध्ययनस्यापि पूर्ववृत्तता ?

तत्र कथंचिदपेक्षामात्रेण तदानन्तर्यविवक्षायां वेदाध्ययनमपि कथं न नियतपूर्ववृत्तं स्यादिति शतभूषणी । भूषणमत्रेष्टापत्तिमापादयति । तथाऽऽपादयदिदं जन्मान्तरीयेणाध्ययनेन, उपनयनेनापि धर्म-ब्रह्मजिज्ञासयोरधिकारमादाय सुष्टूत्साहयति मनुष्यजातिमात्रम्, प्राणिमात्रं वा, अहो अनुकम्पा भूषणस्य !

यत्तु—भामत्यादौ स्वाध्यायाध्यायानन्तर्यं तु समानम्—इत्युक्तम्, तत्र धर्मशब्दस्य धर्मजिज्ञासाघटकस्य वेदार्थमात्रपरत्वमाश्रित्य, न तु ब्रह्मविचारे कर्मविचारवद् वेदाध्ययनस्यापि पूर्ववृत्ततामभिप्रेत्येति व्यक्तमधस्तात्; अन्यथा वेदाध्ययनानन्तर्यमात्रविवक्षयैव निर्वाहात्, किमिति कर्मविचारपूर्ववृत्ततायाः साधनम् ॥

### कर्मविचारपूर्ववृत्ततायां ब्रह्मचर्यादेव संन्यस्तानां देवानां च ब्रह्मविचारानधिकारापत्तिः

यदि विना कर्मविचारं प्रवृत्तिर्न फलाय, तर्हि किमर्थमध्ययनानन्तर्यमपीष्टम्? सर्वथा तु कर्मविचारानन्तर्यं नात्राथशब्दार्थः; अन्यथा "ब्रह्मचर्यादेव संन्यस्तानाम्, अकृतकर्मविचाराणां च कथं ब्रह्मविद्याधिकारः? कथंच देवानां तदधिकारसाधनम्?

### देवतानां प्रकृतब्रह्मविचारविलक्षण एव ब्रह्मविचारेऽधिकार इति भूषणोक्तिः, तन्निरासश्च

अत्र भूषणम्—

"औचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ।
कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते ॥"

इत्यादिवचनैर्ब्रह्मविद्याधिकारिणोऽपि देवाः प्रकृतब्रह्मविचारे नियमेन प्रवर्तन्त इति दुर्वचम् । ब्रह्मविद्याधिकारिणामपि देवानां शारीरकाध्ययनाधिकारो न नियतः, तथात्वे संन्यास-वैराग्य-शम-दमादिदूराणामप्यधिकारात् साधनचतुष्टयसंपत्तेरप्यभावादद्वैतमतेऽपि देवताधिकरणानुपपत्तिः समानेति—लिखति ॥

### देवतान्यायेन शूद्राणामपि प्रकृतब्रह्मविचारविलक्षणविचार-एव कथं नाधिकारनिषेधः ?

इदमेवात्र पृच्छ्यते—यदि देवतानां ब्रह्मविद्याधिकारः शारीरक-ब्रह्मविचाराद्विलक्षणः, तर्हि कुतोऽत्र शारीरकविचारे तेषामधिकारसमर्थनम् ? स को वा, किं शारीरकब्रह्मविचारानन्तरमप्येकविंशाध्यायमारभ्य चिरजीविनो बादरायणस्य, अन्यस्य वा यद्यन्यः, तर्हि अपशूद्राधिकरणमपि शारीरकब्रह्मविचाराद्विलक्षणब्रह्मविचारपरम्, शारीरकाधिकारस्तु शूद्राणामपि, इति कथं न प्रकृतब्रह्मविचारे न शूद्राणामप्यधिकारः ॥

### प्रकृतब्रह्मविचाराधिकारातिरिक्तब्रह्मविचारो भूषणाभिमतो निर्विशेषविचार एव स्यात्, इष्टापत्तौ "देवैरत्रापि विचिकित्सितमि"ति विचारः तस्यापि व्यवस्थापनपरोऽयं विचारश्च कृत एवात्रेति ब्रह्मजिज्ञासेयं निर्विशेषपरैव मुख्या स्यात्, वेदमूलकत्वव्यवस्था च

यदि 'संस्कारपरामर्शात्" इत्यादिसूत्रात् प्रकृत ब्रह्मविचार एव शूद्राणामधिकारनिषेधः, देवानां त्वनादिसंप्रदायसिद्धा ब्रह्मविद्याऽपरा वर्तते, तर्हि सा किं निर्विशेषविषया, उत सविशेषविषया। आद्ये कथं नानादिसंप्रदायसिद्धदेवतासंबन्धिब्रह्मविद्याविचार एव प्रकृतशारीरकविचारोऽपि ? किं वा साधनमधिकारिविशेषणं वा तस्मिन् ब्रह्मविचारे ?

यदि देवत्वमात्रम्, तर्हि नाचिकेतोपाख्यानेन्द्रप्रतर्दनाख्यायिकेन्द्रविरोचनाख्यायिका भगवद्गीतादिब्रह्मविद्याश्च देवताधिकारिका, न प्रकृतब्रह्मविचारः, इति सा निर्विशेषपरैवेति निगदव्याख्यातम् ॥

इदमप्यपरं चोद्यते—कर्मविचारानपेक्षायां ब्रह्मविद्यायामधिकारिणो देवाः किं कर्ममीमांसानिर्धारितस्वरूपेभ्यो विलक्षणाः, उत त एव। आद्ये "विरोधः कर्मणीति चेत्" इत्यादिसूत्राणामत्र का संगतिः ? द्वितीये—कथमपरेयं ब्रह्मविद्या ?

किं च किं शारीरकविचारोऽयं बादरायणेन स्वबुद्धिकल्पितः, उतायमप्यनादिसंप्रदायसिद्धः। आद्ये जैमिनीयविचारोऽपि तादृशः, इति पौरु-

पेयत्वाद् नास्य जैमिनीयविचारस्येव वेदार्थनिर्णयमूलत्वम् । अन्योऽपि यास्कस्य च वेदार्थविचारः कथं प्रमाणम् ? इत्यव्यवस्था समापद्येत ॥

एवं देवतानां ब्रह्मविद्यापि यदि सविशेषपरैव, तर्हि तदधिकारविषयः सविशेषोऽन्यो वा, उतैतद्विचारविषय एव वा । यद्यन्यः, तर्हि प्राप्यो लोकोऽपि वैकुण्ठलोकादन्यः, इति पर्यनुयोगोऽपि दुरुत्तरः । का वाऽनुपपत्तिः शारीरकविचारोऽयमपि देवतानामपीत्यङ्गीकारे, यदि तेषां कर्मानधिकारिणां कर्मविचारेऽनधिकारात् तदधिकारानुपपत्तिरिति भिया तथा कल्पनम्, तर्हि किमयमौचित्यस्यापि नः क्रमः ? तत्किमत्रोष्णीषरक्षणार्थं शिरःकर्तनेन ? कर्मविचारानन्तर्यपक्षोऽयं त्यज्यताम्, साधनचतुष्टयसंपत्त्यानन्तर्यमेवाथशब्दार्थो गृह्यताम् ॥

### देवतानां विद्याङ्गोपनीतानामुपनिषन्मात्राध्ययनं न विरुद्धम्

कथमत्र देवतानां संन्यासाद्यनधिकारिणां विचारेऽधिकार इति तु साधुरयं परिप्रश्नः । उत्तरं त्वत्रानाश्रमिणाम्, ऊर्ध्वरेतसामिव वा नित्यप्रतिबुद्धवेदार्थ-साधनचतुष्टयसंपत्तिमात्रेण तदधिकारो न विरुध्यते । तेषामनधीतवेदान्तत्वमपि न दोषाय । एतादृशानेवाधिकृत्य विद्याङ्गोपनयनपूर्विकोपनिषदावर्तनविधिः—"उपनिषदमावर्तयेदि"ति । अत एव—"तदन्तरप्रतिपत्तौ" "शम-दमाद्युपेतः" इत्यादिना साधनाध्याये वैराग्यादिसाधनानां सूत्रणम् ॥

### साधनाध्याये कर्मविचारापेक्षासूत्रणमिव साधनचतुष्टयस्यापि सूत्रणं समानम्, पाठक्रमादर्थक्रमस्य बलीयस्त्वात्

भूषणमत्र पृच्छति—ब्रह्मविचारेऽवतीर्णस्य प्रागेव शम-दमादेरावश्यकतया कथं ब्रह्मविचारमध्ये संकलनमिति ? इदमेवात्र प्रतिपृच्छ्यते—कृतकर्मविचारस्यैव ब्रह्मविचारेऽधिकारात् कथम् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यादिकर्मसम्बन्धी विचारः शारीरकविचारमध्य एवेति ? यदि तस्य साधनत्वं सूचयितुम्, तर्हि साधनस्य साधनत्वादेव पूर्वसिद्धत्वात्तद्वैयर्थ्यम्, अनौचित्यं चात्रेति प्रश्नोऽसमाहित एवावतिष्ठते । साधनस्य सर्वस्य कर्मविचारे कथं न गणनमिति शङ्का त्वपरा ॥

तत्र यदि 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन सर्वोऽपि कर्मविचारस्तृतीयाध्यायतुरीयपादेन संगमिष्यते, तर्हि साधनाध्याये स्वयं

निर्णीताः शम-दमादयः कथं न साधनानि ? भवतु वा 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेनाथशब्दव्याख्यानार्थत्वात्तृतीयाध्यायस्याऽऽदावेव तृतीयाध्यायस्य सर्वस्यापि विचारात् प्रागेव संगतिः ॥

अत एव पञ्चपादिका-न्यायरक्षामण्युक्तरीत्या ब्रह्मलोकान्तविरक्तानामेव मुख्यब्रह्मजिज्ञासायामधिकाराद् न कर्माण्यपेक्षते ब्रह्मजिज्ञासा। ब्रह्मविचारान्तरकल्पने तु वक्तव्यं सर्वमुक्तमेव ॥

न केवलं संन्यासिनाम्, गृहस्थानामप्यादित एव विरक्तानामगृहीतसंन्यासाश्रमाणां न सर्वोऽपि कर्मविचारोऽपेक्ष्यते; अवश्यानुष्ठेयनित्य-नैमित्तिककर्मन्यायमात्रविचारेणाप्यलम्, इति तेषामपि षोडशलक्षण्यात्मिका धर्मजिज्ञासा न नियतेत्येवाशयो नित्य-नैमित्तिककर्ममात्राधिकारिणां तु न कर्मविचारापेक्षेति लिखन्त्याः शतभूषण्याः, न त्वविदुषामपि कर्माधिकार इति, इति कर्मविचारशब्देन प्रकृतसर्वकर्मविचार एवाभिप्रेत इति न व्याहतिः। न चानेन सर्वेषां सर्वकर्मविचारानपेक्षेति विवक्ष्यते, किन्तु केषांचन ब्रह्मविचारनिष्ठानां प्रत्यवायपरिहारार्थमत्यावश्यककर्ममात्राधिकारिणामेव, इति जनकादीनां सर्ववेदार्थविज्ञानं न वार्यते। सर्वकर्मविचारानियमप्रतिपादन एव तु तात्पर्यम् ॥

देवताधिकरणप्रयोजनम् हिरण्यगर्भान्तपदप्राप्तिसाधन-
कर्मविचारादिपूर्ववृत्तताऽयोगः

अत्र देवताधिकरणे ब्रह्मविद्याधिकारिषु—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ॥
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

इति वचनात् ब्रह्मणोऽपि ग्रहणम्। तेन च सविशेषब्रह्मपदप्राप्तिरपि न मुक्तिः, इति हिरण्यगर्भलोकान्तवैराग्यं वैराग्यशब्दार्थ इति गम्यते, एतदर्थमेव देवताधिकरणमिति भाष्याशयस्तत्र तत्र व्यक्तः ॥

अनेन वैराग्यपराकाष्ठाऽपेक्षा सूच्यते। सा च देवानामपि विचाराधिकारित्वात्तत्पदप्राप्तिर्न मुख्यपुरुषार्थ इति सिद्ध्यति। न चानेनात्र देवतानामनधिकारोऽप्यधिगतो भवति भूषणोक्तरीत्या। यथा च वैराग्यमुमुक्षयोः साधनत्वाङ्गीकारमात्रेण, न कर्मविचारपूर्ववृत्तता, तथा विवेचितम्, इति न कर्मविचारापेक्षा ब्रह्मजिज्ञासा ॥

भास्करसंप्रदायानुसारेण कर्मविचारानन्तर्यवादे, यत्र श्रीभाष्यस्य नैकमत्यम् ; तन्मतस्य खण्डितत्वात्

स हि भास्कराचार्यसंप्रदाय एव। स च संप्रदायो बहुधा श्रीभाष्यानुयायिभिरपि भगवत्पादैरिव दूष्यते। न केवलं ब्रह्मकारणतावादम् किन्तु ज्ञान-कर्मसमुच्चयभावि समसमुच्चयात्मकं श्रीभाष्यमपि नानुमनुते। न च स सविशेषब्रह्मवादी श्रीभाष्यादिशातदीयं न वा जीवाणुत्ववादी। मोक्षस्वरूपमपि तस्येश्वरभाव एव। सत्यप्येवं कर्मविचारानन्तर्यमथशब्दार्थ इति तदीयः सिद्धान्तो भगवत्पादैः खण्डित इति कृत्वा कर्मणां सन्निपत्योपकारकत्वं पूर्वोक्तरीत्या कर्मविचारानन्तर्यपक्षपरिग्रहः श्रीभाष्यकाराणां नोचित इत्येव शतभूषणी लिखति ॥

अद्वैतमतेऽपि कर्मणामुपकारकत्वं स्वीक्रियते, परन्तु वेदनविरोधिनिवर्तनेन; तथापि भवतु कथंचन वैषम्येऽपि कस्यचनांशस्य तत एव ग्रहणम्। इदमेवात्र पृच्छ्यते—यदि तत एवारम्भत एव सूत्रविवरणार्थं प्रवृत्तम् , तर्हि किमर्थं तदीयपक्षमात्रं नानुस्रियते? भवतु स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वाद् यथा तथा वा भूषणस्य विवरणं सूत्राणाम्, कर्मविचारानन्तर्यं भास्करस्य खण्डितम्, इति तदानन्तर्यवादोऽन्यस्यापि खण्डितप्राय एव ॥

भास्कराभिमतज्ञान-कर्मसमुच्चयोऽन्यः
श्रीभाष्याऽद्वैताभिमतस्तु सोऽपरः

श्रीभाष्यं हि कर्मविचारोपयोगम् , अनुष्ठानोपयोगं वोपासनात्मकस्य ज्ञानस्य मन्यते, न तु भास्करः, भगवत्पादा वा तथा, इति तत्र कर्मविचारानन्तर्यं नाद्वैतसिद्धान्तेऽपि। व्यक्तं चैतद्भामत्याम्। सति चैवं कर्मविचारानन्तर्यवादो भास्कराभिप्रेतः कथं परिगृह्यते, कथं वा तेनाद्वैतसिद्धान्तस्य निरासोऽपि। न च कर्मविचारो ब्रह्मविचारपूर्ववृत्तो वैराग्यविधयेति भास्करो वदति, किन्तु साक्षाद् ज्ञानवन्मोक्षसाधनतया ॥

नित्यानित्यवस्तुविवेकादीनां त्रयाणामेवाधिकारि
विशेषणत्वायोगः

वैराग्यं तु नित्यानित्यवस्तुविवेकायत्तम् , न कर्मविचारायत्तम्। अस्तु तर्हि वैराग्यमारभ्यैवाधिकारिविशेषणानि संगृह्यन्ताम् , किं नित्यानित्यवस्तुविवेकस्यापि प्रथमस्य निर्देशेनेति शङ्का तु रोगादिनिष्पन्नः क्षणिको विरागो

न ब्रह्मविचाराधिकारसाधनम्, किन्तु नित्यानित्यवस्तुविवेकायत्त एवाधिकारसाधनमिति सूचनार्थं नित्यानित्यवस्तुविवेकस्य प्रथमं निर्देशः ॥

उत्कटवैराग्यं विना नित्यानित्यवस्तुविवेको न भवतीत्यत
एव तस्यापि ग्रहणम्

भूषणं पृच्छति, लिखति च—नित्यानित्यवस्तुविवेकाभावेऽपि विरागो रोगग्रस्तानां भवतीत्यनेन किमुक्तं भवति ? नित्यानित्यवस्तुविवेको न वैराग्यसाधनमिति, इति स्वीयं मतं स्वयं शतभूषण्यैव खण्डितं भवति—इति ॥

शतभूषण्याशयस्तु साम्प्रतं विशदीकृतः । सा हि सर्वेषां समुच्चयमन्वय व्यतिरेकाभ्यां साधयति, तदर्थं च विराग उत्कटो नान्यथा भवतीति तदभिप्रायो विज्ञायते ग्रन्थत एव ॥

तत्र यदि वैराग्यं कर्मविचाराधीनमेवेति सूत्रकृदाशयः, तर्हि किमिति पूर्वमीमांसायां न सूत्रितं कर्मफलानित्यत्वं वैराग्योपयोगितया साधनाध्याये वैराग्यादिवत् श्रुतिविरोधपरिहारमुखेनाकाशाद्यनित्यत्ववच्च । अतो नात्र संशयलेशोऽपि; दृष्टोपपत्तिभ्यामेव तत्सिद्धिरित्येव वक्तव्यम्, इति ब्रह्मविचारात् प्रागेव कर्मविचाराधीनं वैराग्यमिति न भूषणम् ॥

कर्मविचारेण कर्मफलानित्यत्वविचारादपि न तस्य
वैराग्यद्वारा ब्रह्मविचारपूर्ववृत्तता

कर्मविचारकाले कर्मफलानित्यत्वनिर्णयः कर्मविचाराधीनो न संजातः । कस्यापि, ब्रह्मविचारात्प्रागेव स निष्पन्न इति वदद्भूषणं कर्मविचारपूर्ववृत्तत्वं स्वीयं स्वयमेव विहन्ति ॥

लोकसिद्धदृष्टोपपत्ती अन्तरा कर्मविचारेण न कर्मफल-
नित्यता; तदुपयोगिनां न्यायानां तत्रासूत्रणात्

स यदि कर्ममीमांसान्यायानामनेकेषामूहापोहेन केषांचनैव ब्रह्मविचारात् प्राग्भवति, न तु सर्वेषाम्, तर्हि कर्मविचारस्यानियतस्य ब्रह्मविचारपूर्ववृत्तता न कर्मफलानित्यत्वनिर्णयविधया ? कथं च कर्मविचारो ब्रह्मविचारस्योपकरोति ? न तावत् कर्मणोऽनन्तस्थिरफलत्वप्रतीतिप्रतिबन्धकनिवर्तनेन, तर्हि कर्मफलानित्यत्वस्य कथं कर्मविचारतोऽवगमः ? तस्य मीमांसानपेक्षलोकसिद्धेन 'यत् कृतकम्, तदनित्यमि'ति

न्यायेनैव दृष्टोपपत्तिभ्यां "तद्यथेहे"तिश्रुतौ सदृष्टान्तं परामृष्टेन निर्णयेन कर्मविचारन्यायानामूहापोहस्यानपेक्षणात् । के वा न्यायाः कर्मविचारगताः कर्मफलानित्यत्वनिर्णायका ऊहापोहाभ्यामनुसन्धीयन्ते ? लोकसिद्धोक्त-दृष्टोपपत्ती अन्तरा ॥

वेदान्तवाक्यगतपदविशेषार्थनिर्णायकत्वमपि न कर्मविचारस्य,
न वा सत्यपि तस्मिन् तदानन्तर्यमथ-
शब्दार्थो भवितुमर्हति

न च "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इति वाक्यगतं यज्ञदानस्वरूपं तत्तद्वाक्यावगतं तत्स्वरूपनिर्णयाय कर्ममीमांसामपेक्षते । द्वितीयाध्यायद्वितीयपादे यज्ञ-दानादिभेदमुपपादयति, न तु स्वरूपम् । न चात्र तद्भेदनिर्णयाय तदधिकरणमपेक्ष्यते । एकस्मिन्नेव वाक्ये 'यज्ञेन दानेने'ति पदप्रयोगेणैव तत्सिद्ध्या तदर्थं तदधिकरणानुसन्धानस्यानपेक्षणात् । न च वेदान्तवाक्यगतयत्किञ्चित्पदार्थनिर्णायकत्वमात्रेण तन्निर्णायकशास्त्रानन्तर्यमथशब्दार्थो ब्रह्मजिज्ञासायामिति वाचोयुक्तिः क्षोदक्षमा; कोश-व्याकरण-न्याय-वैशेषिकयोगाचारार्हत-पाशुपताद्यानन्तर्यमपि तर्ह्यथशब्दार्थः स्यात् ॥

अनादिसंप्रदायसिद्धानां पूर्वोत्तरमीमांसान्यायानां तत्तदाचार्यमुखेन
ज्ञानसंभवाद् न तदर्थं तत्तच्छास्त्रान्तरापेक्षाऽपि

तत्र सहस्रं पूर्वमीमांसायां न्यायाः संग्रहणीयाः, संगृहीताः संग्रहीष्यमाणाश्च । तेषां सर्वेषामुत्तरमीमांसायां काऽपेक्षा ? अनादिसंप्रदायसिद्धा जैमिनीयाः, बादरायणीयाश्च केचन, येषां स्वतन्त्रं तत्तदाचार्यमुखेन विवरणं तत्तत्सूत्रावसरे यथासंप्रदायं भवितुमर्हति; जैमनीयन्यायविवरणं यथा शबरस्वामिनाम् , तथैव ब्रह्मसूत्राणामपि यथासंप्रदायं तत्तद्भाष्यकारैर्विवरणम् विनाऽपि पूर्वमीमांसां कथं न सुकरम् ? अधिकं शास्त्रभेदोपपत्तौ ॥

यज्ञ-दानादिपदार्थो व्याकरणादिसिद्धो न कर्मविचाराधीनः,
न वा कर्ममीमांसायां निर्णीत इति कृत्वाऽपि न
कर्मविचारपूर्ववृत्तता

न च "मासमग्निहोत्रं जुहोति" "अग्निहोत्रं जुहोती"तिवच्च विधिद्वयमत्र, अनुपादेयगुणविशिष्टानुपस्थितिर्वा वर्तते "यज्ञेन दानेने"त्यत्र,

किन्तु "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" "दर्श-पूर्णमासाभ्यामिष्ट्वा सोमेत यजेत" इत्यादाविव प्रसिद्धार्थानुवादो यज्ञपदार्थो लोकसिद्धः। न च यज्ञशब्देन यागस्य कस्यापि विधिरपि। यज्ञपदार्थमात्रं हि व्याकरणसिद्धम्, यज्ञसामान्यं खल्वत्र यज्ञपदार्थः। एवं दानसामान्यं दानपदार्थः, तद्विधायकं किं वा वाक्यं कर्मकाण्डे, तत्स्वरूपनिर्णायको न्यायो वा कश्चन कर्मविचारेऽस्ति॥

धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मविचारसंभवः
ब्रह्मविचारोपयुक्तवेदान्तभागमात्राध्ययनेनापि
केषांचन ब्रह्मविचाराधिकारसंभवात्

"स्वाध्यायोऽध्येतव्यः" इत्यत्र यद्यप्यर्थज्ञानार्थमेवाध्ययनम्; तथापि कर्मकाण्डाधिकारिणा तदुपयुक्तकर्मभागमात्राध्ययनं कृत्वा समावर्तनम्, ब्रह्मचर्याश्रम एव विरक्तानां तु संन्यस्तानां न कर्मविचारापेक्षा, येषां साधनचतुष्टयसंपन्नानां ब्रह्मविद्याधिकारः; अन्यथा यावत्साधनसंपत्ति विविदिषासंन्यासिनां साधनसंपादनम्, तदाश्रमोचितकर्मानुष्ठानं च, इति तावन्मात्रोपयुक्तवेदान्तभागमात्रार्थविचारः, साधनचतुष्टयसंपत्तौ ब्रह्मविचाराधिकारो वा। अमुमेवार्थमभिसन्धाय—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्ये"ति भाष्यम्॥

अत्रा'धीतवेदान्तस्ये'त्यनेन साधनचतुष्टयोपयुक्तवेदान्तवाक्यार्थज्ञानस्येति विवक्षा, न तु विदितसर्ववेदान्ततत्त्वार्थस्येति, इति न स्वाध्यायाध्ययनविरोधोऽपि अध्ययनस्याक्षरग्रहणान्तत्वपक्षेऽपि 'ज्ञेयश्चे'ति विध्यन्तरे सत्यप्युपयुक्तांशमात्रस्यार्थज्ञानं पर्याप्तम्॥

रागप्राप्तत्वात् विचारद्वयस्यापि श्रीभाष्यमते कथं कर्म-
विचारपूर्ववृत्तत्वनियमः

श्रीभाष्यमते रागत एव विचारद्वयेऽपि प्रवृत्तिरिति समानम्। इयान् विशेषः—कर्मविचारोऽवैधोऽपि रागप्राप्तः श्रीभाष्यमते, अद्वैतमते त्वव्यवहिताश्रमोचितधर्मानुष्ठानेन समावर्तनम्। तत्र यदि कर्मविचारो न वैधः, तर्हि विना कर्मविचारं कथं कर्मानुष्ठानम्? यदि धर्ममीमांसाद्वारैव, परन्तु समावर्तनात् पूर्वमिति न नियमः, तर्हि समावर्तनात् पूर्वमेव संन्यस्तानां न कर्मविचारो नियतः, इति कथमनियतस्य कर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्वम्—येषाम"ग्नीन्धनाद्यनपेक्षे"ति संप्रतिपन्नम्॥

ब्रह्मचर्यादेवाकृतकर्मविचाराणां ब्रह्मविद्याधिकारः कर्म-
विचारनैयत्ये कथम्

तत्र यत्तु देवतानां विनापि कर्मविचारम् "औचित्यस्थापितोऽयं क्रमः" इत्युक्तविधया ब्रह्मविचारान्तरमिति मत्वा भूषणं समाधत्ते, तत्र वक्तव्यं तु पूर्वमुक्तम्; ब्रह्मचर्यादेव संन्यस्तानामकृतकर्मविचाराणां का वा गतिरिति प्रश्नस्य तु मौनमेव भूषणं भूषणस्य ॥

"उपनिषदमावर्तयेदि"त्यपि वेदान्तभागाध्ययनविधिरेव, इति
वेदान्तभागमात्राध्ययनेनापि ब्रह्मविचारनिर्वाहः

यत्तु—"उपनिषदमावर्तयेदि"त्यधीतोपनिषदावर्तनमात्रम्, न तदध्ययनमिति, तत्र किमक्षरग्रहणान्तफलत्वे, अर्थज्ञानार्थत्वे वाऽध्ययनमनावृत्तिरूपम्? को वाऽक्षरग्रहणं विनैवाधीतभागवेदभागस्य विनैवाऽऽवृत्त्या साधयितुमीष्टे। स्वयंप्रतिभातवेद-तदर्थाधिगमं भगवन्तं कमप्यवतारविशेषं विहाय?

कर्मविचारोऽपि श्रुतप्रकाशरीत्या ब्रह्मविचारमध्यपतित
एव, न तु पूर्ववृत्तः

अस्तु, यदि कर्मविचारोऽपि शम-दमादिवदधिकारिविशेषणम्, तर्हि तस्य तृतीयाध्याये सर्वस्य कर्मविचारस्य न निवेश इति प्रश्नस्तु—श्रुतप्रकाशिकायामेव समाहितः—यत् 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन तृतीयाध्यायतुरीयपादेन सङ्गतिरिति ॥

अत्र 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन तृतीयाध्यायतुरीयपादेन संगतिवर्णनेन तृतीयपादशेषत्वं श्रुतप्रकाशिका विशदयति। तेन च कर्मविचारस्यापि साधनत्वं शम-दमादेरिवैवाभिप्रैति ॥

'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन कर्मविचारस्य ब्रह्मविद्याशेषत्वं
प्रतिबन्धकनिवर्तनेन कर्मविचारोपयोगितयेति भूषणोपन्यासः
आनुष्ठानिकपूर्वापरीभावस्यैवात्र व्यवस्थापनेन शम-दमादीना-
मिव ब्रह्मविचारमध्यपातस्तस्यैवात्र विवक्षणेन कथंचन
ब्रह्मविचारोपयोगमात्रे तात्पर्यं श्रुतप्रकाशि-
कायाः, न तु पाठतः पूर्ववृत्तत्वमत्र
किंचित्करम्

भूषणस्तु—किङ्कर्तव्यतामूढं श्रुतप्रकाशिकाभावमेवं विवृणोति—द्वेधा कर्मनिर्णयः—ब्रह्मविचारप्रतिबन्धकनिवर्तनेन, ब्रह्मविद्येतिकर्तव्यता

भूतकर्मविवेकेन च। तत्र प्रतिबन्धके सति न कर्मविचारेऽवतारः, निवर्तिते तु प्रतिबन्धके ब्रह्मविचारो भवतीति। न चैतावता ब्रह्मविचारपाश्चात्यता कर्मविचारस्येति ॥

एवं लिखदिदं तृतीयाध्यायतुरीयपादशेषत्वमात्रेण साधनानां शम-दमादीनामपि ब्रह्मविचारानन्तरत्वं यदि मन्यते, तर्हि शान्तं पापम्। तावता हि साधनत्वमात्रं श्रुतप्रकाशिकया समर्थितम्, तत्तु भूषणस्य यथाश्रुतं कथं न प्रतिकूलम्? न हि "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्र 'पाठक्रमादर्थक्रमो बलीयानि'ति न्यायेन पाठोऽपि, "अग्निहोत्रं जुहोती"त्यत्र पाश्चात्यत्वं मन्यते; आनुष्ठानिकपूर्वापरभाव एवैतादृशस्थलेषु विवक्ष्यते, न तु पाठस्यापि परिवर्तनम्। आर्थिकक्रमो हि न कुत्रापि पाठक्रमं बाधते ॥

श्रुतप्रकाशिका ह्यर्थक्रममुपपादयितुं संजातमोक्षाभिलाषः कृत्स्नवेदाध्यायी प्रथमतो रागतो ब्रह्मविचारे प्रवर्तेत, न तु कर्मविचारे इत्याशङ्क्य—"अथातो ब्रह्मजिज्ञासे"त्येव प्रथमप्रतिज्ञा, जैमिनीयकर्मविचारस्तु तृतीयाध्याये तुरीयपादेन सङ्गतः, इति ब्रह्मजिज्ञासायाः प्राथम्यम्, जैमिनीयकर्मविचारस्य द्वादशलक्षण्यात्मकस्य तृतीयाध्यायशेषत्वमिति विशदं कर्मविचारस्य सर्वस्यार्थक्रमात् पाश्चात्यतामभिप्रैति। न चैतावता पाठक्रमबाधः ॥

"फलमत उपपत्तेरि"ति सूत्रं तु जैमिनिमतनिरासपरम्, न जैमिनीयः कर्मविचारः, येन कर्मविचारो जैमिनीय एव मध्येऽपि निबद्ध इति भूषणोक्तिः सङ्गच्छेत। अर्थक्रमाद् ब्रह्मविचारमध्यपतितत्वमेवोक्तश्रुतप्रकाशिकाया यदि तात्पर्यम्, तर्हि "अथातो ब्रह्मजिज्ञासे"ति प्रथमप्रतिज्ञा, जैमिनीयकर्मवीचारः तृतीयतुरीयपादेन संगत इत्यस्य कथमुपपत्तिः? इति नासंगतिलेशोऽपि शतभूषण्याः ॥

इदमेवात्र शतभूषणीविवक्षितम्—यत् कर्मविचारसाधनत्वकल्पे क्लिष्टकल्पनैषा भवति, साऽपि "फलमुखगौरवं न दोषाय" इति मत्वा सुसहा, यदि कर्मविचारपूर्ववृत्तत्वानियमो यया कयाऽपि विधया। न चायं संभवतीति तूक्तमेव ॥

कर्मणां द्वेधा गतिरिति, भूषणोक्तिर्न जैमिनिदृष्ट्या न वा बादरायणदृष्ट्याऽत्र, इति न कर्मविचारपूर्ववृत्ततानियमः

अत्र भूषणस्यासंरब्धस्य गतिरपि कुत्रेति परीक्ष्यते—तद्धि प्रथमं क्रियमाण एव कर्मविचारो द्वेधोपकरिष्यति—प्रतिबन्धकनिवर्तनेन, इति-

कर्तव्यतारूपकर्मविवेकेन च। तत्र कर्मविचारो जैमिनीयः, येन कर्मपराणां सन्दिग्धानां वाक्यानामर्थनिश्चय एव, इति जैमिनेर्लक्ष्यम्, निर्णितस्यार्थज्ञानस्य कर्मानुष्ठानोपयोग एव जैमिनीयकर्मविचारस्य दृष्टिः, न तु ब्रह्मविद्यायाम्, तदितिकर्तव्यतात्वे वा। स हि न कर्मणां कुत्रापि जिज्ञासति। तदितिकर्तव्यतात्वम्, प्रतिबन्धकनिरासार्थत्वं वा हि बादरायणदृष्ट्या। अतो जैमिनीयदृष्ट्या न द्वेधा गतिरत्र वक्तुं सुशका॥

बादरायणदृष्ट्या तु यद्यपि प्रतिबन्धकनिवर्तनेन कर्मणामुपयोगो भवति, तथापि कर्मणां न ब्रह्मविद्येतिकर्तव्यतैव, किन्तु स्वर्गाद्यर्थिनां स्वर्गादिसाधनत्वेन कर्मणां प्राधान्यमपि, इति जैमिनिनिर्णीतकर्मणां प्रतिबन्धकनिरासार्थतयेतिकर्तव्यत्वमपीति बादरायणदृष्टयेति वक्तव्यम्। सति चैवं कर्मणां ब्रह्मविद्येतिकर्तव्यतात्वनिर्णयात् पूर्वं जैमिनीयदृष्ट्या प्रवृत्तस्य स्वतन्त्रफलार्थं कर्मविचारस्य कथं ब्रह्मविचारपूर्ववृत्तत्वनियमः? येषां तु जन्मत एव प्रतिबन्धकनिवृत्तिः, कर्मणां चेतिकर्तव्यतयाऽनुष्ठानमपि नापेक्षितम्, तेषां कर्मविचारस्य किं वा कृत्यम्? येन ब्रह्मविद्यापूर्ववृत्ततया स नियन्तुं शक्यते?

जैमिनीयविचारो निरीश्वरवादपरोऽतश्च ब्रह्मविचारेतिकर्तव्यता,
इति नेतिकर्तव्यतया कर्मविचारपूर्ववृत्तता ब्रह्मविचारे

निरीश्वरमीमांसदृष्ट्या तु न कर्मणां ब्रह्मविद्येतिव्यतापक्षस्योत्थानमपि। तत्र निरीश्वरमीमांसकमतं जैमिनीयदृष्ट्यापीति श्रीभाष्यसंमतमपि। अत एव समन्वयाधिकरणे जैमिनीयमतस्य निरासः॥

सूत्रकारेणाऽपि—"धर्मं जैमिनिरत एव" इत्यनेनेश्वरनिरासो जैमिनिमत इति ज्ञाप्यते। शबरस्वामिनामपि स एवाभिप्रायः, परन्तु जैमिनेरपि सेश्वरमीमांसैव न निरीश्वरमीमांसेति केषांचन मतं वर्तते, यत्तु जैमिनिबादरायणसूत्रविरुद्धम्, समन्वयसूत्रसम्बन्धिबहुभाष्यविरुद्धं च। बादरायणदृष्ट्या त्वद्वैतिनामपि सेश्वरमीमांसा संकर्षकाण्डानुबन्धिनी नानिष्टा॥

'स्वाध्यायानन्तर्यमि'त्यादावीश्वरमप्यङ्गीकृत्य विवरणं तु संकर्षोत्तरमीमांसयोरवलम्बेन, न जैमिनीयविचारमात्रेण। ततश्च सेश्वरमीमांसा दृष्ट्या कर्मणामितिकर्तव्यतात्वम्॥

### कर्म-ब्रह्मविचारयोरुभयोरपि शेषित्वाद् न कर्मविचारस्य ब्रह्मनिद्येतिकर्तव्यता, अतो न तत्पूर्ववृत्तता, किन्तु साधनचतुष्टयसंपत्तेरेवेत्युपसंहार:

इदमेवात्र तत्त्वम्—यत् कर्मणामितिकर्तव्यतात्वेऽपि कर्मतत्त्वज्ञानार्थस्य कर्मविचारस्य, ब्रह्मतत्त्वविज्ञानार्थब्रह्मविचारस्य च भिन्नप्रयोजनस्य स्वयमुभयोरपि शेषित्वात्, पूर्वोक्तरीत्या "दर्श-पूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"त्यादाविव कर्म विचार्यम्, ब्रह्म विचार्यमिति क्रमनियामकं न किमपि प्रमाणमस्ति। "विविदिषन्ति यज्ञेने"ति तु कर्मणां ब्रह्मजिज्ञासायामपेक्षामात्रमाम्नाति, न तु कर्मविचारस्य ब्रह्मविचारेतिकर्तव्यतात्वम्, इति कर्मविचारानन्तर्यं न "अथातो ब्रह्मजिज्ञासे"त्यत्राथशब्दार्थः, किन्तु श्रोतव्यादिविधिसन्निधिपठितानां सर्वशाखाप्रत्ययन्यायेनोपसंहृतानां नित्यानित्यवस्तुविवेकादीनां चतुर्णामेव साधनानां प्रकरणाद् ब्रह्मविद्यापूर्ववृत्तत्वोपपत्तिः ॥

॥ इति साधनचतुष्टयपूर्ववृत्तत्वोपपत्तिः ॥

———

## कथाऽधिकारोपपत्तिः

प्रमाण-जनकयोः सत्त्वासत्त्वौदासीन्येनाद्वैतिनां कथाऽधिकारः  
सत्त्वासत्त्वनियमेन कथाधिकारनियमे तु श्रीभाष्यानु-  
यायिनामद्वैतिभिः सह कथानधिकारः

कथाधिकारस्तस्य, यस्य तत्त्वनिर्णयः फलम्। तत्राद्वैतिभिः साकं कथायां श्रीभाष्यानुयायिनां तदुपभोग्यस्तत्त्वनिर्णयः फलम्, श्रीभाष्यानुयायिभिः सहाद्वैतिनां कथायामद्वैततत्त्वनिर्णयः फलमिति साधारणोऽयं नियमः ॥

तत्र शतदूषण्यद्वैतवादनिरासार्थमद्वैतिभिः सह न कथायामधिकुरुते। यत्र प्रमाण-तर्काभ्यां साधनोपलम्भयोः तत्त्वनिर्णयो भवति, तत्राद्वैतिभिः सह विचारावसरेऽद्वैत्यभिमतप्रमाण-जनकप्रकारमवलम्ब्यैव शतदूषण्या, भूषणेन वा कथाऽधिकर्तव्या, न तु स्वमतसिद्धप्रकारमात्रमाश्रित्य। तत्राद्वैतिभिः प्रमाण-जनकयोरनिर्वचनीयत्वम्, सदसद्विलक्षणत्वं गृहीत्वाऽनिर्वचनीयस्यापि यावद्बाधमर्थसाधकत्वमभिप्रेत्य स्वीयः सिद्धान्तः प्रतिष्ठाप्यते। शतदूषणी, भूषणं वा तस्यान्यथा ग्रहणेनाद्वैतमतं निरस्यति। उक्तं च खण्डनखण्डखाद्ये सत्त्वासत्त्वौदासीन्येनाद्वैतिनां कथायां प्रवृत्तिरिति। सत्त्वासत्त्वौदासीन्यं नाम सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमेव ॥

प्रपञ्चापलापो नाद्वैतमते, अनिर्वचनीयस्यार्थक्रिया-  
कारिणस्तत्र स्वीकारात्

न चानिर्वचनीयतावादे प्रमाणानां कार्यप्रपञ्चस्य वाऽपलापः। तत्रैकसत्तावादे स्वरूपतोऽभावो बाधदशायाम्, न प्रतीतिदशायाम्। अतः 'प्रपञ्चापलापस्याद्वैतिभिः कृतत्वादि'ति दुरनुवादोऽयम् ॥

अद्वैतसिद्धान्तमन्यथा कृत्वाऽद्वैतनिरसनं कथाधिकारविरुद्धं  
श्रीभाष्यानुयायिनाम्

तत्र स्वपक्षानभिमतया परपक्षविदलनात्मकत्वमेव वितण्डायाः स्वरूपम्। तत्र प्रतिज्ञा-हेत्वादीनां पराभिमतानां दुर्वचत्वव्यवस्थापनमेव हि कृत्यम्। न चैतावता प्रतिज्ञा-हेतु-दृष्टान्तादीनामनङ्गीकारः। तत्र

यावत्संभवं परमतरीत्यैव परमतनिरसनम्, न तु स्वमतरीत्या, यः परमतनिराकरणैकदीक्षः। जल्पकथायामपि परकीयप्रतिज्ञामाश्रित्यैव निरासनं वरम्। सर्वथाऽद्वैतमतनिरसनमद्वैतमते, तस्य प्रपञ्चस्य चापलाप इति कृत्वेति हठवाद एव॥

सर्वमिथ्यात्ववादो न सर्वापलापो नाम; मिथ्यार्थस्याप्यर्थक्रिया-
कारित्वेन सत्त्वात्, यावत्प्रत्ययमनिर्वचनीयस्यापि
प्रातिभासिकादिसद्रूपत्वं सर्वापलापवादं निहन्ति

एतेन—सर्वापलापी वैतण्डिको वाचं विस्पष्टमेव नेष्ट इति—परास्तम्; अद्वैतमते सर्वापलापाभावात्, यावत्प्रतीति सर्वेषां तत्तन्नाम-रूपात्मना, प्रातिभासिकादिसद्रूपेण वा स्वीकारात्। सर्वमिथ्यात्वं हि न स्वरूपेणापि यावत्प्रतीति बाधेन, प्रातिभासिकादिसत्त्वं विना वा। न हि पराभिमत-सत्ताजात्यर्थक्रियाकारित्वरूपं सत्त्वं प्रपञ्चस्याद्वैतिनोऽपि वारयन्ति। त्रिका-लाबाध्यत्वं हि सत्त्वं ब्रह्मण इव प्रपञ्चस्याद्वैतिनो वारयन्ति॥

बाधितत्वं हि सर्वेषां प्रपञ्चानाम्, औपाधिकानां जीवानां च स्वरू-पस्य, उपाधेर्वा तदधिष्ठानसाक्षात्कारायत्तम्, तावत्पर्यन्तं तु यत्किंचिदर्थ-क्रियाकारित्वं न विरुणद्धि; न्यायादिमतेऽपि नश्वराणामर्थक्रियाकारित्वं स्वीक्रियते तथा, श्रीभाष्यमतेऽपि॥

वस्तुगत्याऽर्थक्रियाकारित्वमेवाद्वैतेऽपि सत्त्वमिति तेषां
कथाऽधिकाराविरोधः

सति चैवं व्यवहारदशायां सर्वस्य नश्वरत्वमात्रम्, न बाध इति वस्तुतः कार्य-कारणयोरभेदेऽपि यावत्तत्त्वसाक्षात्कारं सर्वस्यार्थक्रियाकारित्वम्, कारणात्मतायां तु स्वरूपेण नार्थक्रियाकारित्वमिति संप्रतिपन्नत्वम्, इति यावत्स्थूलरूपमर्थक्रियाकारित्वम्, व्यवहारयोग्यत्वं च नश्वरत्व इव मिथ्या-त्वेऽप्युपपद्यते। न हि घटस्य कारणात्मतायां स्वरूपतोऽभावमात्रेण घटा-पलापः। अनिर्वचनीयत्वकथा हि शास्त्रदृष्ट्या, यथा सूक्ष्मचिद्विशिष्टरू-पता—सर्वेषां जीवात्मनां भगवच्छरीरता वा, इति सर्वेषां ब्रह्मव्यतिरिक्तानां बाधितत्वेन शास्त्रदृष्ट्या सर्वात्मनाऽभावमादाय बाधितत्वम्, नापलापो वाऽद्वैतसिद्धान्ते। अतः परोक्षतया निर्णीततत्त्वानां कथा नाद्वैतिनाम-प्यन्यैः, अन्योषां वाऽद्वैतिभिर्व्याहन्यते॥

तत्र खण्डनकाराणां दृष्टिर्या काऽपि वा भवतु, भामत्यादिदृष्ट्याऽनिर्वचनीयतामादायार्थक्रियाकारित्वाविरोधाद् न कथानधिकारः। अत एव भामती—"अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात्" इति। अधिकं तु ब्रह्मसिद्धितोऽवगन्तव्यम्। अतोऽत्रार्थक्रियाकारित्वम्, सत्ताजात्यादिरूपं वोभयसंप्रतिपन्नं सत्त्वमादाय कथाऽधिकारो न विरुद्ध्यतेऽद्वैतमते। व्यक्तं चैतत् खण्डनेऽपि॥

अर्थक्रियाकारित्वम्, सदसद्विलक्षणत्वप्रयुक्तमर्थक्रियाकारित्वं शून्यव्यावृत्तमादायैवाद्वैतवादः

न च शून्यवाद इवाद्वैतसिद्धान्ते चतुष्कोटिविनिर्मुक्तं सर्वं जगत्; सदसद्विलक्षणत्वात्, ज्ञाननिवर्त्यत्वाच्च सर्वस्य प्रपञ्चस्य। तत्र प्रपञ्चस्य सत इव सदसद्विलक्षणस्याप्यर्थक्रियाकारित्वे न विरोधः; तदसत्त्वानङ्गीकारात्॥

एतेन—

"सर्वथा सदुपायानां वादमार्गः प्रवर्तते।
अधिकारोऽनुपायत्वाद् न वादे शून्यवादिनः॥"

इति कुमारिलवार्तिकं शून्यवादिविषयं नाद्वैतवादमास्कन्दति॥

एतेन—

"योऽपि तावत् परासिद्धः स्वयं सिद्धोऽभिधीयते।
भवेत्तत्र प्रतीकारं स्वतोऽसिद्धेतुका कथा॥"

इतिवचने अपि—व्याख्याते। अद्वैतवादे त्वर्थक्रियाकारित्वं सत्ताजातिमत्त्वं वोभयसिद्धमादायापि कथा प्रवर्त्यते। अनिर्वचनीयत्वं तु स्वतः सिद्धम्। 'असच्चेन्न प्रतीयते, सच्चेन्न बाध्यते'ति प्रतीति-बाधोभयसिद्धमनिर्वचनीयत्वमाश्रित्यैवाद्वैतिनः कथायां प्रवर्तन्ते, न त्वसत्त्वम्; चतुष्कोटिविनिर्मुक्तशून्यस्वरूपत्वं वाऽविद्यान्तजगतोऽङ्गीकृत्य; का वाऽत्रानुपपत्तिः?

प्रातिभासिकत्वं व्यावहारिकत्वं वा यावत्प्रतीत्यबाध्यत्वं न पारिभाषिकम्

तत्र प्रतीतिकालिकसत्त्वमर्थक्रियाकारित्वं प्रातिभासिक-व्यावहारिकसाधारणम्। न चेदं परिभाषामात्रम्; यावत्प्रतीत्यबाध्यत्वरूपत्वादुभयोः। विशेषस्तु व्यवहारकाल एव बाधनिश्चये प्रतीतिकालमात्रे

तत्तद्रूपेण सत्त्वे प्रातिभासिकसत्त्वम्। यावद्व्यवहारं प्रतीतिविरुद्ध-दशायां सत्त्वेन, पुनः प्रतीत्यन्तरेण व्यवहारयोग्यत्वेन च व्यावहारिकसत्त्वम्। उभयत्र व्यवहारकाले युक्तिबाध्यत्वं वर्तते। ब्रह्मणस्तु स्वप्रकाशस्य सर्वदाऽबाध्यत्वमिति विवेकः॥

सांवृतसत्त्व-व्यावहारिकसत्त्वयोर्विक्षेपः

तत्र सावृतं सत्त्वं नाम संविदतिरिक्तार्थाभावः, व्यावहारिकत्वं तु संवित्तादात्म्यापन्नविषयत्वम्, पूर्वत्र ज्ञानाकारतैवार्थस्य, इतरत्र संविदध्यस्तत्वम्, निरधिष्ठानभ्रमविषयत्वं पूर्वत्र, उत्तरत्र साधिष्ठानभ्रमविषयत्वम्, स्वाप्नसाधर्म्यं पूर्वत्र, तद्वैधर्म्यमुत्तरत्र। तत्र सावृतसत्यत्वेऽप्यर्थक्रियाकारित्वे का वा कथा संवित्तादात्म्यापन्नस्य तत्त्वे? अधिकमुत्तरत्र॥

प्रातिभासिकमानं प्रातिभासिकस्य व्यावहारिकस्य च साधनम्,
एवं व्यावहारिकेण मानेन व्यावहारिकस्य,
तात्त्विकस्य च साधनमिति व्यवस्था

यत्तु—चण्डमारुतम्—

"प्रातिभासिकमानेन व्यावहारिकसाधने।
व्यावहारिकमानेन तत्त्वं सिध्येद् न चान्यथा॥"

इति, तदिदम्—"अतात्त्विकप्रमाणभावेभ्योऽपि तात्त्विकप्रमोत्पत्तिदर्शनात्" इति भामत्यैव समाहितम्। अत इदमनुपपन्नम्, इति प्रातिभासिकमानेनं यथा व्यावहारिकसाधनम्, एवं व्यावहारिकसाधनमपि, एवं व्यावहारिकमानेन तत्त्वसाधनमिति योजनेनाद्वैतसिद्धान्तपरतयैव तद्वचनं योजनीयम्॥

असतोऽपि साधकत्वम्, व्यावहारिकेण वेदान्तेन ब्रह्म-
सिद्धिश्च सोदाहरणनिर्देशं समर्थ्यते

प्रसिद्धं हि प्रातिभासिकमानेन बाष्पे धूमज्ञानात्मकानुमानेन व्यावहारिकवह्निसाधनम, एवं व्यावहारिकेण वेदान्तेन तत्त्वसिद्धिः। न चान्यथा व्यावहारिकमानेन तत्त्वसिद्धिरिति भावः, इति चण्डमारुतीयमिदं समर्थनीयम्। यदि तु प्रातिभासिकेन न व्यावहारिकसाधनम्, न वा व्यावहारिकेण तत्त्वसाधनम्, किन्तु व्यावहारिकेणैव व्यावहारिकसाधनमित्युक्तवाक्यार्थः, तद्युक्तभामत्युक्तरीत्याऽनुभवविरुद्धमिदम-

प्रमाणमेव; अन्यथा न चैवमिति खलु वाक्यशेषः स्यात्, न तु 'नान्यथे'ति। अतोऽद्वैतसिद्धं भ्रमज्ञानवत्—

अर्थेनैव विशेषो हि व्यावर्तकतया धियाम्॥"

इत्युक्तरीत्या प्रातिभासिकमपि यत्किञ्चिदर्थक्रियाकारि; अन्यथा यावत्परीक्षं रजतप्राप्तिनिबन्धनप्रमोदातिशयस्य, रज्जुसर्पदंशप्रयुक्तशङ्काविषनिबन्धनमरणादेश्च लोकप्रसिद्धस्य बाधापत्तिः; अन्यथा स्वाप्निकरथधनादिप्राप्त्यभावात्, स्वप्ने निरतिशयानन्दानुभवस्य स्वाप्निकस्त्रीदर्शनप्रयुक्तभूषणानुभूतचरमधातुविसर्गादेश्च व्यावहारिकस्य का वा गतिः? किं तत्र व्यावहारिकस्त्रीदर्शनवत्तदुपभोगादिकमपीति भूषणमेव स्वयमालोचयतु। अतः प्रातिभासिकमानेन व्यावहारिकसाधनवद् व्यावहारिकमानेन पारमार्थिकसाधनमपि, न चान्यथेति निष्कर्षः। तत्र चण्डमारुतार्थो यः कोऽपि भवतु, अबाधितस्तु तदर्थो भूषणानुभूत्यनुसारी स्वयमेव॥

वस्तुतस्तु—प्रातिभासिकमानमेवाप्रसिद्धम्, इति न प्रातिभासिकमानसाधनत्वम्, व्यावहारिकं तु मानं व्यावहारिकस्य, पारमार्थिकस्य च साधनमित्येवाद्वैतसिद्धान्त उक्तभामत्यादिसिद्धः॥

सारांशस्तु प्रमाणानां प्रमाणत्वं नाबाधत्वेन, किन्तु प्रमाणत्वेन; अन्यथा प्रातिभासिकज्ञानस्य भ्रमत्वात्, प्रातिभासिकमानेनेति मानपदं तत्र कथमन्वेति? मानत्वं तज्जन्यज्ञानस्य, प्रमात्वस्य वाऽबाधितार्थविषयकत्वरूपस्य वा प्रयोजकत्वेनैव, अन्यथा कथं नाम मानम्?

यद्यपि प्रातिभासिकस्य व्यावहारिकं तद्विषयकज्ञानं प्रति जनकत्वमस्ति; तथापि न व्यावहारिकरजतसाध्यस्य सर्वस्य प्रातिभासिकं रजतं साधकमिति लिखद् भूषणं प्रातिभासिकं व्यावहारिकस्य कस्यचन साधकमिति स्वीकरोति, इति तत्रांशे तस्य स्वागतमेव; यतोऽसत्यादपि सत्योत्पत्तिं तद् हृदयेनानुमनुते? परन्तु प्रातिभासिकमिव तज्ज्ञानमप्यविद्यावृत्तिरूपं न व्यावहारिकम्, अविद्यावृत्त्यनङ्गीकारे तु तद्भासकं साक्षिचैतन्यं प्रति न प्रातिभासिकं जनकम्; पूर्वसिद्धस्य तस्य प्रातिभासिकाजन्यत्वात्, अविद्यावृत्तेरपि तत्समकालिकायास्तदजन्यत्वाद् न प्रकृतानुगुणं किमपि लिखति॥

### प्रातिभासिकमानस्य व्यावहारिकमानं तुल्यम्, प्रातिभासिकत्वादि च भाविबाधमादाय, न तु प्रतीतिकालिकं तम्

स्यादेतत्—प्रातिभासिकत्य साधकत्वासाधकत्वकथा नात्र प्रकृता, किन्तु प्रातिभासिकमानस्य व्यावहारिकप्रमाहेतुतैव। तत्र च भामती प्रातिभासिकमानेन व्यावहारिकप्रमां व्युत्पादयति बहुतरनिदर्शनपुरस्सरम् ॥

इदमात्रावधेयम्—प्रातिभासिकत्व-व्यावहारिकत्वकथेयं न प्रतीतिकालीनामवस्थामादाय, किन्तु भाविबाधं मनसि निधायैव; अन्यथा प्रातिभासिकमानमित्युल्लेखः स्वमातृबन्ध्यात्वोल्लेख एव ॥

तत्र प्रातिभासिकमानेन जायमानप्रमा न प्रातिभासिकविषयिणी, प्रमाण-प्रमेयोरेकत्वापत्तेः, स्वस्यैव स्वजनकत्वापत्तेश्च, किन्तु प्रमाणविषयातिरिक्तविषयकज्ञानान्तररूपैव। तत्र च प्रातिभासिकधूमज्ञानेन व्यावहारिकवह्निज्ञानमनुभवसिद्धम्, इति कथं न प्रातिभासिकमानस्य न व्यावहारिकप्रमासाधकत्वम्?

### प्रातिभासिकधूमानुमितो वह्निर्न प्रातिभासिकः, किन्तु व्यावहारिक एव

प्रातिभासिकेन धूमेन प्रातिभासिकलक्षण एव वह्निः साध्यते, न तु तद्विलक्षण इत्यत्र प्रमाणाभाव इति भूषणं लिखति। तत्र धूमो व्याप्यः प्रातिभासिकमानं वा तद्विषयज्ञानं वा। उभयथाऽपि तद्धेतुकानुमितिविषयो वह्निर्व्यावहारिक एव; अबाधात्। परीक्षिता हि तदनुमितिरबाधितविषयैव निश्चीयते। न हि तत्र प्रातिभासिकः, व्यावहारिकश्च द्वौ वह्नी प्रतीयेते; तयोस्तत्र परीक्ष्य निश्चितादग्नेरन्य एव न प्रातिभासिकज्ञानसाधितप्रमाविषयः। परीक्षायां हि धूममात्रस्य पश्चाद् बाधः, न तु वह्नेः ॥

न चाद्वैतमते वह्निस्तत्र धूमज्ञानानुमितादपरो वह्निः; धूममात्रस्य प्रातिभासिकत्वेऽपि वह्नेरप्रातिभासिकत्वात्, प्रातिभासिकमानेन व्यावहारिकसाधनस्यैवात्र विवक्षितत्वात्, इति तत्र यद्यप्यपरो धूमो वक्तुं शक्यते; अनिर्वचनीयवादाङ्गीकारात्, वह्निस्तु स एव। अत एव सर्वोऽपि वह्निमनुमितमेवानुसन्धाति, न तु प्रमाणान्तरेण प्रत्यक्षीकृतोऽपरोऽयं वह्निरिति ॥

दूराद् धूममात्रं दृष्ट्वा यादृशी निष्कम्पप्रवृत्तिः, तादृश्येव वह्निलाभेच्छया निष्कम्पप्रवृत्तिरेव सर्वत्रानुभूयते। यद्यपि बाष्पमात्रे दृष्टे, धूमे चादृष्टे

न निष्कम्पा प्रवृत्तिर्दृश्यते, तथापि ततोऽनिवृत्त्या प्रवर्तमानो वह्निं लब्ध्वा सन्तुष्यति धूमादर्शनेऽपि। व्याप्तिकाले हि धूमस्याबाधात्, वह्नि-धूमयोरेव व्याप्तिग्रहः, न त्वाभासधूमवह्न्योः; अन्यथा प्रथमत एवाभासत्वनिर्णये व्याप्तिग्रहोऽपि न स्यात्, न वा ऽनुमितिः, इति प्रातिभासिकमानमेव तत्र बाधितम्, अन्यथा किं वा प्रातिभासिकमानमभिप्रेत्य 'प्रातिभासिकमानेने'ति चण्डमारुतोक्तिः ? अतः प्रातिभासिकमानाद् व्यावहारिकमानसाधनमबाधम्। न चात्र वह्निर्बाधितः, किन्तु धूमः, इति न बाधितस्य पारमार्थिकत्वमत्र कोऽपि वदति ॥

यत्र बाष्पे धूमत्वभ्रमेण धूमवानिति ज्ञानम्, तत्र तदानीं धूमत्वस्य बाधाग्रहात्, मिथ्यात्वेनानिश्चयाच्च प्रमैवेति गृह्यते। तदनन्तरं च वह्न्यनुमितिश्च संजाता, तत्र किं वा वह्निविषयकानुमित्या, इति धूमबाधज्ञानादनुमित्यन्तरानुदयो न दोषाय, जाता त्वनुमितिर्विषयतोऽबाधितैव; वह्नेरबाधितत्वात्, सर्वथा तु प्रातिभासिकमानेन व्यावहारिकसाधनमप्रत्यूहम् ॥

### व्यावहारिकमानेन पारमार्थिकसाधनोपपादनम्

अयमेव न्यायो व्यावहारिकमानेन पारमार्थिकसाधनेऽपि। तत्र व्यावहारिकेण मानेन व्यावहारिकसाधने न विप्रतिपत्तिः। तत्र व्यावहारिकगतं सत्त्वमेकं वा, तच्च तत्राऽध्यस्तं वा, अन्यद्वेति त्वन्यदेतत्। तत्र व्यावहारिकेण पारमार्थिकसाधनं न कुतः ?

### मानमित्योः समसत्ताकत्वनियमाभावादपि प्रातिभासिकेन व्यावहारिकस्य, व्यावहारिकेण पारमार्थिकस्य च साधनासंभवः

तत्र किं मान-मित्योः समसत्ताकत्वम्, उत तद्विषययोः। नाद्यः, प्रातिभासिकमान-तन्मित्योर्विषमसत्ताकत्वात्। अत एव न द्वितीयोऽपि; तत्र यदि ज्ञानस्य विषयस्य चाबाधितत्वं विशेषणम्, तर्हि यद्यपि प्रातिभासिकमान-तन्मित्योर्नात्र ग्रहणम्, व्यावहारिकमान-मित्योर्न व्यभिचारः; उभयोरपि सर्वत्र समसत्ताकत्वात्; तथाप्यबाधितमान-तद्विषययोर्न समसत्ताकत्वम्; यदि विषयो निर्विशेषं ब्रह्म, तत्र शास्त्रस्य व्यावहारिकत्वात्, ब्रह्मणश्च पारमार्थिकत्वात्, शास्त्रजन्याया अखण्डाकारवृत्तेः, तत्त्वमस्यादिमहावाक्यानामखण्डजीवत्वेश्वरत्वोपलक्षितसंविन्मात्रविषयकत्वात्, इति

तत्र व्यभिचारः। सविशेषवाक्येषु तु नोक्तनियमस्य व्याहतिः; उभयोरपि विषयस्याबाधितस्य समसत्ताकत्वात् ॥

**प्रमाण-प्रमित्योः प्रमाणप्रमेययोर्वा समसत्ताकत्वाभावादपि, प्रमेय-बाधाद्यभावाद् न व्यावहारिकेण पारमार्थिकसिद्‍ध्यभावः**

प्रमितिजनकानि मानानि, स्वतः, विषयतश्च समसत्ताकाबाधितविषयविषयकाणि, मानत्वात्, व्यावहारिकमानवदित्यनुमानस्य प्रातिभासिकमाने बाधः, तत्त्वम्पदशोधकप्रमाणेष्वपि महावाक्यत्वेंऽशतो बाधः। न च—वेदान्तवाक्यान्यपि तेषामप्याविद्यकत्वात् तज्जन्यज्ञानस्यापि दोषकरणकत्वेन विषयतोऽपि बाध्यन्त इति—वाच्यम्; अविद्याया दोपविधया कारणत्वं हि विषयस्याप्याविद्यकत्वे, अविद्याप्रयुक्तब्रह्मविवर्तत्वेनैव। न च निर्विशेषं ब्रह्म तथा, इति न वेदान्तानां स्वतो बाधेऽपि विषयतो न बाधः। तदेवं वेदान्तानामपि ब्रह्मविषयकत्वकल्पमादाय। ब्रह्मसिद्ध्यादिप्रस्थाने त्वविद्यानिवृत्तिपरत्वाच्छास्त्रस्य, न ब्रह्मविषयकत्वम्, इति प्रमाण-विषययोः समसत्ताकत्वनियमोऽकिञ्चित्करः। न चैतावता निर्विशेषं स्वप्रकाशं न सिद्ध्यति ॥

तत्र घटादिज्ञाने तत्तदाकारवृत्त्युपहितचैतन्यस्य साक्षात्, विषयस्य तु जडस्यानावृतचैतन्यावच्छेदकतया फलव्याप्यत्वेन विषयत्वम्, न चैवं ब्रह्मणोऽज्ञानविषयस्य वृत्त्याऽज्ञाननिवृत्तौ स्वत एव स्वप्रकाशस्य मानेन भानम्, तद्भानपर्यन्तं वृत्तेरव्यापारात्, अनावृतसंविद्रूपत्व-तत्तादात्म्ययोरेव चैतन्यप्रत्यक्षत्वप्रयोजकत्वाच्च। व्यक्तं चैतदधस्तात् ॥

तत्त्वमस्यादिवाक्यजन्यज्ञानस्यापि वृत्तिरूपस्यान्तःकरणपरिणामत्वादविद्यादोषजन्यत्वेन व्यावहारिकविषयकत्वसाधनमपि तु बाधितमेव; ब्रह्मणोऽत्र कल्पे वृत्त्यविषयत्वात् ॥

**मानानि, स्वतो विषयतश्च समसत्ताकाबाधितविषयविषयकाणि, मानत्वादित्यनुमानस्य मूलाविद्यापरिणामविषयकज्ञानजनकत्वेन, सोपाधिकत्वम्। अतो वेदान्तानां व्यावहारिकाणामपि पारमार्थिकब्रह्मबोधकत्वं विरुद्धम्,**

तथाच प्रथमे प्रस्थाने प्रकृतानुमाने मूलाविद्यापरिणामविषयकज्ञानजनकत्वमुपाधिः। महावाक्ये चात्र साधनाव्यापकत्वमिति सर्वं सुस्थम्, इति शास्त्रस्य ब्रह्मज्ञानजनकस्यापि बाधितविषयकत्वेन न भ्रमत्वनिश्चयो

भूषणोक्तरीत्या। तदिदं सिद्धं यत् प्रातिभासिकमानेन व्यावहारिकस्य, व्यावहारिकेण मानेन तु तात्त्विकस्यापि साधनम्; अन्यथा मानत्वमेव भज्येत ॥

स्वतःप्रामाण्यादपि वेदान्तानां प्रामाण्यम्

मानत्वं हि मितिजनकत्वेन, मितित्वं त्वबाधितविषयकत्वेन; अतो न कोऽपि दोषः। स्वतःप्रामाण्याच्च वेदान्तानामप्रामाण्यग्राहकप्रमाणान्तराभावेन नाप्रामाण्यशङ्का; 'तत्त्वमस्यादि'महावाक्यजन्यज्ञानस्य बाधितार्थविषयकत्वसाधकप्रमाणान्तराभावस्यानुपदमेवोपपादनात् ॥

अतो यथायथं व्यवहाराज्ञाननिवृत्त्यन्यतरकालाबाधितार्थविषयकत्वेन तत्तद्विषयाणां प्रातिभासिकत्व-व्यावहारिकत्वव्यवस्था तदुभयकालाबाधितत्वे तु पारमार्थिकत्वमिति व्यवस्था ॥

प्रातिभासिकत्व-व्यावहारिकत्व-पारमार्थिकत्वव्यवस्था

तत्र मूलाविद्योपहितकालो व्यवहारकालः, तन्निवृत्त्युपहितकालो मुक्तिकालः, इति न व्यवहारकालादिनिर्वचनासंभवः। अर्थक्रियाकारित्वमात्रं प्रातिभासिक-व्यावहारिकसाधारणम्, संवाद्यर्थक्रियाकारित्वं व्यावहारिकत्वम्, अखण्डसंविन्मात्रत्वं पारमार्थिकत्वमिति विभागः ॥

प्रातिभासिकत्वादिसुवचत्वोपसंहारः

मूलाविद्योपधानं हि सविशेषोपासनाफलानुभवकालेऽपि, इति वैकुण्ठादीनामपि व्यावहारिकत्वम्; अविद्यानिवृत्त्युपहितकालबाध्यत्वात्तस्यापि गौणमुक्तिकालत्वेऽपि न मुख्यमुक्तिकालत्वम्। निर्विशेषं ब्रह्म तु मुक्तिकालोपहितत्वात् तस्य पारमार्थिकम्; अखण्डाकारवृत्तिकाल एवाज्ञाननिवृत्तिकालोऽपि तत्तन्मुक्तदृष्ट्या, इति न प्रातिभासिकत्वादिदुर्वचत्वम् ॥

विसंवादिप्रवृत्तिजनकज्ञानविषयत्वं प्रातिभासिकत्वम्, संवादिप्रवृत्तिजनकज्ञानविषयत्वं व्यावहारिकत्वम्, प्रकाशमानत्वसमानाधिकरणतदुभयशून्यत्वं पारमार्थिकत्वमिति विवेकः ॥

यावत्सत्त्वमर्थक्रियाकारित्वमबाधम्

यत्तु—हेतुत्वं वस्तुसत्तामपेक्षते—इति, तदिदं यदि यावत्सत्त्वमात्राभिप्रायम्, तर्हि तत्तत्प्रातिभासिकादिभावानां प्रातिभासिकसत्तामादाय निर्वोढुं पार्यते। त्रिकालाबाध्यत्वरूपसत्तामपेक्षत इति तु न संप्रतिपन्नम्; अर्थक्रियाकारित्वं सत्ताजात्यादिमत्त्वमादाय वा कारणत्वं सुनिर्वाहम्। अता-

त्त्विकप्रमाणभावेभ्योऽपि तात्त्विकप्रमोत्पत्तिदर्शनमेवं सत्यबाधितं भवति, मृद्दण्ड-चक्रादीनां हेतुत्वं त्रिकालाबाध्यसत्तयैवेति को वा निर्णेतुं पारयति ? कारणतादशायामबाध्यत्वमात्रेण यावत्तेषां कारणत्वम्, तावत्कालमबाध्यत्वं कथं न पर्याप्तम् ॥

अर्थक्रियाकारित्वातिरिक्तत्रिकालाबाध्यत्वसत्तावैतथ्यम्

तत्र नित्यत्वं सत्ताया अनित्यदण्ड-चक्रादिगतायाः कथमुपपद्यते ? आकृत्यतिरिक्तां जातिमनङ्गीकुर्वाणानां कथं वाऽऽकृतिर्नित्या ? तत्तदाकृतिमात्रेण कार्यनिर्वाह आकृतीनां तत्तद्व्यक्तिगतानां सादृश्येऽपि सर्वत्रानैक्यात् तस्याः त्रिकालाबाध्यत्वाभावात् कथं सत्त्वरूपता ? इति त्रिकालाबाध्यत्वरूपेण सत्त्वस्वीकारो वितथः ॥

इदमेवाभिप्रेत्योक्तम्—

"पूर्वसम्बन्धनियमो हेतुत्वे तुल्य एव नौ ॥
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥"

इति ।

आविद्यकसत्तया वाऽर्थक्रियाकारित्वं प्रातिभासिकानां व्यवहारिकाणां च

वस्तुतस्तु—विवरणप्रस्थाने प्रकृत्यपरपर्यायाविद्यापरिणामत्वात् सर्वेषामविद्यासत्तैव सत्तेति यावदविद्यं सत्त्वेन कारणत्वमविप्रतिपन्नम् । अविद्यानिवृत्तौ परं काममास्तां विप्रतिपत्तिः, इति सत्कार्यवाददृष्ट्या सत्त्वेन कारणत्वे न विसंवादः । न चान्यत्रापि प्रकृतिसत्ताधिकसत्ताकत्वमविद्यान्तानाम् । तत्र ब्रह्मणः प्रकृतिसत्ताऽधिकसत्ता वर्तते, न वर्तते वेति तु कथान्तरम् ॥

तत्राविद्यायास्तूलाविद्या-मूलाविद्याभेदेन भिन्नत्वात् प्रातिभासिकानां यावत्तूलाविद्यं तत्सत्तया कारणत्वम्, तत्कार्यं तु कियदवध्यर्थक्रियाकारीति तु विचारान्तरम्, इति प्रातिभासिकानामपि कारणत्वं निरुह्यते, व्यावहारिकाणामपि ॥

कारणत्वं ब्रह्मसत्ताऽनपेक्षम्

न चैतावता ब्रह्मसत्ताकत्वं सर्वेषां संभवति । तत्र ब्रह्मणः कारणत्वं यदि परिणामित्वेन, तर्हि नूनं तत्समसत्ताकत्वं सर्वेषां कार्याणाम् । अवान्तरकारणभावमापन्नानां च सुसंभवम् । न च ब्रह्मपरिणामिता श्रीभाष्य-

मतेऽपि संमता, इति कारणसत्त्वे निर्भरो यदि ब्रह्मसमसत्तया, तर्हि व्याहन्यते। अतः कीदृशम्, कथं च सत्त्वेन कारणत्वं शास्त्रस्याद्वैतसिद्धान्तविरोधीति वक्तव्यम्॥

शास्त्रजन्यज्ञानविषयस्तु ज्ञानमिव न नित्यमिति नियमः

यदि कार्यस्यापि तत्समसत्ताकत्वमपेक्ष्यत इत्यभिप्रायः, तस्यापि साक्षाच्छास्त्रकार्यमित्यभिप्रेत्य, तर्हि कस्य वेदमनिष्टम्? यदि शास्त्रजन्यज्ञानविषयस्य, तर्हीदं विविच्यताम्—शास्त्रजन्यज्ञानमिव किं तद्विषयोऽपि शास्त्रकार्यमित्यभिप्रेत्यायं प्रश्नः, उत यत्किंचित्कार्यमेव प्रमेव प्रमेयमपि भवतीत्याशयेन वा। आद्यमसंभवि। नान्त्योऽपि; तथा सति हि कस्यापि प्रमाणस्य नित्यप्रमेयविषयकप्रमाजनकत्वं न स्यात्, इति सविशेषब्रह्मवादस्य तिलाञ्जलिरेव स्यात्॥

कारणे सत्त्वासत्त्वकथा

अविद्यानिमित्तकारणतामाश्रित्य प्रश्नस्तु तद्दृष्ट्या सर्वस्य कार्यस्य विवर्ताख्यस्य सत्तादात्म्यमात्राद्, न कस्यापि सत्त्वम्, इति सत्त्वेन कारणताया असंभवाद् नोत्तिष्ठति सत्त्वासत्त्वकथा इदमेवाभिप्रेत्योक्तम्—

"हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा।"
व्यक्तं चेदं सूत्रस्वारस्यसमर्थनावसरेऽपि॥ इति।

एतेन—ज्ञानं किं सत्तामेव गृह्णाति? गृहीताऽपि सा बाध्यते। आद्ये सत्ताया एवासिद्धौ सत्ताभेदायोगः। अन्त्ये बाधोऽयं वस्तुबाधः, उत वस्तुनिष्ठसत्ताबाधः। तत्राद्ये वस्तुबाधो बाधज्ञानकाले वस्त्वभावरूपः, उत प्रागपि। आद्ये प्राक्काले वस्तुन इष्टत्वाद् न मिथ्यात्वम्। द्वितीये प्रागभावे का नाम प्रातिभासिकी, उत व्यावहारिकी वा सत्ता? अन्त्ये वस्तुन्यबाधिते सत्ताबाधः कथमिति—परास्तम्; दत्तोत्तरत्वात्॥

तथाहि—किमयं प्रश्नः प्रमाणानाम्, प्रमितेश्च ब्रह्मसत्तामादाय, उत तत्तदुपादाना-विद्यानां सत्ताम्। आद्ये ज्ञानं सत्तां न गृह्णाति; ब्रह्मव्यतिरिक्तस्य ब्रह्मसत्त्वस्याबाधितस्वरूपस्यानङ्गीकारात्, द्वितीयेऽविद्यायामनुवर्तमानायां गृहीतापि सत्ता बाध्यते वेति वा प्रश्नः, उताविद्याया निवृत्तिदशायाम्। तत्राद्ये न गृहीताऽपि सत्ता बाध्यते, इति न प्रातिभासिक-व्यावहारिकभेदानुपपत्तिः। द्वितीये तु वस्तुनः, सत्तायाश्चोभयोरपि बाध इष्टः; तदुपादानस्याविद्याया निवृत्तेः। बाधस्तु सर्वत्र बाधज्ञानकाले वस्त्वभावरूप

एव। प्राक् तत्कारणात्मना सत्त्वाद् न वस्त्वभावः। तावताऽपि न मिथ्यात्वं नोरीक्रियते ॥

तत्र नष्टानामविद्यात्मना सत्ता, वर्तमानानां तु स्वरूपेण प्रातिभासिकी, व्यावहारिकी वा सत्तेति न विरोधः; कारणात्मनाऽप्यभावस्यैव बाधपदार्थत्वात्, नाशस्य केवलं निवृत्तिरूपत्वात्। वस्तुनः स्वरूपतः, औपाधिकरूपेण वा बाधो न कथमपि ॥

प्रकृतोपयुक्तांशस्त्वेतावदेव। स्वतन्त्रखण्डनखण्डनं तु भूषणस्य। तस्यापि खण्डनं त्ववसरान्तरे। वादकथयैवात्र शतभूषणी सांप्रतं प्रवर्तते, इति नातिप्रयोजनं खण्डनमण्डनम्। खण्डनखण्डनखण्डनेन विद्यासागरी-भारती-विवरणादिकं पर्यालोच्यमानं सर्वमिदं खण्डनखण्डनमनवकाशीकरिष्यते ॥

### प्रमाणतो न बाह्यवस्तुसिद्धिः

एतेन—"यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपलभ्यते, तत्संभवति, यत्तु न केनचित् प्रमाणेनोपलभ्यते, तन् न संभवति। इह तु यथास्वं सर्वैरेव प्रमाणैः बाह्य उपलभ्यमानः कथं न संभवतीति"नाभाव उपलब्धेः"इति सूत्रभाष्यमपि – व्याख्यातम्॥

अत्र हि ज्ञानव्यतिरेकेण बाह्यार्थसंभवमात्रं साध्यते प्रमाणेन, स तु देश-कालसम्बन्धमात्रम्, न त्वबाध्यस्वरूपं सत्त्वं प्रातिभासिक-व्यावहारिकसाधारणम्। प्रातिभासिकमपि बाह्यं ज्ञानव्यतिरेकेण वर्तते, परन्तु "वैधर्म्याच्च न स्वप्नादिवत्" इत्युत्तरत्र वर्णयिष्यमाणत्वाद् जागरप्रमेयमात्रसाध्यताभिप्रायेण प्रमाणेनोपलभ्यत इत्युक्तिः। न चात्र प्रमाणस्य, प्रमेयस्य वा बोध्यं सत्त्वमपि विवक्ष्यते, येन प्रमाणतो वस्तुसत्ताऽत्र स्वीकृता स्यात् ॥

### अनिर्वचनीयत्वेऽपि कार्य-कारणभावोपपत्तिः

एतेन—न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः, किन्तु पारमार्थिकसत्त्वमित्यपि—व्याख्यातम्, तेन ह्यनिर्वचनीयत्वमेव सदसद्विलक्षणत्वमिष्यते, न तु सत्त्वमिति न विरोधलेशोऽपि। कार्य-कारणभावोऽनिर्वचनीयतायामपि, इति न कार्यकारणभावानुपपत्तिरिति त्वनुपदमेव व्यक्तीकृतम् ॥

प्रमाणसत्तानभ्युपगमेऽपि न वेदान्तप्रामाण्यहानिः

सत्यम् , प्रमाणेन वस्तुस्वरूपनिर्णयो भवति, न तु तस्याबाध्यत्वरूपं सत्त्वमपि। तद्धि ब्रह्मस्वरूपमात्रम् , न तु ब्रह्मणोऽपि धर्मः; बाध्यत्वाभावत्वोपलक्षितस्वरूपत्वादिति मिथ्यात्वपारमार्थिकत्वपक्षावसरे लघुचन्द्रिकादौ निरूपितम्। धर्मत्वे तु तस्यापि दृश्यत्वेन मिथ्यात्वान्नाद्वैतहानिरित्यपि मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वापत्तिरित्यादिनोपपादितम् , इति प्रमाणादिसत्ताऽनभ्युपगमेऽपि कथाधिकारो न विरुध्यते ॥

कथाऽधिकारः सत्तादात्म्येनापि नाऽपि, न पारमार्थिकत्वेनैव
तावताऽपि कथाऽधिकारः, निःश्रेयसावाप्तिश्च

बौद्धानां सांवृतं सत्त्वम् , अद्वैतिनां प्रातिभासिकादिभेदभिन्नं सत्त्वं च भिन्नम्। प्रातिभासिकत्वादिकं तु निरुक्तमेव, येन केनापि प्रकारेण सत्त्वमात्रस्य, सच्छब्दव्यवहार्यत्वमात्रस्य वा स्वीकारोऽकिञ्चित्करः; अबाध्यत्वरूपसत्त्वस्वीकारनैयत्यस्यैव प्रतिवादिनोपन्यस्यमानत्वात्। सिद्धं तु सत्त्वमपेक्ष्यताम् , यत्तु न विप्रतिपन्नम्। पारमार्थिकसत्त्वाभिन्नकालत्रयबाध्यत्वं प्रमाणानां प्रमेयानां चाभ्युपगम्यैव कथेति न संभवति। न च तत् संभवत्यविद्याकारणताम् , ब्रह्मकारणतां वाऽऽदायेत्यपि व्यक्तमधस्तादत्रैव ॥

यदि तत्त्वबुभुत्सूनामेवायं कथाऽधिकारः, तर्हि श्रौतमर्थं यथावदभ्युपगम्यैव कथा प्रवर्तनीया। तत्रापि विप्रतिपत्तौ तु कथाऽपि सत्त्वासत्त्वौदासीन्येन, सम्प्रतिपन्नार्थक्रियाकारित्वमादाय वा वादकथया वा, कथान्तरेण वा, श्रौतो मुख्यार्थो निर्धार्यताम्। सर्वथा तु कथं न कथाधिकारः, येन कथासिद्धं तत्त्वम् , निःश्रेयं, सोपायं चाधिगम्य सहृदयाः, निःश्रेयसं प्रतिपत्स्यन्ते ॥

न्यायानुसन्धानेनाद्वैतिनां कथाधिकारोपसंहारः

एवं सति ह्युभयसम्मतप्रमाणपुरस्कारेण कथायामुभयोरप्यधिकारः सिध्यति। निर्विशेषवाक्यानां सविशेषवाक्यानां च विरोधाविरोधचिन्ता, एकतरप्राबल्यव्यवस्था चोभयसंमतब्रह्ममीमांसातात्पर्यविवेचनैकसमाधेया। तच्चोभयसंमतब्रह्ममीमांसान्यायानुसन्धानं विना कथं संभवतीति कथाधिकारोऽद्वैतिनामत्र श्रीभाष्यानुयायिभिर्नापलपितुं शक्यते। सर्वथा

तु यावत्पर्यन्तमन्येषां दृष्ट्या प्रमाणादीनां सत्त्वम् , तावत्पर्यन्तमद्वैतिनामपि सत्त्वमविशिष्टमिति कथमद्वैतिनां कथाऽनधिकारः ?

यत्तु—अद्वैती प्रमाणादीनां वस्तुतो बाधयिष्यमाणत्वमवगच्छति वा, न वा। न चेत् , न सोऽद्वैती, अवगच्छति चेत् , तद्दृष्ट्या प्रमाणादीनां त्रैकालिकात्यन्ताभावः इति—भूषणम् , तत्रेदमेवोत्तरम्—कथाकालिकीं सत्त्वव्यवस्थामाश्रित्यैव व्यवहारः कथाङ्गम्। भाविनी स्थितिस्तु श्रुत्यर्थनिर्णायकन्यायानुसारिणी या काऽपि भवतु। तत्र यदि श्रुतिः बाधं मुक्तिकालीनं तत्तन्यायानुसारेणावधारयिष्यति, अन्यथा वा, उभयथाप्युभयैरपि श्रुतिरेव व्यवस्थापिका शरणीक्रियताम्। न हि भाविनं निर्णयमिदन्तया निर्धार्यैव कथा कुत्रापि। अत एवोक्तम्—सत्त्वासत्त्वौदासीन्येन कथायां प्रवृत्तिः, अथवाऽर्थक्रियाकारित्वादिरूपसत्तामभ्युपगम्य सेति। अधिकं तु नात्र किमपि वक्तव्यम् ; कथाधिकारमात्रस्य प्रकृतत्वादित्युक्तम्॥

॥ इति कथाधिकारोपपत्तिः ॥

# निर्विशेषस्वयंप्रकाशत्वोपपत्तिः

### निर्विशेषस्यापि प्रमाणापेक्षोपपत्तिः स्वप्रकाशस्यापि

निर्विशेषं ब्रह्माज्ञानावृतं स्वयंप्रकाशमानमपि प्रमाणजन्याखण्डाकारवृत्त्याऽऽवरणे निवृत्त एवानावृतप्रत्यगभिन्नस्वस्वरूपं भवति, इति स्वप्रकाशस्वरूपसिध्यर्थं प्रमाणानावश्यकतायामपि तदावरकाज्ञाननिवृत्त्यर्थं प्रमाणमपेक्ष्यत एव। अतो न प्रमाणं विनैव स्वप्रकाशानावृतसंविद्रूपसिद्धिः, इति बहुशस्तत्र तत्रोपपादितम्—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति भाष्यमनुसृत्य। अतः प्रमाणाभावशङ्का शतदूषण्याः, भूषणस्य वा निरालम्बा, इति स्वप्रकाशस्यापि निर्विशेषस्य प्रमाणापेक्षायाः, स्वप्रकाशत्वस्य च न कोऽपि विरोधः ॥

तत्र स्वप्रकाशत्वं निर्विशेषस्य स्वातिरिक्तचिदनपेक्षप्रकाशत्वेन, न तु घटादीनामिव फलव्याप्यत्वेन, अन्यथा वेति निरूपणमेव प्रकृतम्। स्वप्रकाशार्थमन्यानपेक्षत्वमात्रेण तदावरणनिवृत्त्यर्थमपि न तदनपेक्षाऽद्वैतमते ॥

### स्वप्रकाशत्वनिर्वचनमेवात्र लक्ष्यम्, न तु तत्र प्रमाणान्तरचिन्ता

श्रीभाष्यमते त्वात्मनः स्वरूपज्ञानस्य स्वप्रकाशस्याप्यनुभाव्यत्वं घटादिसाधारणं स्वीक्रियते सत्यप्यनावरणे, इति प्रमाणान्तरविषयत्वं स्वप्रकाशत्वं च विरुद्धम्। न च कर्मरूपाया अविद्याया अनुभाव्यत्वावस्थायामपि निवृत्तिः, इति प्रमाणान्तरान्वेषणकथा वितथा; नैवमद्वैते। तत्रावरणनिवृत्त्यर्थतयोपनिषदादिप्रमाणापेक्षायाः सत्त्वादिति वस्तुस्थितिः ॥

अतोऽनुभाव्यत्वमङ्गीकृत्य स्वप्रकाशत्वं वा, तदनङ्गीकृत्य वा। आद्ये घटादिवत् प्रमाणवेद्यत्वेनानुभाव्यत्वं वा, अन्यद्वा, अन्यत्वे किं प्रमाणान्तरापेक्षा वर्तते वा, न वेति विचार एवात्र प्रकृतः, इति स्वप्रकाशत्वनिर्वचनमेकमेव प्रधानं लक्ष्यमस्य प्रकरणस्य, इति शतभूषणी स्वप्रकाशत्वनिर्वचनमेवात्र प्रस्तौति, येनार्थात् प्रमाणान्तरापेक्षाऽनपेक्षा चिन्ताऽपि चरितार्था ॥

### श्रीभाष्यमत आत्मनः स्वप्रकाशत्वानुपपत्तिः

स्वरूपज्ञानस्य स्वप्रकाशत्वं स्वस्मै प्रकाशमानत्वम्, धर्मभूतज्ञानस्य स्वप्रकाशत्वं स्वाश्रयाय प्रकाशमानत्वमिति श्रीभाष्यसिद्धान्तः। तत्र

जीवः, परमात्मा च स्वात्मानं न स्वयमनुभवति; स्वरूपज्ञानस्य स्वप्रकाशस्य स्वयं स्वविषयत्वायोगात् तदनुभवोऽन्येनेति वक्तव्यम्। तत्र च तदनुभवस्य प्रत्यक्षादिप्रमाणजन्यानुभवाद्यनेकरूपत्वाद् यथायथं यदि जीवं परमात्माऽन्यश्चाऽनुभवति, तर्हि तत्र प्रत्यक्षादिप्रमाणजन्यानुभवरूपत्वाभावात् प्रत्यक्षादिप्रमाणनिरपेक्षं स्वप्रकाशत्वं दुर्वचम् ॥

धर्मभूतज्ञान स्वप्रकाशत्वायोगः, आत्मजिज्ञासाऽनुपपत्तिश्च

अस्वप्रकाशत्वेऽपि तस्य नैयायिकमत एवानुभाव्यत्वसंभवात् किं स्वप्रकाशत्वेन? स्वप्रकाशत्वे च का वाऽपेक्षा प्रत्यक्षादिप्रमाणान्तरस्य?

तत्र धर्मभूतज्ञानं हि स्वाश्रयाय प्रकाशमानत्वम्, स्वस्मै प्रकाशमानत्वं वा स्वप्रकाशत्वं न प्रत्यक्षादिजन्यानुभवान्तरमपेक्षते। स्वस्मै प्रकाशमानं स्वप्रकाशार्थमनुभवान्तरमपेक्षत इति तु विचित्रा गतिः ॥

तत्र यदि बाह्यप्रकाशमपेक्ष्य स्वरूपज्ञानस्य ज्ञातृत्वनिर्वाहार्थं धर्मभूतज्ञानापेक्षा, न तु केवलं स्वस्मै प्रकाशाय, तर्हि 'आत्मानं जानामी'ति प्रत्ययः कथम्? तस्य स्वप्रकाशस्य स्वानुभवार्थं प्रमाणान्तरानपेक्षणात् ॥

तत्र यदि स्वस्य धर्मभूतज्ञानस्य स्वप्रकाशत्वमीश्वरस्यैव प्रत्यक्षविषयः, अन्येषां तु प्रमाणान्तरावसेयम्, स्वस्य स्वप्रकाशत्वं कुतोऽवगन्तव्यम्? न तावच्छ्रुत्या; अन्येषामेवस्वप्रकाशत्वस्य प्रमाणान्तरावसेयत्वोक्तिविरोधात् ॥

तत्र यदि स्वप्रकाशत्वं स्वतस्सिद्धम्, तर्हि स्वस्वरूपज्ञानार्थं जिज्ञासूनाम्, मुमुक्षूणां वा वेदान्तादिप्रमाणान्वेषणम्, उपासनाद्यनुष्ठानं च वितथम्। न हि स्वप्रकाशात्मान्तरप्रकाशार्थं वेदान्तादिप्रमाणान्वेषणेन स्वस्य किमपि प्रयोजनम्। न च स्वस्मै स्वात्मा स्वयं प्रकाशोऽज्ञोऽपि भवितुमर्हति; अज्ञानावृतस्य स्वप्रकाशस्याज्ञानाश्रयत्वस्य बाधात् ॥

अद्वैतमते जिज्ञासोपपत्तिः

अद्वैतमते तु स्वप्रकाशमानस्याप्युपाधिधर्मेण स्वयं स्वरूपस्याज्ञानात् तदज्ञाननिवर्तनार्थं शास्त्रादिप्रमाणान्वेषणं सार्थकम्। एवं वेदान्तजन्यप्रत्ययेनान्यात्मस्वरूपं नाभिप्रयन्ति, न तु स्वात्मस्वरूपं स्वस्यैकस्यापीति विवक्षायामात्मस्वरूपज्ञानं वैदिकानां केषामपि वेदान्तविचारेऽपि स्यात् ॥

### कर्मातिरिक्ताविद्यानिरासार्थत्व एव विचारसाफल्यम्, कर्मणस्त्वविद्याप्रयुक्तत्वेनौपचारिकमेवाविद्यात्वम्

यदि प्रत्यगात्मनः कर्मरूपाविद्यावृतस्यावरणनिवृत्त्यर्थमपेक्षित-प्रसादसाधनोपासनविधानार्थं वेदान्तविचारापेक्षा, तर्ह्यावरणनिवृत्तेर्दृष्ट-विधया प्रकाशैकनिर्वर्त्यताया एव दर्शनेन साक्षात्प्रमाणजन्यवृत्तेरुपज-नन एव वेदान्तानां तात्पर्यमिति वक्तव्यमित्यद्वैतरीतेराश्रयणमेव युक्तम्, कर्मरूपाविद्यावरणं वाक्यार्थज्ञानमात्रेण न निवर्त्यमित्युपासनापेक्षावादस्त्वा-वरणशक्तिमदविद्यायाः कर्मरूपत्वं विहायाऽऽवरण-विक्षेपशक्तिमत्कर्मातिरि-ऽविद्यास्वीकार एव युक्तः; कर्मण आवरणशक्तेरन्यत्रादर्शनात् ॥

"अविद्या-कर्मसंज्ञाऽन्या" इत्यत्र कर्मण्यविद्यात्वोपन्यासस्तु कर्मण आ-विद्यकत्वप्रयुक्तं तदभेदमादाय। अत एव विष्णुपुराणे द्वितीयांशे—

"अविद्यासंचितं कर्म तच्चाशेषु तु जन्तुषु।"

इत्यविद्यायाः स्वरूपतो न साक्षाद्बन्धकार्यकारित्वम्, यथाऽहमभि-मानस्य, किन्तु ममताभिमानस्यैव तथा कर्मद्वारैव बन्धप्रयुक्तदुःखादिनि-दानत्वम्, इत्यभिप्रेत्यैवाविद्याकार्यस्यैव कर्मणोऽविद्यात्वोपचारमात्रम् ॥

### अद्वैतमते स्वप्रकाशत्वेऽपि प्रमाणापेक्षा, न तु श्रीभाष्यमते

तत्र "विद्याकर्मसंज्ञे"तिकाम्यकर्माभिप्राय इति परे। तत्र तु कर्मसा-मान्यवाचिनः कर्मविशेषपरत्वम्। द्वितीयांशस्तु सर्वकर्मणामविद्याकार्यत्व-मवगमयति, इत्यविद्यानिवृत्तिं विना न कर्मणां बाधः, इति साक्षादविद्या-निवर्तकवृत्तिज्ञानेनैव शास्त्रस्य पर्यवसानं वक्तव्यम् ॥

तच्च जीवोपाधेः, ईश्वरोपाधेर्वाऽविद्याया निवृत्त्यर्थं निर्विशेषस्य स्वप्र-काशस्यापि प्रमाणव्यापारं विना नोपपद्यते, इत्यद्वैतमते न प्रमाणान्तरान-पेक्षा; तथापि प्रमाणव्यापारकृत्यं किमित्यत्रैव प्रस्थानभेदः। इदं च स्वप्र-काशत्वनिर्वचने व्यक्तीभविष्यति ॥

श्रीभाष्यमते तु स्वप्रकाशे प्रमाणापेक्षा कुतः? इति धर्मभूतज्ञानस्य, आत्मनो वा स्वप्रकाशत्वं यदीश्वरस्यैव विषयः, तर्हि प्रत्यक्षायोग्यस्य स्वप्रकाशत्वस्योभयत्र व्यवस्थापनेन किं कृत्यं भूपगस्य?

आत्मनो जडत्वापत्तिशङ्कानिरासः

एतेन—प्रकाशमानत्वमात्मनः, धर्मभूतज्ञानस्य वा नाऽनुभावित्वम्, स्वयम्प्रकाशत्वं तु न तथा। अत एव तार्किका जडत्वमाशेरत इति भूषणम्—परास्तम्॥

इदमेवात्र पृच्छ्यते—यद्येवम्, किमिति भूषणमात्मानं प्रमाणान्तरावगम्यत्वमात्रेण प्रकाशमानत्वमात्रमाख्याय स्वयम्प्रकाशत्वं च सर्वेषामनुभवायोग्यं विहाय, तार्किकपक्षमेव न कथमाशेरते? निर्विशेषस्वयम्प्रकाशतायां तूपाधिसम्बन्धप्रयुक्तावरणनिरासमात्रेण यथा भूषणमते धर्मभूतज्ञानं स्वयंप्रकाशमपि 'अहं स्वयंप्रकाशः' इति नानुभवितुमर्हति; तस्याननुभवितृत्वात्, एवमेव निर्विशेषचिदपि नानुभवित्री, किंत्वौपाधिक्येव सा तथा, इति तद्विषयावरणनिवृत्तिमात्रेण सर्वोपाधिविशेषविरहात् स्वयंज्योतिःस्वरूपा, न केनापि संविदा जीवेन, अन्येन वा प्रतिबोध्या, न वाऽनुभवति। प्रमाणव्यापारस्तु केवलं तदावरणनिवृत्तये, इति नात्र प्रमाणान्तराभावः॥

स्वयंप्रकाशस्य नानुभवित्रपेक्षा, ज्ञानसकर्तृकत्वादि-
त्रिपुटीभाननियमस्तु जन्यज्ञानाभिप्रायः

स्वयंप्रकाशत्वं निर्विशेषसंविद आवरणाभावोपलक्षितं संवित्स्वरूपत्वमात्रम्, न हि साऽनुभवितारम्, अन्यद्वाऽपेक्षते। ज्ञानं सकर्तृकम्, सविषयकमिति नियमस्तु श्रीभाष्यते धर्मभूतज्ञानस्येवाद्वैतमते वृत्तिज्ञानविषयः, न तु स्वरूपज्ञानविषयः; अन्यथा भूषणमते—आत्मा स्वप्रकाश इत्युक्तौ—किमात्मनः संवित्स्वरूपं स्वप्रकाशमित्यर्थः, उत तद्गतात्मत्वं स्वप्रकाशमित्यर्थः। आद्य आत्मातिरिक्तसंविद्रूपाभावात्, आत्मन इति षष्ठ्यन्तपदप्रयोगायोगः, अन्त्ये आत्मत्वस्य स्वप्रकाशत्वम्; अन्यथा घटादिवदचेतनत्वापत्तिः॥

न च निर्विशेषतावस्थायां ज्ञाता, ज्ञानम्, ज्ञेयमिति त्रिपुटीविभागः। स हि जन्यवृत्तिज्ञानविषयः, न स्वरूपज्ञानविषयः; तत्र ज्ञातृत्वप्रयोजकत्वोपाधेः, ज्ञेयस्य विषयस्य च बाधात्, इति कर्तृ-कर्मयोगाभावो न दोषायाद्वैतमते। श्रीभाष्यमतेऽपि स्वप्रकाशात्मधर्मो न प्रकाशक्रिया, किन्तु धर्मभूतज्ञानमेव तत्र क्रिया, इति नात्रापि स्वप्रकाशात्मस्वरूप-तत्प्रकाशयोरैक्यम्। न हि तत्रापि स्वरूपज्ञानमेवादाय ज्ञाता, किन्तु धर्मभूतज्ञानेनैव,

इति धर्मभूतज्ञानज्ञात्रभेदेऽपि स्वरूपज्ञानातिरिक्तस्य ज्ञातुरन्यस्याभावात्, तस्यापि धर्मभूतज्ञानमनपेक्ष्य ज्ञातृत्वस्यायोगात् तत्र कर्तृ-कर्मभावव्यवस्थाया नोपयोगः ॥

तदिदं सिद्धम्—यदावरणनिवृत्तिमात्रमुपलक्ष्य प्रमाणापेक्षायामपि तावतैव सर्वोपाधिविरहितस्वयंज्योतिःस्वरूपसिद्धेर्न निर्विशेषब्रह्मबोधनार्थं न प्रमाणान्तरापेक्षा घटादिष्विव; अन्यथा तेषामिवात्मनोऽप्यचेतनत्वापत्तिः ॥

श्रीभाष्यमत आत्मनो वेद्यत्वानुपपत्तिः

अत्र भूषणम्—अचेतनत्वापत्तिरियं किमात्मनः, उत संविदः। नाद्यः; अन्यवेद्यत्वे सत्येव चेतनत्वस्वीकारे बाधकाभावाद् हेतोर्व्याप्यत्वासिद्धेः। नान्त्यः; 'जानामी'त्यनुभूयमानायाः संविद अचेतनत्वस्येष्टत्वात्, स्ववेद्यत्वेऽपि तत्त्वज्ञानान्तरानाश्रयतयाऽचेतनत्वासंभवेनान्यवेद्यताया अचेतनत्वप्रयोजकत्वाभावाच्च—इति ॥

तत्र वेद्यत्वं हि जडस्यैव घटादेर्लोके दृष्टम्। तद्धि प्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यावच्छेदकत्वम्, न तु वृत्तिव्याप्यत्वमात्रम्। ज्ञानं हि प्रमाणजन्यमज्ञानविषयत्वनिवर्तकम्। अज्ञानविषयत्वं त्वज्ञानकार्यस्य न ज्ञानस्य, किन्तु संविन्मात्रस्य शुद्धस्याखण्डस्यात्मन एव, इति न संविन्मात्रस्याज्ञानोपहितस्य वृत्त्युपधानेनाज्ञाननिवृत्त्यादि पूर्वमुक्तम्। तत्र यद्यात्मनोऽपि घटादिवदेव वेद्यत्वेऽभ्युपगम्यमाने तस्य घटादिवदनावृतचैतन्यतादात्म्येनैव विषयत्वं स्वीकर्तव्यम्, तर्हि घटादिवदचेतनत्वं जडत्वापरपर्यायमापद्यते, इति कथमन्यवेद्यत्वेऽपि संविद्रूपत्वापत्तिः। अत्र न चेतनत्वापत्तिरित्यस्यानुभूतित्वापत्तिः, संविद्रूपत्वापत्तिरित्यर्थः। संविदेव ह्यात्मा नामाऽद्वैतसिद्धान्ते, तदुक्तमिष्टसिद्धौ—'अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, अन्यथा घटादिवदनुभाव्यत्वेऽननुभूतित्वप्रसङ्गः—इति। आत्मा संविदिति चानर्थान्तरम् ॥

'जानामी'ति प्रतीतिविषयस्तु धर्मभूतज्ञानं श्रीभाष्यमते, अद्वैतसिद्धान्ते वृत्त्याश्रयान्तःकरणतादात्म्यप्रयुक्तवृत्त्याश्रयत्वेनेति। तदपि धर्मभूतं ज्ञानमेव, न संवित्। तत्राद्वैतसिद्धान्ते ज्ञानपदम्, संवित्पदं वाऽऽत्मन्येव मुख्यम्, वृत्तौ त्वनावृतचैतन्योपाधित्वेनौपचारिकम्, इति आत्मा वा, संविद्वेति विकल्प एव नोत्तिष्ठति। व्यक्तं चैतत् संविदात्मत्वोपपत्तौ ज्ञाना-

श्रयत्वेन चेतनत्वविवक्षायां यद्यपि नैयायिकमत इव ज्ञेयत्वेऽपि नास्ति बाधकम् , तथापि तत्रेवात्रापि जडत्वमप्यापाद्येत ॥

अत एवात्मनः संविद्रूपस्य न सज्ञातृकत्वम् , सविषयत्वं चेति सिद्धान्तः ॥

संवित्पदस्य धर्मभूतज्ञाने मुख्यं भावमादाय भूषणाद्याक्षेपायोगः

तत्र श्रीभाष्यमते—तत्र धर्मभूतं स्वरूपज्ञानं चेति द्विविधं ज्ञानम् , धर्मभूतज्ञानेन च संकोच-विकासशालिना नित्येनात्मनो ज्ञातृत्वम् । तत्र धर्मभूतज्ञानं स्वाश्रयायाऽऽत्मन एव स्वप्रकाशम् , यतस्तत्राऽऽत्मैव तत्फल-भोक्ता, तद्द्वारैवात्मनो घटादिप्रकाश इति च स्वीक्रियते । तत्र यदि घटा-दिभिरात्मन उपरागार्थमेव धर्मभूतज्ञानम् , तर्हि धर्मभूतज्ञानं संकोच-विकासशीलम् , नित्यं च पारिभाषिकं क्रियात्मकमनङ्गीकृत्य धर्मिण एव संकोच-विकासाङ्गीकारे साक्षात् घटाद्युपरागसंभवात् किमन्तर्गडुना धर्मभूतज्ञानेन ?

आत्मातिरिक्तधर्मभूतज्ञानवैयर्थ्यम्

यदि धर्मभूतज्ञानं नित्यमपि संकोच-विकासशालि, तर्हि नित्यज्ञानत्वा-विशेषाद् धर्म्येवाऽऽत्मा एकः स्वरूपज्ञानमात्रः कथं न स्वीक्रियते ? धर्म-भूतज्ञानमपि नित्यद्रव्यमपि संकोच-विकासावस्थाश्रयत्वेनैव क्रियाऽपीति कृत्वैव खलु तद् धात्वर्थ इति वक्तव्यम् । सविषयकत्वं तु ज्ञानस्याधात्वर्थ-स्य न कुत्रापि प्रसिद्धम् ॥

तत्र विषयत्वं नाम विषयित्वाभिमतेन साकं ज्ञानप्रसरसंबन्धविशेषो धर्मिभूतज्ञानस्यैव श्रीभाष्यमते कुतो न संभवति ?

तत्र ज्ञानत्वेऽपि धर्मिभूतज्ञानस्य विकासवत् संकोचोऽपि धर्मभूत-ज्ञानस्येव न कथम् ? धर्मभूतज्ञानस्यापि न निर्हेतुकौ संकोच-विकासौ, किन्तु कर्मविशेष-प्रमाणव्यापार-तदभावहेतुकावेव तौ, इति सर्वा व्यवस्था धर्मिभूतेऽपि ज्ञाने संभवति ॥

अद्वैतमते वृत्तेरपेक्षा

ईश्वर-मुक्तात्मनोस्तु धर्मभूतज्ञानमपि विकासावस्थमेव, न तु संको-चावस्थं कदाऽपि । इदमेवात्र पृच्छ्यते—कुत इदमिति ? यदि कर्मरूपावि-द्यानाशात् , तर्हि समानं धर्मिभूतज्ञानस्यैव संकोच-विकासाभ्युपगमेऽपि । अतो निमित्ताभावादेव नेश्वर-मुक्तात्मनोः संकोचापत्तिः । अद्वैतमते तु

गौणमेव ज्ञानमन्तःकरणपरिणामात्मकं वृत्तिरूपम्, जन्यम् विनश्वरं च, आत्मा च विभुः, इति स्वत आत्मनस्तादात्म्यसंम्बन्धो वर्तत आवृतेनाऽऽत्मना, न त्वनावृतेन, इति तेन साकं घटादीनामुपरागार्थं वृत्तिरधिकाऽङ्गीकर्तव्या; अन्यथा घटादिप्रकाशो न स्यात् ॥

### प्रभासाधर्म्यं न धर्मभूतज्ञानस्य

अणोरात्मनः संकोच-विकासौ यदि बाधितौ, तर्हि दीपप्रभान्यायेन संकोच-विकासशालिनो धर्मभूतज्ञानस्यात्मधर्मत्वं कथम्? न खलु प्रदीपः पूर्वमुत्पद्य प्रभारूपेण पश्चात् परिणमते; किन्तु तदा तदोत्पद्यमानः प्रभाविशिष्ट एवोत्पद्यत इति हि भूषणसिद्धान्तः ॥

तत्र यथा प्रभोत्पन्ना नष्टेति व्यवहारश्च साक्षादेव विशिष्टोत्पत्तिविनाशप्रत्ययनिबन्धनः, एवमत्रापि ज्ञानमुत्पन्नं नष्टमित्यनुभवसाम्यात्, आत्मविशिष्टं धर्मभूतंज्ञानम्, उत्पन्नं नष्टं चेति प्रतीत्याऽऽत्मविशिष्टरूपेण धर्मभूतज्ञानस्याप्युत्पत्ति-विनाशप्रत्ययावित्यापद्येत ॥

सति चैवं यदि घटादिबाह्येनोपरागमात्रमुपलक्ष्य धर्मभूतज्ञानस्य संकोच-विकासौ तस्य नित्यस्यापि, तर्हि किं धर्मभूतज्ञानेन, आत्मन एव संकोच-विकासौ स्वीक्रियेताम्। न चैतावताऽप्यात्मनां धर्मभूतज्ञानस्येव नित्यत्वमपहीयते। अथ यदि धर्मभूतज्ञानमनित्यमुत्पादविनाशशालि, तर्हि तस्य ज्ञानत्वेऽपि नित्यात्मज्ञानवैलक्षण्यादुभयोरपि न संकोच-विकासौ। न च विना विकासं धर्मिण आत्मनो न विषयप्रकाशो विकासेन भवति; धर्मिज्ञानेनैव तन्निर्वाहात्, इति किमन्तर्गडुना धर्मभूतज्ञानेनेति पर्यनुयोगो दुष्परिहरः। संकोच-विकासयोः सतोरपि कथं नानित्यत्वमिति शङ्का नोत्तिष्ठति, "ज्ञानमुत्पन्नं नष्टमि"ति प्रतीतेरपि न संकोच-विकासपरतया क्लिष्टं योजनमपि ॥

### धर्मभूतज्ञानस्य नित्यत्वानुपपत्तिः

'जानामी'ति प्रतीतिविषयो धात्वर्थो ज्ञानं हि सर्वेषु दर्शनेषु जन्यम्, विनश्वरं चाभ्युपगम्यते, इति सर्वदर्शनविरुद्धेयं संकोच-विकासकल्पना, उत्पत्ति-विनाशप्रत्यययोरन्यथा नयनं च। न चोत्पाद-विनाशप्रत्ययविषयत्वनित्यत्वयोर्विरुद्धयोः सामानाधिकरण्यस्य सर्वदर्शनविरुद्धस्याङ्गीकारस्यावश्यकता ॥

### धर्मभूतज्ञानस्यापि सत्त्वायोगशङ्का-परिहारौ

एतेन—संकोच-विकासशालित्वं नानित्यत्वप्रयोजकम्। तद्धि कस्मिन् कस्मिंश्चित् काले सर्वदेशावच्छेदेन वस्त्वभावो वा, पूर्वावस्था-विरुद्धावस्थावत्त्वं वा। नाद्यः; धर्मभूतज्ञाने नित्ये तदसंप्रतिपत्तेः, सत्कार्यवादिवेदान्तमते सर्वस्य द्रव्यस्य नित्यत्वाच्च। नान्त्यः; ईश्वरज्ञाने संकोचाभावेन तादृशनित्यत्वरूपव्याप्यभावस्योक्तत्वात्, धर्मिग्राहक-प्रमाणेनेश्वरादिदिव्यमङ्गलविग्रहे सावयवत्वेऽपि नित्यत्वसिद्ध्या सावय-वत्वादेरप्यनित्यत्वापादकत्वाभावे ज्ञानत्वादेस्तदापादकत्वस्याप्रसक्तेश्चेति—परास्तम्: ध्वंसप्रतियोगित्वस्यैवानित्यत्वात्, धर्मभूतज्ञानस्यापि 'ज्ञानमु-त्पन्नं नष्टमि'ति प्रतीत्यनुसारेण तथात्वात्तदनित्यत्वस्यापरिहार्यत्वात्, तत्प्रत्ययस्य संकोच-विकासपरतया नयनं तु क्लिष्टम्॥

### दीपप्रभादृष्टान्तो धर्मिणोऽप्यनित्यत्वापादकः

कृत्वाचिन्तयाऽपीदं सूच्यते—संकोच-विकासशालित्वमनित्यत्वं तद्धर्मिण आपादयतीति दीपप्रभायां दृष्टम्। दीपप्रभैव संकोच-विकास-शालित्वेऽपि धर्मभूतज्ञानस्य दृष्टान्तः, इति तद्दृष्टान्तेनैव धर्मिभूतज्ञान-स्याप्यनित्यत्वापत्तिः। अत्र ध्वंसप्रतियोगित्वे साध्ये संकोच-शालित्व-मेव हेतुः, न तु विकासशालित्वम्, इति नेश्वरज्ञाने तदनित्यत्वापादकत्वम्। तत्रेश्वरस्यापि स्वरूपज्ञानस्य 'ज्ञानमुत्पन्नं नष्टमि'त्यनुभवाभावात्, व्यापकस्य तस्य बाह्यार्थोपरागेऽणोरात्मन इव बाह्यप्रकाशोपपत्तिर्विना-ऽपि धर्मभूतज्ञानं निर्वहतीति तत्रापि धर्मभूतज्ञानवादो निष्प्रयोजन इति त्वन्यदेतत्। व्यक्तं च द्वैतसिद्धान्ते, अद्वैतसिद्धान्ते च स्वरूप-ज्ञानस्य विषयेण नित्यसम्बन्धमात्रेणेश्वरस्य सर्वज्ञत्वं विनापि वृत्तिस्वी-कारम्। न हि धर्मभूतज्ञानानित्यत्वे ज्ञानत्वं प्रयोजकम्, किन्तु लोक-सिद्धं विनाशित्वमेव॥

### संकोच-विकासयोः परिणामत्वेऽनित्यत्वापादकत्वम्

वस्तुतस्तु—संकोच-विकासौ यदि परिणामविशेषौ, तर्हि परिणामेन परिणामिनोऽनित्यत्वमनिवार्यम्; अन्यथा ब्रह्मपरिणामवादिनो भास्करस्य निरसनमनुपपन्नं स्यात्; एवमार्हतमते शरीरपरिमाणत्व आत्मनो जन्मभे-देन संकोच-विकासयोःस्वीकारेऽनित्यत्वं सर्वैरपि वेदान्तिभिरापाद्यते, इति सर्वभाष्यविरुद्धमिदं संकोच-विकासयोरनित्यत्वाविरोधित्वम्॥

अणुपरिमाणस्यात्मनो नित्यत्व आर्हतमतनिराकरणायोगः

तत्राऽऽत्माऽणुपरिणाम इति भूषणमतम्। शरीरपरिमाण आत्मेत्यार्हतमतम्। तत्र जन्मान्तरीयशरीरसाधारण्येन प्रतिजन्माऽऽत्मनोणुपरिमाणस्य यावच्छरीरदेशव्यापिसुखाद्युपलम्भार्थं बाह्यप्रकाशोपपत्त्यर्थं च धर्मभूतज्ञानस्य संकोच-विकासौ श्रीभाष्यमते, आर्हतमते तु जन्मभेदेन शरीरपरिमाणस्य स्वरूपसिध्यर्थमात्मन एव संकोच-विकासौ। तत्र संकोच-विकासाभ्यामात्मनो यद्यनित्यत्वापादनमार्हतमते दूषणम्, तर्हि सर्वेषु दर्शनेष्विव श्रीभाष्यमतेऽपि कथं न धर्मभूतज्ञानस्यापि नानित्यत्वापत्तिः?

तत्र यदि आत्मा, अनित्यः, संकोचशालित्वात्, इत्युपपत्त्याऽऽर्हतमत आत्मानित्यत्वापादनम्, तर्हि धर्मभूतज्ञानेऽपि तेन न्यायेनानित्यत्वं कथं नापादयितुं शक्यत इति सूत्रभाष्यादिविरोधोऽपि तत्र॥

आर्हतमतस्य वेदविरुद्धत्वादेवाप्रामाण्यमिति
भूषणोपन्यासनिरासः

अत्र भूषणम्—जैनमतात् स्वमतस्य वैषम्यमेवमुपपादयति—आत्मनित्यत्वं शास्त्रसिद्धम्, जैनानामात्मनित्यत्वं तदागमसिद्धम्। तत्र वैदिकानां तन्मतमप्रमाणम्—इति॥

इदमेवात्राऽऽलोचनीयम्—यद् ब्रह्ममीमांसान्यायविरुद्धस्तदागम आत्मस्वरूपनिर्णय इति कृत्वा किमिति बादरायणेन तन्मतनिरासोऽत्र? इति यदि न्यायविशेषसूचनार्थं बादरायणेन तन्निरासः, तर्हि तेनैव न्यायेन संकोच-विकासशालित्वम्, नित्यत्वं च धर्मभूतस्य ज्ञानस्याङ्गीकुर्वतः श्रीभाष्यसिद्धान्तस्यापि बादरायणेन निरासः कृतः, इति ब्रह्ममीमांसातद्भाष्यविरुद्धो धर्मभूतज्ञाननित्यत्ववादः, विशिष्य तु श्रीभाष्यविरुद्धोऽपीति परिप्रश्नस्य किं वोत्तरम्?

धर्मभूतज्ञानस्यात्मपरिमाणत्वासम्भवः

अत्र टीकायां यद्यपि धर्मभूतज्ञानस्य नित्यात्मस्वाभाविकधर्मतया नित्यत्वमित्युक्तम्; तथापि प्रदीपप्रभादृष्टान्तेनैव धर्मभूतज्ञानस्य संकोचविकासयोः स्वीकारात् प्रदीपसंकोच-विकासावपेक्ष्यैव प्रभासंकोच-विकासयोर्दर्शनादात्मनोऽणुपरिमाणस्यैकरूपस्यैव प्रभाया दीपाद् द्रव्यान्तरस्य संकोच-विकासभेदायोगात्, तथाऽदर्शनाच्चात्मनोऽपि संको-

च-विकासावयवाऽऽगमापगमलक्षणौ स्वीकर्तव्यौ। न चाणुपरिमाणस्यैव दीपस्य परिच्छिन्नपरिमाणस्य, महापरिमाणस्य वा प्रभायाः संकोच-विकासावेकरूपौ दृश्येते; प्रभाविशिष्टस्यैव दीपस्योत्पत्तावपि दीपप्रमाणानुसारिसंकोचविकासावेव प्रभायामुपलभ्येते, इति तेन न्यायेनात्म-धर्मभूतज्ञानयोर्नित्यधर्म-धर्मिभावेऽपि तदणुपरिमाणत्वेऽणोरात्मनो निरवयवत्वात् तद्धर्मस्य ज्ञानमात्रस्य ततो द्रव्यान्तरस्यानन्तावयवस्याणुपरिमाणात्मसमानपरिमाणासंभवात् तद्धर्मत्वं प्रभाया दीपधर्मत्वमिव न संभवति ॥

न चैकपरिमाणस्यात्मनोऽनन्तावयवानि ज्ञानानि धर्मतामर्हन्ति, विना दीपपरिमाणभेदमिव विना परिमाणभेदम् ज्ञानावस्थाभेदोऽपि जीवानां संभवति। अतो धर्मभूतज्ञानस्य नित्यात्मस्वाभाविकधर्मत्वे नित्याणुपरिमाणात्मस्वाभाविकधर्मस्य धर्मभूतज्ञानस्य तदाश्रयपरिमाणभेदं विना संकोच-विकासप्रयोजकपरिणामभेदासंभवात् अवयवेष्वागमापगमयोर्धर्मिण्यभावे धर्ममात्रे प्रभायामदर्शनाच्च न धर्मभूतज्ञानस्य नित्यात्मस्वाभाविकधर्मत्वं संभवति ॥

न चावयवाऽऽपगमोपगमातिरिक्तौ संकोच-विकासौ कुत्रापि। न च सतोस्तयोर्धर्मिणोः धर्मस्य वा दीप-प्रभयोरिव नित्यत्वमपि, इति न केवलं धर्मभूतज्ञानस्य, किं त्वात्मनोऽपि नित्यत्वम्, विशिष्य चात्मनोऽणुत्व च न युक्तं स्यात्; अन्यथा धर्मभूतज्ञानवदेव संकोच-विकासशीलत्वेन जैनमतेऽप्यात्मनो नित्यत्वाविरोधात्, "न च पर्यायादप्यविरोधो विकारादिभ्यः" इति तन्निराकरणं सूत्रानुसारि भाष्यकाराणां सर्वेषामपि न सङ्गच्छेत ॥

जैनमतेऽपि संकोच-विकासाभ्यां नात्माऽनित्यत्वोपपादनायोगः

भूषणं तु स्वीकरोति—कामं भवतु धर्मभूतज्ञानवत् जैनमतेऽप्यात्मनो नित्यत्वमिति, परन्तु नेदं सूत्रकारो भाष्यकारो वाऽनुमन्यते। "न च पर्यायात्" इति सूत्रे पर्यायशब्दार्थस्तु जैनाभिमतकार्यात्मता; अवस्थात्मता वा। तत्र हि सत्त्वम्, असत्त्वम्; नित्यत्वम्, अनित्यत्वम्; अभिन्नत्वम्, भिन्नत्वं च द्रव्यात्मना, अवस्थात्मना च द्विविधम्। तत्र द्रव्यात्मना नित्यत्वम्, पर्यायात्मनाऽनित्यत्वम्, द्रव्यात्मना सत्त्वम्, पर्यायात्मनाऽसत्त्वम्, द्रव्यात्मनाऽभेदः, पर्यायात्मना भेद इति सर्वं वस्तु षडात्मकम्। तत्र पर्यायात्मना नित्यत्वं जैनोऽपि निराकरोति। का वा क्षतिर्भूषणस्य सूत्र-भाष्यकारादीनाम्, आर्हतानां वाऽप्यननुमतस्य पर्यायात्मनापि नित्यत्वस्य जैनमतेऽपि स्वीकारेण ?

भूषणं तु वदति—आपादितमनित्यत्वं तद्‌गतस्य पर्यायस्य तस्य तस्य यत्किंचिदुत्तरकालासम्बन्धित्वरूपं परिमितकालसम्बन्धित्वमिति ॥

कामं परिष्क्रियतामनित्यत्वं यथा कथमपि नित्येष्वनतिप्रसक्तम्, किमेतावता ? संकोच-विकासप्रयुक्तमनित्यत्वं यादृशं जैनमत आपादितम्, तत् कुतो वा धर्मभूतज्ञानस्य न संभवति ? यदि तौ नानित्यत्वप्रयोजकौ, तर्हि कथं "न च पर्यायादि"ति सूत्रार्थोपपत्तिः ? धर्मभूतज्ञानस्यापि द्रव्यस्य सावयवत्वम्, मध्यमपरिमाणत्वमेव, न तु विभुत्वम्, अणुत्वं वा, इति सावयवस्य तस्य कथं नानित्यत्वम् ?

### दिव्यमङ्गलविग्रहस्यापि नित्यत्वानुपपत्तिः

एतेन—भगवद्दिव्यमङ्गलविग्रहादिनित्यत्वमपि–व्याख्यातम्। यदि तदपि सावयवम्, मध्यमपरिमाणं च कथं भगवतोऽपरिच्छिन्नत्वम्, विभुत्वं वा ? किं भगवान् तेनैव सर्वान्तर्यमयति सर्वत्रावस्थाय ? अतो धर्मभूतज्ञानस्याण्वात्मधर्मस्यानित्यत्वं दुष्परिहरम्। कुतो वा मीमांसकमत इव ज्ञानशक्तिस्वभावस्यात्मन एव परिणामविशेष एव न धर्मभूतज्ञानम् ? यद्यणुपरिमाणस्य परिणामित्वं न संभवति, तर्हि कथमनन्तावयवधर्मभूतज्ञानधर्मित्वम् ? अतो न केवलं धर्मभूतज्ञानस्यानित्यत्वम्, न वाऽनन्तावयवस्य तस्याणुपरिणात्मधर्मत्वम्, किन्तु प्रभा-धर्मिणो दीपस्येव धर्मिणोऽणोरात्मनोऽपि दीपस्येव संकोच-विकासापत्तिः ?

### जैनमतात् श्रीभाष्यमतस्य न कथमपि विशेषः

पर्यायशब्दो हि जैनपरिभाषयाऽवस्थान्तरमेव। तच्च सत्कार्यवादे कार्याणां सद्रूपकारणात्मता, जैनमतेऽप्यनियतसदसद्रूपत्वात् कारणानामिव कार्यस्यापि षाड्रूप्यमिति तु विशेषः ॥

तत्र सदात्मता द्रव्यात्मता, असदात्मता पर्यायात्मतेति विवेकः, इत्यात्मनोऽप्यनियतसदसद्रूपतायां पर्यायात्मता, शरीरस्य तु कार्यस्य पर्यायात्मतैव, न कारणात्मता, इति तत्र सदात्मतयाऽऽत्मनोऽवस्थानासंभवात् संकोच-विकासाभ्यां पर्यायात्मतैव वक्तव्या, इत्यनित्यत्वापत्तिरभिप्रेयते। अनेन नयेन धर्मभूतज्ञानमपि संकोच-विकासशालित्वेन यद्यनित्यम्, तर्हि नित्यस्वाभाविकधर्मत्वमात्रेण कथं नित्यं भवति ? किं कुत्राप्याकाशादीनाम्, जीवानां वा रवेरौष्ण्यमिव स्वाभाविको नित्यो धर्मो दृष्टचरः ? किं नित्यमौष्ण्यं रवेः स्वाभाविको धर्मः संकोच-विकासशाली किरणादि-

कमिव ? किं प्रभादिकमिव ज्वालाऽपि संकोच-विकासशालिनी नित्या ? तत्र जैनमते यद्यनित्यत्वं दूषणम्, तर्हि श्रीभाष्यमतेऽपि तद्दूषणमेव ॥

अत्र "न च पर्यायादप्यविरोधो विकारादिभ्यः" इत्यत्रात्मनः संकोच-विकासयोः स्वीकारे न केवलं विकारः, किन्तु सावयवत्व-पराक्त्वाचेतनत्वादिकमपि विवक्ष्यते ॥

दीपप्रभान्यायेन धर्मभूतज्ञानस्यानित्यत्वापत्तिः

तत्र सावयवत्वमापाद्यमानं कथमनिष्टम् ? यद्यनित्यत्वापत्त्या, तर्हि धर्मभूतज्ञानस्यापि सावयवत्वात् कथं नानित्यत्वम् ? यदि सावयवत्वं भूषणोक्तरीत्या भगवद्दिव्यमङ्गलविग्रहादेरिव नानित्यत्वप्रयोजकम्, तर्हि जैनात्ममात्रे कथं तदनिष्टावहम् ?

वस्तुतस्तु—दीपप्रभास्थलेऽपि प्रभोत्पन्ना, नष्टेत्यनुभवात्, संकोच-विकासावनित्यत्वप्रयोजकावुत्पत्तिविनाशाविव। न हि प्रभा नित्या, इति तेन न्यायेन धर्मभूतज्ञानमपि न नित्यम् ॥

संकोच-विकासौ हि परिणामविशेषौ तदाश्रयस्यानित्यत्वमावहतः। अत एव ब्रह्मपरिणामवादस्य भास्कराभिमतस्य निरासः श्रीभाष्यमतेऽपि ॥

न च परिणामः, नित्यत्वं चाव्यहतम्, श्रुतिविरुद्धं च परिणामित्वहेतुकमिति भास्करीयराद्धान्तः। स हि श्रीभाष्यानुयायिभिर्निरस्यते। श्रुतेस्तत्र तात्पर्यं नास्तीति यदि परिणामित्वं नानित्यत्वप्रयोजकम्, तर्हि किमिति तन्निरासे प्रयत्नः ?

चिदचिद्विशिष्टब्रह्मपरिणामितावादस्याप्ययोगः

एतेन—चिदचिद्विशिष्टब्रह्मपरिणामितावादोऽपि—निरस्तः तस्याप्यनित्यत्वापातात्। तत्र यदि प्रकृतिमात्रपरिणामित्वम्, ब्रह्मणस्तूपादानत्वमुपचारेण, तर्हि ब्रह्माभिन्ननिमित्तोपादनताकथा कथामात्रम्। अद्वैतमते तु सर्वं परिणाम्यनित्यमेव, नित्यत्वं ह्यविनाशित्वम्, न तु सर्वकालसम्बन्धित्वम्। अविद्याऽऽकाशादीनामन्येषां चाज्ञाननिवृत्तिकालासम्बन्धेन नित्यत्वव्यवहारानुपपत्तेः ॥

न च तस्य प्रलयकालेऽपि सत्त्वम्, किन्तु आभूतसंप्लवस्थानं नित्यत्वं नाम। न चोक्तविधं नित्यत्वमनित्यत्वविरोधि। घटादीनामनित्यत्वं हि विनश्वरत्वेन, तत्तु प्रकृत्यपरपर्यायाया अविद्याया अपि समानम्॥

अविद्याऽप्यनादिः परिणामित्वादनित्यैव

न चाविद्यापि सर्वकालसम्बन्धिनी; तन्निवृत्तिकाले तदभावात्। बाध्यत्वं ह्यविद्यायाः कारणान्तराभावाद् नाशमात्रमेवानित्यत्वापरपर्यायम्, स्वरूपतोऽभावमात्रं बाध एव। घटादीनां तु नष्टानां कारणात्मता, तदात्मताया अपि निवृत्तौ बाधो नाम। बाध्यत्वं हि ज्ञानप्रयुक्तस्वस्वसंस्कारान्यतराभावप्रतियोगित्वमज्ञानं-तत्प्रयुक्तसाधारणम्। अतो न परिणामी कथमपि नित्यः। अविद्यानिवृत्तिप्रयुक्तनिवृत्तिगोचरः कालोऽविद्यानिवृत्तिकाले न वर्तते। ज्ञानप्रयुक्तावस्थितिसामान्याभावः खलु बाधो नाम॥

परिणामिनित्यत्वं भास्कर-मीमांसकाभिमतमप्रामाणिकम्

सत्यम्, भास्करमते ब्रह्मणः परिणामिनः, मीमांसकमते ज्ञानात्मना परिणममानस्याऽऽत्मनश्च नित्यत्वम्, परन्तु न तत्प्रामाणिकमित्युभयसंप्रतिपन्नम्॥

ज्ञानस्यात्मपरिणामत्वानुपपत्तिनिरासः

भूषणं लिखति—यत्तु—मीमांसकमत आत्मनो ज्ञानात्मना परिणाम इत्युक्तम्, तच्चिन्त्यम्। न हि मृत्पिण्डस्य घटरूपेणेवाऽऽत्मनो ज्ञानात्मना परिणामः; ज्ञानस्याद्रव्यत्वात्, धर्म-धर्मिणोर्भेदस्वीकारेऽपि गुणत्व-द्रव्यत्वयोस्तत्र व्यवस्थितत्वात्, शास्त्रदीपिकायां चाऽऽत्मवद् ज्ञानमानन्दश्च नित्याविति कश्चित् पक्ष उपन्यस्तः—

> "नित्यं यदात्मचैतन्यमानन्दश्चेष्यते तु यः॥
> यच्च नित्य-विभुत्वादि तैरात्मा नैवमुच्यते॥

इति वार्तिकप्रामाण्येन—इति॥

तत्र यथा श्रीभाष्यमते धर्मभूतज्ञानं द्रव्यम्, यथा वाऽन्तःकरणवृत्तिः सांख्यमतेऽद्वैतमते च द्रव्यम्, एवं मीमांसकमतेऽपि तस्य द्रव्यत्वे न दोषः, परन्तु द्रव्यस्यापि साध्यत्वात् साङ्ख्यमतेऽद्वैतमते च धात्वर्थत्वम्, तथा मीमांसकमतेऽपि तस्य साध्यत्वात् धात्वर्थत्वोपपत्तिः। धर्मभूतज्ञानं

तु नित्यं स्वयमसाध्यतया न धात्वर्थतामर्हति। न च 'जानामी'त्यत्र ज्ञाधातोर्विकसितावस्थज्ञानपर्यन्तपरत्वम्; ज्ञानपदमात्रेण तदर्थानुपस्थितेः॥

### नित्यधर्मभूतज्ञाने श्रीभाष्याभिमतप्रमाणनिरासः

धर्मभूतज्ञाने प्रमाणं हि "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वादि"ति श्रुतिरिति श्रीभाष्यानुयायिनः। भूषणं तु "विज्ञातुरात्मनो विज्ञानशक्तिर्विद्यते" इत्यस्य ज्ञानाभावेऽपि ज्ञानशक्तिरात्मनि वर्तत इति शास्त्रदीपिकाव्याख्यां गृहीत्वा स्वपक्षानुगुणं शास्त्रदीपिकामभिप्रैति॥

### धर्मभूतज्ञानं न भाट्टाभिमतम्, न वा तत्र, तन्नित्यत्वे वा शास्त्रदीपिकायास्तात्पर्यम्

परे तु—

"ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान्॥"

इति वार्तिकमूला शास्त्रदीपिकाव्यवस्था सर्वगतात्मविपर्ययिण्यणुपरिमाणजीवादिपरविशिष्टाद्वैतपक्षं न समर्थयति। भट्टमते ह्यात्मा चिदचिद्रूपः। तत्र चिदंशेन ज्ञानाश्रयः, अचिदंशेन ज्ञानपरिणामी, परिणामित्वेऽपि न स्वरूपनाश इति वार्तिकानुसारिणी न्यायरत्नावली चिच्छक्तिरस्त्यात्मनस्तन्मतेऽचिदंशेन परिणामित्वमभिप्रेत्य वदति। अतो नोक्तश्रुतौ 'विज्ञातुरि'ति चिद्रूपत्वम्, 'विज्ञाते'रिति ज्ञानात्मना परिणामशक्तिः॥

तत्र विज्ञातुः = चिदंशस्य नाशो नास्ति, एवमचिदंशस्य ज्ञानशक्तेरपि न नाशः। ज्ञानं तु नश्यत्येवेत्येव सिद्धान्तः, इति स्थिते कथं शास्त्रदीपिका भूषणस्यावलम्बः। एतेन—

"नित्यत्वादात्मचैतन्यमानन्दश्चेष्यते तु यः।
अथ नित्यविभुत्वादि तैरात्मा न विमुच्यते॥"

इति वार्तिकम्—व्याख्यातम्। अनेन हि मुक्तौ चिच्छक्ति-विभुत्वानन्दत्वादयोऽनुवर्तन्ते, अचिदंशस्तु निवर्तते। स च मोक्षः कर्माधीन एवेत्यैहभविकमोक्षवादो मीमांसकाभिमतोऽनूद्यते, यस्य निरासस्तैत्तिरीयकभाष्ये भगवत्पादानां विशदः। सर्वथा तु धर्मभूतज्ञानं नोक्तवार्तिकपक्षः कोऽप्यनुगृह्णाति॥

### "न विज्ञातुर्विज्ञातेरि"ति श्रुतेरपि न नित्यधर्मभूतज्ञाने प्रामाण्यम्

न चेयं श्रुतिरपि श्रीभाष्यमतमत्र साधयति। तत्र हि "अविनाशित्वादि"ति हेतुरुपन्यस्तः किं विज्ञातारमभिप्रेत्य, उत विज्ञानम्, उतोभयम्।

तत्र यदि विज्ञातृशब्देन श्रीभाष्याभिमतमात्मस्वरूपमात्रं विवक्षितम्, तर्हि, तस्य स्वरूपज्ञानमात्ररूपस्य तस्य न विज्ञातृत्वम्, "अन्यथा विज्ञातुर्विज्ञातेरिति" पृथग् विज्ञातेर्निर्देशो वितथः, यथा "ज्ञोऽत एव" इत्यत्र न पृथग् ज्ञानस्य निर्देशः। विशिष्टविवक्षायां तु विज्ञातृविपरिलोपो वक्तव्यः। सति चैवमुपसंहारे—"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इत्यात्ममात्रस्यात्राविनाशः प्रतिपादितो नोपपद्यते। अत एव "अत्रैव मा भगवानमूमुहदि"ति वाक्यशेषः॥

एतेन—द्वितीय-तृतीयकल्पावपि—व्याख्यातौ। तत्र द्वितीयो न श्रुतितात्पर्यानुसारी; "अविनाशी वा अरेऽयमात्मे"त्युपसंहारविरोधात्। तृतीयोऽपि नोक्तश्रुतितात्पर्यविषयः; 'विज्ञातुरि'त्यनेनैवेष्टसिद्धेर्विज्ञातेरिति पदवैयर्थ्यात्। अतो विज्ञानस्वरूपात्ममात्राविनाशप्रतिपादनपरैवेयं श्रुतिः, न तु धर्मभूतज्ञाननित्यत्वपरा। न केवलमिदमात्मस्वरूपज्ञाननित्यत्वोपपादनपरम्, किन्तु सर्वदर्शनसंमतात्माश्रितधर्मज्ञानानित्यत्वादावान्तरं तात्पर्यं—मुक्तश्रुतेरिति तु निष्कर्षः॥

इदमेवाभिप्रेत्य शतभूषणी—विज्ञानाभिन्नविज्ञातुरेवाविपरिलोपमुक्तश्रुतिर्बोधयति—इति॥

'विज्ञातुरि'ति तृजन्तेन विशिष्टविवक्षा, विज्ञातेरिति तु विज्ञानस्य विवक्षेति धर्मभूतज्ञानाविनाशपरत्वं नोक्तश्रुतेः<br>किन्तु स्वरूपज्ञानमात्राविनाशपरत्वमेव

एतेन—'विज्ञातुरि'ति तृजन्तत्वाद् विज्ञान-तदाश्रययोर्भेदस्य प्रतिपन्नत्वात् तदपरिलोपो न संभवति; विज्ञात्रभिन्ना विज्ञातिः, विपरिलोपरहिता, विज्ञातुरविनाशित्वादित्युक्तौ तु सामञ्जस्यम्। अत एव "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इति धर्मभूतज्ञानस्यापि श्रुतिरनुच्छित्तिं श्रावयतीति—परास्तम्;

अत्र 'विज्ञातुरि'ति तृजन्तेन धर्मभूतज्ञानधर्मिण आत्मनो विवक्षायां विज्ञातेरिति व्यर्थम्, विज्ञातेरित्येतावन्मात्रोक्तौ धर्मभूतज्ञानस्यैव ग्रहणमिति शङ्का स्यात्। अतो 'विज्ञातुर्विज्ञातेरि'ति पदद्वयम्। तत्र विज्ञातृ-विज्ञानयोर्भेदविवक्षायां पुनरपि सैवाशङ्कोत्तिष्ठति। अतो धर्मभूतज्ञानाद् विविच्य स्वरूपज्ञानमात्रं बोधनीयमित्यभिप्रेत्यैव 'विज्ञातुर्विज्ञातेरि'ति पदद्वयम्। तत्र धर्मिणो धर्मस्य चोभयस्य विज्ञानत्वाविशेषे कस्य वा विज्ञानस्यात्र ग्रहणं

युक्तमिति शङ्कायां तु प्राधान्यात् धर्मिस्वरूपं स्वरूपज्ञानाख्यमात्मस्वरूपमेव विवक्षामर्हति। तथाच धर्मिणोऽपि विज्ञानस्वरूपत्वं सिद्धवत्कृत्याऽभेदेनान्वय एव युक्तः ॥

स्वरूपज्ञानाविपरिलोप एवोक्तश्रुतेस्तात्पर्यम्, न तु धर्मभूतज्ञाननित्यत्वेऽपि

तत्राद्वैतमतेऽपि विज्ञातृत्वमात्मनः स्वरूपज्ञानस्य वर्तते, परन्त्वौपाधिकम्, न तु वस्तुतः श्रीभाष्यमत इव। तदौपाधिकत्वानौपाधिकत्वे तूपरि व्यक्ते। सांप्रतं तु धर्मभूतज्ञानाद् विविक्तस्वरूपज्ञानमेवात्र विवक्ष्यत इति वक्तव्यम्, इति विज्ञातृपदेन तृजन्तेन सूचितो विज्ञातृ-विज्ञानयोर्भेदोऽप्यौपाधिकः, न वस्तुतः, इति तत्रापि नाद्वैतसिद्धान्तविरोधः, इत्यात्मस्वरूपमात्राविपरिलोपाभिप्रायैवेयं श्रुतिः ॥

'अविनाशी' 'अनुच्छित्तिधर्मा' इति पदद्वयसार्थक्यम्, 'अशीर्यो न हि शीर्यते' इत्यत्रेवाद्वैतमत एव

"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इत्यत्राविनाशिपदमतिरिच्यानुच्छित्तिधर्मपदप्रयोगसार्थक्यम्, हेतु-साध्ययोरैक्यपरिहारश्च 'अनुच्छित्तिधर्मा' इत्यस्य धर्मभूतज्ञानस्याप्यविनाशविवक्षायामेवोपपद्यत इति लिखद् भूषणम्—इयं श्रुतिः, न त्वनुमानमिति नूनं विस्मरति। श्रुतावभ्यासो हि स्वार्थे तात्पर्यातिशयं सूचयितुम्; यथा "अशीर्यो न हि शीर्यते" इति पदद्वयसार्थक्यार्थम्, हेतु-साध्ययोरैक्यापत्तिपरिहारार्थं वा इत्यप्रस्तुतधर्मभूतज्ञानानुच्छेदपरतया 'अनुच्छित्तिधर्मा' इत्यस्य योजनं न कर्तव्यम् ॥

श्रीभाष्यमते 'अनुच्छित्तिधर्मपदविवरणेऽतिक्लेशः

स्यादेतत् -'अनुच्छित्तिधर्मा' इत्यस्याक्लिष्टं व्याख्यानम्- अनुच्छित्तिः अविनाशः, स धर्मो यस्येति? अविनाशीत्यस्यैव पर्यायशब्देनाभ्यासे, यतोऽत्र मोक्षनिर्वर्तेनोपदेशसमाप्तिर्द्योत्यते ॥

भूषणमते तु धर्मशब्देनात्मनः सावशेषमुक्तावस्थायामप्यपहतपाप्मत्वादीनां बहूनां धर्माणां सत्त्वाद् धर्मभूतज्ञानस्य धर्मत्वग्रहणे न मानम्, प्रक्रमस्त्वात्मस्वरूपज्ञानस्य, न तु धर्मभूतज्ञानस्य पूर्वोक्तविधया, इति नात्र धर्मभूतज्ञानग्रहणम् ॥

'अनुच्छित्तिधर्मे'त्यस्य भूषणाभिमतविवरणं त्वतिक्लिष्टतरम्, न उच्छित्तिर्यस्येत्यनुच्छित्तिपदस्य बहुव्रीहिः, ततः अनुच्छित्तिः-धर्मः = धर्मभूतज्ञानमिति बहुव्रीह्यन्तरम् , इत्यनेकबहुव्रीहिपरिग्रहो भूषणस्य ॥

इदमत्रावधेयम्—कथमत्र धर्मभूतज्ञानस्यात्मनश्च नित्यत्वं श्रुतितात्पर्यविषयो विवक्ष्यते—किमेकरूपम् , उत भिन्नरूपम् । यद्येकरूपम् , तर्हि 'आत्मा जानाती'त्यादौ धर्मभूतज्ञानस्य साध्यत्वं धात्वर्थत्वेन प्रतीयते । न त्वात्मा कुत्रापि तथा, इति तयोः स्वरूपभेदः प्रतीयमानो बाध्यते । भिन्नरूपत्वे तु स्वरूपभेदः कुत्रापि श्रुतौ वर्तते, न वा । यदि न वर्तते, तर्हि कथं सः ? तद्भेदनियामकाभावे तु किमिति वा ज्ञानद्वयं स्वीकर्तव्यम् ? स्वरूपैक्य एकेनैव तत्कार्यनिर्वाहेऽन्यस्य वैयर्थ्यात् । श्रुतिसंमतो रूपभेद उभयोरपि ज्ञानयोर्न कोऽपि ॥

स्वरूपज्ञानस्यापि श्रीभाष्यमते कथं न धर्मभूत-
ज्ञानवत् संकोच-विकासौ, नित्यत्वं च

तत्र 'ज्ञानमुत्पन्नं नष्टमि'ति लोकानुभवस्तु दुरपह्नवः । तत्र हि ज्ञानस्योत्पत्तिर्लोकतः प्रतीयते, तथा विनाशश्च । स च प्रत्ययः स्वरूपज्ञानमादाय वा, धर्मभूतज्ञानमादाय वा । तत्रापि श्रुत्यादिषु किमपि प्रमाणं वक्तव्यम् । किं तत् ? उभयोरपि नित्यत्वस्य श्रुतिसिद्धत्वे कथं स्वरूपज्ञानस्यात्मन एव न जैनमत इव संकोच-विकासाभिप्रायमुत्पत्त्यादि, द्रव्यात्मना नित्यत्वं चोरीक्रियते ॥

लोकानुभवविरुद्धं धर्मभूतज्ञाननित्यत्वमप्रामाणिकम् ,
जैनमत इव रूपभेदेन नित्यत्वानित्यत्व-
योरसंभवात्

तत्र च प्राचीन आत्मा द्रव्यरूपेण कारणम् , यथा मृद् द्रव्यात्मना कारणम् , कार्यं तु संकुचितः, विकसितो वाऽपरः । आत्मभेदेऽपि तयोः संकुचितादिरूपात्मान्तरेण द्रव्यात्मनाऽभेद एव, परन्तु तदवस्थान्तरापन्नं कार्यत्वादनित्यं स्यादिति ब्रह्ममीमांसायां जैनमतमुपस्थाप्य निरस्तम् । स एव न्यायो यद्यत्रापि धर्मभूतज्ञानस्यापि पर्यायात्मनाऽनित्यत्वमेव, द्रव्यात्मना त्वात्मा परिणामित्वाद् नित्य एव स्यात् , इति न कथमत्रापि । व्यक्तं चेदमधस्तात् । कथं न धर्मभूतज्ञाननित्यतायां सिद्धायामपि तदुपपत्तिः ?

किं वा तत्र प्रमाणमिति वक्तव्यम्। तत्र जैनमते तदागमः प्रमाणम्, श्रीभाष्यमते तु किमिति भूषणमेव भूषयतु यदि भूषणीयं मन्यते ॥

तत्र 'जानामि' इति सर्वलोकप्रत्यक्षं ज्ञानम्। तस्य हि विषयांशे प्रत्यक्षता वा, परोक्षता वेति न नियम इति त्वन्यदेतत्। स्वांशे सर्वदा प्रत्यक्षमेव नित्यं धात्वर्थरूपं धर्मभूतज्ञानं न कुत्रापि दृष्टचरम्, किन्त्वेकस्य प्रतितन्त्रसिद्धान्तः। प्रत्यक्षविरोधेऽपि प्रतितन्त्रसिद्धान्तकथा त्वह्नो रात्रित्वप्रतितन्त्रसिद्धान्तकथैव ॥

निर्विशेषब्रह्मवादस्तु श्रुत्येकनिर्णयः, इति न
प्रतितन्त्रसिद्धान्तविरोधः

न चैवं निर्विशेषवादेऽदृष्टचरत्वं दोषाय; वेदान्तमात्रप्रमाणकस्य सविशेषब्रह्मवादस्येव निर्विशेषवादस्यापि शास्त्रविचारैकनिर्णेयस्याद्वैतप्रतितन्त्रसिद्धान्तत्वे तु न दोषः ॥

न केवलं धर्मभूतज्ञाननित्यतायाम्, किन्तु तदुत्पत्ति-विनाशप्रत्यक्षस्यापि तद्विषयोत्पत्ति-विनाशस्वरूपे अपि सर्वलोकविरुद्धे श्रीभाष्यप्रतितन्त्रसिद्धान्तः ॥

उत्पाद-विनाशौ हि कारणस्य द्रव्यस्यावस्थाविशेषाविति घट उत्पन्नो नष्ट इत्यादौ दृष्टम्, तद्वत् ज्ञानमुत्पन्नं नष्टमिति प्रतीत्या धर्मभूतज्ञानस्यापि द्रव्यत्वात् द्रव्यविशेषस्यावस्थाविशेषः कारणस्यात्मनः, अन्तःकरणस्य वा धर्मिणः घटत्वादिरिव मृदादेरिवावान्तरावस्था धर्मभूतज्ञानमिति वक्तव्यम् ॥

इदमेवात्र पृच्छ्यते—किमपि द्रव्यमकारणमकार्यं च दृष्टचरं किं कुत्रापीति। जैनमते त्वात्मा प्रतिशरीरं द्रव्यात्मना नित्यः, पर्यायात्मनाऽनित्य इति स्वीक्रियते। मृदिव द्रव्यात्मना, घटात्मनेव च, इत्यात्मनः कारणत्वमेकेन रूपेण, रूपान्तरेण कार्यत्वं चेति। कार्यावस्था हि समभिव्याहृतपदार्थतावच्छेदकघटत्वाद्यवस्था। सा च कारणस्यैव। तत्र संकोच-विकासमात्रत्वं क्रियारूपधर्मभूतज्ञानस्यावस्था, इत्ययमपि श्रीभाष्यप्रतितन्त्रसिद्धान्त एव। अतो न धर्मभूतज्ञानमवस्थाविशेषः। तत्र तु मृदादिवदवस्थाभाक्त्वेन कारणता द्रव्यात्मता वा स्यात्, परमात्माप्ृथक्सिद्धप्रकृत्यादौ तु द्रव्यत्वं वर्तते, परन्तु तत्रान्यात्मना विकारोऽपि सूक्ष्माचित एव स्थूलावस्थाविशेषस्य स्वीकारात्। अत्र त्वकारणत्वेऽपि द्रव्यत्वमपरः प्रतितन्त्रसिद्धान्तः ॥

### धर्मभूतज्ञानस्य द्रव्यावस्थाविशेषत्वाभावेन नोत्पत्ति-विनाशयोगः

तत्र प्रभाद्रव्यं संकोच-विकासशालि तेजस एकरूपत्वेऽपि तेजोद्रव्यविशिष्टम्, एवमात्मविशिष्टं धर्मभूतज्ञानं द्रव्यं नानारूपमपि, इति यदि द्रव्यत्वम्, गुणवत्त्वं वा क्रियावत्त्वं वेति पारिभाषिकं द्रव्यत्वमादाय, तर्हि नानिष्टम्। न हि संकोच-विकासौ क्रियारूपौ धर्मभूतज्ञानस्य द्रव्यावस्थाविशेषौ; तत्र द्रव्यात्मताया अभावात्॥

### संकोच-विकासयोरपि नित्यत्वे प्रभादृष्टान्तानुपपत्तिः

तौ ह्युत्पत्ति-विनाशरूपौ। उत्पत्तिर्हि कार्यगतघटत्वाद्यवस्थातिरिक्तो न कोऽप्यपरो धर्मः, यथा घट उत्पद्यत इत्यादौ, प्रभाऽपि तेजोद्रव्यस्यावस्थाविशेषप्रभात्वादिनोत्पाद-विनाशव्यपदेशमर्हति; तस्य तेजोद्रव्यकार्यत्वात्। स चेत् न्यायोऽत्रापि, तर्हि कारणस्य द्रव्यात्मनोऽवस्थाविशेषधर्मभूतज्ञानत्वमेव धर्मभूतज्ञानमुत्पद्यत इत्यादिव्यपदेशविषय इति वक्तव्यम्। स च धर्मभूतज्ञाननित्यतायां तस्याकारणत्वे न युज्यते॥

प्रदीप-प्रभयोः कार्य-कारणभावो नास्तीति वादोऽपि सर्वलोकविरुद्धत्वादपरः प्रतितन्त्रसिद्धान्तो भूषणस्य; अन्यथा प्रभायां प्रदीपत्वबुद्धिरनुपपन्ना। दीपमात्रं वस्त्रादिनाऽऽवृत्त्योपरितनं प्रदीपमपश्यतः प्रभामात्रं पश्यतोऽप्यत्र दीपो वर्तत इत्यनुभवः सर्वसाधारणः। अतः प्रभा न तेजःकार्यमिति वादोऽप्यनुपपन्नः। सर्वथा तु ब्रह्मण्यपृथक्सिद्धप्रकृत्यादिवद् धर्मभूतज्ञानस्यान्यात्मनाऽपरिणामाद् न कारणत्वम्, तस्यान्यपरिणामत्वाभावाद् न कार्यत्वम्, इति "ज्ञानमुत्पन्नं नष्टमि"ति व्यवहारान्यथानुपपत्त्या धर्मभूतज्ञानं न नित्यम्; प्रकृतिस्तु परिणामिनी द्रव्यात्मना कारणमेव। न च तत्रोत्पत्तिव्यवहारोऽपि, इति प्रकृतिदृष्टान्तो भूषणस्य प्रतिकूल एव। आस्तामियं प्रासङ्गिकी भूषणस्य भूषणीभूमिकापरीक्षाकथा। प्रकृतं स्वप्रकाशत्वमेवानुसरामः॥

### धर्मभूतज्ञानस्याऽऽत्माश्रितस्यैव स्वप्रकाशत्वम्, न तु स्वतन्त्रम्, तत्तु व्यर्थम्

सत्यं धर्मभूतज्ञानं स्वाश्रयाय प्रकाशते; तथाप्यात्माश्रितमेव, न तु स्वतन्त्रमात्मवत्, इति तस्यात्माश्रिततयैव प्रकाशोपपत्तौ पृथक्स्वप्रकाशत्वं नोरीकर्तव्यम्, यथा साक्षिसम्बन्धमात्रेणान्तःकरणवृत्तेर्विषयप्रका-

शिकायाः प्रकाशकत्वव्यपदेशो गौणः, एवं धर्मभूतज्ञानेऽपि स्वप्रकाश-साक्ष्याश्रिततयैव प्रकाशमानत्वं कथं नोपपद्यते ? इति जडान्तःकरणधर्मत्वम्, लोकसिद्धोत्पत्त्यादिकं च सर्वमद्वैतसिद्धान्त एवोपपद्यते, इति पृथक्धर्मभूतज्ञानस्यापि स्वतन्त्रस्वप्रकाशत्वस्वीकारो वितथः; अप्रकाश-स्वभावशुक्तिरूप्यादीनाम्, किं वहुना ? घटादीनाम्, न केवलं घटादीनामेव, किन्तु नित्यप्रकाशसूर्य-चन्द्र-तारकादीनामपि प्रकाशमानसंविन्मात्रसम्बन्धेनैव प्रत्यक्षत्वम्; संविदभेदस्यैव प्रत्यक्षत्वप्रयोजकत्वात्, साक्षी हि संविद् नाम ।।

### साक्षिभास्यतयैव शुक्तिरूप्यादौ, वृत्तेश्च प्रकाशोपपत्तौ न धर्मभूतज्ञानस्य वृत्त्यन्तरानेपक्षस्यापि न प्रकाशः, इति तस्य न स्वप्रकाशत्वम्

अत एव प्रमातृभिन्नत्वं विषयप्रत्यक्षत्वमिति परिभाषा । शुक्तिरूप्यमपि प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्याध्यस्तं प्रमातृचैतन्याध्यस्तमपीति साक्ष्याश्रितमेव, तत एव साक्षिभास्यं च, इति न तदनाश्रितस्य, तदाश्रिततया व्यपदेशोऽत्र, येन भ्रान्तिरापादयितुं शक्येत, इति धर्मभूतज्ञानस्य जडत्वेनाप्युपपत्तौ स्वप्रकाशत्वप्रतितन्त्रसिद्धान्तायोग एव शतभूषण्यास्तात्पर्यम् ।।

अन्तःकरणधर्मो वृत्तिर्जडाऽपि साक्षिसम्बन्धेनैवोत्पद्यत इति कृत्वा वृत्तौ स्वप्रकाशत्वव्यपदेशस्तत्प्रकाशार्थं वृत्त्यन्तरानपेक्षयैव, इत्यात्माप्रथक्-सिद्धत्वादन्तःकरणस्यापि साङ्ख्य-द्वैतसिद्धान्तप्रक्रिययैव निर्वाहे किमिति प्रतितन्त्रसिद्धान्तस्वीकारोऽत्रापि ।।

### अन्तःकरणवृत्त्यतिरिक्तनित्यधर्मभूतज्ञाने प्रमाणाभावः

सत्यम्, व्यवहारं प्रति ज्ञानं कारणम्, वृत्तिरपि तु चिच्छायापन्नाऽन्तः-करणधर्मत्वात् ज्ञानमेव, तथा जन्यमपीत्यन्तःकरणसंकोच-विकासाभ्यामेव ज्ञानोत्पत्तिव्यवहारो न दुष्यति । अत्र ह्यन्तःकरणं परिणाम्यप्यनित्यमपि, तथा वृत्तिरप्यनित्येति न लोकानुभवविरोधः ।।

### अन्तःकरणवृत्तेरेव धर्मभूतज्ञानत्वे श्रुतिरपि प्रमाणम्

तत्रान्तःकरणनिर्गमकथा धर्मभूतज्ञानकथया समाना, इति 'यश्चोभयोरिति' ति न्याय एव शरणमुभयत्र ।।

तत्रान्तःकरणपरिणामो वृत्तिरिति साङ्ख्यानामपि यद्यपि प्रक्रिया, परन्तु सैव श्रौती; "कामः संकल्पोः विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति श्रुत्यवष्टम्भात्। धर्मभूतज्ञानश्रौतत्वकथा तु कथामात्रमिति व्यक्तमधस्तादत्रैव ॥

स्वयंप्रकाशस्यापि स्वरूपज्ञानस्य प्रकाशार्थं वेदान्त-
प्रमाणापेक्षोपपत्तिः

सति चैवमुक्तविधान्तःकरणवृत्त्याऽज्ञाननिवृत्तिमात्रेण निर्विशेषस्य स्वयंप्रकाशस्य स्वतोऽनावृतस्वस्वरूपसिद्धिमभिप्रेत्य शास्त्रयोनित्वम्, औपनिषदत्वं वा। "यतो वाचो निवर्तन्ते" इति तु तदननुभाव्यत्वेन, इति वेद्यत्वावेद्यत्वयोरुभयोरुपपत्तिः, श्रीभाष्यमते तु धर्मभूतज्ञानस्यैव सर्वभासकत्वात् स्वरूपज्ञानस्याऽऽत्मनो वेद्यत्वावेद्यत्वोभयानुपपत्तिः, अद्वैतसिद्धान्ते निर्विशेषस्य संविन्मात्रस्य वेदान्तप्रमाणजनितवृत्तिव्याप्यत्वमात्रेण प्रमेयत्वमुपचर्यते, न तु सविशेषवाक्येन, लौकिकानुभवेन वेति स्वयंप्रकाशमिति युज्यते। निर्विशेषा संवित् स्वयं स्फुरतीति वाक्यमप्यत एव व्याख्यातम्। तत्र 'संविदि'त्यनावृतसंवित्स्वरूपमात्रपरम्। स्वयं स्फुरतीति वाक्यमप्यत एव व्याख्यातम्; तत्र संविदित्यनावृतसंवित्स्वरूपमात्रपरम्, स्वयं स्फुरतीति तु घटादिवदन्यानपेक्षप्रकाशपरमिति न पौनरुक्त्यम्, न वा साध्य-हेत्वोरैक्यं वा ॥

शास्त्रप्राबल्यनिर्णयार्थं सति संशयेऽपच्छेदन्यायाद्यपेक्षा

आवरणनिवृत्तिपर्यन्तमेव हि शास्त्रस्य व्यापारः, न तु तदनन्तरमिति न कोऽपि विरोधः। ततः पूर्वं तु शास्त्रव्यापारदशायां निर्विशेषपरत्वं बाधितम्, उताबाधितमिति न्यायपरीक्षायामस्त्येवापच्छेदन्यायस्योपयोगः। यदि तदाऽपि निर्विशेषवाक्यस्य सविशेषपरत्वेनैव प्रामाण्यमिति शङ्काऽभावे तु नात्रापच्छेदन्यायानुसन्धानमपेक्ष्यते। तत्र भूषणस्य यदि न तत्रापि संशयः, तर्हि स्वागतमेव; अन्यत्रानाश्वासात् ॥

अप्रकाशस्यापि संविद्रूपस्य केनचनांशेनाविद्याकल्पितेन
प्रकाशोऽपीति न विरोधः

एतेन—'अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनाद्यध्यस्यन्ति' इति भाष्यमपि—व्याख्यातम्; आवृतावस्थामाश्रित्य तस्य प्रवृत्त्या वस्तु-

स्थितिकथनत्वेन प्रौढिवादत्वायोगात्, इत्याकाशवदप्रकाशत्वमपि तदा नानिष्टम्। कवितार्किकचक्रवर्तिमतं तु भ्रमात् पूर्वमधिष्ठानविषयक-प्रमाणजन्यवृत्त्यनपेक्षया, न तु संविदोऽस्वप्रकाशत्वेनापीति तत्रैव व्यक्तम्, इति निर्विशेषस्वप्रकाशत्ववादे सर्वस्यासम्बन्धकथनं कवि-तार्किकमतस्य पूर्वापरसन्दर्भापर्यालोचननिबन्धनम्॥

निर्विशेषत्वमधिष्ठानस्वरूपमात्रमिति नाद्वैतहानिः

तत्र लोके नानाविशेषविशिष्टतयाऽनुभूयमाना संविद् धर्मभूत-ज्ञानम्। तच्चान्तःकरणवृत्तिर्वा पारिभाषिकं वेत्यन्यदेतत्, न तु तत् स्वरूपज्ञानम्, यद् वस्तुगत्या निर्विशेषम्, स्वयं प्रकाशं च। निर्विशेषत्वं हि सर्वोपाधिविरहितत्वम्, न पारिभाषिकम्। निर्विशेषत्वं विशेषा-णां मिथ्यात्वे संविन्मात्रम्। तस्य सत्यत्वे तु तत् तदभावत्वोपलक्षितं स्वरूपम्। "निवृत्तिरात्मा मोहस्ये"ति वार्तिकाभिप्रेतमपि तत्राभावत्वस्यापि विशेषणतयाऽभानाद् निर्धर्मकमेव॥

निर्विशेषत्वं शोधितयोस्तत्त्वंपदार्थयोरुभयोरपि,
सुषुप्ति-मुक्त्योर्विशेषश्च

तत्र त्वंपदार्थोऽपि शोधितो निर्विशेषः, तथा तत्पदार्थोऽपि। तत्र सुषु-प्तिरज्ञानोपहितत्वम्पदार्थमादाय, इति तत्रान्तःकरणादीनां विलयः। विलयो-ऽपि हि तत्र स्थूलरूपेणैव विषयाणाम्, न तु सूक्ष्मरूपेणापि; तदा कारणश-रीरस्याज्ञानस्यानुवृत्तेः, इति न सुषुप्ति-मुक्त्योरभेदापत्तिः। कारणशरीरोप-धानावस्था हि संविदः सुषुप्तिर्नाम, न तु तदतिरिक्तस्य ज्ञानाभावमात्रम्, इति सर्वेन्द्रियादिलक्ष्यस्य संविन्मात्रस्याज्ञानोपहितस्य भानं सर्वानुभव-सिद्धम्। उत्थितस्य "सुखमहमस्वाप्सम्"—इत्यनुसन्धानमपि तस्यैवान्तः-करणाद्युपाधिव्यक्तिमाश्रित्यैव। अधिकमहमर्थविचारे॥

मुक्तिस्तु—अनावृतसंवित्स्वरूपमात्रमखण्डम्। तत्तु स्वयंज्योतिः-स्वरूपं कस्यापि न प्रकाशते। मुक्तौ हि तत्स्वरूपमेव, अन्यस्तु तद्वि-लक्षणः। स्वयंप्रकाशमिति त्वावरणनिवृत्तिमात्रेण व्यक्तमन्यत्र; इदमह-मर्थस्य मुक्तावन्वयपरीक्षायां व्यक्तीभविष्यति। तदा हि भामतीमते सर्वो-पाधिविरहितमखण्डमस्ति-भात्यादिभेदशून्यं न 'अस्ति' 'प्रकाशते' इत्यादि-स्वरूपेण प्रकाशमर्हति, इति तथा भानभेदविकल्प-तद्दूषणानां नात्रा-वसरः, येन प्रकाशाश्रयत्वादिकं तदा संभाव्येतापि॥

निर्विशेषत्वस्वभावधर्मशून्यत्वेनापि मिथ्यात्वपार-
मार्थिकत्वे ब्रह्मरूपतया

यथा च तत्त्वमस्यादिवाक्यार्थेऽन्विताभिधानवादाद्युपपत्तिः, तथा तत्रैव विशदीभविष्यति। अभावाधिकरणतावादेऽभावत्वरूपधर्मोऽपि नास्तीत्यभिप्रायेणाभावत्वोपलक्षणत्वोक्तिः। अभावत्वमपि हि विशेष एव, इति तस्यापि मिथ्यात्वमेव मिथ्यात्वसत्यत्वेऽपीति तदाशयः। न च निर्विशेषपदस्य पदद्वयात्मकत्वं वाक्यस्याप्यखण्डार्थत्ववादिनां किञ्चित्करम् ॥

मिथ्यात्वमिथ्यात्वपक्षोऽपि न दुष्टः

मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वमिति तु व्यक्तमुत्तरत्र, इति विशेषाभावेऽपि न सविशेषत्वात्, इति धर्मिसमसत्ताकविशेषराहित्यमिति पर्यवसितं भावमादाय, प्रतियोग्यभावयोरविरोधमुपादाय स्वरूपव्याक्रियामात्रम्, न निर्विशेषस्य तत्र लक्षणा ॥

चिद्रूपं न दृश्यम्, किन्तु विशेषा एव दृश्याः

तत्र दृक्स्वरूपत्वमनावृताखण्डसंविन्मात्रमिति चानर्थान्तरम्। न च तस्य स्वप्रकाशत्वमपि धर्मविशेषः, येन सविशेषत्वं स्यात्। न च सविशेषम्; तस्य विशेषा एवास्वप्रकाशाः; आवृतत्वात्, उपहितसंविद्रूपत्वाच्च। तत्र सविशेषमेव दृग्रूपमपीति यद्यद्वैताभिमतदृग्रूपत्वमभिप्रेत्य, तर्हि सविशेषत्वव्याघातः। तत्र दृग्रूपस्यैव दृश्यत्वे दृग्दृश्यविभागानुपपत्तिः ॥

सूर्यादीनामपि प्रकाशो न स्वतः, किन्तु संविदधिष्ठानकतया

एतेन—"तमेव भान्तमि"ति श्रुतिरपि—व्याख्याता। इयं हि सूर्यादीनामपि दृश्यत्वं संविदधिष्ठानकत्वेन, न तु स्वरूपतः। न च तेषां प्रकाशो भगवद्दिव्यमङ्गलप्रकाशाधीनः; भगवद्दिव्यमङ्गलविग्रहस्य स्वरूपज्ञानातिरिक्तस्याप्रकाशरूपत्वात्। स्वरूपज्ञानं धर्मभूतज्ञानमिति द्विविधमेव हि ज्ञानं श्रीभाष्यमते ॥

तत्र भगवद्दिव्यमङ्गलविग्रहः सावयवो नित्यश्चेति भूषणे व्यक्तमत्रैव। न च तत् स्वरूपज्ञानम्, न वा धर्मभूतज्ञानम्, इति कथं तस्य स्वप्रकाशत्वम्? यदि सूर्यादीनामिव, तर्हि दृश्यत्वमेव, न स्वप्रकाशत्वम्,

न च तत्र सूर्यादिवत् प्रकाशकत्वे किमपि प्रमाणम्, किं बहुना? भगवतोऽपाणिपादादेर्दिव्यमङ्गलविग्रहे किं प्रमाणम? न च तस्य शरीरित्वेऽन्तर्यामिब्राह्मणं प्रमाणम्। तच्च सर्वाधिष्टानत्वमात्रम्। न च पृथिव्यादिकं दिव्यमङ्गलविग्रहः॥

"नाहं प्रकाशः सर्वस्य योगमायासमावृतः॥"

इति सविशेषस्य भगवतो वाक्यम्। तत्र सविशेषं स्वस्वरूपं सर्वेषाममानुषत्वादिकमावृतं सर्वेषामप्रकाशम्। अत एव—

"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो ममाव्ययमनुत्तमम्॥"

इति सविशेषत्वमप्यावृतं सर्वेषामप्रकाशमिति वदति। संविद्रूपं त्वावृतमपि स्वयंप्रकाशमेवाधिष्ठानतया वर्तते। परन्तु नाखण्डस्वरूपेणेति त्वन्यदेतत्। अत एव—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥"

इति—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।"

इति च वचने। भगवत्पादभाष्यमपि सविशेषस्वरूपमभिप्रेत्यैतदाशयमेव॥

### गीताऽपि निर्विशेषस्य स्वयम्प्रकाशवादमेवाभिप्रैति

न चात्र श्रीभाष्यसिद्धान्तेऽपि वैषम्यम्; अद्वैत्यभिमतसर्वप्रत्ययवेद्यब्रह्मस्वरूपमात्रे विप्रतिपत्तिमपहाय। शतभूषणी त्वियमपि गीता न निर्विशेषस्वप्रकाशवादविरोधिनीत्यभिप्रायैव। सविशेषस्यैव ह्यत्र भजनीयस्य प्रकरणम्। सविशेषस्य, निर्विशेषस्य वा योगप्रभावेण ज्ञानं श्रुतिमूलं योगप्रभावमभिप्रेत्यैव, इति स्थितप्रज्ञादीनां योगप्रभावेण सविशेषज्ञानम्. निर्विशेषसाक्षात्कारश्चोभयमपि प्रामाणिकम्; उभयोरपि श्रुतिमूलकत्वाविशेषादिति शतभूषणी॥

भूषणं तु साङ्ख्ययोगादीनां सविशेषब्रह्मवादस्यापि विरोधिनां योगिप्रत्यक्षस्य भ्रान्तित्व व्यवस्थापयति। यत्तु भूषण्या अपि नानिष्टम्, अत्र सविशेषस्येति पदं तदुपष्टम्भयतीति कस्य वाऽनुक्तोपलम्भनम्?

### सविषयत्वादिज्ञानस्य न निर्विशेषज्ञानाभिप्रायत्वम्, किन्तु वृत्तिज्ञानाभिप्रायत्वम्, अतो न विरोधः

तत्राद्वैतमते सत्त्वमिव चित्त्वमपि ब्रह्मण्यखण्डे कल्पितम्। तत्र वृत्त्यवच्छिन्ने चैतन्ये ज्ञानत्वं कल्पितम्, स्वरूपज्ञानं तु चित्त्वोपलक्षितम्; तस्य ज्ञानत्वाविशिष्टत्वात्, इत्यभिप्रेत्य वृत्त्यवच्छिन्नचैतन्यस्यैव सविषयकत्वादि नियतम्, न संविन्मात्रस्येति शतभूषणी॥

भूषणं तु लोकानुभवविरुद्धसिदमिति वदत् संविन्मात्रमनवच्छिन्नं सर्वलोकानुभवसिद्धमित्यभिप्रैति, परन्तु न संविन्मात्रं निर्विशेषं कस्यापि प्रत्यक्षमिति तत्र तत्राम्रेडयति। प्रत्यक्षानुमित्यादिभेदो हि प्रमाणजन्यवृत्त्यवच्छिन्नचैतन्यविषयः, न संविन्मात्रगोचरः। अत एव परिभाषा 'चैतन्यांशे प्रत्यक्षत्वमेवानुमित्यादावपी"ति संविन्मात्रमभिप्रेत्य—वदति, इति संविन्मात्रस्य सविषयकत्वादिकस्य लोकानुभवविरुद्धत्ववादो भूषणस्य व्याहतवादः॥

सति चैवम्—"स्वप्रकाशं निर्विशेषं व्यवहारदशायामप्रकाशम्। स्वप्रकाशत्वं च स्वातिरिक्तप्रकाशापेक्षप्रकाशाभावः स्वयंसिद्धस्वरूपमेव, न प्रकाशमानत्वम्, इति शतभूषणीवाक्यानां कथं वा विरोधं संविन्मात्रस्य सविषयकत्वस्वभावाभावनिरूपणप्रकरणे भूषणमवतारयितुं शक्नोति?

### अनाद्यविद्याप्रयुक्तानामपि सत्त्व-चित्त्वादिभेदनिवृत्तावखण्डस्वरूपभानं मुक्तौ, अन्यत्र तु न तथा

तत्र प्रकाशो नाम मुख्योऽनावृतसंवित्स्वरूपम्, गौणस्तु घटादीनां तदतिरिक्तानां तत्तादात्म्यमात्रम्=प्रकाशमानत्वापरपर्यायम्, इति संविन्मात्रस्यानावरणातिरिक्तप्रकाशाभावात् तस्य प्रकाशमानत्वं सिद्धवत्कृत्यापादितानि दूषणानि सर्वाणि भूषणस्य निरालम्बानि। मुक्तावनावृताखण्डसंविद्रूपत्वातिरिक्तानन्दत्वाविर्भावो नाद्वैतवादे, इति न निर्विशेषस्वप्रकाशतायां कोऽपि विरोधः, न वाऽनुपपत्तिः; सत्त्व-चित्त्वादिभेदा ह्यविद्याप्रयुक्ता अविद्याया निवृत्तौ स्वत एव निवर्तन्ते। अत एव मुक्तावखण्डसंविद्रूपमात्रमिति व्यवस्था॥

अविद्यानिवृत्त्युपपत्त्या मोक्षस्याऽऽविद्यकसंसाराद्विशेषः

एतेन—अविद्यानिवृत्तिरेवाद्वैतवादे दुर्वचा; तस्या असाध्यत्वात्, तस्या ब्रह्मस्वरूपाधिकरणाभेदे संसृतावपि तस्य सत्त्वात् संसृतावपि नित्यसिद्धो मोक्ष आपद्येत। तस्या मिथ्यात्वे तु वृथा परिश्रमः सर्वेषु कार्येष्विति—परास्तम्; अविद्यानिवृत्तेर्ज्ञानसाध्यतायाः, तस्या अनावृतब्रह्मस्वरूपताया वा संसारदशायामभावेन संसृतावपि मोक्षस्य नित्यसिद्धत्वाभावस्य, सर्वस्य ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेऽपि सर्वव्यवहारोपपत्तेश्च बहुशः पूर्वत्राम्रेडितत्वात्। विस्तरस्त्वविद्यानिवृत्त्युपपत्तौ भविष्यति ॥

॥ इति निर्विशेषस्वयंप्रकाशत्वोपपत्तिः ॥

# निर्विशेषनिर्विकल्पोपपत्तिः

### वेदान्तानां निर्विकल्पकप्रमाजनकत्वप्रतिज्ञा

निर्विशेषं स्वप्रकाशमप्यविद्ययाऽऽवृतमेव जगदुपादानम् , तदविद्या-प्रतिबिम्बितचैतन्यं बन्धभाक्। मोक्षस्तु तस्य प्रमाणजन्यवृत्त्याऽऽवरणाभि-भवप्रयुक्तानावृतस्वयंज्योतिःस्वरूपात्मतामात्रमिति निरूपितम्। अथ तस्या-वरणनिवृत्तिजनकं प्रमाणं परीक्ष्यते ॥

### विकल्पानां बाधादविवक्षया वेदान्तानां निर्विकल्पकज्ञान-जनकत्वम् , ज्ञाननिर्विकल्पकत्वे न कुत्रापि विवादश्च

तत्र वेदान्तवाक्यान्येव निर्विकल्पकप्रमाणजनकतया तत्र प्रमाणम्। तच्च निर्विकल्पकं ज्ञानं नैयायिकादिसंमतं वस्तुतः सविशेषविषयम् , किन्त्व-विवक्षितविषयम्। अविवक्षा च वस्तुगत्या सत्तायामपि भवति, तेषां बाधितत्वेऽपि। अत्र निर्विकल्पकत्वं विशेषस्य बाधितत्वेन, बाधितत्वं च तस्य महावाक्यजन्यज्ञानप्रयुक्तम्। शोधकवाक्येषु भाविबाधमभिप्रेत्य, महावाक्ये तु तेनैव बाधितत्वेन यावद्‌बाधमविवक्षामात्रेण निर्विकल्पक-ज्ञानजानकत्वं शोधकवाक्यजन्यज्ञानस्य, महावाक्यजन्यस्य वा विशेषा-विवक्षामात्रेणेति वस्तुस्थितिः ॥

### दर्शनान्तरसंमतनिर्विकल्पकादद्वैताभिमतनिर्विकल्पस्य विशेषाः

तेन च ज्ञानस्य निर्विकल्पकत्वे न लेशतोऽपि वैषम्यमद्वैतदर्शने दर्श-नान्तरात्। तज्ज्ञानफलं विशेषस्य सोपादानस्य निवर्तकमित्यद्वैतसिद्धान्तः, दर्शनान्तरे तु तत् सोपादानस्य विशेषस्य न निवर्तकमिति प्रथमो विशेषः। द्वितीयस्तु सर्वं सविशेषज्ञानं सविकल्पकं वस्तुतः तद्वति तत्प्रकारकमेव। विशेष्यं तत्राधारमात्रम् , न त्वद्वैतसिद्धान्त इवाधिष्ठानम्। ततस्तेनैव निर्विकल्पज्ञानेनापि प्रकारस्य न बाधः, किन्तु सतामेव विशेषणामविव-क्षामात्रमिति परे ॥

अद्वैते तु विशेष्य-विशेषणताऽधिष्ठानारोप्यभावेनैव सविशेषज्ञाने, अतो विशेष्यं प्रायेणाधिष्ठानम् , न त्वाधारमात्रम् , तेन चाधिष्ठानमात्रवि-षयकस्य निर्विकल्पकस्य सोपादानारोप्यबाधकत्वम् , सविकल्पक-निर्विकल्प-कता तु विवक्षाऽविवक्षामात्रेणैव ज्ञानद्वयस्येति तुल्यम् ॥

## शाब्दनिर्विकल्पकस्य प्रामाणिकत्वम्

तत्र भूषणम्—नैयायिकमतं निर्विकल्पकं लक्षयत् सविकल्पके भासमानस्य विशेषणज्ञानस्य कारणतया निर्विकल्पसाधनप्रक्रियाविरुद्धम् , अस्तु वा सामग्र्यविद्यमानत्वाद्विशकलिततया भानमैन्द्रियिके निर्विकल्पके, शाब्दे तु ज्ञाने विशिष्टबोधकसामग्रीविरहे शब्दोपस्थापिता विशेषा न बोद्धुं शक्यन्ते, इति न निर्विकल्पज्ञानानन्तरं सविकल्पकप्रक्रिया, किन्तु निर्विकल्पज्ञानेनैव शब्दव्यापारस्योपक्षयः ॥

## नैयायिक-विशिष्टाद्वैताद्वैतवादेषु निर्विकल्पकस्वरूपभेदः

न च विशिष्टज्ञानं शाब्दं विशकलितता विशेषण-विशेष्यसम्बन्धान् प्रथमत उपस्थाप्यानन्तरं विशिष्टज्ञानमादधते, इति तात्पर्यानुसारेण स्वरूपैक्यमात्रपरतया निर्विकल्पत्वं स्वीकर्तव्यम् । तत्र प्रथमं चक्षुरादिकं व्यक्तिमात्रसन्निकर्षाद् व्यक्तिमात्रं गृह्णाति । तत्तु निर्विकल्पकम् , पश्चात्तु तद्विशेष्यकधर्माणामपि ग्रहणाद् विशिष्टं गृह्णातीति प्रत्यक्षे निर्विकल्पकस्य प्राथम्यं शतभूषण्यभिप्रैति । तेन च स्वरूपमात्रग्रहणम् , निर्विकल्पके नैयायिकमतादस्य विशेषो न जातिज्ञानस्य निर्विकल्पत्वम्, विशिष्टाद्वैतमतात्तु गोत्वविशिष्टतया न प्रथमपिण्डग्रहणमिति ॥

## श्रीभाष्याभिमतनिर्विकल्पस्वरूपायोगः, अद्वैत-संमतस्यैव तद्योगश्च

एतेन—प्रथममिन्द्रियं चक्षुरादिकं सर्वसन्निकर्षरूपसामग्रीसद्भावात् 'इयं गौरि'ति विशिष्टं प्रत्यक्षमेव जनयति, पश्चादेतद्दर्शनजनितसंस्कारोद्बोधे पूर्वानुभूतमिदं चैकीकृत्येयमपि गौरिति गृह्णाति । अयं तु सविकल्पको बोधः । प्रथमज्ञानानुभूताकृत्यनुवृत्तिज्ञानं द्वितीयं सविकल्पकमिति तु निष्कर्षः । उभयत्रापि जातेरपि भानं समानम् । तथापि तदनुवृत्त्यननुवृत्तिज्ञानत्वात् सविकल्पक-निर्विकल्पकयोर्विशेषः, अद्वैतिनां मते तु जात्यादेर्विशेषस्य निर्विकल्पके न भानम् । आकृतिर्हि सर्वानुगतैकैव, व्यक्तिमात्रं तु भिन्नमिति सिद्धान्तस्योभयसंप्रतिपन्नत्वात् । तत्र जातिर्भासमानाऽननुवृत्ततया, अनुवृत्ततया च ज्ञानभेदेन भाति, इति कल्पने न प्रमाणम् । तत्र प्रथमज्ञाने भासमानाऽऽकृतिरन्येति व्यक्तिभेदप्रतीतिमात्रेण कल्पनायां व्यक्त्यतिरिक्ताऽऽकृतिरेवाप्रामाणिकी स्यात् ; अन्यथा तृतीयज्ञाने व्यक्तिभेदे वाऽऽकृतिभेदशङ्कायामनुवृत्तिज्ञानम्, द्वितीयतद्दर्शनजनितसंस्कारोद्बोधे

सति पूर्वानुभूतमिदं चैकीकृत्येयमपि गौरिति प्रतीतिः, प्रतीत्यनुवृत्तिज्ञानं च कल्पनीयं स्यात्। अतः प्रथमं व्यक्तिमात्रसन्निकर्षेण गौरिति ज्ञानं निर्विकल्पकम्, पश्चादियं गौरित्याकृतीन्द्रियसन्निकर्षेऽपि सति सविकल्पकज्ञानमिति व्यवस्थैव युक्ता ॥

निष्कर्षस्तु—व्यक्तिमात्रे ज्ञानमिन्द्रियसन्निकर्षे निर्विकल्पकम्। व्यक्त्याकृत्युभयेन्द्रियसन्निकर्षे सविकल्पकम्। न हीन्द्रियसंन्निकर्षमात्रेण प्रत्यक्षनियमः; अन्यत्र व्यग्रचित्तानां सत्यपीन्द्रियसन्निकर्षे प्रत्यक्षानुदयात्, इति मनस्संयुक्तेन्द्रियविषयसन्निकर्ष एव प्रत्यक्षमिति स्वीकर्तव्यत्वात् नियमेन व्यक्त्याकृत्युभयसन्निकर्षे, उभयज्ञाने च प्रमाणाभावः। अतो नैयायिकेभ्यो विशिष्टाद्वैतिभ्यश्च विशेषोऽद्वैताभिमतयोः निर्विकल्पक-सविकल्पकयोः। इदं सर्वमभिप्रेत्यैव शतदूषण्याः—विगीता बुद्धिः, विशिष्टज्ञानपूर्विका, विशिष्टबुद्धित्वादित्यनुमानम् ॥

एतेन—पूर्वज्ञाने व्यक्तिभेदः जात्यननुवृत्तिग्रहणम्, द्वितीयज्ञाने देशकालभेदः, व्यक्त्यनुवृत्तिग्रहणमिति—परास्तम्; उभयत्रापि व्यक्त्यैक्येऽपि जातिभानाभानाभ्यामेव विशेषात्। न च देश-कालभेदेनैकस्या व्यक्तेर्भेदः, व्यक्तीनां परस्परभेदस्तु स्वरूपप्रयुक्तः, न देश-कालभेदप्रयुक्तः। आकृतिस्तु सर्वत्रैकैव, इति नोक्तविधो भेदो विषयभेदमादाय संभवति; उभयत्रापि व्यक्तिविषयकत्वाविशेषात् ॥

नैयायिकमते हि निर्विकल्पकमेव ज्ञानं नास्ति। तत्राऽऽलोचनमिन्द्रियाणाम्, विकल्पस्तु मानसोऽभिमानोऽहंकारस्य, अध्यवसायो बुद्धेरिति साङ्ख्यप्रक्रियामादाय भूषणं लिखति। न चेयं प्रक्रिया धर्मभूतज्ञाने समन्वेति। नैयायिका अपि नानेन प्रकारेण विशिष्टज्ञानं निर्वहन्ति ॥

### सविकल्पकातिरिक्तं लौकिकम्, अलौकिकं वा निर्विकल्पकं प्रामाणिकम्

सर्वथा तु-प्रथममालोचनज्ञानमिन्द्रियाणामिति भूमिकैव। निर्विकल्पकज्ञानम्, विशेषणमात्रज्ञानं वेति कल्पनायां न कोऽपि दोषः; यतः द्वितीय एव मानसो विकल्पो निर्दिश्यत इति निर्विकल्पकस्याप्रामाणिकत्वं न संभवति, न वा सविकल्पकस्य विशिष्टज्ञानस्यैव निर्विकल्पकत्वमिति च। अतो लौकिकम्, अलौकिकं वा तत् प्रामाणिकमेव। तत्र लौकिके निर्विकल्पकेऽनुभवः प्रमाणम्, अलौकिके तु शास्त्रम्। तत्र शास्त्रमुपक्रमोपसंहाराद्यवगततात्पर्यग्राहकलिङ्गवशाद् निर्विकल्पकज्ञानजनकम् ॥

### शाब्दमपि निर्विकल्पकं प्रमाणम्

इदमेवात्र पृच्छ्यते—श्रीभाष्यमते निर्विकल्पकमस्ति वा, न वा। आद्ये तदभिमतं निर्विकल्पकं यदि प्रमाणम्, तर्हि द्वितीये किमिति विशिष्टग्रहणत्वाविशेषेऽपि सविकल्पक-निर्विकल्पकभेदः श्रीभाष्येण निरूप्यते? पूर्वोद्धृतसाङ्ख्यप्रक्रियया सविकल्पकमेव ज्ञानमङ्गीक्रियताम्, किं निर्विकल्पकेन? यथा च शाब्दं शक्त्या, लक्षणया वा तात्पर्योपबृंहितया निर्विकल्पकज्ञानस्य जनकम्, तथाऽखण्डार्थवादे व्यक्तम् ॥

### 'सन् घटः' इत्यादौ सामानाधिकरण्यमधिष्ठानारोप्यभाव-निबन्धनम्, अन्यत्राऽभेदे, विशेष्य-विशेषणभावे वेति सोदाहरणमुपपादनम्

इदमेवाभिप्रेत्य सन्मात्रावगाहित्वेन सर्वस्य ज्ञानस्य निर्विकल्पकत्वम्। सन्मात्रं हि ब्रह्म तेन रूपेण सामान्यतो ऽधिष्ठानतया भासते। प्रकाशमानास्तु तत्रारोप्यतया विकल्पपदेन व्यपदिश्यन्ते। व्यक्तीभविष्यति चेदमनन्तरे सन्मात्रप्रत्यक्षोपपत्तिप्रकरणे। न चाद्वैतिनां नैयायिकेन सर्वात्मनैक्यम्, किन्तु निर्विकल्पस्य ज्ञानस्य विशिष्टबुद्धिपूर्वत्वमात्रे, न तु निर्विकल्पकस्वरूपैक्येऽपि ॥

तत्रापृथक्सिद्धत्वं हि कार्य-कारणभावेन कार्य-कारणयोरेव सामानाधिकरण्यं प्रयोजयति। न च शरीर-शरीरिणोः सः, इति देवोऽहमिति सामानाधिकरण्यं बाधितम्। तत्र कार्य-कारणयोः सामानाधिकरण्यं विवर्तोपादानोपदेयभावे बाधायां सामानाधिकरण्यम्, परिणाम्युपादानोपादेययोः कारणात्मनाऽभेदे सामानाधिकरण्यम्। तत्र प्रथममधिष्ठानारोप्यभावनिबन्धनम्। अन्यथा तु विशेषण-विशेष्यभावेन सामानाधिकरण्यम्। तत्रान्तिमं नीलो घट इति ॥

तत्र नीलपदमर्शआद्यजन्तं नीलविशिष्टपरम्, इति न तत्र रूपं घट इति प्रतीत्यापत्तिः। विशेषणस्य विशेष्यात्मतानिरासो ह्येतमर्थमभिप्रेत्यैव, तयोरभेदाभावात् ॥

सति चैवं शरीरात्मनोः श्रीभाष्यमते न प्रथमः कार्य-कारणभावः, न वा द्वितीयः; नापि वा विशेषण-विशेष्यभाव इति कथं सामानाधिकरण्यम्—अभेदम्, विशेषण-विशेष्यभावं वा मत्वा? यद्यभेदे कुतोऽभेदः? तत्र स्वरूपैक्येन, "उद्भिदा यजेत" इत्यादाविव, अन्यथा वा कथमपि नाभेदः।

सति चैवं यदि स्वरूपैक्यमादायैव तर्हि, तत्तु शरीरात्मवादे संभवति, इत्यपसिद्धान्तः, इष्टपत्तौ तु 'शरीरमहमि'ति प्रतीत्यापत्तिरिति शतभूषण्याशयोऽनुसन्धेयः ।।

### जाति-व्यक्त्योः सामानाधिकरण्यं लक्षणया, शरीरात्मनोस्तु शरीराहमर्थयोर्गोऽविद्याध्यासेन

जाति-व्यक्त्योस्तु न कार्य-कारणभावः, इति जातिवाचकस्य व्यक्तिपर्यन्तपरत्वलक्षणयैव सामानाधिकरण्यम्; अन्यथा 'गोत्वं कामधेनुरि'ति प्रतीत्यापत्तिः । अद्वैतमते तु शरीराहमर्थयोः सामानाधिकरण्यं नाहमर्थस्य शरीराधिष्ठानतया, किन्तु विवरणमते 'एकत्र द्वयमि'ति रीत्याऽहंकाराज्ञानयोरेकत्र चैतन्येऽध्यासेन 'अहमज्ञः' इति प्रतीतिवत्, शरीराहमर्थयोः संविदात्मन्यध्यासेनैव, इति 'तदभिन्नाभिन्नस्य तदभिन्नत्वमि'ति न्यायेनैव सामानाधिकरण्यम् । अतो'ऽहं शरीरमि'ति न प्रत्ययापत्तिः, श्रीभाष्यमते तु न कथमपि सामानाधिकरण्यनिर्वाहोऽत्र ।।

तदेवं जाति-गुणादीनां स्वरूपात्मतापक्षो निराकृतः शतदूषण्याः स्वमतसमर्थनार्थम्—सोऽपि-पक्षोऽभिमत इति मत्वा । भूषणं तु नेदमद्वैतमतनिरासार्थम्, किन्तु कस्यचन प्रासङ्गिकमतस्य निरासार्थमि'ति वदति अस्तु ।।

### गुणादीनां द्रव्यात्मतानिरासो भेदाभेदपक्षसमर्थनार्थः, अयुतसिद्धत्वनिरासार्थश्च, तेनार्थादपृथक्सिद्धत्वनिरासोऽपि

वैशेषिकमतनिराकरणप्रसङ्गे "उभयथा च दोषात्" इत्यत्रोत्सूत्रव्याख्यावसरे "तस्माद् द्रव्यात्मता गुणस्ये"त्युपसंहारस्तु भेदाभेदयोरुभयथापि दोषनिरूपणमुपक्रम्याभेदे सामानाधिकरण्योपपादनं संभवति, भेदे तु न तदधीननिरूपणत्वमित्युभयस्यापि निरसनेन भेदाभेदपक्ष एव स्थापितः, न त्वभेदसिद्धान्तः, इति नेदं भाष्यं गुणानां द्रव्यात्मताऽद्वैतसिद्धान्तस्य समर्थकम्, परन्तु गुणानां द्रव्येण न सामानाधिकरण्यानुपपत्तिः; विनाऽभेदं सामानाधिकरण्यायोगात्, अयुतसिद्धत्वेन तन्निर्वाहस्तु न संभवतीति भेदाभेदसिद्धान्तोऽपि तत्र निरस्तः ।।

इदं त्वत्रावधेयम्—अयुतसिद्धत्वमपृथक्सिद्धत्वं चैकमिति भाष्य एव विवेचनादपृक्सिद्धत्वमपि न सामानाधिकरण्यप्रयोजकमित्युपवर्षादिसंमतापृथक्सिद्धिप्रक्रियाऽप्यत्र पारिभाषिकी निरस्ता ।

### शरीरात्मनोः सामानाधिकरण्यं नापृथक्सिद्धत्वेन

एतेन—पूर्वपक्षांशमात्रमादाय "गुणगुण्यभेदोऽप्यद्वैतसंमत एव", इति शतभूषण्यां तत्खण्डननैर्भर्यमयुक्तमिति—परास्तम् ; जाति-गुणादीनां द्रव्यात्मकतायाः कृत्वाचिन्तयाऽद्वैतिभिरनङ्गीकारात् , इति 'सोऽयं देवदत्तः'इत्यादाविवैक्ये सामानाधिकरण्येन, कार्य-कारणप्रयुक्तभेदाभेदघटकाभेदमादाय 'मृद् घटः' 'इदं रजतमि'त्यादाविव वा, "नीलो घटः" इत्यादौ विशेषण-विशेष्यभावेन वा सामानाधिकरण्यं निर्वहणीयम् ; शरीर-शरीरिणोस्तु नैकतमसपि सामानाधिकरण्यम् , न वा तत्र पारिभाषिकमपृथक्सिद्धत्वमपि पूर्वोक्तरीत्या खण्डितं सामानाधिकरण्यप्रयोजकम् ॥

### निर्विकल्पकस्य सर्वदर्शनसंमतत्वम् , परन्तु तत्र तत्र विशेषोऽपि

अद्वैतसिद्धान्तस्तु नैयायिकानभिमतः, किं बहुना ? न वा भाट्टसम्मतं निर्विकल्पकप्रकारमनुसरति, किन्तु विद्यमानानपि विशेषान् विहायैक्ये सामानाधिकरण्येनैव तत्प्रकारमभ्युपगच्छति । सर्वथा तु निर्विकल्पकमपि ज्ञानं वर्तते, इति न केवलमद्वैतसिद्धान्तः, किन्तु नैयायिक-भाट्टादिसिद्धान्तोऽपि ॥

### व्यवहारे भाट्टनयस्तु नैकान्तेन

'व्यवहारे भाट्टनयः' इति तु व्यावहारिकतत्त्वनिर्धारणावसरे प्राधान्यमद्वैतमते भाट्टनयस्येत्यभिप्रायम् , तदपि सत्यविरोधे प्रायेण च । न चैतावता पारमार्थिकतत्त्वनिर्धारणे तन्न्यायः शरणम् । अत एवात्र तन्मतस्याप्यनादरो नैयायिकवत् । निर्विकल्पकसत्तामात्रे तस्याप्यादरस्तु वर्तत एव ॥

### स्वरूपज्ञानमात्रनिर्विकल्पकत्वे योगसूत्रं प्रमाणम्

स्वरूपमात्रज्ञानमेव निर्विकल्पकज्ञानमित्यत्रासंप्रज्ञातसमाधिः प्रमाणम् , निर्विकल्पकसमाधौ स्वरूपमात्रस्य भानमित्यत्र तु "निर्विचारवैशारद्येऽध्यात्मप्रसादः" इति योगसूत्रम् , पूर्वोद्धृता पैङ्गलोपनिपच्च प्रमाणम् । अधिकं गूढार्थदीपिकायाम् , न्यायरत्नावल्यां च व्यक्तम् ॥

### संप्रज्ञातासंप्रज्ञातसमाधिभेदः, निर्विकल्पज्ञानस्यासंप्रज्ञातसमाधित्वं च

संप्रज्ञातासंप्रज्ञातपदं समाधावात्मतत्त्वाधिकस्य भानेन संप्रज्ञातसमाधित्वम् । आत्मस्वरूपातिरिक्तस्य कस्याप्यभानेनासंप्रज्ञातत्वं

चाभिप्रेत्य, न तु स्वयंप्रकाशस्यात्मनोऽप्यभानमात्रम्, उपहितात्मज्ञानं वा संप्रज्ञातसमाधिः। स्वरूपमात्रज्ञानमसंप्रज्ञातसमाधिरिति तु निष्कर्षः ॥

असंप्रज्ञातसमाधिर्योगिनां प्रत्यक्षप्रमारूपं निर्विशेषतत्त्वं वेदान्तसिद्धमेवावलम्बते, इति वेदान्तशास्त्रमूलमेव योगतत्त्वम्। व्यक्तं चैतद् योगवासिष्ठादौ, उपनिषत्सु च। शुद्धात्मविषयकप्रत्ययाभ्यासरूपेण संप्रज्ञातसमाधेः संशीलने वृत्त्यन्तराणामुपरमेणात्मस्वरूपमात्रभानम्, वृत्त्यन्तराणां संस्कारमात्रतयाऽवस्थानं चासंप्रज्ञातसमाधौ। तथाच सूत्रम्—"विरागप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" इति ॥

भूषणमपि "समाधिपादे च किंचिद् विवृतमि"त्यारभ्य "एवं सूक्ष्मविषये प्रकृतिपर्यन्तेऽर्थमात्रानुवेधे सविचारसमापत्तिः, तदनुवेधाभावे निर्विचारवैशारद्ये यथावस्थितस्वरूपमात्रग्राहिणी ऋतम्भरा नाम प्रज्ञा, तदधीनसंस्कारस्यापि निरोध आत्ममात्रविषयको निर्बीजः समाधिरि"ति विवरणेनात्मस्वरूपभानमात्रमसंप्रज्ञातसमाधिरिति स्वयं समाधत्ते ॥

अतस्तत्रात्मविषयको निर्बीजः समाधिः, इति नात्मनोऽपि निरोधाभिप्रायतामर्हति। न च निरोधः सविषयकोऽपि, इत्यात्मस्वरूपमात्रग्रहणमेवासंप्रज्ञातसमाधिः, न तु बाह्यालम्बनाविषयकत्वमात्रेण, इति निर्विशेषविषयकत्वमसंप्रज्ञातसमाधेरपि। स एव हि निर्विशेषविषयं निर्विकल्पज्ञानमपीति योगशास्त्रसिद्धमेव लक्षणं निर्विकल्पकज्ञानस्य, एकस्यापि भानेन मुख्योऽसंप्रज्ञातसमाधिरिति तु निष्कर्षः ॥

### अविरोधे योगशास्त्रस्याप्यद्वैतवादे प्रामाण्यम्

"एतेन योगः प्रत्युक्तः" इति सूत्रं त्वीश्वरस्य केवलं प्रधानाधिष्ठातृत्वेन निमित्तकारणत्वमात्रमिति योगसिद्धान्तमात्रनिरासाभिप्रायम्; कारणवाक्यसमन्वये प्रथमपादे प्रस्तुतस्मृत्यन्तरपरिहारार्थत्वादस्याधिकरणस्य। न हि साङ्ख्य-योग-पाशुपत-पाञ्चरात्रेषु श्रुत्यविरुद्धांशेऽप्यप्रामाण्यं बादरायणः, भगवत्पादा वा मन्यन्ते। व्यक्तं चैतत्पाशुपत-पाञ्चरात्राधिकरणयोः। तयोर्बादरायणेन प्रतिषिध्यमानयोरपि न सर्वात्मनाऽप्रामाण्यम्, किन्तु विरुद्धांश एवेति तदधिकरणभाष्ये। सर्वथा तु योगशास्त्रेऽपि निर्विशेषग्रहणानुपदेशवादोऽसदनुवाद एव ॥

### "अहं मनुरभवम्" इति वामदेवस्य मन्वादितादात्म्यं न शरीर-शरीरिभावेन, किन्तु तादात्म्येनैव

एतेन—"अहं मनुरभवं सूर्यश्चे"ति वामदेवस्यानुसन्धानमपि—व्याख्यातम्। इदं हि शास्त्रदृष्ट्या, न तु स्वार्थयोगेन जातिस्मरत्वेनेति संप्रतिपन्नम्। शास्त्रदृष्ट्या सार्वात्म्यानुभवः सर्वोपाधिकभेदनिवृत्तिनिबन्धनस्वरूपानुभव एव। स चाद्वैतवाद एवोपपद्यते॥

अयमेवानुभवः—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि॥
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः।"

इति गीताऽप्युपदिशति। अयं हि श्लोकः—

"युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते॥"

इति ब्रह्माभिन्नमानन्दस्वरूपं च प्रत्यगात्मानं योगमहिम्ना ज्ञानमुपदिश्यानन्तरं प्रवृत्तस्तत्त्वमसिमहावाक्यार्थाखण्डसंविन्मात्रानुभवमुपपादयितुं त्वम्पदार्थमनौपाधिकमुपदिशति। तदनन्तरं तु—

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति"

इति सर्वाभेदयोग्यं शोधितं तत्पदार्थम्। तत्र—

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति"

इति व्यतिहारोपदेशाद् न शरीर-शरीरिभावो जीव-ब्रह्मणोरिति व्यक्तम्। तथाच "सर्वभूतस्थमि"ति श्लोकेऽपि समदर्शनमैक्यदर्शनमेवेति वक्तव्यम्। अत एव—

"सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः।"

इति जीव-ब्रह्मैक्योपदेशः। अनेन चेदं निगदव्याख्यातम्—निर्विशेषात्मग्रहणं न केवलं योगाधीनम्, किन्तु तत्रैव शास्त्रस्यापि परमं पर्यवसानमिति। शरीर-शरीरिभावस्तु वामदेवस्य न मन्वादिभिः, किन्तु भगवतेति कथं "मनुरभवं सूर्यश्चे" त्युपपद्यते?

वामदेव-मनुशरीराणां सर्वेषां परमात्मशरीरत्वं कथंचनान्तर्यामिब्राह्मणेनावसातुं शक्यम्, तेन च तादात्म्यं सर्वेषां परमात्मनैव, न तु परस्परम्। शास्त्रतः परमात्मनि स्वान्तरात्मतया बुद्धे तदन्तर्यामिकत्वनिबन्धनं तादात्म्यं शरीरे कामं वर्तताम्, कथमेतावता शरीरयोस्तादात्म्यम्? न

चात्रैकान्तर्यामिकत्वं विवक्ष्यते, किन्त्वैकात्म्यम्। तच्च निर्विशेषतायामेवोपपद्यते, इति निर्विशेषनिर्विकल्पकज्ञाने शास्त्रीये "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रमपि प्रमाणम्। को वा विप्रतिपद्यते—शरीर-शरीरिणोस्तादात्म्यं नास्तीति, कथं शरीरयोस्तादात्म्यमित्येवात्र पर्यनुयुज्यते॥

भूषणस्यान्तर्यामिणोरैक्यानुसन्धानमिति विवरणायोगः

अत्रेदं भूषणं लिखति—मन्वाद्यन्तर्यामिकत्वं वामदेवस्यापीत्यन्तर्याम्यैक्यबोधनमेवात्र विवक्षितम्—इति, तत्राहंशब्देन तदन्तर्यामिविवक्षायामहं मनुरभवमित्युत्तमपुरुषप्रयोगायोग एकं दूषणम्, द्वितीयं दूषणम्—अहंपदेन वामदेवस्य ग्रहणे स्वान्तर्यामिणो मन्वाद्यन्तर्यामिणैक्यबोधायोगः, तृतीयं दूषणम्, शरीरे शरीर्यनुसन्धानस्यादर्शनम्॥

शरीरस्यात्मन्यध्यासेन देहात्मभ्रमः, न त्वात्मनः शरीरेऽध्यासेन, अतो नायं न्यायोऽत्र भूषणानुसंहितः;
अन्यथा शरीरभेदेन लोक आत्मभेदासिद्धिः

भूषणं पृच्छति—यदि शरीरे शरीरितादात्म्यं नास्ति, कथं देहात्मभ्रम इति व्यवहार इति। इदमत्र समाधानम्—आत्मन एवाधिष्ठानत्वाद् देहात्मभ्रमः, न तु शरीर आत्मन्यध्यासादिति। "अनात्मन्यात्मबुद्धिः" इति तु तत्तज्जीवात्मभ्रममात्राभिप्रायम्, न त्वात्मनोऽनात्मनि भ्रमाभिप्रायम्। तत्रापरः परिप्रश्नोऽयमेव—यत् किमनेन न्यायेन शरीरेषु सर्वेषु शरीरितया परमात्मतादात्म्यग्रहणमपि भ्रम एव इति? तत्र यदि शास्त्रप्रामाण्यात् नायं भ्रमः तर्हि देहेऽहमित्यादिज्ञानं भ्रम इति केनावगम्यते? कथं च तद्दृष्टान्तेनापृथक्सिद्धिसम्बन्धः सर्वैः शरीरैः परमात्मनः साधूक्रियते? भ्रान्तिर्हि बाधितार्थत्वेन, इति कथं सर्वशरीरकत्वेन तादात्म्यं बाधितदृष्टान्तेन निर्वोढुं पार्यते? इदमत्र विविच्यताम्—किं लोके सर्वत्र मानवानामहमिति ज्ञानं परमात्मन एव? यद्योम्, तर्हि व्यर्थं शास्त्रम्। किं लोकेऽपि बाल्य-यौवन-वार्धक्योपहितानां शरीराणामेकशरीरितादात्म्येनैक्यं दृष्टम्? अन्यथा शरीरभेदेऽप्यनुवर्तमानत्वात् शरीरभेदेनात्मभेदो भूषणमते कथम्?

तत्र देह आत्मभ्रमस्तादात्म्यभ्रम इत्यनेन किं विवक्ष्यते—यदि देहात्मनोस्तादात्म्यं बाधितमिति, तर्हि कथं शरीर-शरीरिभावनिबन्धनं सामाना-

धिकरण्यमबाधितम् ? यद्यात्मनि देहतादात्म्यमबाधितमिति विवक्षा, तर्हि देहयोस्तादात्म्यं कथं नाबाधितम् ?

### श्रीभाष्याभिमतनिर्विकल्पकादद्वैतसंमतनिर्विकल्पकस्य विशेषः, तस्यैव साधुत्वं च

यथा च सत्यपि सन्निकर्षे मनःसहकृतेन्द्रियसन्निकर्षाभावात् स्वरूपमात्रग्रहणं न विरुद्धम्, सन्निकर्षश्च विषयेन्द्रिययोः क्रियात्वात् निग्रहीतुमपि शक्यते, प्रवर्तयितुमपि, तथाऽन्यत्र मनसो व्यापारे स्वत एव संभवोऽपि। अतः स्वरूपमात्रविषयकं प्रत्यक्षं भवत्विच्छया–विषयविशेषेन्द्रियाणां प्रमाणानां निग्रहः पुरुषतन्त्र इति। प्रमाणनिग्रहेण पुरुषेच्छया स्वरूपमात्रग्रहणं न विरुद्धम्। तत्र निर्विकल्पकस्य प्रामाण्यं तद्वति तत्प्रकारकज्ञानं प्रामाण्यमिति वदतां नैयायिकानामपि संमतमिति निरूपयितुं तदीयमेव विशेष्यावृत्त्यप्रकारकत्वं प्रामाण्यमत्रोपन्यस्तम्। तदपि कृत्वाचिन्तया। अद्वैतसिद्धान्ते तु तद्वति तत्प्रकारकत्वं ज्ञानस्य भ्रमसाधारणम्; अनिर्वचनीयख्यातिस्वीकारात् बाधितार्थसफलप्रवृत्त्यन्तपर्यवसायित्वेनाप्रमाणतामर्हति॥

श्रीभाष्यानुयायिनो हि निर्विकल्पकमपीदन्तया विशिष्टग्रहणात् केनचनाकारेण सविकल्पमेवेति मन्यन्ते, इदन्तु न युक्तम्; "अविद्यानिवृत्तिपरत्वात् शास्त्रस्य। न हि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति" इति भाष्यात्। निर्विशेषसंविदुपाधित्वमात्रेणाखण्डाकारवृत्तेर्निर्विशेषविषयत्वोपचारादखण्डार्थवृत्तेर्निर्विकल्पकप्रमात्वव्यपदेशः, इत्यखण्डाकारवृत्तेस्तदुपहितविषयकत्वासंभवाद् न विशिष्टविषयकत्वसंभवः; स्वतः सिद्धत्वाद् निर्विशेषस्य ब्रह्मणः, इति निरूपणार्थं ब्रह्मणः स्वतःसिद्धत्वनिरूपणं नात्रासंगतम्॥

### स्वप्रकाशत्वेऽप्यद्वैतमते शास्त्रसार्थक्यम्

स्वतः सिद्धस्यापि तद्विषयाज्ञाननिवृत्त्यर्थं शास्त्रापेक्षा वर्तत इति तु व्यक्तमधस्तात्। शास्त्रजन्याखण्डाकारवृत्तिरावरणाभिभवमात्रार्थम्, न तु ब्रह्मप्रकाशार्थम्। स्वेतराप्रकाश्यत्वम्, स्वेतरचिदप्रकाश्यत्वमेव वा ब्रह्मणो घटादिवैलक्षण्येन। अतो न शास्त्रवैयर्थ्यम्, शाब्दापरोक्षवादस्तु पूर्वमेव समर्थितो निर्विशेषस्यापि शक्त्या, लक्षणया वा शास्त्रबोध्यत्वोपपादनेन, तत्रैव वेदान्तानां तात्पर्योपपादनेन चाखण्डार्थवादे, अन्यत्र च॥

### "सन् घटः" इत्यादावपि सदंशे प्रमात्वमेव, यदि तदखण्डात्मना भासते

सर्वं ज्ञानं धर्म्यंशे प्रमा, धर्मांशे भ्रमः, इति सिद्धान्तात् । तत्र 'इदं रजतमि'त्यत्र धर्म्यंशे प्रमात्वेऽपि न निर्विकल्पकत्वम् ; अवच्छिन्नचैतन्य-विषयकत्वात् तत्र ज्ञानस्य । 'सन् घटः' इत्यत्र तु संदशे निर्विकल्पकत्वम् । अतो रजतादेर्बाध्यत्वेऽपि न क्षतिः ॥

तच्च बाध्यत्वं न शुक्तिज्ञानेन, किन्त्वखण्डाकारवृत्त्यैव । तत्राप्यधिष्ठानांशे व्यावहारिकं प्रमात्वं नात्राधम् ; निर्विशेषसत्यवस्तुविषयत्वं तु सन्मात्राभिप्रायम् । समर्थयिष्यते च सन्मात्रप्रत्यक्षोपपत्तिरनन्तरमेव ॥

### महावाक्यजन्यज्ञानस्यैवाबाधितार्थविषयकत्वेन निर्विकल्पकत्वम् , न घटादिज्ञानस्य

तत्र शाब्दस्य निर्विशेषत्वं विशेषाणां बाधितत्वेन, ऐन्द्रियिकस्य तु ज्ञानस्य विशेषाणां व्यावहारिकसत्ताविवक्षामात्रेण । अत ऐन्द्रियिकप्रत्यक्षस्य व्यावहारिकसद्विशेषाणां तदाऽबाधाद् विशेषाभावेऽपि वस्तुगत्या विशिष्टविषयकत्वोपपादनं कथमत्राऽस्मान् पृच्छतो न कोविदारकथनम् ? विशदीकृतोऽयमर्थोऽत्रोपक्रमे ॥

तदयं निष्कर्षः—शाब्दमेव प्रत्यक्षं निर्विकल्पकं विशेषाणां बाधादविवक्षया, ऐन्द्रियकं तु विशेषाणामविवक्षामात्रेण । शब्दश्चात्र "तत्त्वमसी"-त्यादिमहावाक्यमेकशोऽपि ॥

तत्र तच्छब्दो यद्यपि पूर्वप्रस्तुतमेवोपस्थापयितुमर्हति, पूर्वप्रस्तुतं त्वध्यारोपेण सद्वितीयम् , अपवादेन चाद्वितीयमात्मस्वरूपम्—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि" ति । तत्र सद्वितीयं न त्वंपदार्थेन वाच्येन, लक्ष्येण वाऽभेदमर्हति, एवं प्रक्रान्तः श्वेतकेतुरपि न तेन तच्छब्दार्थेनाभेदम् , इति पदद्वयेनापि वाच्यतावच्छेदकविशेषाविवक्षया शुद्धब्रह्मप्रत्यगात्मोपस्थापनं लक्षणया, शक्त्या वेत्यादि व्यक्तीभविष्यति ॥

एवं निर्विशेषपरत्वं तु सतो निर्विशेषतयोपक्रमादितात्पर्यलिङ्गानुगृहीततात्पर्यवशात् । न हि वाक्यैकगम्यस्य तत्त्वस्य प्रमाणान्तरापेक्षामात्रेण बाधः; अन्यथा सविशेषवाक्यस्यापि कथं प्रामाण्यमिति शङ्का समानैव ॥

### 'सोऽयं देवदत्तः' इत्यत्रेव शास्त्रनिर्विकल्पापरोक्षोपपत्तिः, अबाधात्, बाधे तु नैवम्

तत्र श्रीभाष्यं यदि सविशेषवादं सिद्धवत्कृत्य निर्विशेषवादं निषेधति, तर्हि यथातात्पर्यं वाक्यार्थोऽवधारणीयः। तत्त्वद्वैतिनामपि समानम्। भिन्नभिन्नत्वेन प्रमाणान्तरावसितयोर्वस्तुनोर्विरुद्धधर्मापलापेऽपि न धर्म्यैक्यम्। यद्यपि'सोऽयं देवदत्तः' इत्यादौ तत्कालेदंकालविशिष्टतया प्रतीतयोरर्थयोर्यत्र विशेषणांशमात्रस्याभेदान्वयबोधे बाधः, तत्र विरुद्धधर्माविवक्षया धर्म्यैक्यबोधो दृश्यते॥

अयमेव न्यायोऽत्रापि संविन्मात्रस्यैकस्यैव स्वरूपस्योपाधिभेदमात्रेण भिन्नतया प्रतीयमानस्योपाध्यविवक्षया धर्म्यैक्यस्य बोधनात्। यत्र तु तथा धर्म्यैक्यबोधोऽबाधितः, तत्र कथंचन लक्षणया तद्वाक्यप्रामाण्यरक्षणं कर्तव्यम्, यदि तदवश्यं रक्षणीयम्—"आदित्यो यूपः" इत्यादौ। अयमेव न्यायो 'घटः पटो भवती'त्यत्रापि। तत्र यदि तस्यापि प्रामाण्यं रक्षणीयम्, तर्ह्येकस्य पदस्य द्रव्यपरत्वं लक्षणया स्वीकृत्य तत्प्रामाण्यरक्षणं भवत्येव॥

लौकिकनिर्विशेषवाक्यविषये वक्तव्यं सर्वं पूर्वमुक्तम्; विशेषणाविवक्षया तस्यापि निर्विशेषपरत्वस्याबाधात्। स्वरूपमात्रप्रश्ने स्वरूपमात्रमेव वक्तव्यमिति प्रश्नोत्तरतात्पर्यविषयविवेक एव तत्र विशेणांशाविवक्षायां हेतुः। 'नीलो घटः' इत्यत्र नीलत्व-घटत्वयोरेकत्र व्यक्तावविरोधात्, विशेषणविशेष्यभावेन सामानाधिकरण्यम्। विशेषण-विशेष्यभावे सामानाधिकरण्यं हि 'एकत्र द्वयमि'ति रीत्यैकव्यक्तौ धर्मभेदमादाय धर्मद्वयवैशिष्ट्यस्य तत्राबाधे विवक्ष्यते। न चात्र सोऽपि प्रसरति। तथा 'सोऽयं देवदत्तः' इत्यत्रापि; तद्देश-तत्कालवैशिष्ट्यस्य वाक्यार्थबोधदशायां बाधात्॥

### मतभेदेन निर्विकल्पकस्वरूपभेदः, य एव श्रुत्युपष्टब्धः

तदेवं स्वरूपमात्रविषयकतया निर्विशेष-निर्विकल्पकप्रत्यक्षप्रामाण्यं तत्त्वमस्यादिवाक्यानां तात्पर्यानुसारेण विवेचितम्। तत्र निर्विकल्पस्वरूपं भट्ट-भास्कर-नैयायिकमतभेदेन बहुविधम्। तत्र श्रीभाष्यं स्वसिद्धान्तानुगुणं किमपि स्वरूपं तस्य स्वीकरोति। अद्वैतं तु श्रुत्यनुसारि निर्विकल्पकस्वरूपमेकं निर्वक्ति। सर्ववादिसंमतं निर्विकल्पकस्वरूपं न किमपि। न च तथा स्वीकारः किञ्चित्करोऽपि॥

श्रुत्यर्थोपपादनमद्वैतसंमतनिर्विशेषवस्तुविषयकत्वमन्तरा न संभवति। श्रीभाष्यसंमतनिर्विकल्पस्वरूपं तु नाम्नैव निर्विकल्पकम्, वस्तुतस्तु सविकल्पकमेव, तत्तु न युक्तमिति पूर्वमेव विवेचितम्॥

निर्विकल्पकपदस्वारस्यमद्वैतमत एव

विकल्पशब्दोऽहि विशेषेण कल्प्यमानमविद्याकल्पितं भ्रमविषयमेव स्वरसतोऽवगमयति। स च कल्पितं धर्मविशेषमात्रम्। तच्च निर्विकल्पकत्वं विषयतोऽद्वैतसिद्धान्त एव। तत एव ज्ञानस्यापि निर्विकल्पकत्वम्। अन्यत्र निष्प्रकारकत्वमात्रेण निर्विकल्पकत्वोपचारमात्रम्। अतो विकल्पशब्दोऽत्र कल्प्यमानं विशेषमेवाभिदधत् प्रकारांशेऽप्रामाण्यमेव सविकल्पकस्य ज्ञानस्याभिप्रैति, न तु प्रकारत्वमात्रम्। सर्वथा तु निर्विशेषनिर्विकल्पकप्रत्यक्षप्रामाण्यमनपोहम्॥

॥ इति निर्विशेषनिर्विकल्पकोपपत्तिः ॥

## अथ सन्मात्रप्रत्यक्षप्रामाण्योपपत्तिः

"सन् घटः" इति प्रत्यक्षस्य सदंश एव प्रामाण्यम् , न
घटादिविकल्पांशे

अयमाशयः—'सन् घटः' 'सन् पटः' इत्यादिप्रत्ययेषु सन्निति विशेष्यं सद्रूपं ब्रह्मैव भासते, इति तत्र सदंशस्य ज्ञानं ब्रह्मगतासत्त्वाभानाऽऽपादकाज्ञाननिवर्तकान्तःकरणवृत्ति, इत्यसत्त्वाभानापादकाज्ञाननिवर्तकवृत्त्युपहितं संविन्मात्रं तत्र प्रत्यक्षम्। तत्तु प्रमाणमेव, घटादिकं तु तत्र कल्पितं वस्तुगत्या मिथ्याभूतम् , इति तदंशे व्यावहारिकमेव प्रामाण्यम् , न तु पारमार्थिकं प्रामाण्यम्। सत्तादात्म्यमेव हि घटादौ भासते, न त्वधिष्ठानमिव तदबाधितम्। अतो घटादीनां नोक्तप्रत्ययेनाबाध्यत्वं गम्यते, इति घटादिमिथ्यात्वबोधकश्रुत्या 'सन् घटः' इति प्रत्यक्षेण बाधशङ्कैव नोत्तिष्ठतीति वस्तुस्थितिः। तत्र—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते।"

इति वार्तिकात् सर्वत्र प्रत्ययेषु ब्रह्मणोऽधिष्ठानस्य भानं न विरुध्यते; सर्वप्रत्ययवेद्यत्वाच्च ब्रह्मणः कल्पितस्य घटादेरिव प्रत्यक्षादिप्रमाणजन्यवृत्त्युपधानाद् नीरूपस्यापि सतः प्रत्यक्षविषयत्वम्॥

अत एव—

"न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते।"

इति,

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते॥"

इति च कालवन्नीरूपत्वेऽपि—

"न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते॥"

इति कल्पोऽपि कल्पते॥

घटादिप्रतीतेः सद्विषयकत्वेऽपि न मुक्त्यापातः;
ब्रह्मेतरविषयकत्वात्

तत्र कवितार्किकचक्रवर्तिपक्षेणोभयाकारैव वृत्तिः स्वीक्रियते, इति न तत्रानुपहितस्याखण्डस्य ब्रह्मणो भानम् , इति घटादिज्ञानमात्रेण भूषणोक्तरित्या न मुक्त्यापत्तिः। ब्रह्मविषयिण्यपीयं वृत्तिर्न ब्रह्ममात्रविषयिणी, अखण्डब्रह्मविषयिणी वा, इति न घटादिविकल्पप्रतीत्यनुपपत्तिः॥

इतरविषयत्वानिरूपितात्मविषयकस्य, उपहितान्याविषयकत्वविशिष्टोपहितविषयकस्यैव वा ज्ञानस्याज्ञाननिवर्तकत्वेन 'सन् घटः' इत्यादिज्ञानस्याविद्यानिवर्तकत्वायोगात्, अखण्डाकारवृत्तिस्त्वविद्यानिवर्तकोक्तविधब्रह्मवृत्तित्वात् घटाकारवृत्तिवैलक्षण्याद् न घटादिज्ञानमिव नाविद्यानिवर्तिका, इति अप्रामाण्यज्ञानास्कन्दितत्व-तदनास्कन्दितत्वादिविकल्प-तद्दूषणानि, अद्वितीयत्वाद्यवगाहित्व-तदनवगाहित्वादिविकल्पदूषणानि च 'सन् घटः' इत्यादिप्रत्यक्षस्याज्ञाननिवर्तकत्वासंभवादस्थाने। घटावच्छिन्नचैतन्यमेव सदात्मना घटाद्यधिष्ठानम्, इति घटादीनामिव सतोऽप्यैन्द्रियिकप्रत्यक्षत्वेऽपि "पराञ्चि खानि व्यतृणत् स्वयंभूः" इति श्रुतिविरोधोऽपि नात एव ॥

न च 'सन् घटः' इत्यादौ घटादौ प्रत्यक्षत्वं वार्यते, किन्तु तत्प्रत्यक्षप्रामाण्यमेव ॥

सन्मात्रप्रत्यक्षभङ्गवादनामकरणस्यायुक्तत्वम्
अप्रसक्तत्वात्, अनुक्तोपालम्भनत्वाच्च

भूषणेन तु — विकल्पाप्रामाण्यवादभङ्गवादं समर्थयितुं विकल्पप्रामाण्यप्रसाधनं नामैवास्य प्रकरणस्य निर्देष्टुमर्हति, येन विषयशुद्धिः शोधिता स्यात्, इति सन्मात्रप्रत्यक्षभङ्गप्रसाधनमिति नामान्तरकरणेन शतदूषणीविषयो दूरत एव निःसारितः, इत्यद्वैतानभिमतवाद एवात्र निरस्यते ॥

न ह्यद्वैतिनः 'घटः सन्नि'त्यादौ घटादिकम्, शुक्तिरजतज्ञानादौ रजतादिकं वाऽप्रत्यक्षं मन्यन्ते, किन्तु सदपि प्रत्यक्षम्, घटोऽपि प्रत्यक्षः; यथा शुक्तिरपि प्रत्यक्षा, रजतमपि प्रत्यक्षम्, तथापि 'इदं रजतमि'त्यादाविदमंश एव प्रत्यक्षस्य प्रामाण्यम्, रजतांशे तु प्रत्यक्षस्याप्रामाण्यमिव 'सन् घटः' इत्यादौ सदंश एव प्रत्यक्षस्य प्रामाण्यम्; घटांशे त्वप्रामाण्यमिति। तमिममर्थं खण्डयितुमेव विकल्पाप्रामाण्यवादभङ्गवादः शतदूषण्याम्, न तु विकल्पाप्रत्यक्षभङ्गवादः ॥

भूषणं तु नामान्तरकरणेनाप्रसक्तम्, अनुक्तं च कञ्चनार्थमादाय प्रकरणमिदं ग्रथ्नाति। तथा तमेव भावं मनसि निधाया'न्धेनैव नीयमाना यथान्धाः' इति श्रुत्याऽऽत्मानं भूषयत् समर्थयति—महता विस्तरेण घटादीनां 'सन् घटः' इत्यादिप्रत्ययेषु प्रत्यक्षत्वं शुक्तिरूप्यादीनामिव। सर्वमिदं न शतदूषणीसमर्थनार्थम्, शतभूषणीखण्डनार्थं वा ॥

शतभूषणी हि—एतन्मते 'इदं रजतमि'त्यादाविदमंश इव 'सन् घटः' इत्यादौ सदंश एव प्रामाण्यम् , रजतांश इव घटांशे त्वप्रामाण्यमित्युपक्रमते, इति 'सन् घटः' इति ज्ञानस्य सन्मात्रांशे प्रामाण्येनं प्रत्यक्षप्रमात्वमुपसंहरति। शतभूषण्यामपि सन्मात्रप्रत्यक्षभङ्गवादपरीक्षेति नामनिर्देशस्तु प्रमात्वमेव मनसि निधाय घटादीनां प्रत्यक्षप्रमात्वं प्रत्यक्षकल्पत्वमेवेति सूचयितुम् , इति प्रामाण्यपरीक्षैवात्र दूषणी-भूषण्योर्लक्ष्यम् , न तु प्रत्यक्षपरीक्षा ॥

शुक्तिरूप्यघटादिज्ञानयोरुभयत्रा-प्रामाण्यम् ,

सति चैवं शुक्तिरूप्य-घटयोरुभयोरप्यविद्यावृत्त्यैव प्रत्यक्षत्ववादः, सन्मात्रविषयकान्तःकरणवृत्तिकल्पनवैयर्थ्योल्लेखः, घटादेरप्रत्यक्षत्वे चक्षुरादिद्वाराङ्गीकारवैतथ्यम् , रज्जुसर्पादिज्ञानेभ्यः 'सन् घटः' इत्यादिज्ञानस्यावैलक्षण्यकथनम् , 'घटः सन्नि' ति ज्ञानस्य 'घटः सन्'इत्यादिज्ञानेन बाधापत्तिरित्यादिकं सर्वं भूषणस्योल्लक्ष्यं घटस्य पटीकरणमात्रम् , न शतदूषणीरक्षणम् , शतभूषणीशिक्षणं वाऽनेन विस्तरेण ॥

सन्मात्रप्रत्यक्षप्रामाण्यवादेऽपि शुक्तिरूप्यज्ञाने रजतांशेऽविद्यावृत्तिः, शुक्त्याकारे त्वन्तःकरणवृत्तिः, घटादौ तु घटादीनामन्तःकरणवृत्तिरेव, न तु शुक्तिरूप्यादीनामिवाविद्यावृत्तिः, प्रातिभासिकत्वं वा। एवं सदाकाराऽप्यन्तःकरणवृत्तिरेव, साक्षिभास्यत्वं तूभयोरपि प्रत्यक्षदशायां समानम् , परन्तु प्रातिभासिकं साक्षिभास्यमेव यावत्स्वसत्त्वमेव, घटादिकं तु परोक्षम् , अपरोक्षं च। अपरोक्षतादशायामेव, साक्षिभास्यमेवेत्यादिवैलक्षण्यं बहुविधं शुक्तिरूप्य-घटादिज्ञानयोर्वर्तते ॥

अपरो विशेषः—शुक्तिरूप्यादीनां तदधिष्ठानविषयतूलाज्ञानानि बहूनि, तत्तद्रजतादीनि च कालान्तरेऽपि तत्तदधिष्ठाने कल्पितान्यपि तत्तदुपादानतूलाज्ञाननानात्वाद् भिन्नान्येव प्रतिज्ञानम् , घटादीनि त्वेकसदधिष्ठानकानि, तदाश्रितैकाविद्याकार्याणि, यावत्तत्सत्त्वं ज्ञानभेदेऽपि तान्येव, न त्वन्यानि घटादीनि, सद्रूपब्रह्माखण्डाकारवृत्तिमात्रबाध्यानीति वस्तुस्थितिः। सति चैवं घटज्ञानेन घटबाधापत्तिरित्यादिदूषणानि सर्वाणि निर्मूलानि। यथा च सन्मात्रज्ञानम् , न वाऽधिष्ठानतत्त्वज्ञानं नाज्ञानादिबाधकम् , तथा पूर्वमुक्तम् ॥

एतेन—पाश्चात्यप्रवृत्तिहेतुघटादिज्ञानप्रमात्व-भ्रमत्वविकल्प-दूषणान्यपि निरालम्बानि। किं बहुना? सर्वमिदं प्रकरणमनुक्तोपलम्भनशबलमद्वैतसिद्धान्तमस्मिन्नंशे न मात्रयाऽपि स्पृशति ॥

सन्मात्रप्रामाण्यवादेन सर्वस्य न सर्वविकल्पविषयकत्वापत्तिः,
सामान्यस्यैक्येऽपि विशेषाणां बाधात्, इति
प्रतिनियतव्यवहाराद्युपपत्तिः

"सन् घटः" इत्यस्य सन्मात्रविषयकत्वेन प्रामाण्यम्, घटाद्यंशेऽप्रामाण्यमिति सिद्धान्ते कथं सर्वं ज्ञानं सर्वविषयकम्? किं सर्वस्यापि ज्ञानस्य सदधिष्ठानविषयकत्वात्, उतैकविकल्पविषयकत्वाद्वा। आद्ये विकल्पाभिमुखीं प्रवृत्तिं प्रति विकल्पज्ञानमेव प्रयोजकम्, नैकाधिष्ठानकत्वम्, येन सर्वाभिमुखी प्रवृत्तिरापद्येत; अन्यथैकस्यां रज्जौ सर्प-भूदलन-जलधारादिभ्रमे सर्पभ्रमकार्यं भूदलनादिभ्रमादापद्येत। एकविकल्पविषयकत्वं तु न सर्वेषां भ्रमाणाम्, इति कथमश्वार्थी महिषदर्शनेऽपि प्रवर्तेत? तत्तद्विकल्पज्ञानात् तत्तदभिमुखप्रवृत्तिनिर्वाहो ह्येकसदधिष्ठानकत्वेऽप्युपपद्यते ॥

न चात्र कल्पे 'सन्' इत्येव सर्वं ज्ञानम्, किन्तु 'सन् घटः' 'सन् पटः' इत्येवं सर्वेषां ज्ञानानां सदधिकघटादिविषयकत्वमपि, इति कथं वा सर्वव्यवहारलोपप्रसङ्गः? अतः सन्मात्रप्रत्यक्षप्रामाण्येऽपि घटादिप्रत्यक्षाणां सर्वेषामेकसदधिष्ठानविषयकाणामपि विषयवैलक्षण्यम्, अश्वार्थिनो महिषदर्शनेन निवृत्तिः, प्रतिनियतघटादिशब्दमात्रस्मरणम्, प्रतिनियतव्यवहारनिर्वाहः, शुक्तिरूप्य-घटादिज्ञानवैलक्षण्यं च सर्वमुपपद्यते ॥

तत्र 'सन् घटः' इत्यादौ भासमानानां विशेषाणामितरव्यावृत्तस्वरूपत्वेऽपि घटादिकं स्वस्वरूपेणैव भासते, इतरव्यावृत्तिस्तु तत्र घटत्वादिरूपेणैव भासते, व्यावृत्तिज्ञानं तु पाष्ठिकम्, न 'सन् घटः' इत्यादिज्ञानेऽपि भासते, इति नैकसामग्रीग्राह्यत्वविरोधोऽभावज्ञानादाविव; अन्यथा सर्वेषां भावानां ज्ञानं तदितरसर्वव्यावृत्ततयैव यदि विवक्ष्यते, तर्हि सर्वेतरप्रतियोगिनां युगशतेनापि दुर्ज्ञेयतयेदन्तया सर्वस्य भावस्य व्यवहारमात्रं लुप्येत। अधिकं त्वनन्तरत एव भेददूषणभङ्गतोऽधिगन्तव्यम् ॥

'सन् घटः' इत्यत्र भासमानं हि सद्रूपं ब्रह्मानाद्यविद्याकल्पितसद्रूपेण ज्ञानेऽप्यखण्डात्मना न भासते, इति तस्य सर्वप्रत्ययवेद्यत्वेऽपि न घटादिज्ञानमात्रेण मुक्तिरित्यादिकं सर्वमनुपदमेवोक्तम् ॥

'घटोऽसन्नि'त्ति प्रतीत्यनापत्तिः

तत्र 'घटः सन्' इत्यत्र सत्पदार्थोऽनेकारोप्याधिष्ठानं सामान्यं प्रतीयते। घटादिकं विशेषस्ततो व्यावृत्तः। सतोऽधिष्ठानस्य सर्वत्र तादात्म्येन प्रतीतिः। न चैवं घटः सामान्यम्; पटादिव्यावृत्त्या प्रतीतेः। न च असन्नपि सामान्यम्; 'असन् घटः' इत्यप्रतीतेः॥

तत्राधिष्ठानत्वप्रयुक्तत्वात् सत्तादात्म्यस्य सत्त्वेन प्रतीतिः, असत्तु नाधिष्ठानम्, इति ना'सन् घटः' इति प्रतीतिः। एवं पटोऽपि घटस्य नाधिष्ठानम्, अतः 'घटः पटः' इति न सामानाधिकरण्यम्; सामानाधिकरण्यव्याप्यत्वात्तधिष्ठानत्वस्य। तदधिष्ठानं तत्समानाधिकरणमिति निष्कर्षः॥

एतेन—'घटोऽसन्' इत्यत्र घटस्यानुवर्तमानत्वात् सतो व्यावर्तनाच्च विपरिवर्तप्रसङ्ग इति—परास्तम्; तत्र 'घटोऽसन्' इत्यत्र घटस्यानुवर्तमानत्वं घटत्वासत्त्वयोरेकत्र व्यक्तौ यदि सामानाधिकरण्यमात्रेण, यदि चासत्त्व-तुच्छत्वेतरधर्मविशेषत्वेन, तर्हि न सदिव घटो वा, असन् वा परस्परस्याधिष्ठानम्, आरोप्यं वेति नाधिष्ठानांशे प्रमात्वविचारेऽत्र तस्य क्वापि सङ्गतिः; अन्यतरस्य स्वतन्त्रस्याधिष्ठानत्वं तु किञ्चिद्रूपेण ज्ञानविषयत्वसमवहिताज्ञानविषयचैतन्यत्वाभावात् दुर्निरूपम्। न च घटो ब्रह्माश्रितब्रह्मविषयाज्ञानपरिणामः, अज्ञानविषयब्रह्मविवर्तश्च कदापि सतो व्यावृत्तिमर्हति, इति घटोऽसन्नित्यनुवृत्तिबोधोऽसंभवी। तस्यासदधिष्ठानत्वं तु बाधितम्, इति सद्व्यावृत्त एव, नानुवर्तमानः कथमपि॥

सदसत्प्रतीतिनियमो गीतायामपि

इदमेवोपपादयितुम्—

"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥"

इति गीता शतभूषण्यामवातारि, तेन च सत् सदेव, यत् सदात्मना प्रतीयते, न तदसदात्मना प्रतीयते। यच्चासत्, न तत् सदिति ज्ञायत इति सदात्मना प्रतीयमानं घटादिकं नासदात्मना, अन्यात्मना वा भातीति विवक्षणात् 'घटोऽसन्' इत्यत्र घटस्यासति, असतो वा घटेऽनुवृत्तिर्बाधिता, इति न विपरिवर्तप्रसङ्गः। न चेयं गीता पूर्ववाक्येनान्वितोक्तमर्थं बोधयितुं क्षमाऽनन्विता भूषणोक्तरीत्या॥

न चात्र गीताया देहात्मनोरस्थैर्याविनाश एव तात्पर्यम् , देहास्थैर्यस्योत्तरत्र गीयमानत्वात् ॥

आत्मनित्यत्वस्यानन्तरमेव—

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।"

इत्यनेन वर्णयिष्यमाणत्वाच्च, किन्तु "न त्वेवाहमि"ति प्रस्तुतनिरुपाधिकात्मस्वरूपनित्यत्वम् , तदुपाधिसामान्यानित्यत्वमेव च प्रतिपिपादयिषितम् , इति सतो न बाधः, असतस्तु न सत्त्वमित्येवमर्थत्वमेव युक्तम् । गीताश्रीभाष्यार्थसमालोचनं भगवत्पादभाष्यसमर्थनं च गीतातरङ्गिण्यां व्यक्तम् ॥

तत्र 'घटोऽसन्' 'घटो नष्टः' इति प्रतीतेर्घटादीनां नाशो योऽवगम्यते, तस्यापि "नासतो विद्यते भावः" इत्यनेनैवोपपादनम् , भावः = सत्ता = अबाध्यत्वम् , तद्यदि नास्ति, तर्हि नाशोऽर्थसिद्धः । कारणात्मनाप्यभावः खलु बाधः ॥

### 'नासतः' इति गीतायामसत्पदं न देहमात्रपरम्

न चात्रासत इति देहमात्रस्य ग्रहणम् ; किन्त्वसत्त्वसामान्यात् सर्वेषां सद्व्यावृत्तानाम् , इति घटप्रतीतिमात्रेऽपि तत्तद्धटस्य नानुवृत्तिः । तत्प्रतीतौ भानमात्रं तु नानुवृत्तिः । सतोऽनुवृत्तिस्तु स्वेतरप्रकारज्ञानमात्रे विशेष्यतया भानात् स्वरसा । अतः सत एवानुवृत्तिः, न तु घटस्य । किं च घटस्य केनानुवृत्तिः, यदि सता सत्ताविशिष्टेन सर्वेण, तर्हि पटेनापि तदनुवृत्त्यापत्तिः ॥

### सत्पदार्थस्तु ब्रह्मैव

'घटः सन्' 'सन् घटः' इत्याकारद्वयं ज्ञानस्य । तच्च विशेष्यविशेषणेषु सर्वप्रत्ययविषयेष्वपि वर्तत इत्युत्सर्गः । तत्र घटस्य विशेष्यत्वं सर्वप्रतीतिविषयसत्तादात्म्यमात्रेण परस्पराध्याससिद्धेन । न चैवं सत इव घटस्य सर्वत्र पटादिज्ञानेऽपि विशेष्यतया सदात्मना प्रतीतिः । अतः 'घटः सन्' इत्यत्र न सत् स्वरूपेणावभासते । अतः सद्विशेष्यकघटप्रतीतिमादायैव सतोऽनुवर्तमानत्वं वर्णनीयम् । न हि घटः पटो वा सतोऽधिष्ठानम् , येनाधिष्ठानविधया घटादीनां विशेषाणामनुवृत्तिः स्यात् , इति घटस्यापि सर्वत्र सदात्मना प्रतीतिस्तु न बाधिता । न चैतावता घटात्मनाऽनुवृत्तिः, इति न विशेषाणामैक्यम् ; विशेषरूपेणाननुवृत्तेः, प्रत्युत व्यावृत्तेश्च ॥

सतो न व्यावर्तमानत्वं विशेषाणामिव

तदिदं व्यावर्तमानत्वं नाधिष्ठानस्य सर्वत्रानुवर्तमानस्य, किन्तु घटादेरेव। अतो भेदो नेतरव्यावृत्तिरूपः, किन्तु विकल्पितः कश्चनाभेदाविरोधी धर्मः। व्यक्तं चैतदपि ब्रह्मसिद्धौ। अत एव 'इदं रजतमि'त्यादाविदंपदार्थोऽपि न रजतव्यावृत्ततया प्रतीयते, अन्यथा रजतव्यावृत्ततया ज्ञायमान इदंपदार्थे रजतभ्रमानुपपत्तिः॥

घट-पटादीनां नार्थक्रियासाङ्कर्यापातः

अतः स्वरूपेणैव घटादीनां बोधमादायैव तत्तदर्थक्रियाकारिताव्यवस्था, न तु सदात्मना बोधम्। अत एव घटादीनां प्रकारतयैव भानम्। प्रकाराश्च विकल्पा तदितरव्यावृत्ताकारेणैवार्थक्रियाकारिणः। तत्तदर्थक्रियाकारित्वं हि सत्त्वं घटादीनां विकल्पानामेव, न तु सतोऽधिष्ठानस्य, इति सदात्मनैक्येऽपि घट-पटादीनां नार्थक्रियासाङ्कर्यापातः॥

यत्र विशेषणपदं प्रयुक्तम्, तत्र तदितरमात्रव्यावृत्तिस्तस्येति वक्तव्यम्; अन्यथा विशेषणत्वायोगः, इति तत्र तदितरव्यावृत्तेर्विद्यमानत्वेऽपि तस्या भानं यदि प्रयोक्तुरिच्छाधीनम्, तर्हि वक्तुरिच्छायां सत्यां सर्वविशेषाविवक्षापि न दोषाय। सति चैवं 'पटः सन्' इत्यत्र यदि तदितरव्यावृत्तिमात्रं लक्ष्यम्, तर्हि विशेषणत्वमेव तस्य हीयेत। अयमेव न्यायः—'घटः सन्नि' त्यादावपि प्रति ज्ञानं सदात्मना भानात्? सदात्मना भानं संमतमेव, परन्तु न सदात्मनाऽर्थक्रियाकारित्वम्, किं बहुना? "सद्भावेन ह्यजं सर्वम्" इति वचनात् घटादीनां सदात्मनः नोत्पत्त्यादिकमपि अयमेव न्यायः कटक-कुण्डलादिष्वपि; तत्रापि हेमात्मनाऽभेदेऽपि न सर्वेषां तत्तत्प्रतिनियततत्तदर्थक्रियाकारित्वसाङ्कर्यम्, इति सर्वत्र घटानुवृत्तिकथा कथामात्रमेव। अतः 'सन् घटः' इत्येव प्रधान आकारः, यत्र सतो विशेष्यत्वमधिष्ठानत्वं वा विवक्ष्यते। वस्तुतस्तु 'घटः सन्नि'त्यत्रापि सतोऽधिष्ठानस्य तादात्म्यमात्रं भासते, न तु सन् प्रकारः, इति फलतो न विशेष आकारद्वयेऽपि। सतः सर्वत्रानुवृत्तिरविरुद्धा; सति तदितरेषामारोपात्॥

परस्पराध्यासेऽधिष्ठानस्य संसर्गमात्राध्यासः, अतो न ब्रह्मणोऽपि मिथ्यात्वम्

तत्र च परस्पराध्यासमहिम्ना 'सन् घटः' इतिवत् 'घटः सन्नि' त्याकारमात्रे भिद्यमानेऽपि प्रथम आकारे घटस्य सत्तादात्म्येन स्वयमप्यध्यस्त-

तया भानम् , 'घटः सन्नि'त्यत्र तु घटे सतः संसर्गमात्रस्याध्यस्तस्य भानम् , न तु सतोऽध्यस्ततयेति तु निष्कर्षः । अतो घटादेरेवाध्यस्तस्य मिथ्यात्वम् , न तु सतोऽनध्यस्तस्य; अन्यथा रजतज्ञान इदमर्थस्यापि बाधापत्तिः, एवं घटादिज्ञानेन सतो मिथ्यात्वमिति चापद्येत । सत एवानुवृत्तौ तु सतः सत्यत्वम् , सर्वाध्यस्तमिथ्यात्वं च भवति । परस्पराध्यासे ह्ययमेव नीतिः ॥

तत्र घटादीनां सत्तादात्म्यसंसर्गाधारत्वेऽपि नाधिष्ठानत्वम् ; जडत्वेन तस्याज्ञानाविषयत्वात् । अवच्छिन्नचैतन्याध्यासवादस्तु नामान्तरेण सदधिष्ठानकाध्यास एवेति सर्वं सुस्थम् ॥

तत्र घटज्ञानस्य सन् घट इत्येवाकारः । तत्र क्रियापदं त्वस्तीत्यध्याहारार्थम् । सत्पदार्थस्तु कालसम्बन्धमात्रम् , न तु सद्रूपम् । "तत्त्वमसी" त्यत्र तु यत्राखण्डाकारवृत्तिः, तत्र पृथक् सदात्मना प्रतीतेरभावात् , असिपदं वाक्यसाधुत्वार्थमात्रम् , न तु सर्वविशेषस्वरूपैक्यातिरिक्तं किमपि तत्रार्थः ॥

'घटो भाती'त्यादौ सतोऽपि भानमर्थसिद्धम्

एतेन—"सदेव सोम्येदमग्र आसीत्" इत्यादावासीत् पदस्यापि कालसम्बन्धमात्रमर्थः, न तु सद्रूपमिति—व्याख्यातम् । ततश्च यत्र यत्र घटो भातीति ज्ञानाकारः, तत्राभानापादकाज्ञाननिवर्तकापरोक्षवृत्त्याऽसत्त्वापादकाज्ञाननिवृत्तेरपि सिद्धतया भातीतिपदेनैव चिन्मात्रस्येव सतोऽप्यनुवृत्तेः प्रतीतेः सत्पदाभावेऽपि तत्कृत्यमर्थाक्षिप्तं वर्तत एव, इति न सन्निति पदप्रयोगोऽपेक्ष्यते । सर्वथा तु सदात्मना, चिदात्मना वा ज्ञातं सद्रूपं ब्रह्मैवाधिष्ठानतया भासते; इति तत्रैव घटाद्याकारवृत्त्युपहितस्य प्रत्यक्षप्रमात्वम् ; घटादीनां त्वध्यासमात्रत्वात् सतो व्यावृत्तानां मिथ्यात्वम् ॥

सन्मात्रज्ञानस्य प्रत्यक्षत्व-परोक्षत्व-विरोधः, अतः
एव प्रत्यक्षत्वार्थं शास्त्रापेक्षा

एतेन—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते ॥"

इत्यपि—व्याख्यातम् । इदं हि सतः सर्वप्रत्यये प्राधान्यमेव बोधयति, न तु प्रत्ययानां प्रत्यक्षत्वम् , परोक्षत्वं वा नियच्छति । तेन ब्रह्मणः परोक्षत्वम् , प्रत्यक्षत्वं वा तद्विषयपरोक्षत्वाद्यधीनम् , इति न विषयप्रत्यक्षत्व-तत्परोक्षत्वे वारयति ॥

न हीदं प्रकरणं सन्मात्रप्रत्यक्षत्वमात्रं प्रकृत्य, किन्तु सन्मात्रज्ञान-प्रामाण्यम्, इति नेदं वार्तिकमस्य प्रकरणस्य प्रतिकूलम्, अनुकूलं वा; अस्य प्रत्यक्षादिज्ञानप्रामाण्यानियामकत्वात् ॥

न चैवं सति शास्त्रवैयर्थ्यम्; उपहितब्रह्मपरत्वादस्य, सर्वोपाधिविरहितसंविन्मात्रविषयाज्ञाननिवर्तकत्वाच्च शास्त्रस्य; उभयत्र विषयभेदात् ॥

निष्कर्षस्तु—ब्रह्म सर्वप्रत्ययवेद्यं सदात्मना शास्त्रबोध्यं संविद्रूपम्। तत्र शास्त्रेतरप्रमाणेनाखण्डब्रह्माग्रहणाद् न शास्त्रवैयर्थ्यम्। न चाखण्डं ब्रह्म प्रत्यक्षादिगोचरः, इति तस्य संविन्मात्रावगाहित्वं सुस्थम्। तदिदं सिद्धम्—यत् सन्मात्रावगाहिप्रत्यक्षमेवाधिष्ठानतया ब्रह्म गृह्णत् प्रमाणं सर्वत्र सत्प्रतीतावपि विशेषाणां भानेऽपि। यद्यपि—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥"

इति न्यायात् सदात्मनाऽभेदः, तत्तद्विशेषात्मना तु भेद एव। तदुक्तम्—

"हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥"

इति ॥

सति चैवं श्रीभाष्येऽश्वार्थिनां महिषदर्शने प्रवृत्तिः स्यादित्त्यापादनं किमभिप्रेत्य? यदि सदात्मत्वमभिप्रेत्य, तर्हि न तत्र प्रवृत्तिः; पूर्वोक्तरीत्याऽसत इव सदात्मनाऽपि कस्याप्यर्थक्रियाकारित्वाभावात्। अश्वाभिमुखप्रवृत्तेरश्वात्मना प्रतीतिप्रयुक्तत्वेन सदात्मना प्रतीत्यनिबन्धनत्वात्। अश्वार्थिनः प्रवृत्तिर्ह्यश्वात्मना दर्शनायत्ता, न महिषात्मना दर्शनप्रयुक्ताः; अश्व-महिषादिविशेषाणां तेन रूपेण भेदात्, इति कथं प्रवृत्त्यनियमः? तत्र श्रीभाष्यापादनतात्पर्यम्—'तदभिन्नाभिन्नस्य तदभिन्नत्वमि'ति न्यायेनाश्वाभिन्नसदभिन्नत्वाद् महिषदर्शनेऽप्यश्वार्थिनः प्रवृत्तिः स्यादिति वक्तव्यम् ॥

तत्र चाश्व-महिषादयः, घट-पटादयो वा विशेषाः, परस्परमभिन्नाः; सद्बुद्धिविषयत्वादित्यनुमान एव तात्पर्यमभिप्रेत्य शतभूषण्युक्तानुमानं प्रायुङ्क्त ॥

### सर्वस्य सर्वप्रतीतिविषयत्वमिति भूषणनिरासः

भूषणं तु सर्वस्य सर्वप्रतीतिविषयत्वादश्वार्थिनो महिषदर्शने प्रवृत्तिः स्यादिति—लिखति, कथमयमर्थः श्रीभाष्याद्गम्यते? सन्मात्रग्राहि-

प्रत्यक्षप्रामाण्ये कथं सर्वस्य सर्वप्रत्ययविषयत्वम् ? यदि सर्वस्य सदात्मकत्वात्, तर्हि सदात्मना तत्तदात्मनां ग्रहणेनाश्वार्थिनां महिषदर्शने प्रवृत्त्यापादने सदाकारातिरिक्ताश्वाद्याकाराभावेऽश्व-महिषादिभेदव्यवहारायोगः, तत्सत्त्वे च तेन तेनाकारेण दर्शनं न सर्वेषु प्रत्ययेष्विति शतभूषणीरीतिरेवात्र शरणीकर्तव्या, इति सर्वं सुस्थम् ॥

'सन् घटः' इत्यादिप्रतीतिरेव सर्वत्र, न तु सन् इत्येव

एतेन—प्रत्यक्षस्य सन्मात्रविषयकतया घट-पटादिभेदस्य प्रत्यक्षाविषयतया तस्य प्रत्यक्षबाधितत्वकथनमप्यसङ्गतमिति—व्याख्यातम्; सन्मात्रप्रत्यक्षप्रामाण्यप्रकरणं घटादीनां प्रत्यक्षत्वं न वारयतीति कृत्वैव प्रवर्तत इति आदित उद्बोध्यते, न तु तस्य प्रत्यक्षाविषयत्वं वारयतीति कृत्वैव, तस्य प्रत्यक्षाविषयत्वम्, इति ब्रह्मसिद्धि तत्त्वशुद्ध्यादौ सर्वमिदं व्यक्तम्, यस्यैव मतनिरासार्थमिदं श्रीभाष्यम्। तथापि भूषणोक्तरीत्योक्तघटादिप्रत्यक्षस्य प्रपञ्चमिथ्यात्वबाधकत्वं तु न संभवति; घटाद्यंशे तस्य भ्रमत्वेन प्रमात्वाभावात्, इति कृत्वैव ब्रह्मसिद्ध्यादावस्य विषयस्यावतारणम्। न हि सर्वं ज्ञानं सदित्याकारमात्रम्, न तु 'सन् घटः', 'सन् पटः','सन्नश्वः' 'सन् महिषः' इत्याकारमिति युक्तम्, येन सदित्येव सर्वं दर्शनं स्यात् ॥

श्रुति-प्रत्यक्षयोः सत्तैक्यवादेन, सत्तात्रैविध्यवादेन चाविरोधः

तदेवमेकसत्तावादं गृहीत्वा 'सन् घटः' इत्यादौ सन्मात्रप्रत्यक्षस्यैव प्रामाण्यमुक्तम्, सत्तात्रैविध्यवादे त्वर्थक्रियाकारित्वसत्ताजात्यादिसम्बन्धमादाय यथाश्रुतयोजनमेव मन्यते। तत्र प्रत्यक्षेणाबाध्यस्वरूपसत्ताया अनङ्गीकारात् प्रपञ्चमिथ्यात्व-श्रुतितत्सत्त्वावगाहिप्रत्यक्षयोर्न विरोधलेशोऽपि। परन्तु तत् प्रस्थानान्तरम्। न चैकसत्तावादस्योपेक्षाऽत्र, परप्रक्रियामनुसृत्यापि प्रत्यक्ष-श्रुत्योरविरोधः समर्थयितुं शक्यत इति कृत्वा प्रस्थानस्यास्य प्रवृत्तिः ॥

अन्यदर्शनेनान्यत्र प्रवृत्त्यनुपपत्तिः

तदिदं सिद्धं सन्मात्रप्रत्यक्षप्रामाण्यवादे घटादीनां सदात्मनाऽभेदेऽपि घटात्मना भेदः, यथा श्रीभाष्यादिमते ब्रह्मोपादानकत्वेन ब्रह्मात्मनाऽभेदेऽपि तत्तत्कार्यात्मना भेदः, एवमन्यत्रापि कारणात्मनाऽभेदेऽपि कार्या-

त्मना भेदः, एवमत्राधिष्ठानात्मनाऽभेदेऽप्यारोपितात्मना भेदात् सन्मात्र-प्रत्यक्षे सत्तादात्म्येन, सदात्मना वाऽश्वादिप्रतीतावपि नान्यदर्शनेऽन्यार्थप्र-वृत्तिरिति सुस्थम् ॥

भूषणं तु शतभूषण्युक्तं रूपभेदमनादृत्य "यश्चोभयोरि"ति न्यायेना-श्वार्थिनो महिषदर्शनापत्तिं परिजिहीर्षति । भवतु, भूषणेन प्रवृत्तिनियामकं किमपि केनापि वर्णयितुं न शक्यत इत्युच्यते । शतभूषणी तु तन्नियामकमपि "कार्यात्मना तु नानात्वमि"ति संग्रहश्लोकानुसारेणोपन्यस्यति ॥

एतेन—'इदं रजतमि'त्यत्राप्यधिष्ठानांशे प्रत्यक्षस्य प्रमात्वात् तत्रा-प्यधिष्ठानानुवेधस्य सन्मात्रविषयकत्वाद् महिषदर्शनेऽपि प्रवृत्त्यापत्तिः । एतेन—प्रातिभासिकरजतज्ञानेन व्यावहारिकरजतप्रवृत्त्यापत्तिरपि भूष-णस्य—परास्ता; पूर्वोक्तनयेनैवास्य दत्तोत्तरत्वात् ॥

### प्रातिभासिकानां सर्वेषामेकाधिष्ठानात्मनाऽभेदेऽपि नाश्व-महिषादीनामिवैकार्थक्रियाकारित्वम्

न हि प्रातिभासिकं रजतं प्रातिभासिकमन्यच्चैकम्, इति कथं वाऽश्व-महिषावेकौ? इति सदात्मनाऽभेदेऽपि तत्तद्रजतात्मना भेदाद् नान्यज्ञानेनान्यार्थप्रवृत्त्युपपत्तिः । श्रीभाष्यमते तु सर्वज्ञानयाथार्थ्य-वादाद् नात्र रजतयोर्भेद इति भ्रमत्वेन व्यवह्रियमाणज्ञानविषयशुक्ति-देशस्थरजतज्ञानाद् आपणस्थरजताभिमुखी प्रवृत्तिरापद्येत ॥

### श्रीभाष्यमते सर्वज्ञानयाथार्थ्यवादात् कथं शुक्तिरूप्यज्ञानस्य यथार्थार्थक्रियाकारित्वम्

तत्र भूषणं लिखति—कार्योपयोगिरजतस्यासत्त्वात् न तत्र प्रवृत्तिः—इति । इदमेवात्र पृच्छ्यते—कथं कार्यानुपयोगित्वम्? कथं च पुरः-स्थितानां शुक्तिशकलानां दाहेऽप्यणुमात्रमपि कार्योपयोगिरजतांशस्य नोपलभ्यत इति? तत्रोत्तरति भूषणम्—लब्धुं शक्यते, यदि रजतांश-पृथक्करणशक्तिः कस्यचन स्यात्? न च कस्यापि सा शक्तिर्वर्तते । यदि शक्तः कश्चन स्यात्, यतताम्, स तथा पृथक् करोतु, कस्तद् वारयिष्य-तीति । परन्तु यत् शुक्तिशकलात् रजतांशपृथक्करणशक्तिमतोऽद्य यावददृष्टत्वेऽपि तत्रैव सत्यरजतस्यैव भानमिति हठवादं न भूषणं परि-त्यजति ॥

सन्मात्रप्रामाण्यवादोपसंहारः, प्रत्यक्षेणागमस्याबाधश्च

अनेनेदमपि भूषणं ज्ञापयति—यत्र यत्र यथा यथा भ्रमो भवति, तत्र तत्र भ्रमविषयस्य वस्तुनः सत्यत्वात्, तेन सत्येन कार्योपयोगिना तत्तत्कार्यं शक्तानां सन्तोषायैव भवेत्—इति, भवतु, सन्तुष्यतु यथाशक्यं तत्र फलानुभवेन। इदं तु सिद्धम्—सन्मात्रप्रत्ययस्यैवाधिष्ठानविषयस्य प्रामाण्यम्, न तु शुक्तिरजतादीनाम्, घटादीनां वा सत्तादात्म्यभानेऽपि, तदंशे प्रत्यक्षाणामपि न प्रामाण्यम्—इति, इति 'सन् घटः' इत्यादिप्रत्यक्षबाधो न मिथ्यात्वश्रुतेः, तदुपपादकानुमानवर्गस्य वेति सर्वं सुस्थम्॥

॥ इति सन्मात्रप्रत्यक्षप्रामाण्योपपत्तिः ॥

# भेददूषणोपपत्तिः

प्रपञ्चमिथ्यात्वप्रकरणात् पृथक् भेददूषणप्रकरणप्रस्तावे
निमित्तम्

ब्रह्मनिमित्तकारणमात्रावलम्बिनो जीवब्रह्मभेदम् , जडे जीवेश्वरभेदं चात्यन्तिकं स्वीकुर्वन्ति । तत्र तदभिन्ननिमित्तोपादनवादिषु भेदाभेदवादमूरीकुर्वाणा भास्करादयस्तु समप्रधानौ भेदाभेदौ; तथापि कार्यात्मना, कारणात्मना च भेदाभेदावित्यभिप्रयन्तो भेदाभेदयोरविरोधमाऽऽतिष्ठन्ते । श्रीभाष्यानुयायिनोऽप्यभिन्ननिमित्तोपादनताशयाः सत्यम् , समप्रधानौ भेदाभेदौ, परन्तु भेदः परतन्त्रः, अभेदः प्रधान इति स्वीकुर्वते ॥

तत्राऽऽद्ये सामानाधिकरण्यं "सर्वं खल्विदं ब्रह्मे"त्यादावौपचारिकम् , द्वितीये ब्रह्मणः साक्षात्परिणामित्वेनोपादानतया द्रव्यैक्येन सामानाधिकरण्यम् , परन्तु विशिष्टयोरेव मुख्यम् , सर्वत्र सर्वसत्यत्वम् ॥

अद्वैतसिद्धान्तेऽपि श्रीभाष्यमत इव विशिष्टमेवोपादानम् , परन्तु विशेष्यं निमित्तमुपादानं च, विशेषणं तूपादानकारणमात्रम् , तत्राद्यमधिष्ठानतया, द्वितीयं परिणामितयेत्येकं प्रस्थानम् । तत्र श्रीभाष्यमते ब्रह्ममात्रं निमित्तम्, विशिष्टमेव मुख्यतयोपचारादुपादानम् , अद्वैतमते तु ब्रह्मोपादानमेव, निमित्तं विशिष्टमुपहितमिति विशेषः ॥

अत्र सर्वत्र कार्य-कारणभावो भेदप्रतीतिप्राधान्यमवलम्ब्यैव; आत्यन्तिकभेदप्रतीतिमात्रं मुख्यमवलम्ब्य केवलनिमित्तकारणता । भेदाभेदाभ्यां सामानाधिकरण्यप्रतीतिमवलम्ब्यापराणि । सर्वत्र प्रपञ्चकार्यत्वे न विवादः ॥

तच्च प्रपञ्चकार्यत्वं भेदसत्यत्वेन वा, भेदमिथ्यात्वेन वेति निर्णयमाश्रित्यैव निर्णेयम् , इति भेदमिथ्यात्व-सत्यत्वनिर्णयापेक्षत्वात् प्रपञ्चमिथ्यात्व-सत्यत्वनिर्णयस्य, प्रपञ्चमिथ्यात्वनिर्णयेन गतार्थत्वेऽपि भेदमिथ्यात्वनिर्णयस्योपजीव्यत्वात् स्वतन्त्रभेदमिथ्यात्वं निर्णेतुं भेददूषणमद्वैतिनाम् ॥

### भेददूषणेन न प्रपञ्चापलापः, तस्यातुच्छत्वात् , कार्योपयोगित्वाच्च, प्रत्युत श्रीभाष्यमत एव कार्यानुपयोगित्वात् शुक्तिरूप्यापलापः, सर्वज्ञानयाथार्थ्यवादश्च व्याहतः

तत्र भेदस्य, प्रपञ्चस्य वा मिथ्यात्वे प्रपञ्चापलाप इति वासना तु दुरत्यया भूषणं बहुधा बाधते, कं वाऽपलापपदार्थं मत्वा क्रियासमभिहारेणात्र भूषणमाक्रमते—किं शशशृङ्गादिवत् , उत भूषणाद्यभिमतशुक्तिरूप्यादिवत् कार्यानुपयोगित्वमात्रेण। तत्राद्येऽपसिद्धान्तः, द्वितीये तु बाधः; सर्वस्य प्रपञ्चस्य यथायथं कार्योपयोगित्वात् ॥

इदमत्र पृच्छ्यते—भूषणमते शुक्तिरूप्यस्य कार्यानुपयोगित्वं तस्य याथार्थ्येऽपि कदाऽवगतम्—शुक्तिरूप्यज्ञानदशायाम् , उत परीक्ष्य सहस्रशुक्तिभारसंभरणेऽपि शुद्धरजतपृथक्करणमशक्यं विज्ञाय। आद्ये सहस्ररजतभारसंभरणनिमित्तानन्द एव भूषणस्याप्यन्यस्येव, द्वितीये तु नैतावतापि न शुद्धं रजतं पृथक् कर्तुं पारितम् , इति भूषणमेव वदति, प्रत्युत वदति—नैराश्यात् यदि कश्चन पृथक् कर्तुं शक्नोति, प्रयस्यतु, कस्तद्वारयिष्यति ?

सर्वथा तु यदि परीक्षानन्तरमेव कार्यानुपयोगित्वनिर्णयः, तर्हि कथं वा साम्प्रतं कार्यानुपयोगित्वनिर्णयः ? अतो यदि परीक्षादशामास्थायैव शुक्तिरूप्यस्यान्यस्य वा कार्यानुपयोगित्वमेवापलापशब्दार्थः, तर्हि कथमभिरम्यतां तस्य पदस्य सहस्रशः प्रयोगेण ? व्यावहारिकं यावद्बाधं वा कार्यकारित्वं तु मिथ्यात्वेऽपि जगतो नैव वारितम्—इति ॥

सति चैवं प्रपञ्चापलापः, भेदापलापो वाऽऽपरीक्षं यदि न सम्भवति—शान्तेन मनसा भूषणमेव विचारयतु, यावद्बाधं कथं घट-पटयोरभेदः, सत्यानृतयोरभेदो वेति ॥

### तदनन्यत्वं भामत्यभिमतं भावि-बाधाभिप्रायम् , न तु व्यवहारदशायाम्

एतेन—न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु भेदं व्यासेधामेति भामत्यपि—व्याख्याता; शुक्तिरूप्याकार्यकारित्वात्। श्रुतिप्रामाण्येन भाविबाधनिश्चयाभिप्राया हीयं भामती ॥

### भेदमिथ्यात्वनिर्णयोऽपि प्रपञ्चमिथ्यात्वनिर्णय इव स्वतन्त्रः प्रस्तावमर्हति

साम्प्रतं शुक्तिरूप्यवत् प्रपञ्चोऽप्यनिर्वचनीयो वा, सत्यो वेति श्रुतिप्रामाण्यैकनिर्णेयः, तस्य च ब्रह्म-प्रपञ्चयोः कार्य-कारण-भावः कं वा सिद्धान्तमाश्रित्येति विचाराधीनत्वाद् भेदानिर्वचनीयतावाद एवात्र निकषोपलः, इति ब्रह्मणो विवर्तोपादानतैव, न परिणाम्युपादानतेति निर्णयोपजीव्यत्वाद् भेदमिथ्यात्वविचारोऽत्र प्राधान्येन, स्वातन्त्र्येण च ॥

अतो मिथ्याभूतं भेदमधिकृत्य नायं विचारः, किन्तु भेदानिर्वचनीयत्वविधया तन्मिथ्यात्वनिर्णयार्थमेव शुक्तिरूप्यकार्यानुपयोगित्वनिर्णयार्थं तत्परीक्षा, इति भेदमिथ्यात्वं निर्णीतमास्थायैवायं विचार इति वासनां दुरत्ययां परित्यज्य परीक्षादर्शेयमिति मत्वा श्रुतिमुख्यतात्पर्यनिर्णयमेव प्रधानं साम्प्रतं लक्ष्यं च मत्वा केवलं विमर्शकपदमात्रमधिष्ठाय विचारं भूषणं शान्तेन हृदयेन प्रस्तोतु—प्रकृतानुपयुक्तान् दुरत्ययवासनानिबन्धनान् विचारान् वर्जयित्वा। प्रकृतो निबन्धस्तु भूषणस्य प्रकृतोपयुक्तानेव विचारान् विमर्शिष्यति ॥

### शुक्तिरूप्ययाथार्थ्यवादात् तदनिर्वचनीयत्ववाद एव वरम्

तत्र शुक्तिरूप्यस्य याथार्थ्यम् , कार्यानुपयोगित्वं चेति कल्पनापेक्षया ऽनिर्वचनीयत्वम् , प्रातिभासिकत्वं चेति व्यवस्थैव युक्ता; अन्यथा यथार्थत्वे शुक्तौ रूप्याणां तत्तत्पुरुषमात्रानुभाव्यत्वं न स्यात् ॥

### पारमार्थिकत्व-व्यावहारिकत्व-प्रातिभासिकत्वानि प्रपञ्चब्रह्म-निर्वचनीयत्व-निर्वचनीयत्वाधीनानि

तत्र प्रपञ्चस्य वस्तुगत्या मिथ्यात्वेऽपि व्यावहारिकसत्यत्वात् तद्भेदस्यापि व्यावहारिकं सत्त्वमिति न व्यावहारिकभेदाभेदविचारः, प्रातिभासिकभेदाभेदविचारो वा प्रकृतः, किन्तु भेदस्य व्यावहारिकस्यानिर्वचनीयत्वं वा, ब्रह्ममात्रस्य निर्वचनीयत्वं वा। तत्र यद्यनिर्वचनीयत्वम् , तर्हि मिथ्यात्वम् , यदि निर्वचनीयत्वम् , तर्हि सत्यत्वमिति प्रकृतविचारविषयः, तत्फलं च तत्र नील-घटयोर्व्यावहारिकयोरभेदो नाद्वैतमते ॥

### अधिष्ठानारोप्यभावस्थले सामानाधिकरण्यघटको भेदो मिथ्या, नान्यत्र

विशेषण-विशेष्यभावनिबन्धनसामानाधिकरण्यविषयत्वाद् अधिष्ठानारोप्यभावनिबन्धनसामानाधिकरण्यप्रतीतिघटकभेदमिथ्यात्वविचार ए-

व हि प्रकृतः । तत्र सामानाधिकरण्यप्रतीतौ सर्वत्र भेदसामानाधि-करण्योपलक्षिताभेद एव संसर्गः, परन्त्वधिष्ठानारोप्याभावे भेदो मिथ्या, यत्र प्रतियोग्यनुयोगिनोर्विषमसत्ताकत्वम्, अन्यत्र तयोः समसत्ताकत्वम्; तयोरिव भेदस्यापि व्यावहारिकत्वम् ॥

भेदमिथ्यात्वनिर्णयफलं जीव-ब्रह्मैक्यम्, न तु ब्रह्म-प्रपञ्चयोः

तत्र भेदानिर्वचनीयत्वविचारफलमभेदनिर्णयः । तत्र जीव-ब्रह्मणोरुपाधिमात्रस्य, तत्प्रयुक्तस्य च मिथ्यात्वम् । अभेदस्तु सिद्धः । प्रपञ्चे तु तस्य, भेदस्य च बाधात् शुक्तिव्यतिरेकेण रजताभाववद् ब्रह्मव्यतिरेकेणेतराभावः, न तु जीव-ब्रह्मणोरिव स्वरूपाभेद इति कृत्वैव भामती—"अनन्यत्वमिति नाभेदं ब्रूमः, किन्तु भेदं व्यासेधामेति ॥

प्रपञ्चमिथ्यात्वनिर्णयमतिरिच्य भेदनिरूपणवैतथ्यम्, इति प्रपञ्चवद् भेदस्यापि दुर्वचत्वम्

अतोऽत्र प्राधान्येन 'सन् घटः' "सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यघटकभेदानिर्वचनीयत्वमेव प्रधानं लक्ष्यम्। तत्र भेदस्य प्रतियोग्यनुयोगिकस्वतन्त्रपदार्थत्वे प्रतियोग्यनुयोगिनोरिव "नेह नानास्ती"त्यादिश्रुत्यैव मिथ्यात्वसिद्धिः, इति न पृथग् भेददूषणमपेक्षितम् ॥

एवं तस्य प्रतियोग्यनुयोगिनिरूप्यत्वनियमाद् यदि प्रतियोगिस्वरूपत्वम्, तदानीमपि ब्रह्मणः प्रतियोगित्वे ब्रह्मवत् सत्यत्वापत्तिः; प्रपञ्चप्रतियोगिकत्वेन प्रपञ्चवत् मिथ्यात्वमर्थसिद्धम्। एवमनुयोगिस्वरूपविवेकेऽपि, इति यत्र व्यावहारिकयोः प्रतियोग्यनुयोगिनोरिव भेदस्यापि व्यावहारिकत्वम्, यदा, तत्रापि भेदस्य दुर्वचत्वम्, तदा कैव कथा ब्रह्मभेदे, इति कृत्वैव खण्डनखण्डखाद्यं व्यावहारिकयोरपि प्रतियोग्यनुयोगिनोर्धर्मस्य भेदस्य दुर्वचत्वमुपपादयति ॥

आविद्यकत्वेनैव घटादेर्मिथ्यात्वेऽपि घटाद्यात्मनाऽपि भेददुर्वचत्वमुपपादयितुमिदं पृथक् प्रकरणम्

तत्र 'सन् घटः' इत्यत्र घटादेः सन्मात्रब्रह्माश्रिताविद्यापरिणामस्याविद्यावदनिर्वचनीयत्वमज्ञानानिनिर्वचनीयत्ववादेनैव गतार्थम्; तथाप्यविद्यात्मना तस्य सर्वेणाविद्यकेन भेदेन मिथ्यात्वेऽपि घटाद्यात्मना नानात्वात् तन्नानात्वमादायैव घट-पटादिविलक्षणशब्दप्रयोगात्, तत्र कार्यात्मना

नानात्वं कथमिति विचारः, येनाविद्यात्मनैव घटाद्यात्मनापि मिथ्यात्वं निर्णेतुमिदं प्रकरणम् ॥

'सन् घटः' इत्यत्र घटांशे ज्ञानस्याप्रत्यक्षत्वमिति भूषणानुवादः, तन्निरासश्च

तत्र सन्मात्रप्रत्यक्षप्रामाण्योपपत्तौ सद्घटयोरुभयोरपि प्रत्यक्षत्वे समानेऽपि घटांशे न तस्य प्रामाण्यमिति विवेचितम्, भूषणन्तु तत्र घटांशेऽप्रत्यक्षत्वमद्वैतसमतमिति कृत्वा तद् दूषयति ॥

तत्र घटादीनामप्रत्यक्षत्वे घटस्य पटभेदव्यावृत्तिरूपत्वेनानेकाप्रत्यक्षपदार्थघटितत्वाद् न प्रत्यक्षयोग्यतेत्यप्यद्वैतिनां सिद्धान्त इति च स्वयं किमपि लिखति। एवं लिखदिदं प्रत्यक्षस्य सन्मात्रग्राहित्ववादी यद्यन्यः, भेदस्यासंभावितत्ववाद्यन्यः, इति मतभेदं कञ्चन परिकल्प्यैकत्र भेदस्य सुवचत्वमङ्गीकृतमेवेति तद्दृष्ट्याऽद्वैतवादस्याद्वैतिभिरेव खण्डनं कृतमिति न किमपि कर्तव्यमवशिष्यते ॥

"अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्।"

इति न्यायेन सन्तुष्यति। परन्तु नात्र भूषणकल्पितः कश्चन मतभेदः समस्ति सन्मात्रप्रत्यक्षप्रामाण्यवादमेकमेवोररीकृत्य भेदस्य दुर्वचत्वस्याद्वैतिभिः सिद्धान्त्यमानत्वात् ॥

भेदस्याधिकरणरूपत्वे भ्रमानुदयापत्तिः सर्वेषु मतेषु

तत्र भेदो यदि धर्मी, तर्हि अधिष्ठानज्ञानमेव भेदज्ञानम्; शुक्तिज्ञानस्यैव रजतभेदज्ञानत्वात्, इति 'इदं रजतमि'ति भ्रमः सर्वेषु नोत्पत्तुमलम्। भूषणन्तु वदति—शुक्तिरेव रजतभेद इति नास्माभिरङ्गीकृतम्—इति, यद्येवम्, तर्हि न धर्मिस्वरूपं भेद इत्यस्माभिः स्वीकृतम्, इति सद्रूपमपि न घटादिभेद इति धर्मिरूपतया भेदो दुर्वच इत्यनिर्वचनीयत्वमेकं कल्पमादाय स्वीकृतप्रायम्, तेन च भेदसत्यत्वापत्तिरपि परिहृतप्राया, यद्येवं 'सन् घटः' इत्यत्र घटादेः पटादिभेदरूपता कथं भूषणेनोच्यते ? घटस्यापि पटादिभेदधर्मितया तस्य तद्रूपस्यापि स्वीकारायोगात् ॥

धर्मितावच्छेदकरूपत्वमपि न भेदस्य; गन्धवत्त्वादिलक्षणवैयर्थ्यापत्तेः

एतेन—यद्यपि यस्मिन्दर्शने येषामध्यासो नोपपद्यते, तस्य भेदः, स तेभ्यः स्यादिति व्यवस्था—परास्ता। इदमत्र चोद्यते—शुक्तिर्न भेदस्वरू-

पम् , किन्तु रजतभेदः शुक्तित्वमेव, तर्ह्येतावतापि यदि धर्मिस्वरूपं न भेदः, किन्तु धर्मितावच्छेदकमेव रजतादिभेद इति ॥

तत्र च शुक्तिभेदोऽपि तुल्यन्यायेन रजतत्वमिति तयोरेकत्र सामानाधिकरण्यप्रतीतिविरोधित्वात् कथमिदं रजतमिति सामानाधिकरण्यप्रत्ययः ? यदि धर्मयोर्भेदो न धर्मिभेदं विरुणद्धि धर्मिव्यक्तिभेदेऽपि, तर्हि घटः पट इति कथं न सामानाधिकरण्यम् ? अतो धर्मितावच्छेदकरूपत्वमपि भेदस्य न सम्भवति । अनेन न्यायेन पृथिवीत्वमेवेतरव्यावृत्तरूपं कथं स्वस्य फलम् ?

### भेदानिर्वचनीयत्व-सन्मात्रप्रत्यक्षत्वयोर्न व्याघातः

भेदानिर्वचनीयत्वविचारस्य सन्मात्रप्रत्यक्षप्रमाणचर्चायां घटप्रत्यक्षत्वस्य च न कोऽपि व्याघातः । घटादिरपि तत्र प्रत्यक्षत्वेऽपि फलम् , इति किमनेन चर्वितचर्वणेनेति ॥

### भेदस्य भावाभावविलक्षणत्वेनानिर्वचनीयत्वम् ,

तत्र यदि भेदो न भावरूपः, तर्हि 'सन् घटः' इत्यादौ सत्तादात्म्येन तस्य प्रतीतिर्न सम्भवति । न हि भेदः सन्निति भाति, इति न मतभेदः, इति सद्विविक्तत्वरूपं मिथ्यात्वमेव स्वयमङ्गीकृतम् । अभावरूपस्यापि तस्य तुच्छवैलक्षण्यमपि स्वीकृतम् , इति सदसद्विलक्षणत्वरूपमिथ्यात्वमप्यर्थसिद्धम् ॥

### दुर्वचत्वेऽपि भेदस्य व्यावहारिकत्वमबाधम्

यत्तु—शतभूषण्यामन्यत्र वा भेदः स्वरूपं धर्मो वेति विकल्प्य दूषयितुम् , दूष्य-दूषकभावभेदः, वाच्य-वाचकभेदः, वर्णभेदः, पदभेदः, अर्थभेदो वा धर्म-धर्मिभेद इत्याद्यनेकविधो भेद उपजीव्यते, तदिदं व्यावहारिकं भेदमादाय परीक्षितं तन्मिथ्यात्वमाश्रित्येति पूर्वमुक्तम् ॥

### वाचारम्भणश्रुत्यैव भेददुर्वचत्वस्यापि सिद्धावपि भेदाभेदवादानां बहूनां सत्त्वात् पृथक् भेददुर्वचत्वप्रकरणम्

यद्यपि वाचारम्भणश्रुत्यर्थविचारेणैवालम् ; तथाप्युपक्रमोक्तरीत्या सामानाधिकरण्यघटकभेदसत्यत्वासत्यत्वविचारोऽपि तत्रोपकरोति, येन तस्या अपि भेदसत्यत्वानुगुणं विवरणमत्यन्तभेदवादिनाम् , समभेदाभेदवादिनाम् , विषमभेदाभेदवादिनां च विवरणं न योग्यमित्युपपादनार्थं सत्यभेददूषणप्रकरणम् ॥

अनेन भेदमात्रं न दूष्यते, किन्तु सत्यभेददूषणम्, इति फलतो वाचारम्भणश्रुत्यर्थविचार एव। तत्र हि कार्याणां वाचारम्भणत्वमुक्तम्, भेदस्तु न कार्यम्, इति तस्यासत्यत्वं न श्रुत्युक्तम् ॥

अतो न विवर्तवादो युक्त इति शङ्कावारणेन फलतोऽज्ञान-तत्प्रयुक्त-सर्वमिथ्यात्वे तत्तात्पर्यमुपपादयितुमयमद्वैतिनां परिश्रमः ॥

वाचारम्भणश्रुतेरपि विवर्तवाद एव तात्पर्येण तत एव भेददुर्वचत्वे तु स्वागतमेव

तत्र यदि भूषणं वाचारम्भणश्रुतिरपि विवर्तवादमेवावलम्बते, वाचारम्भणादिशब्दानां विवरणे मा नाम स्वमते क्लेशो भूत्। परिश्रमोऽपि तत्र कर्तव्यो मा क्रियतामिति मत्वा सहृदयं व्यवहर्तुमायतते। तर्हि तस्यापि स्वागतमेव ॥

इतरव्यावृत्तेर्धर्मितावच्छेदकत्वे शुक्तित्वज्ञानमेव बाधक-ज्ञानम् 'नेदं रजतमि'ति ज्ञानं तु फलमात्रम्

तत्र बाधकज्ञानमितरत्र व्यावृत्तेः शुक्तित्वरूपत्वे शुक्तिज्ञानमेवेति सम्प्रतिपन्नम्। व्यावृत्तेः स्वतन्त्राभावरूपत्वेऽपि शुक्तित्वाज्ञानमेव भ्रमकारणम्, न तु रजतभेदाज्ञानमिति ज्ञानाज्ञानयोः समानविषयक-योरेव निवर्त्य-निवर्तकभावव्यवस्थानुरोधेन शुक्तित्वज्ञानमेव बाधक-ज्ञानम्; 'नेदं रजतमि'ति पाष्ठिकमर्थसिद्धं ज्ञानान्तरमेव। साक्षाद् बाधक-ज्ञानत्वं तु न कदापि 'नेदं रजतमि'ति ज्ञानस्य; अधिष्ठानाज्ञानस्याधि-ष्ठानज्ञाननिवर्त्यत्वनियमात् ॥

शुक्तित्वस्य रजतभेदरूपत्वेऽपि रजतभेदविशिष्टतया शुक्तिज्ञानमेव बाधकज्ञानम्। न हि शुक्तित्वमधिष्ठानम्, किन्त्वज्ञातशुक्तित्वविशिष्टा शुक्तिरेव, इति बाधकज्ञानमपि ज्ञातशुक्तित्वविशिष्टशुक्तिज्ञानमेव ॥

अतो बाधकज्ञानस्य कदापि स्वातन्त्र्येण न भेदविषयत्वं नियतम्। अस्तु वा रजतभेदज्ञानमज्ञाननिवर्तकम्, भेदोऽयं बाधकज्ञानविषयः शुक्तिरिव व्यावहारिक एवेति तथापि नाद्वैतहानिः ॥

अभेदसत्यत्वं नाम भेदमिथ्यात्वोपलक्षितब्रह्मरूपत्वमेव, न त्वनृताभेदेन

यत्तु—भेदाभेदयोर्भेदो मिथ्या, अभेदस्तु सत्यः—इति, तदिदं कल्पितस्य भेदस्य, तत्प्रयोजकोपाधेश्च बाधे स्वरूपमात्रपरिशेषाभिप्रायम्, न

त्वभेदस्याधिकरणरूपत्वमभिप्रेत्य, ब्रह्मण्यनृत-जडादिपरिच्छेदस्वभाव-स्याधिकरणत्वमभिप्रेत्य वा। तत्र भेदत्वस्य कल्पितत्वाद् मिथ्यात्वमेव। मिथ्यात्व-सत्यत्वपक्षोऽभवत्वस्येव; अभावत्व-भेदत्वाद्युपलक्षितब्रह्मरूपतयैव हि तेषां तत्र सत्यत्वम्। अतो नानृतादितादात्म्यापत्तिः॥

घट-पटाद्यभेदः कारणात्मना, ब्रह्म-प्रपञ्चयोस्तु ब्रह्मव्यति-रेकेणाभावः, कार्यात्मना तु सर्वत्र भेद एव

घट-पटादेस्तु परस्परमभेदः कार्यात्मना बाधितत्वात् सदात्मनेति सम्प्रतिपन्नम्। न चैवं जीव-ब्रह्मणोः। ब्रह्म-प्रपञ्चयोरभेदस्तु तद्व्यतिरेकेण प्रपञ्चस्याभावमात्रं शुक्ति-रजतयोरिव कार्यात्मना घटभिन्नानां तत्। मृदा-त्मना तु न प्रपञ्चोऽत्र भिन्नः। अनेन नयेन ब्रह्मात्मना ब्रह्माभिन्नः प्रपञ्चः, प्रपञ्चात्मना प्रपञ्चभिन्न इति स्वीकर्तव्यम्; अन्यथोभयात्म-नापि प्रपञ्च-ब्रह्मणोरभेदे कार्य-कारणभावकथैवास्तमियात्। अतः कार्या-त्मना भेदस्य, कारणात्मनाऽभेदस्य च ग्रहणे न कार्य-कारणाभावः॥

भेदस्य धर्म-धर्म्युभयरूपत्वोपपादनम्

स च भेदो धर्म-धर्म्युभयरूपः क्वचिद् धर्मरूपः, क्वचिद् धर्मिरूप इति तु सम्भवति, किन्तु धर्मरूपत्वम्, धर्मिरूपत्वं वाऽनियतम्; तत्रो-भयत्रापि दूषणमुक्तम्॥

भवतु वा धर्मरूपत्वम्, धर्मिरूपत्वं वा, यदि पूर्वनिर्धारितमभावरूप-त्वमेव परित्यज्यते भूषणदृष्ट्या, तथापि बाधितत्वाद् धर्मस्य मिथ्या-त्वमेव, धर्मिरूपत्वेऽपि भेदत्वस्य मिथ्यात्वस्य व्यवस्थापनात् ब्रह्मणो धर्म-धर्मित्वविवक्षायाम्, अन्यत्र तु व्यावहारिकत्वम्॥

शुक्तिरूप्यबाधानुपपत्तिः श्रीभाष्यमते

सर्वज्ञानयाथार्थ्यमते तु शुक्तिरूप्यस्य कथं बाधः? यत्तु—यदंशस्य भूयस्त्वं तदंशग्रहणेनैव, तथापि व्यवहारात् रजतांशभूयस्त्वाभानेन न रज-तमिति व्यवहारः; तत्र सहस्रभारसंभरणेऽपि रजतांशस्य कणमात्र-स्यादर्शनात्, रजतांशभूयस्त्वभावेन शुक्त्यंशभूयस्त्वदर्शनेन रजतव्यवहा-रासंभवात् नोपपद्यते। शुक्तित्वाज्ञानात् खलु भ्रमः। न च शुक्त्यंशभू-यस्त्वाज्ञानात्; कथं वा शुक्तिभूयस्त्वादर्शनमात्रम्, इति सर्वज्ञानयाथार्थ्य-

वादोऽनुपपन्नः; तत्तत्पुरुषमात्रस्य तत्तत्काल एव तथाऽनुभाव्यत्वं तु सर्वथा नोपपद्यते ॥

भूषणं हि भेदस्यानुपदमेव धर्मरूपत्वं वा, धर्मिरूपत्वं वेति वदति, परन्तु परमार्थतो धर्म एवेतरव्यावृत्तिरूप इति पक्षे बौद्धमतप्रवेशापत्त्या दूषयति। कथं वाऽभावस्य भावधर्मरूपत्वपक्षं भावपदार्थविद्वेषिबौद्धमतविजृम्भणम्। अभावपदार्थविद्वेषे हि सर्वस्याभावस्यापि भावना नाम धर्मस्तु जात्यादिरूपो वा ॥

"सन् घटः" इति प्रत्यक्षे नाखण्डब्रह्मभानम्, इति
न तदा घट-तद्भेदादिप्रतीत्यभावप्रसङ्गः

तत्र भेदस्य धर्मिरूपत्वं "सन् घटः" इति प्रतीतिदशायाम्, बाधानन्तरं तु न घटः, तद्भेदो वा; अखण्डाकारवृत्त्या सोपादानस्य सर्वस्य बाधात्। अखण्डं तु न ततोऽतिरिक्तं सत्पदार्थः, चित्पदार्थो वा, किन्त्वखण्डम्, स्वप्रकाशचिन्मात्रम्। सच्चिदादिभेदो ब्रह्मणोऽखण्डस्यानाद्यविद्यावशात् कल्पितानादिखण्डरूपो नाखण्डं ब्रह्म, इति न सन्मात्रसाक्षात्कारेण घटादेः, तद्भेदस्य वा प्रत्यक्षव्यवहारो व्याहन्यते, न वा तत्र भ्रान्त्यनुपपत्तिः, इति न "सन् घटः" इति प्रत्यक्षदशायामेव नाद्वैतसिद्धिः; द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादद्वैतसिद्धेः। न हि सन्मात्रमेव ब्रह्मणः स्वरूपम्, किन्तु सच्चिदानन्दस्वरूपमखण्डम्। घटादिकं तु न ब्रह्म। सर्वथा तु भेदस्य धर्मरूपत्वं न सम्भवति, सम्भवेऽपि व्यावहारिकधर्मरूपत्वमेव। नित्यत्वं तु खण्डसंविन्मात्रस्वरूपत्वम्; तस्य धर्मत्वस्य, धर्मित्वस्य वाऽभावात् ॥

भेदस्य धर्म-धर्म्यन्यतररूपत्वं खण्डनेनैव
खण्डितम्

खण्डनखण्डखाद्ये हि—भेदः किं स्वरूपम्, उतान्योन्याभावः, उत वैधर्म्यम्, उत पृथक्त्वमिति विकल्प्य भेदस्वरूपं खण्डितम्, श्रीभाष्ये तु धर्मो वा धर्मी वेति पक्षद्वयमुपन्यस्तम्। तत्र स्वरूपशब्देन धर्मस्वरूपमपि यदि विवक्ष्यते, तर्हि खण्डने तत्पक्ष उक्तानां दूषणानां परिहारः कर्तव्यः। स तु न कृतः। तत्रैव तात्पर्यकल्पनायामपि बौद्धदिशा भेदस्य धर्मस्वरूपत्व-धर्मिस्वरूपत्वाख्यकल्पद्वयमपि निरस्तमेव ॥

खण्डनेनान्योन्याभावपक्षस्यापि निरासाद् भेदस्वातन्त्र्यकल्प-
निरालोऽप्यर्थसिद्धः

भूषणं तु स्वयं—भेदातिरिक्तं घटत्व-पटत्वादिकं भावरूपम्, भेदस्तु तदन्य एवाभावपदार्थ इति श्रीभाष्याभिमतभेदधर्मस्वरूपत्व-धर्मिस्वरूपत्वपक्षौ निरस्यति ॥

परन्तु खण्डनोक्तेष्वन्योन्याभावस्यापि तत्र खण्डनं चेत्, तत्र स्वयं तन्मतनिरासार्थं प्रयत्यतां नाम ॥

भूषणस्य स्वतन्त्रभेदखण्डनपरखण्डनखण्डनमकाण्डे
ग्रन्थविस्तरमात्रम्, न प्रकृतम्

अत्र शतभूषणीं तर्पयितुं भूषणं खण्डनखण्डनार्थमपि यतते महता संरम्भेणैव, शतभूषणीतृप्तिस्तु साम्प्रतं भूषणस्य श्रीभाष्यखण्डनेनैव निष्पन्ना, तदीयखण्डनखण्डनं तु तदधिकृत्यान्यदा भविष्यति, इति प्रकृतो विचारः सम्प्रति न विहन्यतामिति प्रकृत एव विषये व्याप्रियते ॥

तत्र शतभूषणीतृप्तये खण्डनखण्डनं स्वयं प्रस्तुवद् भूषणं खण्डनखण्डखाद्यं श्रीभाष्ये, शतदूषण्यां वा परामृष्टमपीति वदन्तीं शतभूषणीं परमत्र शिरसा श्लाघत एव। तदेव सांप्रतं पर्याप्तम् ॥

"सत्त्वाच्चावरस्य"तिसूत्रभाष्यार्थनिष्कर्षः,
शङ्कानिरासश्च

प्रकृतेषु विचारेषु भूषणमेकमंशं गृहीत्वा विमृशति—यत् 'सत्त्वाच्चावरस्ये'ति सूत्रभाष्य-भामती-कल्पतरुपरिमलभागान् शतभूषणीसंगृहीतान्। अत्र भूषणमिदं सूत्रं स्वदृष्ट्याऽद्वैतवादखण्डनार्थमवमन्यते, तत्तु साम्प्रतं विचारान्तरम्, प्रकृतं तु भाष्याद्यालोचनं प्रथमप्राप्तम् ॥

तत्रेदं भाष्यं सूत्रं च—कारणात् कार्यस्यानन्यत्वम्, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव सत्त्वमवरकालीनस्य कार्यस्य श्रूयते "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमग्र आसीत्" इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्; यच्च यदात्मना यत्र न वर्तते, न तत् तत उत्पद्यते, अतः प्रागुत्पत्तेरनन्यत्वात्तदुत्पन्नमप्यमनन्यवदेव कारणात् कार्यमित्यवगम्यते। यथा च कारणं ब्रह्म त्रिषु कालेषु न व्यभिचरति, एकं च पुनः सत्यम्, अतोऽनन्यत्वं कारणात् कार्यस्य—इति ॥

अनेनेदं विशदमवगम्यते—एकसत्तावादमाश्रित्येदं भाष्यं प्रवृत्तम्, तेन च प्रागुत्पत्तेरनन्तरं च सत्तादात्म्यमेव, न तु सत्त्वम्, तेन च यावत्कारणत्वं ब्रह्मणः, यावच्च कार्यसत्त्वम्, तावत्सत्तैक्यमेवोभयोः। सत्त्वं तु कारणधर्मः, न तु कार्यस्य, तस्य तु सत्त्वेन भानमात्रमिति ॥

भूषणस्य "सत्त्वाच्चावरस्ये"ति सूत्रभाष्य-भामती-कल्पतरूणां
स्वमतानुसारेण योजनं स्वप्रौढिमप्रदर्शनमात्रम्
वटस्य पटीकरणेन

अत्र भूषणम्—कारणस्य ब्रह्मणस्त्रिषु कालेषु सत्त्वात् कार्यस्य त्रिषु-कालेषु सत्त्वं भाष्योक्तं न युक्तम्, कार्यस्य नाश-प्रागभावयोरानुभविकत्वादिति शङ्का, तत एव कार्य-कारणयोर्भेदशङ्का च। तत्र च कार्य-कारणयोरेकद्रव्यत्वस्वीकारात् कार्यात्मना त्रैकालिकत्वाभावेऽपि कारणात्मना तथात्वमिष्यत इति प्रदर्श्य, कारणसत्त्वम्, कार्यसत्त्वमिति पृथग्भूतसत्त्वद्वयस्य न त्रैकालिकत्वमुच्यते, किन्त्वेकमेव सत्त्वं त्रैकालिकम्; कारणात्मनैव सत्त्वस्य कथनादिति ऋजुः पन्था इति। अत्राभिन्नसत्त्वानन्यत्वात् कार्य-कारणयोरभेद इति भामती त्वनन्विता; सत्त्वस्य धर्मत्वात्, कार्य-कारणयोश्च धर्मित्वात्, कथं सत्त्वानन्यत्वं तयोः सिद्धवत्कृत्योच्यते। सत्त्वं ब्रह्मेति स्वपक्षवासना तु न परपक्षेण श्रद्धेया, कथं च धर्मस्यैक्यं धर्मिणोरैक्यम्? कल्पतरुस्तु—सत्त्वे कार्य-कारणयोरारोपितत्वेन तद्व्यतिरेकेणाभाव इति वदन् अत्र ब्रह्मणः कारणत्वस्यैव भाष्योक्तत्वात् ब्रह्मैव कल्पितमिति कथं भज्यत इति विचित्रमेतत् ॥

अतो द्रव्यैक्यनिबन्धनमेव कार्य-कारणयोरैक्यं प्रकृताधिकरणार्थः। एवं सति हि सत्त्वव्यतिरेकेणान्यस्याभाव इति भामत्यभिमतः प्रकृताधिकरणार्थः स्यात्, न कारण-व्यतिरेकेण कार्याभाव इति—लिखति ॥

अनादित्वादविद्यादीनां कारणस्यापि सत्त्वमनाद्यारोपितमेव,
न तु सत्तासामान्यादिरूपं कार्य-कारणसाधारणं सत्त्वम्
किन्तु कारणसत्त्वमेवावरस्य सत्त्वम्

अत्रेदमवधेयम्—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"

इति हि सम्प्रदायः । अनेन कारणातिरिक्तं शुद्धं चिद्रूपमेकमपरं वर्तत इति प्रतीयते । तत्तु सृष्टेः पूर्वम्, उत सृष्टिकाले, उत मुक्तिदशायां तद्रूपेणावतिष्ठत इति विजिज्ञासायाम्—परमतेऽप्यनाद्यविद्या-तद्योगेश्वराणामप्यनादित्वस्वीकारात्, अनाद्यविद्यायाः तदुपाधित्वेनेश्वरादेश्चानाद्यविद्याप्रयुक्तत्वात् स्वरूपतः, उपाधितो वा तेन ब्रह्मण्यनाद्यारोपवशादेवानादयो वर्तन्ते, इति स्वीकर्तव्यमित्यविद्या-तदुपहितेश्वर-तत्कारणत्वादिकं सर्वं शुद्धे ब्रह्मण्यनाद्यविद्यायोगवशादारोपितमेव मन्तव्यम् ॥

अत एवोक्तम्—

"अक्षमा भवतः केयं कारणत्वप्रकल्पते ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥"

इति । ततश्च सत्तासामान्यपदबोध्ये ब्रह्मण्यारोपेणैवोपहितस्यापि ब्रह्मणः सत्त्वम्, न तु कारणस्य सतः स्वरूपतः सत्तासामान्यरूपत्वम् ॥

### एकमेव सत्त्वं कार्य-कारणानुपहितब्रह्मसाधारणम्, अधिष्ठान-सत्तातिरेकिसत्त्वाभावश्च, न तु द्रव्यैक्यनिबन्धनं सामानाधिकरण्यम्

एवं शुद्धसंविदः सत्तासामान्यमेवाविद्योपहितस्येश्वरस्य सत्त्वम्, तदेव प्रागुत्पत्तेः वर्तमानतादशायाम्, भाविकाले च यावत्कारणावस्थं ब्रह्म, इति त्रिषु कालेष्वेकं सत्त्वं कार्य-करणयोरविशिष्टम । इदमभिप्रेत्यैव भाष्यम्—"एकं च पुनः सत्त्वमि"ति । न च शुद्धब्रह्मणोऽविद्यानुपहितस्य कारणत्वं सत्तासामान्यस्य शुद्धकारणरूपसाधारण्येऽपि ॥

अत एव कल्पतरुः—सत्त्वं कार्य-कारणयोरारोपितत्वेन तद्व्यतिरेकेण शुद्धानुपहितव्यतिरेकेणाभाव इत्यभिप्रायः । अधिष्ठानसत्तातिरिक्तसत्ताया अविद्या-तदुपहितेश्वर-तत्कार्येष्वभावोऽप्यत एव व्याख्यातः ॥

एतेन—अभिन्नसत्त्वानन्यत्वात् कार्य-कारणयोरभेद इति भामत्यपि—व्याख्याता । भाष्यमप्येवमाशयं गृहीत्वाऽन्वीयमानं नाद्वैतविघातकरम् । तद्विघातैकदर्शनं हि भूपणाशयानुसारेणान्यथाविवरणे ॥

भूषणदृष्टान्तदृष्ट्या द्रव्यैक्यनिबन्धनं सामानाधिकरण्यं तु ब्रह्मोपादानतोपपत्तिप्रकरणे विस्तरेण निरसिष्यते ॥

### अभेदोपादाना भेदकल्पना, इति सामानाधिकरण्ये भेदस्यैव कल्पितत्वम्

तत्र यद्येकं सत्त्वम्, तन्निबन्धनं च कार्य-करणयोरनन्यत्वम्, तर्हि सामानाधिकरण्यघटकभेदस्यैव कल्पितत्वम्, अभेदपारमार्थिकत्वं चोपपादयितुं प्रवृत्ता भामती—"वयं तु पश्यामः—अभेदोपादना भेदकल्पना, न भेदोपादानेति"। तदाशयस्तु सर्वाभिन्नं ब्रह्मस्वरूपमेवोपादानमिति, ना भेदस्याधिष्ठानत्वेन मिथ्यात्वम्, भेदस्त्वविद्याप्रयुक्तो नाधिष्ठानतामर्हतीति; अधिष्ठानस्य सत्यत्वनियमात्, आरोपितस्य च मिथ्यात्वनियमात्। भेदो मिथ्या, अभेदः संविन्मात्रं परिशेषितं सत्यमिति निष्कर्षः, इति तत्रैक्यं भेदानुपहितसंविन्मात्रम्, न तु भेदाभाव इति विवेकः॥

एतेन—न हि सत्त्वेन कार्य-कारणयोः साक्षादभेदं ब्रूमः, किन्तु तत्रारोपितत्वेन तद्व्यतिरेकेणाभाव इति वदन् सत्त्वं सर्वसाधारणं धर्मं मत्वा न कार्य-कारणयोरनन्यत्वम्, इति सत्त्वस्याधिष्ठानस्य सर्वत्रानुवर्तमानत्वेनाविद्यान्तानां सत्त्वेन प्रतिभानमात्रम्, स्वरूपतस्तु तेषामभावः, इत्यधिष्ठानतादात्म्यात् तथा भानमात्रम्; सर्वस्य तद्विवर्तमानत्वात्, इति न कोऽपि विरोधः। भेदग्रहस्य प्रतियोग्यपेक्षा व्यवहारदशायां यदा भेदप्रतीतिः, अभेदग्रहस्तु यत्र भेदगर्भसामानाधिकरण्यस्य, तत्र प्रतीतिद्वयापेक्षा, न तु स्वरूपैक्ये; यथा "उद्भिदा यजेत" "वैश्वदेव्यामिक्षा" इति। तत्राभेदग्रहोपादाना भेदकल्पना, इति भेदारोपेऽभेदः संविन्मात्रमुच्यते, तत्त्वमस्यादिवाक्यावगतैक्यमभेदः, अखण्डचैतन्यं चेत्यनर्थान्तरम्; तस्यैवाज्ञानोपहितस्याधिष्ठानत्वात्। अविद्योपहितं संविन्मत्रं ह्यधिष्ठानं भेदकल्पनाया बन्धुः, न तु शत्रुः। अत एव भेदकल्पनेति कल्पनापदम्॥

एतेन अभेदः कार्य-कारणलक्षणः, सत्त्वम्, इति सत्ता सामान्यं शुद्धं संवित्मात्रमेवाभेदशब्दार्थतया विवक्ष्यते, तेन च सत्त्वे कार्य-कारणे उभे, अध्यारोपितसत्त्वमात्रमबाधितं तत्त्वम्, यदेव—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्॥
वचसामात्मसंवेद्यं तद् ज्ञानं ब्रह्मशब्दितम्॥"

इति विष्णुपुराणेन परामृष्टमिति वक्ष्यते, यदेवावलम्ब्य "अथातो ब्रह्मजिज्ञासे"ति भगवतो बादरायणस्य जिज्ञासाप्रतिज्ञा। इयं हि स्व-

प्नेन्द्रजालादिमूलप्रासादादीनामिव व्यावहारिकस्य भेदग्रहस्य कारण-कलापसापेक्षत्वाभावान्नानुपपन्नेति नाद्वैतसिद्धिविरोध इत्यभिप्रेत्यैव ॥

तत्र पारमार्थिकं सत्त्वं कुत्रापि न कारणम्। तत्र प्रातिभासिक-व्यावहारिकभेदस्त्वकिञ्चित्करः ॥

सत्तात्रैविध्येन सत एव कारणत्वमपि न दुष्यति

भूषणं पृच्छति—वास्तवकारणकलापसापेक्षत्वं कुत्र वा स्वीकृतमद्वैतिभिः—इति ? इदमत्र समाधानम्—प्रातिभासिकवास्तवकारणकलापसापेक्षं प्रातिभासिकं सत्, व्यावहारिककलापसापेक्षं व्यावहारिकम्, तदुभयमपि प्रातिभासिकं पारमार्थिकम्, लौकिकपारमार्थिकं वाऽपि पारमार्थिकमेव; त्रिकालाबाध्यमप्युपहितांशसत्तासामान्यं विवर्तविधया सर्वविभ्रमोपादानमेवाद्वैतसिद्धान्ते, किं बहुना ? स्वन्यूनसत्ताकस्वप्नसन्दर्शनादिभूषणानुभाव्यव्यावहारिकचरमधातुविसर्गकारम्; किं वा पारमार्थिककारणकल्पनान्वन्वेषणेन भूषणस्य कृत्यमित्यलमधिकेन ॥

॥ इति भेददूषणोपपत्तिः ॥

# वेदप्रामाण्यपरिग्रहोपपत्तिः

दर्शनानां विभागः, वैदिकस्याद्वैतदर्शनस्यैव प्राधान्यम्,
अन्येषां तु तदविरोधेनैव प्रामाण्यं च

अद्वैततत्त्वं प्राधान्येन वेदान्तैकप्रमाणकम्, तदविरोधेनैव प्रत्यक्षादीनां प्रामाण्यम्, वेदतात्पर्यविषयार्थविरोधे प्रत्यक्षम्, अनुमानं वा न प्रमाणम्; वैदिकदर्शनत्वादद्वैतदर्शनस्य। तद्विरुद्धानि तु साङ्ख्य-योग-पाशुपत-पाञ्चरात्रदर्शनानि वेदाविरुद्धांशे प्रमाणानि। अत एव—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ॥"

इति पञ्चानां नैककण्ठ्यम्, परं तु सर्वाणि दर्शनानि, तत्र प्राधान्यं वैदिकदर्शनस्य, अपौरुषेयत्वाद्वेदानाम्; अन्येषां पौरुषेयत्वात्। न चात्र सर्वात्मना सम्वादः सर्वेषां दर्शनानाम्; "नानामतानी"ति वाक्यशेषात्। न वा साङ्ख्यम्, योगः, पाशुपतं वा वैदिकमिति श्रीभाष्यं मन्यते, किन्तु पाञ्चरात्रमात्रं वैदिकमिति। पाशुपताश्च पाशुपतमेव वैदिकं मन्यन्ते, न तु पाञ्चरात्रं तथेति। उभयदृष्ट्या न वैदिकदर्शनं पृथक्। सति चैवं 'वेदाः' इति पृथक् वैदिकदर्शनगणनं वितथं स्यात्। अत एव ब्रह्ममीमांसायां द्वितीयाध्याये द्वितीयपादे विरुद्धमतानां जिज्ञासावसरे साङ्ख्य-योग-पाशुपत-पाञ्चरात्राणां चतुर्णामपि विचारः। अतः पाञ्चरात्रमूलकत्वे श्रीभाष्यस्य, तन्मते वेदप्रामाण्यपरिग्रहानुपपत्तिः ॥

वेदानामेव तत्त्वमस्यादिमहावाक्यैकवाक्यतया प्रामाण्यम्,
अतो वेदप्रामाण्यपरिग्रहोऽद्वैत एव प्राधान्येन

अनेन चेदं विशदम्—यत् "शास्त्रयोनित्वादि"ति सूत्रम्—केवलप्रत्यक्षादिमुख्यप्रामाण्यवादिनां वैशेषिक-नैयायिकादीनाम्, योगमूलकयोः साङ्ख्य-योगयोः, आगममूलकयोः पाशुपत-पाञ्चरात्रयोश्च न शास्त्रत्वम्, किन्तु वेदानां तत्त्वमस्यादिमहावाक्यैकवाक्यतयैव पर्यवसितप्रामाण्यानां शास्त्रत्वमित्यभिप्रेत्यैव ॥

अतो वेदप्रामाण्यपरिग्रहस्य प्रयोजनमद्वैततत्त्वव्यवस्थैव, अन्यथा शैववैष्णवसिद्धान्तानामेव निःश्रेयसोपायप्रदर्शनपरत्वे वेदप्रामाण्यपरिग्रहोऽजागलस्तनायमानोऽकिञ्चित्करः ॥

### सौगतागमसालक्षण्येनाद्वैतपरत्वे वेदप्रामाण्यायोग इति श्रीभाष्यानुयायिनां शङ्का

सत्यामस्यां परिस्थितावद्वैतमते वेदप्रामाण्यपरिग्रहानुपपत्तिस्तस्य सौगतागमवैलक्षण्येन प्रामाण्यस्य दुर्वचत्वादिति शतदूषणी प्रवृत्ता। तत्राद्वैतसिद्धान्तस्य सौगतमतवैलक्षण्येन प्रामाण्यं साधितं शतभूषण्याम्, भूषणं तु शतदूषणीपक्षं समर्थयितुं यतते। तत्र भूषणं बौद्धाद्यागमवैलक्षण्येन पाञ्चरात्रस्यापि कथं नाप्रामाण्यं इति शतभूषण्याः प्रतिवादं परिहर्तुं न यतते ॥

### श्रीभाष्यमत एव सौगतसाम्यम्

तत्र श्रीभाष्यसौगतागमयोरेव पौरुषेयत्वेन साम्यात् श्रीभाष्यमतस्यैव वेदप्रामाण्यविषये सौगतागमवत् कारणं किमपि वक्तुं न शक्यम्; उभयोरपि पौरुषेयत्वात्। न चाद्वैतमतं पौरुषेयागममूलम्, इति श्रीभाष्यसिद्धान्त इव न वेदप्रामाण्यपरिग्रहो भविष्यति। अतः श्रीभाष्यस्याप्यप्रामाण्यं सौगतवाद इव स्यात् ॥

### प्रामाण्यकारणं वेदापौरुषेयत्वं न सौगमते, अद्वैतमते तु वर्तते, प्रस्युत श्रीभाष्यसिद्धान्त एव पौरुषेयागममूले न प्रामाण्यम्

न चात्र शतभूषण्याः पद्धतिः पूर्वाचार्याननुमता नूतना काऽपि, वेदप्रामाण्यकारणमसम्भाव्यमानदोषत्वं; वेदस्यापौरुषेयत्वात्, पौरुषेयत्वम्, सम्भाव्यमानदोषत्वम्, स्वतन्त्रवेदनिरपेक्षम् बुद्धिमात्रनिबन्धनत्वं त्वप्रामाण्यकारणम्, इति प्रामाण्याप्रामाण्यनिबन्धनं तयोरुभयोः। इदमेव प्रामाण्यनिदानं श्रीभाष्यमतेऽपि वक्तव्यम्, इति कुतः सुगतसिद्धान्तेनाद्वैतसिद्धान्तस्य तुलना ? कुतो वा पौरुषेयागममूलत्वात् सौगतन्यायः श्रीभाष्यमेव नाक्रामति ?

### पाशुपत-पाञ्चरात्रयोरविशेषोऽद्वैतवादे

तत्र पाशुपतात् पाञ्चरात्रस्यातिशयो वा, पाञ्चरात्रात् पाशुपतस्यापि वा स तत्त्वमर्थविचारे भाष्य-भामत्यादिना मन्यते, किन्तु विशेषो विरुद्धांशमात्रे उभयोरप्यप्रामाण्यम्, अविरोधे तूभयस्यापि प्रामाण्यमित्येव तदाशयः ॥

### वेदविरोधे पाशुपतमिव पाञ्चरात्रमपि पौरुषेयत्वेनाप्रमाणमेव

अत एव पञ्चायतनपूजापद्धतिरद्वैतराद्धान्ते, वेदप्रतिषेध एवात्राप्रामाणाण्यकारणमिति हि '-प्रतिविषेधाच्च' इति सूत्रे भाष्यम्। "उत्पत्त्यसम्भवादि" ति सूत्रेऽपि भाष्यम्—ईश्वरः प्राङ् निर्धारितः, प्रकृतिश्च तदाधिष्ठाना चेति। श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः, इति। तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति? उच्यते, यद्यप्येवंजातीयकोऽर्थः समानत्वान्न विवादगोचरो भवति। अस्ति त्वत्र विवादस्थानमित्यतः तत्प्रामाण्यस्यानारम्भ इति। इदं च पाशुपतमतेऽपि समानम्। तत्रापि हि केवलनिमित्तकारणत्वं वेदान्तशास्त्रविरुद्धमिति। अत एव तस्य निराकरणमिति भाष्यते। अभिगमनादिलक्षणमुभयत्रापि दृश्यत इति। अनेनैव पाशुपतस्याप्यंशत एवाप्रामाण्यम्। केवलनिमित्तकारणत्वाद् वैशेषिकाणामिवेति कृत्वैव॥

तत्रांशस्यास्योत्पत्त्यधिकरणे नोल्लेख इत्यभिप्राय एव भाष्यस्य। अस्तु बह्वंशेषु बौद्धविरोध। एकत्र, अपरत्र स्वल्पांशविरोधः; वेदविरोधे त्वप्रामाण्यमुभयत्र॥

### नारायणस्यानेकधाभावः पाञ्चरात्रगतो न श्रीभाष्याभिमतपरमात्माभिप्रायः

"उत्पत्त्यसम्भवादि" ति सूत्रे भगवत्पादैः—तत्र तावदुच्यते—"योऽसौ नारायणः परोऽव्यक्तात्मा, सर्वात्मा, स आत्मानमनेकधा व्यूह्यावस्थितः" इति न तन्निराक्रियते; "स एकधा भवति, त्रिधा भवती" त्यादिश्रुतिभ्यः परमात्मनोऽनेकधा भावस्याधिगतत्वात्" इति भाष्यम्॥

तदिदं श्रीभाष्याभिमतं न चिदचिच्छरीरैकस्वभावादिकं परमात्मनं पाञ्चरात्रप्रतिपादितं मत्वा, तत्राऽ"व्यक्तात् परः" इति परमात्मनः परमात्मस्वरूपान्तर्गतत्वमव्यक्तस्य वारयति॥

### अद्वैतसिद्धान्तेन पाञ्चरात्रस्य सर्वांशेऽविरोधे तु स्वागतमेव पाञ्चरात्रस्य तन्मूलस्य श्रीभाष्यस्य

तेन ह्यव्यक्तोपहितसगुणात्मनोऽन्यत् "अक्षरात् परतः परः" इति परविद्याप्रतिपाद्यमद्वैताभिमतमात्मतत्त्वं निर्विशेषमेव पाञ्चरात्रप्रतिपाद्यमपीति कृत्वैव भगवत्पादाः पाञ्चरात्रेण स्वसिद्धान्तस्य तत्राविरोधम्, तस्यैवाविद्योपहितस्य "बहु स्यां प्रजायेय" इति श्रुतिसिद्धबहुभाव एव "स

एकधा भवति त्रिधा भवती"त्यादिश्रुत्यर्थम्, तत्र जीवानामुत्पत्तिरप्यौपाधिकत्वाभिप्रायेणैवेति, तेन भावेनैक्यं पाञ्चरात्रसिद्धान्तेनाद्वैतस्यैकार्थ्यं चं भाष्यमभिप्रैति। पाञ्चरात्रस्याप्यद्वैत एव परमं तात्पर्यमित्यत्र पाञ्चरात्रवचनानि कानिचन तत्र प्रमाणानि; तथाप्यन्यथानयनं केषांचन वृत्तिकाराणां वारणीयमित्येव भगवत्पादाशयः ॥

### अभिन्ननिमित्तोपादानतायाः अद्वैताभिमतायाः स्वीकारे तु पाशुपतापेक्षया पाञ्चरात्रस्यातिशयः संमत एव

सर्वथा तु श्रीभाष्यसिद्धान्तश्चिदचिद्विशिष्टब्रह्मकारणतावादोऽप्रामाणिक एव। कल्पतरु-परिमलादीनामप्येवमाशयत्वं पाशुपतापेक्षयाऽभिन्ननिमित्तोपादनत्वादेरद्वैताभिप्रेतस्य पाञ्चरात्रे स्वीकारमभिप्रेत्यैव। पाञ्चरात्रस्य पाशुपतापेक्षयोत्कृष्टेऽर्थे तात्पर्यम्, न तु श्रीभाष्याभिमतसिद्धान्तस्य पाञ्चरात्रसिद्धान्तत्वमभिप्रेत्यैव, इति कथं परिमलसमादरः सात्त्विकानां न भवति ?

### विषयवैलक्षण्यमपि सौगताद्वैतवादयोः

वेदप्रामाण्यपरिग्रहनिमित्तमादाय सौगताद्वैतवैषम्यं चात्र विषयः। तत्र वैदिकमिथ्यात्ववादोऽन्यः, सौगताभिमतमिथ्यात्ववादोऽन्यः। साधिष्ठानकत्व-निरधिष्ठानकत्वभेदप्रयुक्तो विशेषोऽन्यः, इति। तत्रापि सौगतमतादद्वैतसिद्धान्तस्य वैषम्यं दुरपह्नवम्। वेदस्यापि मिथ्यात्वम्, न तु तद्विषयब्रह्मबाध्यत्वेन, किन्तु ब्रह्मोपादानकत्वेन, इत्यत्रापि तयोर्वैलक्षण्यमेव ॥

### पाञ्चरात्रस्य पौरुषेयत्वेन सौगतागमेन साम्यापादनं दुरुत्तरम्

नारायणकर्तृत्वं पाञ्चरात्रस्य, सर्वज्ञकर्तृकत्वं बौद्धागमस्येति कथं तयोर्न साम्यमिति प्रश्नप्रतिबन्दी भूषणस्य—वेदमूलकानां मन्वादीनां भगवत्पादभाष्याणामपि कथं नाप्रामाण्यमिति ? तत्र भूषणमेवालोचयितु किं केनात्र सङ्गतम्, कुतो वा श्रीभाष्यादिकमप्यत्र युक्तमिति ? अपौरुषेयवेदविरोधस्तु पाञ्चरात्रसिद्धान्तस्य भगवत्पादैः "उत्पत्त्यसंभवादि"त्यत्र भाषितं उपक्रमे, वृत्तिकारादृतपाञ्चरात्रसिद्धान्तस्तु श्रीभाष्योपजीव्यपाञ्चरात्रसिद्धान्त इति भगवत्पादाः सूचयन्तीत्यनुपदमुक्तम् ॥

### औडुलोमिमतं पाञ्चरात्रमूलं न प्रमाणमिति श्रीभाष्यसिद्धान्तोऽपि

वाक्यान्वयाधिकरणे—"उत्क्रमिष्यत एवंभावादित्यौडुलोमिः" "अवस्थितेरिति काशकृत्स्नः" इति सूत्रद्वये काशकृत्स्नमतमेव सिद्धान्त इति संप्रतिपन्नम् , न त्वौडुलोमिमतं नामेति । औडुलोमिमतमेव पाञ्चरात्रिकानां मतमिति तु भामती—"यथाहुः—पाञ्चरात्रिकाः"—

"आमुक्तेर्भेद एव स्याद् जीवस्य च परस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥"

इति । "एष संप्रसादोऽस्माच्छरीरात्समुत्थाये"ति श्रुतिमनुसृत्य वदति —तदप्यद्वैत्येकदेशिमतम् , न तु श्रीभाष्यादिमतपाञ्चरात्रमतमित्यन्यदेतत् ॥

### परमपुरुषप्रणीतत्वेन पौरुषेयत्वमकिञ्चित्करं समाने प्रामाण्यातिशये, परमपुरुषस्तु तत्तद्दृष्ट्या भिन्न एव

अत्र परमपुरुषप्रणीतत्वेन साङ्ख्याद्यपेक्षया श्रीभाष्यदृष्ट्या नारायणस्यैव परमपुरुषत्वाच्च कामं साङ्ख्य-योग-पाशुपत-पाञ्चरात्रेषु पाञ्चरात्रस्याधिकं प्रामाण्यं मन्यताम् , एवं सदाशिवस्यैव परमात्मत्वं ब्रह्मविष्णु रुद्रेशान-सदाशिवात्मकपञ्चव्यूहवादे मुख्यपरमात्मत्वात् पाशुपतस्य तेष्वधिकं प्रामाण्यमिति पाशुपतदृष्ट्या मन्यताम् , न तु तावता वेदसमानयोगक्षेमं प्रामाण्यं तत्र पाञ्चरात्रस्य, पाशुपतस्य वा साङ्ख्य-योगयोरिव । परमपुरुषस्याऽपि स्वातन्त्र्यं तु समानम् , तत्तु सर्वज्ञस्य ॥

### स्वातन्त्र्यात सौगतागमस्य, ततः पाञ्चरात्रस्य को वा विशेषः, वेदे तु न नारायणस्यापि स्वातन्त्र्यम् , इति वेदप्रामाण्यकथा नात्र सौगतपाञ्चरात्रादाविवोत्तिष्ठत्यपि

अत एव वेदानां तत्र पृथक्करणम् "तत्र वक्ता नारायणः स्वयम्" इति स्वयंपदप्रयोगात् स्वातन्त्र्यं नारायणस्य प्रतिपाद्यते, न तु वेदे नारायणस्यापि स्वातन्त्र्यमिति खलु श्रीभाष्यसिद्धान्तोऽपि; अन्यथा वेदापौरुषेयत्ववाद एवास्तमृच्छेत् । न हि नारायणकर्तृकत्वमात्रेण वेदविरोधे-

ऽप्यविचाल्यं प्रामाण्यम्; अन्यथा पाञ्चरात्रेण निर्वाहे वितथा वेदाः, अपौरुषेयतया तत्प्रामाण्यं वा ॥

### अद्वैतिनां बौद्धमतपक्षपाते न कारणं किमपि, श्रीभाष्ये तूभयत्र सर्वज्ञकर्तृकत्वमित्यस्ति साम्यम्

बौद्धानां बुद्धः सर्वज्ञः, श्रीभाष्यानुयायिनां नारायणः सर्वज्ञः, इति सर्वज्ञत्वम्, स्वातन्त्र्यं चोभयत्र समानं स्व-स्वागमेषु। अद्वैताभिमतः सर्वज्ञः, मायोपहितः, सदाशिवो वा नारायणो वा यो वा को वा भवतु, न तस्य वेदे स्वातन्त्र्यम्। न च तज्जन्यं पाञ्चरात्रमिति कथमद्वैतिनां बौद्धपक्षपातः?

तत्र वेदानामपौरुषेयाणामपि व्यावहारिकमेव प्रामाण्यं तत्त्वमस्यादि-वाक्यं वर्जयित्वा विषयाबाधलक्षणम्, अन्यत्र तु न विषयाबाधलक्षणं प्रामाण्यम्। सौगत-श्रीभाष्यसिद्धान्तयोः सर्वेषां पारमार्थिकप्रामाण्याश्रय-त्वमिति वैदिक-सौगतवैषम्यं निगदव्याख्यातम् ॥

### सौगताद्वैतमतयोः साम्ये सौगतमतवदद्वैतमतमपि बाध्यमिति भूषणम्

तत्र वेद-सौगतयोः साम्यम्, उभयोरद्वैतागमयोः प्रामाण्यं व्यवस्थितं वा, एकतरेणान्यतरस्य बाधो वा, उभयोरप्रामाण्यं वेति पर्यनुयोगमेवं भूषणमुत्तरति—सौगतमतमिवाद्वैतमपि बाध्यमेवेति ॥

### सौगताद्वैतसिद्धान्तसाम्ये तयोर्बाधकप्रमाणान्तराभावः,

इदमेवात्र पृच्छ्यते—केन सिद्धान्तेन प्रबलेनोभयोर्बाधः—किं सौगतमतसलक्षणेन, उत विलक्षणेन। आद्ये तत् सलक्षणं यदि श्रीभाष्यम्, तर्हि तस्याप्रमाणत्वमेव, इति कथं तेन तयोर्बाधः। द्वितीये किं तन्मतम्—सौगताद्वैतबाधकं दूषणयाभिमतम्?

वस्तुतस्तु—अपौरुषेयत्वं वेदैकमूलत्वादद्वैतस्य तदुभयविलक्षणत्वात् तेन श्रीभाष्य-सौगतमतयोरेव बाधो युक्तः। इदमेवाभिप्रेत्य भूषण्यां विशिष्टाद्वैतप्रामाण्येनाद्वैतसौगत-प्रामाण्यबाधाद् वरमद्वैतसिद्धान्तेन तदुभय-विलक्षणेन बाध इति ॥

### सौगतप्रामाण्येन वैदिकाद्वैतप्रामाण्याबाधः,

इति न भूषणोक्तरीत्या सौगतवदप्रामाण्यमद्वैतस्य। सौगतप्रामाण्यो-पमर्दो हि समानः श्रीभाष्याद्वैतभाष्ययोः, इति न तदर्थं भूषण्याः पृथक

प्रयत्नोऽपेक्ष्यते । सूत्र-भाष्यादौ तदप्रामाण्यव्यवस्था सुस्थैव । सूत्रारूढ़त्वमपि स्वस्यैवेति वदत् श्रीभाष्यमेव सौगतमतवदप्रमाणमिति स्थापनं हि प्रकृतम् ॥

श्रीभाष्येण सौगतमतवद् नाद्वैतबाधः

एकेनाद्वैतसिद्धान्तेन भूयिष्ठानां द्वैतमतप्रामाण्यानां बाधो न युक्त इति वदत् भूषणमपि स्वव्यतिरिक्तं नाद्वैतमात्रम्, किन्तु द्वैत-शैव-विशिष्टाद्वैत-द्वैताद्वैतादिसिद्धान्तान् सर्वानप्रमाणमित्येव मन्यते, इत्यद्वैतप्रामाण्येन भूयिष्ठानां द्वैतमतप्रामाण्यानां बाधं कथं भूषणं स्वानुकूलं मन्यते ? वेदवैषम्यं तु बाध्यत्वे प्रयोजकम्, । तत्तु नद्वैतसिद्धान्ते, न तु पौरुषेये पाञ्चरात्र इत्युक्तमधस्तात्, इति यदि सौगतसाम्यं बाध्यत्वे तन्त्रम्, तर्हि श्रीभाष्यमतस्यैव बाधः, किन्तु तद्विलक्षणेनाद्वैतसिद्धान्तेन सौगतमतवत् श्रीभाष्यमप्यप्रमाणमित्येव युक्तम्, न त्वद्वैताप्रामाण्यं विशिष्टाद्वैतेन ॥

सौगतमतनिरसनव्याजेन भगवत्पादानां तत्प्रचारणमिति
भूषणनिरासः

सौगतमतखण्डनव्याजेन तन्मतस्यैव भगवत्पादानां प्रचारणमिति कथा तु भूषणस्य शिवद्रोहे तात्पर्यमात्रम्, न तु वस्तुस्थितिकथनमिति ॥

वेदागमयोः प्रामाण्याप्रामाण्यप्रयोजकौ असंभाव्यमानदोषत्व-
तदभावावेव, अतो न कुत्रापि व्यभिचारः

इदमत्र परीक्ष्यते—कथं बौद्धागमोऽप्रमाणम्, कथं वा वेदः परं प्रमाणम्? यत्प्रामाण्यं श्रीभाष्याद्वैतभाष्ययोः समानम्। तत्र पौरुषेयत्वापौरुषेयत्वे एव तत्तदप्रामाण्य-प्रामाण्यप्रयोजके इति सम्प्रतिपन्नम्। सादित्वानादित्वे पौरुषेयत्वापौरुषेयत्वे चेत्यनर्थान्तरम्, इति संभाव्यमानपुरुषस्वातन्त्र्यास्वातन्त्र्ये एव सादित्वानादित्वे इति निष्कर्षः ॥

सति चैवमपौरुषेयवाक्यत्वं प्रामाण्यप्रयोजकम्, पौरुषेयवाक्यत्वमप्रामाण्यप्रयोजकमिति वाक्यप्रमाण्याप्रामाण्ययोरेव प्रकृतत्वात् पर्यवस्यति, न त्वनादित्वमात्रम्। अतोऽविद्यायाः, अन्येषां वाऽप्रामाणानां प्रमेयानां वाऽनादीनां प्रामाण्यं न दृष्टमिति व्यभिचारोद्भावनमकिञ्चित्करम् ॥

### अनादित्वं नाबाध्यत्वप्रयोजकम् , इति विषयाबाधात् ब्रह्मणि वेदान्तानां प्रामाण्यं सुस्थम्

अनादित्वं तु तस्य ब्रह्मोपादानस्याप्यविद्यादेरिव सादित्वाभावमात्रेण, न त्वबाध्यत्वेन; अविद्यादीनामनादीनामपि ब्रह्मव्यतिरिक्तानां बाध्यत्वस्यैव श्रुतितात्पर्यविषयत्वात् , इति संभाव्यमानप्रमाद-विप्रलम्भ-मूलकत्व-तदभावाभ्यामेवाप्रामाण्यम् , प्रामाण्यं वा। तथा च संभावितवक्तृदोषाधीनमप्रामाण्यम् , न तु यत्किञ्चिद्दोषजन्यत्वम् , अविद्या तु ब्रह्माश्रया, ब्रह्मोपाधिर्वा न वक्तृदोषः, येनाविद्योपादानकत्वमप्रामाण्यप्रयोजकम् । लौकिकान्यपि वाक्यानि भ्रमविप्रलिप्सामूलानीति कृत्वैवाऽप्रमाणानि, न त्वविद्यामूलकानि ॥

### आगन्तुकदोषजन्यत्वं शुक्तिरूप्यादिज्ञानाप्रामाण्यप्रयोजकम् , तत्तु न घटादिज्ञानस्य

अतोऽविद्यातिरिक्तागन्तुकदोषाधीनत्वमेवाप्रामाण्यप्रयोजकम् , अतोऽविद्यारूपदोषमूलकत्वमप्रामाण्येऽकिञ्चित्करम् , इति नात्र वाक्ये वाक्यत्वभ्रान्तिनिर्णयो यावद् ब्रह्मसाक्षात्कारम् । इदमत्र पृच्छ्यते—को नामायमवाक्ये वाक्यत्वभ्रमो नाम ? तत्रैवाद्वैतमते ब्रह्मण्यपि वाक्यत्वभ्रमः, न त्ववाक्येऽन्यत्र घटपटादावर्थे वाक्यत्वभ्रमः; ब्रह्मणि सर्वस्यारोपितत्वकथा तु यावद्बाधं सत्यत्वकथाया न परिपन्थिनी ॥

### वेदान्तवाक्यानामाविद्यकत्वेऽपि ब्रह्मणो विषयस्याऽतथात्वाद् न लौकिकवाक्यानामिवाप्रामाण्यम्

'तुष्यतु' दुर्जनन्यायेनाप्युच्यते-अस्तु नामाविद्यादोषमूलकत्वं वेदस्य; तथापि तेनाप्रामाण्यं विषयस्याविद्यकत्व एव, तस्यापि बाध्यत्व एव वा, तत्तु यावद्बाधं लौकिकानाम् , सविशेषपराणां च संभवति। तत्त्वमस्यादिवाक्यानां तु विषयस्याबाधाद् नाप्रामाण्यशङ्कापि। अतोऽविद्यादोषमूलकत्वमकिञ्चित्करम् ॥

### बौद्धागमस्येव वेदान्तस्य न प्रत्यक्षाद्युपजीवित्वम् 'सन्' 'घटः' इत्यपि ज्ञानं सद्विषयकमपि न वेदान्तोपजीवि

तत्र बौद्धागमः प्रत्यक्षेण, अनुमानेन वाऽवगतमर्थं बोधयितुं निबद्धो बुद्धादिभिः, अद्वैतसिद्धान्तस्तु वेदैकसमधिगम्यः। न तत्र प्रत्यक्षानुमानो-

पजीवित्वम्। वेदैकमूलकत्वं वेदैकमुख्यतात्पर्यविषयत्वम्, न तु शाब्द-बोधजनने प्रत्यक्षानुमानापेक्षत्वम्, जन्यत्वं वा भूषणकल्पितम्। तथा चाद्वैतसिद्धान्तस्य स्वतन्त्रवेदान्तैकतात्पर्यविषयस्य न वेदान्तानपेक्षप्रत्यक्षानुमानमूलकत्वम्। तत्र मनन-निदिध्यासने वेदान्तावगतार्थविषयके वेदान्तमूलके, न तु मननादिसिद्धस्यैवार्थस्य संकलनात्मका वेदान्ता इति वस्तुस्थितिः। वेदोपजीव्यत्वे च तदविरोधेनैव स्मृत्यादीनामिव वेदैकगम्येऽर्थे प्रामाण्यं सम्भवति, न तु तद्विरोधेऽपि। मनन-निदिध्यासने हि पुराणेतिहासद्वारापेक्षायां श्रुतवेदान्तार्थस्योपपादनेन केवलमुपबृंहके। 'सन् घटः' इत्यादिसद्विषयकं तु प्रत्यक्षादिज्ञाताज्ञातांशब्रह्मविषयस्य सतोऽत्राधिष्ठानतयैव प्रतीतस्यानाद्यविद्याकल्पितखण्डब्रह्मविषयकम्, नाखण्डविषयकमिति न वेदान्तोपजीवि; तस्य घटादेरवच्छेदकस्येव चाक्षुषवृत्तिगोचरत्वाविरोधात्। अखण्डञ्च सच्चिदानन्दरूपं खलु वेदान्तार्थः, न तु सन्मात्रम्। अतो नाश्रुतवेदान्तस्यापि ब्रह्मावगतिः॥

### बौद्धानां शून्यम्, अद्वैतिनां ब्रह्म च नैकम्, अतो न तयोः साम्यम्।

बौद्धानां स्वलक्षणं तु शून्यं चतुष्कोटिविनिर्मुक्तं नाद्वैतिनां ब्रह्म, यत्र जगद् न ब्रह्मोपादानकम्, इति न तत्साम्यमद्वैतिभिरत्र विषयेऽप्युपन्यस्तं स्यात्॥

तत्र बौद्धागमे बुद्धः स्वतन्त्रकर्ता, श्रीभाष्याद्वैतभाष्ययोस्तु परतन्त्र ईश्वरः कर्ता वेदस्य, अतोऽपि वैषम्यं सौगतागमेन श्रीभाष्याद्वैतभाष्ययोः। उभयोरपीश्वरो गतकल्पीयं वेदं स्मृत्वोपदिशति; 'सर्वज्ञत्वाच्च'। "तदैक्षत" इति श्रुत्युनुसारित्वाच्च स्रष्टव्यानां सर्वेषां स्वेक्षणमासीदिति तु सम्प्रतिपन्नम्। तथापि लौकिकवाक्येषु कालिदासादेरिवपूर्वतया वेदानां न रचनं तस्य तदर्थज्ञानसत्त्वेऽपि, किन्तु 'यथर्तु'न्यायेन यथापूर्वमेवाकल्पयत्, न तु तत्र वैदिकवाक्यप्रक्रमे तस्य स्वातन्त्र्यम्। अतोऽपौरुषेयत्वमुभयत्र संप्रतिपन्नम्, न तु सौगता एवं वेदमीश्वरमारभ्याध्ययनाध्यापनपरम्परया रक्ष्यमाणमैश्वरं वा मन्यन्ते स्वीयमागमम्, इति ततोऽद्वैतस्यापि, श्रीभाष्यस्येव वैषम्यं समानम्, इति वेदप्रामाण्यपरिग्रहे, सौगतसाम्यमुभयत्रापि॥

वेदान्तानामप्रामाण्यायोगः

बाधितार्थत्वेन प्रामाण्यं तु किं वा बाधकज्ञानमभिप्रेत्य ? यद्यखण्डाकारवृत्तिज्ञानम्, तर्हि तावत्पर्यन्तं सर्वेषां यावच्छुक्तितत्त्वज्ञानं तदधिष्ठानकभ्रमाणामिव प्रामाण्यम्, अनन्तरमप्रामाण्यमित्यायातम्, तदा तु न वेदः, न वा प्रमाता, प्रामाण्यकथा वेति कस्य बाधितार्थकत्वेनाप्रामाण्यमाशङ्क्येत ॥

यावद्बाधमविद्याप्रयुक्तानामविद्यात्मना सत्त्वम्, अविद्याया
नाशे तु सर्वबाधः, तावत्पर्यन्तं तु व्यावहारिकं
सत्त्वम्, न चेदं सौगते नये

तत्र यथा नाश्यं नङ्क्ष्यदपीदानीमस्ति, तथा बाध्यमपि यावद्बाधमस्ति; उभयत्र कारणात्मनाऽविद्याप्रयुक्ता वर्तन्ते नश्वराः, अज्ञानस्यापि नाशे तु बाध्यता, अद्वैतमतेऽपि तु यावदविद्यानाशं सर्वे नाश्या एव परन्तु मूलप्रकृतिरविद्याऽनादिरपि नाश्येति तु व्यक्तमुत्तरत्र। अतो बाधिष्यमाणमपि यावद्बाधं नाश्यवत् कारणात्मना वर्तते एव, इति न विशेषः। अविद्याया अपि नाशे हि न व्यवहारलेशोऽपि; कर्तृ-करण-कृत्यादिसापेक्षत्वाद् व्यवहारस्य, तेषां च तदाऽभावात्। तथा च श्रुतिः "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयात्? यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इति। अत एव व्यावहारिकं सत्त्वमिति व्यपदेशः, न तु सत्त्वं परिभाषामात्रमश्वकर्णादिशब्दवत्। न चैतादृशं व्यावहारिकत्वं सौगता यावद्ब्रह्मज्ञानम्, यावत्प्रपञ्चोपादानाज्ञाननाशं वा जगतो मन्यन्ते। तेषां व्यावहारिकत्वं चान्यादृशं वासनानिबन्धनप्रवृत्तिविज्ञानानां तदभिमततत्त्वविषयज्ञानेनोपरमपर्यन्तम्, वासनानाम् तन्मात्रनिबन्धनसमानाकारार्थविशेषाणां सांवृतसत्यतया व्यावहारिकत्वम्, श्रीभाष्यमतेऽपि तदीयमुक्तावपि व्यवहारायोग्यत्वात् सर्वस्य व्यावहारिकत्वं संमतमेव ॥

न च यावदखण्डाकारवृत्ति वेदाप्रामाण्यम्, तन्निबन्धने ज्ञाने वा भ्रान्तित्वं, वकोऽपि वैदिकः, अद्वैती वा मन्यते। सौगतास्तु वेदस्य पौरुषेयत्वेनाप्तप्रणीतत्वेन प्रामाण्यं मन्यन्ते, न त्वीश्वरप्रवर्तितत्वेनानादिसिद्धत्वं स्वीकृत्याखण्डाकारसाक्षात्कारानन्तरं तु—

"न भूमिर्न तोयं न तेजो न वायु-
र्न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥"

इति साक्षात्कृतात्मतत्त्वदृष्ट्या ।

एतेन—

"न धर्मो न फलं किञ्चित् न तयोर्हेतु-साध्यता ।
मुधा भ्राम्यन्ति हन्तेमे इति तुल्यं विभावयेत् ।"

इत्यपि—व्याख्यातम् ॥

मुक्तात्मनां धर्मफलाद्यभावः सर्वत्र समानः, बौद्धदृष्ट्या
बाधस्याकिञ्चित्करत्वं च

इदं हि वचनं सौगततत्त्ववेदिनः श्रीभाष्यसिद्धान्तस्यापि समानम् । श्रीभाष्यमपि परमात्मशरीरतयाऽपहतपाप्मत्वादिरूपेणात्मानं मन्यमानस्य मुक्तात्मनोऽपि न धर्म-तत्फलादिषु श्रद्धामावश्यिकां मन्यते । गीतापि—
"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ॥"

इति मुक्तात्मनां न धर्म-तत्फलभोग इति गायति । अतत्त्वविदां तु कर्म तत्फलं यावत्तत्त्वज्ञानं सत्यम् , अनन्तरं तु बाध्यम् । सर्वथा तु यावद्व्यवहारं न वैदिकधर्मस्य बाधः, सौगतदृष्ट्या बाधस्तु श्रीभाष्यसिद्धान्तस्यापि समानः, अकिञ्चित्करश्च । वैदिकधर्माणां वस्तुतोऽभावो बौद्धदृष्ट्या तस्य तदागमसिद्धत्वाभावेन । न चाद्वैतिनां मते वैदिकधर्माणां वैदिकत्वाभावः, किन्तु तन्मतानुसारेण तत्तद्धर्माधिकारिणां यावद्धर्माधिकारं धर्मोऽनुष्ठेय इत्येव सर्वदर्शनसिद्धान्तः ॥

धर्माधर्मादिव्यवस्था तान्त्रिक-वैदिकेषु श्रीभाष्याद्वैत-
भाष्ययोः समाना

न हि सर्वाधिकारिकः सर्वोऽपि वैदिको धर्मः, इति श्रीभाष्यराद्धान्तेऽपि । किं बहुना ? पाञ्चरात्राभिमतः पिष्टपशुयाग एव धर्मः, न वैदिकपशुयागोऽपीति खलु पाञ्चरात्रप्रामाण्यप्रकरणे पिष्टपशुयागमेव धर्मं व्यवस्थापयत्युपरिचरवसूपाख्यनादिना । कूर्मपुराणं हि तान्त्रिकाणां पाञ्चरात्रानु यायिनां पिष्टपशुयागः, वैदिकानां तु मुख्यपशुयाग इति व्यवस्थापयति ।

किं भूषणं पाञ्चरात्रसम्मतः पिष्टपशुयाग एव वैदिकानामपि धर्म इति मन्यते ? किं वा वैदिका अपि मुख्यपशुयागधर्मत्वं मन्यमानाः पिष्टपशुयागमनुतिष्ठन्तोऽपि पाञ्चरात्रप्रामाण्यवादिनो भवितुमर्हन्ति । अतो बौद्धधर्मः, पाञ्चरात्रधर्मो वा न वैदिकानां धर्मो भवितुमर्हति, वैदिकधर्मो वा, पाञ्चरात्रपक्षपातिनां सौगतानां वा धर्मा इति वैदिकानां धर्मस्य वस्तुतोऽभावः, श्रीभाष्यानुयायिनाम्, एवं पाञ्चरात्रानुयायिनामपि धर्मो न वस्तुतो वैदिकानामद्वैतिनाम् ॥

### बौद्धाऽद्वैतिनां मिथ्यात्ववादावपि वैषम्यम्, श्रीभाष्यमत इव

अत्र वस्तुतोऽभावशब्देन मिथ्यात्वं यदि विवक्ष्यते, तर्हि बौद्धाभिमतमिथ्यात्वमन्यत्, अद्वैतिनां मिथ्यात्वमन्यत्, यावद्व्यवहारं सत्त्वं श्रीभाष्यमतेऽपि समानमिति किमनेनऽनार्जवेन भूषणव्यवहारेण ? वेदान्ता न प्रपञ्चसत्त्वं प्रतिपिपादयिषन्ति; तस्य प्रत्यक्षत्वात्, किन्तु तदधिष्ठानं प्रपञ्चबाधकज्ञानविषयमेव संशोध्य प्रतिपादयन्ति, इति सौगतेन, श्रीभाष्यानुयायिना, अद्वैतिना वा सांवृतसत्त्वमिति वा, व्यावहारिकमिति वा यः कोऽपि यत्किमपि वर्ण्यताम्, सप्रपञ्चमेव व्यवहारदृष्ट्या-स्वरूपतोऽद्वितीयं ब्रह्मेति ब्रह्मवादिना साम्यं कथं सौगतमतस्य ?

स च प्रपञ्चो ब्रह्मविवर्तः, सदसद्विलक्षण इत्यद्वैतम्, असदिति सौगतम्, "सदेवे"ति श्रीभाष्यमतम्, इति यद्यसद्व्यतिरिक्तः प्रपञ्च इति यदि श्रीभाष्यमतं सौगतमताद्विलक्षणम्, तर्हि कथमद्वैतमतमपि न ततो विलक्षणम् ? अनिर्वचनीयवादः श्रीभाष्येणापि खण्ड्यते, श्रीभाष्यमतं च सौगतेन निरस्यते । अद्वैतिभिः पराक्रियते । अद्वैतमतमुभाभ्यां निराक्रियते इति त्वन्यदेतत् । सौगतमतवैलक्षण्यमद्वैतवादस्य श्रीभाष्यमत इवाक्षुण्णम् ॥

### धर्मनित्यत्वेऽपि श्रीभाष्याद्वैतभाष्ययोः सौगतेभ्यो वैषम्यम्

कर्मानुष्ठानविषये वैदिकानां वेदः शरणम्, सौगतानां तदागमो मुख्यालम्बनः । भ्रान्तित्वचर्चा हि सौगतानां सर्वस्य सांवृतसत्यत्वेऽपि सौगतागमेऽपि नास्ति, अद्वैतिनो वेदवाक्येष्वपि यावद्बाधं नास्ति । यथा च वक्तृदोषवत्त्वं न वेदस्यापौरुषेयस्य, तथा पूर्वमेवोक्तं मूलाविद्यायां वक्तृ-

दोषत्वाभावनिरूपणेन। अतो नाद्वैतिनां न धर्माधर्मव्यवस्था, ईश्वरोऽपि नास्तीति भावः ॥

ईश्वरोऽस्तीति व्यवहरमाणानां सर्वपापनिर्हरणं तत्प्रपत्तिमात्रेण भवतीति सिद्धान्तोऽप्यधर्माचरणैकदीक्षाणामिव नाद्वैतिनां शरणम् , येन न भीतेरवकाशः ॥

यदि स्वीय इति मत्त्वेश्वरः पुरुषकारस्वमाचार्यपुरुषाश्रयणमात्रेण महाप्रायश्चित्तेनेव प्रपत्त्यैवाहरिष्यति, तर्हि का वा भीतिरधर्मात्, तत्फलात् सर्वविधादपि नरकात् ? सर्वथा तु श्रीभाष्यादिमत इव यावत्सत्यत्वम् , तावदद्वैतसिद्धान्तेऽपीश्वरस्य सत्त्वं वर्तते ॥

इयान् विशेषः—अस्मदीय इति कृत्वाऽऽस्मान् रक्षत्यपीति सर्वधर्मान् परित्यज्य तस्य प्रपत्तिमात्रं पर्याप्तमिति श्रीभाष्यमतम् , अद्वैतसिद्धान्तस्तु यावत्स्वरूपज्ञानम् , यावच्चेश्वरनिष्कृष्टस्वरूपज्ञानम् , धर्माधर्माधिकारात् तत्तदाश्रमोचिताद् न विच्युतिरिति। यदि सौगतमतप्रचार एव भगवत्पादानां लक्ष्यम् , तर्हि सौगतागमं विहाय तस्य दृष्ट्याऽप्रमाणवेदद्वारेण कथं वैदिकधर्मप्रचारस्तेषां लक्ष्यं स्यात् ॥

### सौगतमतप्रचारो भगवत्पादानां न लक्ष्यम्,

सौगतधर्माणां खलु प्रचारस्तेषां प्रधानं लक्ष्यं स्यात् , न तु तत्त्वमस्यादिवाक्यप्रामाण्यस्वीकारेणाद्वितीयब्रह्मतत्त्वसिद्धान्तप्रचारः। प्रपञ्चव्यावहारिकत्ववादः सौगताद्वैतसिद्धान्तयोर्यद्यपि समान इव, तथापि पूर्वोक्तरीत्या नानिर्वचनीयतावादोऽद्वैतिनामिव सौगतानामिति पूर्वमुक्तम् ॥

### व्यावहारिकत्वादि न परिभाषामात्रमद्वैतिनाम्

यथा च व्यावहारिकं प्रामाण्यं न परिभाषा यावद्व्यवहारमनुवर्तमानत्वमात्रेणार्थक्रियाकारित्वादिना, सत्त्वेन श्रीभाष्यमत इव, तथा पूर्वमुक्तम् ॥

तत्र शुक्तिरजतादिकं व्यवहारानुपयुक्तमिति भूषणमपि लिखति। तत एव न तद् व्यावहारिकम्। व्यवहारबाधो हि तत्साधन-साध्य-सहकारिकलापानामभावेन, स तु ब्रह्मसाक्षात्कारकाले तत्प्रयोजकमूलाविद्यानाशादर्थसिद्धः, इति तदानीं प्रमातृ-प्रमाणादिभेदभिन्नप्रपञ्चाभावादर्थ-

सिद्धप्रामाण्यबाधमादाय तत्प्रामाण्यबाधं श्रुतिरनुवदति, न तु प्रमाता कश्चन तदप्रामाण्यमनुसन्दधाति ॥

### श्रुति-गीतादीनामद्वैत एव पर्यवसानम्

यथेहैव लोके व्यवहरन्तं बद्धं जीवं प्रति प्रत्यगात्मतत्त्वमुपदिशन्ती श्रुतिर्वैकुण्ठलोकप्राप्त्याद्युपदिशति, मुक्तात्मनः स्वरूपं च । भगवान् हि गीतायाम् ॥

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥"
"उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥"

इत्यादिना सप्रपञ्चस्यैव स्वस्याप्रपञ्चत्वम् , स्वस्य ज्ञानिनैक्यं च —

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥"
"ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"

इति सर्वोपाधिविरहितं स्वयंज्योतिश्चात्मतत्त्वं जीवानां सर्वेषामेकमेवेत्यादि बोधयंश्च प्रपञ्चमिथ्यात्ववादम् , आत्मैक्यं च परमार्थमुपदिशति । न चेदं सर्वमद्वैतसिद्धान्तमपहायान्यत्र ॥

### अविद्या-तत्कार्ययोर्नाश-बाधव्यपदेशभेदनिमित्तम् , शुक्ति-रूप्येणोभयोरपि बाधः, ध्वंसबाधविवेकश्च

तत्र प्रपञ्चस्य बाध उपदानात्मनाऽप्यसत्त्वम् । नाशस्तूपादानात्मना सत्त्वम् , तत्राऽनित्यत्वं नासत्यत्वम् । यत्रोपादानात्मना सत्त्वम् । न चायं नियमः—असत्यस्य ध्वंसायोग इति । अविद्या केवलं निवर्तते, नश्यति तत्त्वज्ञानेन वा । न च सा नित्या; सोपादानस्य कार्यस्य कार्यावस्थामात्रनिवृत्तिर्नाशः, उपादानस्य मूलस्य निवृत्तिस्तु बाध इति विवेकः । शुक्तिरूप्यं यत्र शुक्तित्वज्ञानेन नश्यति तत्रोपादात्मनाऽपि नश्यतीति कृत्वा तस्य बाध्यत्वात् , उपादानात्मनाऽभावाच्च न नष्टमिति व्यवहारः । न चैवं व्यावहारिकस्य जगत इति ध्वंस-बाधयोर्विषयविवेक इति ॥

वस्तुतो व्यवहारकाले प्रपञ्चाभावो नाम मूलभूताविद्यात्मनापि सार्वदिकसत्त्वाभाव एव, तेन मूलोपादानमपि नाम-रूपात्मनाऽननुवर्तनमात्रं बाध्यमिति श्रुतिर्बोधयतीति श्रुतितात्पर्यविदामभिप्रायेण, न तु लौकिकदृष्ट्या ॥

शून्यवादेऽपि शून्यत्वबुद्धिरपि न परमार्थः

शून्यवादेऽपि तदागमश्रवणमात्रेण, मनन-निदिध्यासने अन्तरा न प्रपञ्चस्यासत्त्वनिर्णयः। शून्येऽशून्यत्वबुद्धिरपि तन्मतेऽतथ्यबुद्धिरेव। तदुक्तं माध्यमिककारिकायाम्—

"शून्यमिति न वक्तव्यं नाशून्यमिति वा वदेत्।
येषां तु शून्यताबुद्धिस्तानसाध्यान् प्रचक्षते॥"

इति। चतुष्कोटिविनिर्मुक्तशून्यतत्त्वविज्ञानमपि न तदीयं साधारणं कृत्यम्॥

मुक्तिकालीनावस्थाया व्यवहारदशायामापादनं कस्यापि दर्शनस्यायोग्यम्

किं सविशेषवाक्यश्रवणकाल एव शब्दतोऽवगतशुद्धप्रत्यगात्मतत्त्वविज्ञानं पुरुषोत्तम-नारायणस्वरूपावगमः, वैकुण्ठवासः, अपहतपाप्मत्वादिभगवच्छरीरतया स्वस्वरूपावगमो वा सर्वेषां भवति? येन श्रवणकाल एव सर्वमिथ्यात्वनिर्णयादिकमद्वैतमते स्यादिति कृत्वा व्यवहारकाल एव प्रपञ्चाभावमादायापाद्यमानानि दूषणानि प्रसरेयुः॥

अतः श्रवणकाले प्रपञ्चाभावः, वैकुण्ठलोक-तद्वासाद्यवगतिः, जीवपरमात्मस्वरूपावगमः, अन्यच्च मुक्तात्मस्वरूपं गत्याद्यनपरोक्षम्, यन्मात्रेण सर्वबन्धनिवृत्तिः, मुक्तिर्वा परमार्थतोऽभावादिकमपि प्रपञ्चस्य मननावस्थामाश्रित्य, न तु मुक्तावस्थामास्थायेति सर्वदर्शनसंमता व्यवस्था। सोऽपि प्रपञ्चाभावो बौद्धानामन्यः, अद्वैतमते तु सदसद्विलक्षणरूप इत्यादि व्यक्तमधस्तात्॥

अनिर्वचनीयवादे प्रमाणाप्रमाणद्विव्यवस्था

अतोऽनिर्वचनीयवादिनां पारमार्थिकं प्रामाण्यं तत्त्वमस्यादिवाक्यानामेव, येषां फलं सर्वप्रपञ्चोपादानमूलाज्ञान-तत्प्रयुक्तसर्व बाधकज्ञानं फलम्, इति बाधकज्ञानं ब्रह्मावरकाज्ञाननिवर्तकं परमार्थ ब्रह्मस्वरूपावगमद्वारत्वात्, तद्विषयकत्वात्, तद्वत् पारमार्थिकतत्त्वविषयकत्वाद्वा पारमार्थिकं स्वोपादानाविद्यानुवृत्तिदशायाम्, तद्बाधकज्ञानानुदये स्वोपादानकारणतादात्म्येन स्थूलरूपेण, सूक्ष्मरूपेण वा वर्तमानार्थविषयं ज्ञानं व्यवहारोपयोग्यर्थविषयकं व्यावहारिकम्, एवं पूर्वोक्तरीत्या प्रातिभासिकं प्रामाण्यमित्यद्वैतसिद्धान्तः॥

अनावृतसंविन्मात्रविषयकं ज्ञानं पारमार्थिकविषयकत्वात् पारमार्थिकं प्रमाणम्, मूलाविद्या-तत्प्रयुक्तान्यतरविषयकं ज्ञानं व्यावहारिकं प्रमाणम्, तूलाज्ञानकार्यार्थविषयकं ज्ञानं प्रातिभासिकमिति व्यवस्था। न हि प्रातिभासिकार्थविषयकं सर्वं प्रातिभासिकं प्रमाणम्, येन सुखादिज्ञानमपि प्रातिभासिकं प्रमाणं स्यात्, इति विवेक्तुमेव तूलाज्ञानकार्यार्थविषयकं ज्ञानं प्रातिभासिकं प्रमाणमित्युक्तम्। अज्ञानकार्यत्वाविशेषेणानिर्वचनीयत्वे समानेऽपि शुक्तिरूप्य-घटादिप्रपञ्चयोरुपादानभेदेन व्यावहारिकत्व-प्रातिभासिकत्वनिबन्धनो भेदो वर्तते, इति कथं वाऽनिर्वचनीयत्वमात्रेण सर्वसाङ्कर्यमद्वैतसिद्धान्ते ?

श्रीभाष्यमत इवाद्वैतमतेऽपि सौगतविलक्षणवेदप्रामाण्य-
परिग्रहोपसंहारः

न च जगत्, सत्; बाध्यत्वात्, न चासत्; अपरोक्षतया प्रतीयमानत्वात्। न च श्रीभाष्यमतेऽपि शशशृङ्गाद्यसदपरोक्षप्रतीतिगोचर इति सिद्धान्तः। सौगताद्वैतमतयोर्वेदप्रामाण्यपरिग्रहे, अन्यत्र वा धर्म-मुक्ति-तत्साधन-ज्ञेयादिविषये श्रीभाष्य-सौगतमतयोरिव न साम्यम्, इति न वेदप्रामाण्यपरिग्रहानुपपत्तिरद्वैतसिद्धान्त इति विवेकः॥

अद्वैतमते न योगाचारसाम्यमपि

योगाचारमते क्षणिकालयविज्ञानसन्ततयस्तत्तज्जीवसम्बन्धिन्योऽनन्ताः, नैक ईश्वरः, न वा चिन्मात्रं चैतन्यमेकं तत्त्वमद्वैतमत इवेत्यादि पञ्चपादिकाविवरणे व्यक्तम्। अतो योगाचारमतेनापि साकं नाद्वैतमतस्य साम्यम्। विस्तृतं चैतद् योगाचारमतनिरसनावसरे भाष्ये। अपरं सर्वं त्वनुक्तोपालम्भनम्, दुरनुवादश्चेत्यलमधिकेन॥

॥ इति वेदप्रामाण्यपरिग्रहोपपत्तिः ॥

## दृश्यत्वानुमानोपपत्तिः

मिथ्यात्वं न शून्यत्वम् , तुच्छत्वं वाऽद्वैतमते, इति तुच्छत्व-
मिथ्यात्वेन नाऽर्थान्तरम्, तत्र तुच्छत्वं न प्रपञ्चस्य;
सत एवाधिष्ठानत्वेनानुवर्तमानत्वात्

प्रपञ्चः प्रतीयमानत्वाद् नासत् , बाध्यत्वाच्च न सदिति सदसद्वि-लक्षणत्वं तस्याद्वैतिनो मन्यन्ते। सदसद्विलक्षणत्वोपपादकं तु प्रतीयमानत्वे सति बाध्यत्वम् , न तदेव मिथ्यात्वम् । बाध्यत्वेनैवेष्टसिद्ध्या प्रतीय-मानत्वविशेषणवैयर्थ्यात् । तद्धि तुच्छत्वव्यावृत्त्यर्थमिति वक्तव्यम् । बाध्यत्वं तु न तुच्छस्यापि ब्रह्मण इव । शून्यवादिनां तु शून्यं तत्त्वं न बाध्यम् , इति बाध्यत्वमात्रस्य मिथ्यात्वेऽप्यभावप्रतियोगित्वमात्रेण घटादीनां शून्यत्वशङ्का स्यादिति विशेषणम् ॥

मिथ्यात्वं च विशेषाणाम् ; निर्विशेषवाक्येन तेषामधिष्ठाने
ब्रह्मणि निषेधात्

तत्र निर्विशेषवाक्यप्राबल्यम् , सविशेषवाक्यदौर्बल्यं चाश्रित्य सविशेष-वाक्यानामुपासनापरतयोपस्थाप्यानां वाक्यैकवाक्यतया निर्विशेषवाक्या-पेक्षितप्रतियोगिविशेषसमर्पकतया, निर्विशेषवाक्यानां च विशेषनिषेधेन निर्विशेषबोधनैकप्रयोजनकत्वेन प्रामाण्यमवलम्ब्याद्वैतवादः ॥

श्रीभाष्यमते सविशेष-निर्विशेषोभयप्रामाण्यं गौणम् ,
न तु मुख्यम्

श्रीभाष्यमते तु तेषामपि सविशेषपर्यवसानात् श्रुतिप्राप्तविशेषाति-रिक्तविशेषनिषेधवैयर्थ्यात् , अप्रसक्तप्रतिषेधेन निरस्तसमस्तदोषपर-तया तेषां योजनेऽप्यप्रयोजनत्वाच्च न तावतैव पर्यवसानम् । अत उभय-प्रामाण्यं मुख्यम् ॥

प्रपञ्चमिथ्यात्वस्य श्रौतत्वम्

अत एव "नासदासीन्नो सदासीत् तदानीम्" "नेह नानाऽस्ति किञ्चन" "अथ परा यया तदक्षरमधिगम्यते यत्तद्रेश्यमग्राह्यमवर्णमगोत्रमचक्षुः-श्रोत्रं तत् यत् भूतयोनिं परिपश्यन्ति धीराः" इति श्रुतिसार्थक्यम् । तत्र "नासदासीत् नो सदासीत् तम आसीत्" इति तमसाऽऽवृतं सविद्रूपं

च तदानीमासीदिति च बोधयत् तदनन्तराणामविद्यावृतचैतन्यविवर्तत्वम् , अविद्यापरिणामत्वेन तद्वदनिर्वचनीयत्वं च ज्ञापयति। तत एवाविद्यानिवृत्तावनावृतसंविन्मात्रसिद्धिरित्यपि सिध्यति ॥

अयमेवार्थः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"तिसप्रपञ्चं ब्रह्मानूद्य तदप्रपञ्चत्वबोधनेन, प्रपञ्चमिथ्यात्वोपपादनेन च तेनैकवाक्यतया लभ्यते। तथा "नेह नानाऽस्ति किञ्चने"त्यादीनि बहूनि वाक्यानि प्रपञ्चमिथ्यात्वबोधकानि ॥

### सविशेषवाक्यानां बहुत्वमकिञ्चित्करम् , येन मिथ्यात्वं न सिद्ध्येत्

तत्र प्रबलानां सङ्ख्याल्पत्वं सर्वबाधकज्ञानविषयविषयकानामकिञ्चित्करम् , येन 'सार्थादपि तस्करा बहवः' इति न्यायेन सङ्ख्याबहुत्वात् सविशेषवाक्यानि निर्विशेषबाधकानि स्युः ॥

### निर्विशेषवाक्यानामेव सविशेषापेक्षया प्राबल्यम् ,प्रत्यक्षानुमानादिकमपि तदुपबृंहकम्

तत्र सविशेषं प्रस्तुत्य निर्विशेषम् , निर्विशेषं प्रस्तुत्य सविशेषं च स्वरूपमिति क्रमभेदेऽपि निर्विशेषमेव परमार्थतस्तदभाववति तत्प्रकारकत्वेन मुख्यम्। यावद्बाधं सविशेषाण्यपि प्रमाणानि भवन्तु तद्वति तत्प्रकारकत्वेन। मुख्यं प्रामाण्यं तु बाधकज्ञानविषयत्वसबाधितानावृतसंविन्मात्रविषयकत्वेनैव ॥

तत्र श्रवणं यद्यपि विचार एव, यस्य निर्णयः फलम्, तथाप्यनादिभेदवासनाप्रतिबन्धेन न तत्त्वनिर्णय उपकरिष्यति, इति मननादिविधिः। श्रवणमात्रेण निष्पन्ने फले प्रयोजनाभावाद् नियताङ्गम्; दृष्टार्थेषु साधनावृत्तिर्हि यावत्फलनिष्पत्त्यैव; अन्यथाऽवहननादिना निष्पन्नेऽपि वैतुष्ये न पर्यवसानमापद्येत। अतो न मननादिविधिवैयर्थ्यमेकान्तेन ॥

तत्रानुमानमात्रस्य श्रुत्यवष्टब्धत्वं श्रुतार्थविषयकत्वम्, मननादिकं तु श्रुतार्थविपयासंभावना-विपरीतवासनादिनिरसनेन श्रुत्यर्थमुपबृंहयति, यथाश्रुत्यर्थं चेतिहासपुराणादीनि ॥

तत्र—

"सम्भावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ॥"

इति न्यायेनानुमेयार्थावधारणमात्रं श्रुतेः कार्यम्। तत्र श्रवणमात्रेण तदर्थनिर्णये तन्निर्णय उपकारकमात्रमनुमानम्, इति तदुपकृता श्रुतिरेव मुख्यं प्रमाणम्, नानुमानम् ॥

परविद्याया निर्विशेषवादे, प्रपञ्चमिथ्यात्वे च प्रामाण्यम्

एतेन—"अथ परा यया तदक्षरमधिगम्यते"इति परविद्याऽपि—व्याख्याता। स हि—अद्रेश्यत्वादिना निर्विशेषेण रूपेणोपक्रम्य भूतयोनित्वं सविशेषत्वेन परामृश्य, अक्षरात्परतः परः=प्रकृतितः परादपि परं परमात्मानमुपसंहरतीति निर्विशेषमेव परमाम्नातीति सूत्रस्वारस्योपपत्तावुपपादितम्, सूत्रान्तर-श्रुत्यन्तरस्वारस्यमद्वैत एवेति च विवेचितम् ॥

सदसद्विलक्षणत्वं जगत उपपन्नम्

तत्र सदसद्विलक्षणत्वं जगति मिथ्याभूते कथमनुपपन्नम्? सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वमित्यपि विशदं पूर्वमुक्तम् ॥

सद्विविक्तत्वमिथ्यात्वमपि श्रुत्यन्तरात्

"अतोऽन्यदार्तमि"तिश्रुतिरपि प्रकृतात्=अतो ब्रह्मणोऽन्यत् विविक्तं सर्वं मिथ्येति विशदं सद्विविक्तत्वरूपं मिथ्यात्वं श्रावयति। श्रुतिचतुष्टयमुक्तमद्वैत एव श्रुतीनां स्वारस्यमिति प्रदर्शनार्थं परीक्षितम् ॥

श्रुतिविरोधेऽनुमानमप्रमाणम्, श्रुतिविरोधेऽपि श्रुतिस्तु नाप्रमाणमेव

अथ दृश्यत्वानुमानं परीक्ष्यते—तत्र पूर्वमीमांसायां स्मृतिपादे प्रथममधिकरणं स्मृतीनां श्रुतिमूलकत्वेन प्रामाण्यं व्यवस्थापयन्ती, परोक्षत्वेऽपि श्रुतेः स्मृत्यादीनां प्रामाण्यं व्यवस्थापयन्ती च 'मन्तव्यः' इति श्रुतिमूलस्यानुमानस्य प्रामाण्यम्, श्रुतिव्याख्यानानां भाष्यादीनामिव प्रामाण्यं निगदसिद्धमभिप्रेत्य "विरोधे त्वनपेक्षं स्यादि"ति न्यायान्तरं श्रुतिविरोधेन स्मृत्या श्रुत्यनुमानमिति प्रत्यक्षश्रुतिविरुद्धायाः स्मृतेरप्रामाण्यं साधयति। न चात्र द्वितीयो न्यायः प्रसरति; प्रत्यक्षश्रुतिविरुद्धप्रत्यक्षश्रुत्यमन्तरस्यैकतरेणान्यतरस्य श्रुतिविरोधेनातिरात्रन्यायेन च बाधायोगात्, उभयोरङ्गाङ्गिभावेनाविरोधाच्च ॥

श्रुत्युपष्टब्धमिथ्यात्वानुमान-सत्यत्वानुमानयोर्मिथ्यात्वनुमानस्य प्राबल्यम्, तेन तत्सत्यत्वानुमानस्य बाधश्च

एतेन—ब्रह्ममीमांसास्मृत्यधिकरणमपि—व्याख्यातम्। तत्रापि हि प्रत्यक्षश्रुतविरुद्धकपिलादिस्मृतेः, तदुपबृंहकानुमानस्य चाप्रामाण्यं स्थापितम्;

अन्यथेतिहास पुराणादीनामप्रामाण्यमापद्येत । सति चैवं जगन्मिथ्यात्वा-नुमानमपि श्रुतिमूलकं प्रमाणमेव । तत्र तुल्यन्यायेन जगत्सत्यत्वानुमान-मपि सत्यं प्रमाणं भवितुमर्हति, यदि तदपि श्रुतिमुख्यतात्पर्यविषयः स्यात्, परन्तु जगत्पारमार्थ्यस्य व्यावहारिकत्वेनाप्युपपत्तौ तदुपपत्त्या भिन्नविषयकत्वेन स्वरूपप्रदर्शनात् तात्पर्यवच्छ्रुतिविरोधाभावेन तन्मूलश्रुतीनामिवानुमानयोरपच्छेदन्यायेन मिथ्यात्वश्रुतिमूलानुमानस्य तत्परत्व-निश्चयाद् न जगत्पारमार्थ्यानुमानेन मिथ्यात्वानुमानस्य बाधः ॥

प्रत्यक्षेण मिथ्यात्वश्रुत्या बाधासंभवः, मिथ्यात्वविरोधि-
सत्त्वाविषयकत्वात्तस्य

सद्वितीयत्वमिव ब्रह्मणोऽद्वितीयत्वमपि न प्रत्यक्षविषयः इति जगत्स त्यत्वमिव तन्मिथ्यात्वमपि न प्रत्यक्षविषयः । जगत्सत्यत्वं हि ब्रह्मणः सद्वितीयत्वस्वभावः, तन्मिथ्यात्वं तु ब्रह्मणो निर्विशेषत्वस्वभावः । 'सन् घटः' इति प्रत्यक्षं न जगत्सत्त्वं गोचरयति, यज्जगतो मिथ्यात्वं विरुणद्धि । प्रत्य-क्षयोग्यं मिथ्यात्वविरोधि च सत्त्वं न निर्वक्तुमलमिति तत्र तत्र व्यक्तम् ॥ न ह्यागमाः सहस्रमपि घटं पटयितुमीशते । तात्पर्यविषयो ह्यर्थो वाक्य-सामान्यस्य । तत्र यदि शक्यार्थग्रहणे बाधः, तर्हि तत्र स लक्षणयापि निर्व-हणीयः, यथा "आदित्यो यूपः" इत्यादौ । स एव न्यायो निर्विशेषवाक्येषु, तत्त्वमस्यादिवाक्येषु च, यत्र शक्यार्थग्रहणे बाधः । "एकमेवाद्वितीयमि"ति श्रुतिर्यथाश्रुताऽपि प्रपञ्चमिथ्यात्वमेव बोधयति ॥

न चात्र प्रत्यक्षविरोधः; सप्रपञ्चस्य, अप्रपञ्चस्य च ब्रह्मणोऽप्रत्यक्षत्वेन तत्सत्यत्व-मिथ्यात्वयोरपि श्रुत्येकगम्यत्वात् । 'एकमेवे'ति श्रुत्यर्थपरीक्षा चोत्तरत्र विशदा । सा ह्यद्वैतवाद एव स्वरसा ॥

मिथ्यात्वानुमानहेतोरदुष्टस्य निर्देशः । तत्र स्वान्यूनसत्ता-
कत्वविशेषणस्य वृत्तौ सार्थक्यनिरूपणम्,
सर्वत्र पक्षे समन्वयश्च तस्य

तत्र प्रपञ्चः, मिथ्या, दृश्यत्वादित्यत्र दृश्यत्वरूपहेतुस्वरूपं प्रथममदुष्टं निष्कृष्यते ।

तत्र दृश्यत्वं वृत्तिविषयत्वमित्युक्तौ ब्रह्मणि व्यभिचारः स्यादिति शङ्कां वारयितुं भूषणी तत्र निर्वक्ति—स्वाधिकरणान्यूनसत्ताकं वृत्तिविषयत्वं दृश्यत्वमिति ॥

तच्च दृश्यावच्छिन्नचैतन्यविषयत्वरूपं नित्यपरोक्षे धर्माधर्मादौ न संभवति। वृत्त्यवच्छिन्नचैतन्यविषयत्वस्य तत्तादात्म्यरूपत्वे तस्य वृत्तिमात्रनिष्ठत्वेन विषयेष्वसम्भवेन नित्यानावृतसाक्षिभास्ये सुखादावप्यसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यस्यैव ज्ञानपदार्थत्वे तात्पर्यात् तत्र वृत्तिमात्रव्याप्यत्वस्यैव सत्त्वेन वृत्त्यवच्छिन्नचैतन्यविषयत्वासम्भवेन वृत्तिव्याप्यत्वमात्रे तत्र भागासिद्ध्यापत्त्या वृत्तिव्याप्यसाधारणस्यैव दृश्यत्वस्य वक्तव्यतया तावन्मात्रविवक्षणे ब्रह्मणि व्यभिचारपरिहारार्थमधिकरणान्यूनसत्ताकत्वं विशेषणम् ॥

तत्र दृश्यत्वं दर्शनकाल एव साक्षात्, अन्यदा तु तद्योग्यत्वमात्रम्, इति कृत्वा तत्कालीनामेव सत्तामादायोक्तार्थविवक्षया ब्रह्मण्यपि तदा वर्तत एव। सत्ताशब्देन प्रातिभासिकादिसत्ताभेदो विवक्ष्यते, न तु कालसम्बन्ध इति यावत्प्रपञ्चं वृत्तेरभावाद् नाधिकरणन्यूनसत्ताकत्वमेव दृश्यत्वस्येति कल्पनाऽवसरति ॥

तत्र शुक्तिरूप्यादावविद्यावृत्त्यभिन्नशुक्त्याकारान्तःकरणवृत्तिविषयत्वमादायैव वृत्तिपदेनान्तःकरणवृत्तेरेव ग्रहणस्य वक्तव्यतया तत्र स्वाधिकरणसत्ताजातीयसत्त्वकत्वं नास्ति, इति दृष्टान्ते हेत्वसिद्धिवारणार्थं स्वाधिकरणान्यूनसत्ताकत्वमेव परिष्करणीयम्, तदाकाराविद्यावृत्त्यनभ्युपगमे तत्साधारणवृत्तिविवक्षयाऽपि न निर्वाह इति ॥

तच्च दृश्यत्वं वृत्तिप्रयुक्तासत्त्वापादकाज्ञानविषयत्वाभावः। तस्यापि मिथ्यात्वपक्षे, तद्धर्मत्वे च न ब्रह्मान्यूनसत्ताकत्वमिति न व्यभिचारः। सत्ताभेदानङ्गीकारस्तु श्रुत्यवगतार्थविघातकत्वात् तदनुपबृंहणत्वाच्चाकिंचित्करः ॥

## श्रुतौ नाप्रामाण्यसंभावनाऽपीति तद्विपरीतप्रत्यक्षेण, अनुमानेन वा न श्रुतेर्बाधः

प्रत्यक्षस्य दुष्टकारणजन्यत्वसंभावनया स्वप्रामाण्यशङ्कास्कन्दितत्वमभिप्रेयते। श्रुतौ तु सा न सम्भवति, इति तस्याः स्वतो दौर्बल्यमुपपादयितुम्। अयमेव न्यायः श्रुतिनिरपेक्षेऽनुमानेऽपि। अत्र विश्वसत्यत्वप्रत्यक्षानुमानं न किञ्चित्करम्। अनुमानस्य श्रुत्यनुकूलत्वं च यथाश्रुतेरुपबृंहणं भवति, तथा तेनार्थः साधनीयः, न तु विपरीतमित्यभिप्रायेण श्रुति-

रेव प्रमाणम्, नानुमानम्। नचाङ्गिनः सहकारिकारणमङ्गिविरोधेन प्रवर्तमानमङ्गतामर्हति ॥

भेदश्रुतीनामप्यसंभाव्यमानदोषत्वेऽप्यन्यपरत्वाद्
नाभेदश्रुतिबाधकत्वम्

भेदश्रुतयस्तु काश्चन प्रमाणान्तरप्राप्त्यानुवादरूपाः, काश्चनान्यपराः, "आदित्यो यूपः" इत्यादिवाक्यवत् तावतैवोपक्षीणा निर्विशेषश्रुतीर्न बाधितुनुमीशते, इति निरस्तसमस्तपुंदोषत्वस्याविशिष्टत्वमकिञ्चित्करम् ॥

तत्र वादि-प्रतिवादिनावुभावपि यदि वैदिकौ, तर्हि यथा वेदावगतार्थोपपादनं भवति, तथाऽनुमानकथा तदुचितलोकानुभवसिद्धं दृष्टान्तमादाय प्रवर्तनीया ॥

मिथ्यात्वानुमाने पक्षः शुक्तिरूप्य-ब्रह्मासद्विलक्षणम्

शुक्तिरूप्यादिकं तु यावद्बाधमर्थक्रियाकारीव भासमानं परीक्षायां बाध्यमानं मिथ्या, अनिर्वचनीयं वेति लोकसिद्धम्, इति न तत्साधारणमनुमानमपेक्षितम्, तस्यान्यथानयनं तु श्रुत्यर्थविघाताय, न तु तद्रक्षणाय। शशशृङ्गादिकं तु न सत्त्वेन प्रतीत्यर्हम्, अज्ञान-तत्प्रयुक्तान्यतरद्वा, इति तदपि न पक्षः, ब्रह्म तु सत्यमिति श्रुतिर्विशदं बोधयतीति न तत्रापि सन्देहः, इति त्रितयव्यतिरिक्तमेवात्र पक्षः। न चानुमानसरणिर्यत्र साध्यनिर्णयः यत्र च बाधः, तत्साधारणं पक्षमादाय ॥

अन्यथाख्यात्यनिर्वचनीय-ख्यातिविवेकः

तत्रारोप्यमाणार्थसन्निकर्षेऽन्यथाख्यातिः, तदसन्निकर्षेऽनिर्वचनीयख्यातिः, अधिष्ठानतादात्म्यापन्नविषयत्वं मिथ्यात्वमिति साधारणो नियमः, व्यावहारिक-प्रातिभासिकोभयानुगुणं तु तत्तदधिष्ठानारोपितत्त्वम्, इति शुक्तिरूप्यादीनां शुक्त्यवच्छिन्नचैतन्ये, व्यावहारिकाणां ब्रह्मणि चाधिष्ठान आरोपितत्वे न मिथ्यात्वस्य हानिः ॥

सदसद्विलक्षणत्वमिथ्यात्वस्य ब्रह्म-शशशृङ्गव्यावृत्तस्य प्रपञ्चे
ब्रह्मणि च समन्वयः, सत्त्वासत्त्वयोः परस्परविरह-
रूपत्वाभावेन, न चात्र सिद्धसाधनादि

तत्र प्रथमं मिथ्यात्वं सदसद्विलक्षणत्वम्। तत्रासत्त्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं तुच्छगतम्, तद्वैलक्षण्यं प्रपञ्चे, ब्रह्मणि च सत्त्वं

त्वबाध्यत्वम् , न तूक्तविधासत्त्वाभावः, तदभावश्च न ब्रह्मणि, किन्तु प्रपञ्च एव, इत्युभयवैलक्षण्यस्य शुक्तिरूप्यादौ, प्रपञ्चे च सत्त्वात् , ब्रह्मणि तुच्छे चासंभवाद् लक्षणसमन्वयः। सत्त्वासत्त्वयोः परस्परविरहरूपत्व-मन्यसत्त्वमपेक्ष्य, न तूक्तविधम् ; शुक्तिरूप्यादावुक्तविधस्यैव सदसद्वि-लक्षणत्वस्य सत्त्वात्। प्रपञ्चेऽपि शुक्तिरूप्यादाविवोक्तविधसत्त्वासत्त्वेऽपि नाबाध्यत्वं वर्तते, इति न मिथ्यात्वासिद्धिः। क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वं हि तुच्छस्यैव, इति तुच्छव्यावृत्तावेव तस्य तात्पर्यम् , न त्वबाध्य-त्वाभावे। ब्रह्मणोऽपि क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वं नास्तीति नोक्त-विधमसत्त्वम्। अत उक्तविधासत्त्वाभावमात्रेण न सद्विलक्षणत्वापत्तिः; तस्याबाध्यत्वात्। उक्तविधसद्भेदासद्भेदोभयवत्त्वस्य साध्यत्वात् , तस्य ब्रह्म-शशविषाणोभयरूपत्वाभावाच्च न सिद्धसाधनम्॥

### अनिर्वचनीयख्यातौ मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वम्

सर्वज्ञानयाथार्थ्यवादो न विकल्पसहः, किन्त्वनिर्वचनीयख्यातिवाद-एव युक्त इति पूर्वमुक्तम्। मिथ्यात्वमिथ्यात्वं न प्रपञ्चमिथ्यात्वविरोधीति च व्यक्तं तदवसरे। प्रपञ्चबाधो ब्रह्मणि प्रपञ्चाभावः, तदभावः प्रपञ्चस्य सत्त्वम् ; उभयोरपि प्रपञ्चत्वेन ब्रह्मण्यारोपात् , प्रतियोगि-तदभावयो-रुभयोरप्येकत्र विरुद्धयोरारोपो महिषे गवाश्वयोरारोप इव, स्वप्ने गज-तदभावयोरुभयोरिव च न विरुध्यते। प्रपञ्चबाधो नामारोपितप्रपञ्चा-भावः, तदभावश्चारोपितप्रपञ्चवत्त्वम् , न तु सत्यप्रपञ्चवत्त्वम्। तत्र प्रपञ्च इव तद्बाध्यत्वमप्यनिर्वचनीयम्! एकस्मिन्नधिष्ठाने विरुद्धानेक-धर्माध्यासो हि न व्याहन्यते; घट-पटादीनां विरुद्धानामेकत्र चैतन्येऽध्या-सात्। तदुक्तम्—

"किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥"

इति॥

### मिथ्यात्वपारमार्थिकत्वपक्षस्यापि समर्थनं तस्य ब्रह्मरूपत्वेन, तन्नाऽभावरूपमात्रमिथ्यात्वेन, उपलक्ष-णत्वेनान्वयाच्च

बाध्यत्वपारमार्थिकत्वं तु ब्रह्मणः प्रपञ्चाभावत्वोपलक्षितरूपेण। तच्चाभावत्वस्यापि मिथ्यात्वेनोपलक्षणत्वेन, न तु ब्रह्मण एवोपलक्षण-

त्वेन। अभावत्वं हि विशेषणतया प्रथमं काकादीनां भावेन, पश्चादभावेन च न विरुध्यते। एवं प्रपञ्चाभावत्वस्य ब्रह्मणि सत्त्वात् सद्वितीयत्वापत्ति-शङ्कावारणार्थं तस्यापि प्रपञ्चत्वेन मिथ्यात्वादुपलक्षणत्वम् ॥

अतस्तस्यापि मिथ्यात्वेनोपलक्षणत्वं नासाम्प्रतम्, न वा व्याहतम्। न च प्रपञ्चाभावातिरिक्तं बाध्यत्वं नाम, येनोभयाभावस्यात्र विवक्षा। प्रपञ्चाभावत्वं हि ब्रह्मणोऽनावृतस्यैव, न त्वावृतस्य; आवृतावस्थायां तु प्रपञ्चवत् तदभावत्वमपि कल्पितं वर्तते ॥

विद्यमानमपि तदसत्त्वापादकाज्ञाननिवर्तकवृत्त्यभावे किंचिदपि न भासते, तत्सत्त्वे तु किंचिद् भासत इति न दोषः ॥

अभावत्वस्य प्राथमिकमिथ्यात्वप्रतीतौ प्रपञ्चाभावत्वेन प्रतीति-मादाय विशेषणत्वम्। न हि ब्रह्म बाध्यम्, किन्तु प्रपञ्चाभावत्वोप-लक्षितरूपम्, बाध्यत्वं तु प्रपञ्चस्य। न च प्रपञ्चाभावातिरिक्तं ब्रह्म, इति ब्रह्मरूपेण प्रपञ्चाभावसत्यता, तदतिरिक्तरूपेण तु प्रपञ्चाभावो-ऽपि मिथ्यैवेत्युक्तम् ॥

भावाद्वैतमते तु ब्रह्मातिरिक्तः प्रपञ्चाभावोऽपि सत्य इव। इदं तु भावान्तराभाववादानङ्गीकारेण। तत्र त्वभावत्वस्यापि कल्पितत्वाद् न द्वैतापत्तिरिति निरूपितमधस्तात् ॥

### ब्रह्मण एकत्वं सजातीय-विजातीयाद्यभाव एव

एतेन—एकत्वाद्वितीयत्वादिकमपि—व्याख्यातम्; अनावृतसंवि-न्मात्रातिरेकेण कस्यापि सजातीय-विजातीय-स्वगतभेदस्याभावात्। पञ्च-मप्रकाराविद्यानिवृत्तिवादेन वोपपत्तिर्मन्यताम्। यथा चात्र न चतुष्कोटि-विनिर्मुक्तशून्यतत्त्ववादस्यावसरः, तथा स्वावसरे शतभूषण्यां विस्तृतम्। अत्रापि सत्यवसरे तत्रैव विशदीकरिष्यत इति ॥

### मिथ्यात्वपारमार्थिकत्वरूपत्वम्, पञ्चमप्रकाराविद्यानिवृत्तिस्वरूपम्, तत्र दृश्यत्वहेतोरनेकान्ताभावश्च

तत्र मिथ्यात्वपारमार्थिकत्वपक्षेऽनावृतसंविन्मात्रस्यैवाभावत्वोपलक्षि-तस्य मुक्तित्वात्, तस्याश्चाबाध्यत्वाद् न मिथ्यात्वापत्तिः। पञ्चमप्रका-राविद्यानिवृत्तिस्तु ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्याप्यभावेन पञ्चमकोटि-मर्हति, इति न सदसद्विलक्षणत्वस्य, बाध्यत्वस्य, सद्विविक्तत्वस्य वा मिथ्या-

त्वस्य तत्राऽऽपातः। न च तन्मते सा मुक्तिः; अनावृतसंविन्मात्रस्यैव तत्रापि मुक्तिस्वरूपत्वात्। अतो न पक्षद्वयेऽपि मोक्षस्यानित्यत्वापातः। अतो न तत्र हेतोरनैकान्तः। दृश्यत्वयोग्यत्वमेव दृश्यत्वम्, तत्तु वृत्तिविषयत्वरूपमविद्यानिवृत्तिकालिकाविद्यानिवृत्तौ पञ्चमप्रकारायां नास्तीति न तत्र व्यभिचारः॥

शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वमपि न दुष्टम्;
ब्रह्मण्यव्यभिचारात्

शब्दाजन्यवृत्तिविषयत्वम्, सप्रकारकधीविषयत्वं वा दृश्यत्वम्। इदं च न ब्रह्मणि, तस्य श्रुतिरूपशब्दजन्यवृत्तिविषयत्वात्। न च 'सन् घटः' इत्यत्राखण्डं संविन्मात्रं भासते, इति न प्रत्यक्षविषयत्वमादाय तत्रैनैकान्तः प्रसरतीति पूर्वमुक्तम्। न चाधिष्ठानमखण्डमनावृतसंविद्रूपमिति॥

फलव्याप्यत्वाभावविशिष्टापरोक्षव्यवहारयोग्यत्वाभावो
वा दृश्यत्वम्

फलव्याप्यत्वाभावविशिष्टापरोक्षव्यवहारयोग्यत्वाभावरूपदृश्यत्वं यद्यपि पञ्चमप्रकाराविद्यानिवृत्तिसाधारणम्; तथापि तत्र व्यभिचारवारणार्थमज्ञान-तल्लेशान्यतरतादात्म्यानापन्नत्वं हेतुविशेषणं देयम्। इदं त्वज्ञानकालिकत्वाभावाद् न पञ्चमप्रकाराविद्यासाधारणम्॥

स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमिथ्यात्वस्योपपादनम्,
तस्य लक्ष्येषु समन्वयश्च

एतेन—स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं मिथ्यात्वमपि—व्याख्यातम्। तच्च तदभावाधिकरणत्वं वस्तुगत्या श्रुतिसिद्धमादाय। तेन च तदभाववति तत्प्रकारकत्वं मिथ्यात्वं पर्यवसितम्। तदभाववत्त्वं च तादात्म्यसम्बन्धेन, तेन चोक्तसम्बन्धावच्छिन्नविशेष्यतानिरूपितोक्तसम्बन्धावच्छिन्नं प्रकारत्वमिति पर्यवसितम्। अतस्मिन् तत्प्रकारत्वमप्यतस्मिन्नित्यनेनापि बहुव्रीहिसमासेन तदभाववत्त्वमेव विवक्षितम्। भूषणमपि ऋजु वा लघु वा गुरुणोक्तरीत्याऽर्थवर्णनं नासाधु मन्यते॥

तत्र तादात्म्यसम्बन्धेन तद्वत्त्वं चाधिष्ठानविधया, इति न तदधिष्ठाने तदभावज्ञानं भ्रान्तानां संभवति, किन्तु प्रमाशालिनामेव, इति न सिद्धसाधनम्। कपालादौ घटादिप्रतीतिः कपालशब्देन घटपरिणाम्युपादानविवक्षायां न तदभाववद्विशेष्यिका। तदुपलक्षितसंविन्मात्राधिष्ठानविवक्षायां तु तदभावसमानाधिकरणैव, इति घटादीनामुक्तविधं मिथ्यात्वमव्याहतम्॥

'स्वात्यन्ताभावाधिकरण एवे'त्येवकारप्रयोगोऽपि कपालादिपरिणाम्युपादानपरिग्रहो मा भूदिति। तेन च तदभाववत्त्वमधिष्ठानगतमेव विवक्ष्यते। तच्च स्वव्यतिरिक्तस्य सर्वस्य परोक्षतया, प्रत्यक्षतया वा प्रतीयमानस्याधिष्ठानम्, न तु तथाप्यधिष्ठानं किमपि, अहङ्कारादिकं वा, इति स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं न ब्रह्मसाधारणम्॥

### "नेह नानाऽस्ती"ति श्रुत्याऽपि मिथ्यात्वनिर्णयः

"नेह नानाऽस्ति किञ्चन" इति श्रुतिः प्रपञ्चाधिष्ठाने, तत्तादात्म्याध्यासाधिष्ठाने वा ब्रह्मणि प्रपञ्चाभावम'ध्यारोपापवाद'न्यायेनोपदिशति, न तु तदनधिष्ठान आधारमात्रे तत्राध्यारोपेण प्रसक्तिः। तत्रापवादः यथेदं रजतमित्यत्र नेदं रजतमित्यपवादः, इति नाप्रसक्तप्रतिषेधः। श्रुतिबोधितमपि तत्तात्पर्याविरोधे श्रुत्या बाधितुं शक्यते॥

### कारणवाक्यानामपि कार्यमिथ्यात्वपर्यवसानं ब्रह्मणो विवर्तोपादानतयैव, श्रीभाष्यमते ब्रह्मोपादानत्वानुपपत्तिश्च

तत्र कारणवाक्यानि ब्रह्मणः कार्यसम्बन्धं बोधयन्ति। कार्य-कारणभावश्च परिणामि-परिणामभावेनापि भवति, विवर्तोपादानोपादेयभावेनापि। तानि हि सविशेषत्वमात्रं ब्रह्मणो बोधयन्ति। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति कारणमात्रसत्यत्वनिरूपणपूर्वकं कार्यमिथ्यात्वमपि श्रावयति। इदं च विवर्तोपादानोपादेयभाव एव लगति। न च ब्रह्म परिणामि; निर्विकारत्वश्रुतिविरोधादिति संप्रतिपन्नम्। सूक्ष्मचिदचिद्विशिष्टस्यापि ब्रह्मणो यदि परिणामिता साक्षात्, तर्हि विशिष्टमपि सविकारमापद्येत, इति विशिष्टम्, विशेष्यमात्रं वा ब्रह्मातिरिक्तं किं वा ब्रह्मोपादानकारणं श्रीभाष्यमते? इत्यगत्या विशेषणप्रकृतिमात्रस्योपादानत्वे का वा गतिरभिनिमित्तोपादानतावादस्य। तत्रापि कथं परिणामिप्रकृतिनित्यता?

### ब्रह्मस्वरूपस्य निमित्तकारणमात्रत्वेऽपि नियामकत्वसंभवात् विशिष्टोपादानतावैयर्थ्यम्

अस्तु वा कथञ्चन ब्रह्मणो निमित्तकारणत्वमात्रम्, किं वा प्रयोजनं विशिष्टरूपेणोपादानत्वस्य पारिभाषिकस्य स्वीकरणस्य? निमित्तकारणत्वेऽपि ब्रह्मणो नियामकत्वेन शरीर-शरीरिभावस्य द्वैतमत इव निर्वाहसंभवात्। नियामकत्वमेव हि शरीरित्वं श्रीभाष्यमते। तत्र निमित्तकारणत्वं विशेष्यमात्रस्य, नियामकत्वं चेति श्रीभाष्यसिद्धान्ते विशिष्टस्यापि कारणत्वमुपादानत्वं किमर्थमूरीक्रियते?

अद्वैतमते ब्रह्मोपादानत्वं सप्रयोजनम्

सर्वापृथक्सिद्धिनियम्य-नियामकभावेन, स्वशरीरप्रकृतिकार्यत्वेन च द्वैतमत इवोपचारात्तादात्म्यव्यपदेशेऽप्युपपद्यते, इति वितथमुपादानत्वं ब्रह्मणः, अद्वैतमते तु ब्रह्मेतरमिथ्यात्वसिद्धिरुपादानत्वस्वीकारस्यास्ति प्रयोजनम् ॥

मुक्तावनन्वयात् कारणत्वं ब्रह्मणोऽप्रयोजनम्

इदमप्यत्रालोचनीयम्—अकारणमेव परमात्मा तत्तदुपासनाराधितः कर्मफलानां स्वर्गादीनामिव मोक्षस्यापि प्रदाता भवतु, किं वा प्रयोजनं तत्कारणत्वस्वीकारस्य ? तस्य सत्यकामत्व-सत्यसंकल्पत्वापहतपाप्मत्वादिगुणा एव मुक्तप्राप्याः, न तु तदीयं जगत्कारणत्वमपीति हि "जगद्व्यापारवर्जमि" मित्यधिकरणे व्यवस्थाप्यते, इति "यतो वा इमानि भूतानि जायन्ते" इत्यादीनि कारणवाक्यानि मुक्त्यवस्थायां तस्यापि जीवस्येवौपाधिकरूपविनिर्गमनेनानावृतसंविन्मात्रावस्थायामेव पर्यस्यति, इति कारणत्वम्, बद्धत्वं वा जीवेश्वरयोरौपाधिकमेवेति बोधनद्वाराऽद्वैतं तत्त्वं बोधयितुमेव ॥

ब्रह्मणि प्रपञ्चाभावो न ह्रदे वह्न्यभावतुल्यः, येन न
मिथ्यात्वं स्यात्

सन्ति हि योगिनः केचनेश्वरमकारणं मन्यमाना अपीश्वरप्रणिधानादृष्टसिद्ध्यादिव्यवस्थापकास्तत्सन्निधिमात्रेण प्रधानकारणतावादिनोऽपि, इत्यधिष्ठानविधया ब्रह्मकारणत्वमादायैव ब्रह्माश्रितत्वं सर्वेषां जगताम्, न भूतलघटादीनामिवाश्रयाश्रयिभावेन, न केवलं नियम्य-नियामकभावमात्रेण वा । अतोऽधिष्ठान आरोपिताभावबोधिका श्रुतिस्तन्मिथ्यात्वपरेत्येव मन्तव्यम् । न चात्र ह्रदे वह्न्यभावो दृष्टान्ततामर्हति, येन तत्र वह्नेरिव ब्रह्मणि प्रपञ्चस्य न मिथ्यात्वं स्यादिति ॥

'सन् घटः' इत्यादीनां न घटादिसत्तावगाहित्वम्; सत्ता-
दात्म्यमात्रावगाहित्वात् । अतो न मिथ्यात्वानु-
मानस्य प्रत्यक्षेण बाधः

'सन् घटः' 'सन् पटः' इत्यादिप्रतीतयः सर्वत्र सतोऽवर्तमानतयैवात्मानं लभमाना अप्यधिष्ठानारोप्यभाव एव ब्रह्म-जगतोरिति ज्ञापयन्ति । सा हि सर्वेषु सत्तादात्म्यमात्रावगाहिनी न ब्रह्मवत् सत्तास्वभावावगाहिनी,

इत्येकेनैव सता सर्वत्र सम्बन्धमात्रेण सत्प्रतीत्युपपत्तौ सत्त्वभावताकल्पना वितथा। तत्र सत्ता ब्रह्मस्वभावोऽनुवर्तते, घटत्वं घटस्वभावो व्यावर्तते, इति सत्पदेन ब्रह्मणो ग्रहणं सर्वत्रानुवर्तमानत्वात्, न तथा घटपदेन ब्रह्मणोऽपि। उक्तं च—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना॥"

इति॥

### 'सन् घटः' इत्यादिप्रतीतावपि घटादीनां बाध्यत्वमेव नाबाध्यत्वम्, सत्त्वं वा

तत्र 'सन् घटः' इति यद्यपि भ्रान्तिरधिष्ठानारोप्ययोरितरेतराध्यासमादायैव, बाधकज्ञानं च तत्राखण्डाकारवृत्तिरेव। बाधस्वरूपं तु फलतोऽधिष्ठान आरोप्यभाव एव; यथा 'इयं शुक्तिरि'ति बाधकज्ञानफलं बाधः—'नात्र रजतमि'ति, 'नेदं रजतमिति' वा। अयमेव न्यायो ऽत्रापि; "न भूमिर्न तोयं न तेजो न वायुः" "नेह नानाऽस्ति किञ्चने"त्यादि बाधस्थलेऽपि। बाधो हि बाध्यत्वमारोप्यधर्मस्य निषेधात्मता, 'न रजतमि'त्यादिवत्। तादात्म्यस्य भेदघटितत्वात् तस्यापि वृत्तिनियामकत्वाच्च 'नात्र रजतमि'त्याकारोऽपि न व्याहन्यते॥

### श्रुतिप्रामाण्याद् ब्रह्मणः सप्रपञ्चत्वम्, अप्रपञ्चत्वं च

यद्यपि तदभावाधिकरणे प्रतीयमानत्वं प्रत्यक्षविरुद्धम्, यथा "आदित्यो यूपः" इति; तथापि तात्पर्यवत्यन्यथा नयनमर्हति। ब्रह्मणस्तदभावाधिकरणत्वं तदधिकरणत्वमुभयं च स्वीक्रियते। तच्चाभावाधिकरणतायां मुख्यं तात्पर्यं "नेह नानाऽस्ती"त्यादिश्रुत्येकवाक्यतयाऽवसाययति। तदधिकरणत्वं यावद्बाधनिश्चयं सत्यतया, ततस्तु मिथ्यात्वेनेति निर्णयः॥

### श्रुतिसिद्धस्यापि विप्रतिपन्नत्वेऽनुमानप्रमाणमपि मिथ्यात्वे साधु। न च श्रुतेः, तन्मूलानुभवस्य वा प्रत्यक्षेण बाधः

यद्यपि श्रुतिसिद्धमेव प्रपञ्चमिथ्यात्वम्; तथापि तदेवोपबृंहणेनोपपादयितुं मननापरपर्यायं श्रुत्यविरुद्धमनुमानमपि प्रमाणम्—यदि भूषणस्य श्रुतिश्रवणमात्रेण प्रपञ्चमिथ्यात्वनिर्णयः सञ्जातः, न चात्र विसंवादः,

तर्हि वितथं सर्वमनुमानम्। कुत इति सन्देहे तु तन्निवर्तनार्थमेवानुमानादि-प्रमाणानि। दृश्यत्वहेतुकमनुमानं हि तत्तदधिष्ठाने तत्तदारोप्यस्याभाव-मेवोपपादयति, न तु यत्र कुत्रापि यस्य कस्यचनेति पूर्वमुक्तम्। निर-धिष्ठानमित्यत्राभावप्रतियोगित्वं कमपि प्रतीत्याकारमादाय न संभवति। न च प्रत्यक्षं तात्पर्यपरश्रुतिबाधनेऽपि क्षमम्; अन्यथा "सोमेन यजे-ते"त्यादौ यागस्यापि सोमाभेदपरत्वेन प्रामाण्यापत्त्या मत्वर्थलक्षणा-सिद्धान्तो हीयते। तात्पर्यानुसारेण श्रुतिरपि तत्रान्यथा लक्षणया नीयते। अयमेव न्यायः—प्रपञ्चसत्यत्वप्रत्यक्ष-तन्मिथ्यात्वश्रुत्योरपि॥

### सद्विविक्तत्वमिथ्यात्वसमर्थनम्, तस्य पक्ष-दृष्टान्तयोः समन्वयः, ब्रह्मण्यनतिव्याप्तिः, अव्यभिचारादि च

एतेन—सद्विविक्तत्वमिथ्यात्वमपि—व्याख्यातम्। तद्धि दोषासहकृत-करणजन्यज्ञानविषयान्यत्वम्। 'इदं रजतमि'त्यादौ चक्षुरादि करणगत-काच-कामलादिना तत्सन्निकृष्टशुक्तीदमंशमात्रग्रहणापेक्षाधिष्ठानज्ञानं दोष-प्रयुक्तविशेषांशावरणसहितं रजतभ्रमं प्रति कारणम्। तत्र चाधिष्ठान-ज्ञानोपपादकतया दोषसहकृतमेवेन्द्रियं करणम्, इति न दोषासहकृत-करणजन्यं ज्ञानम्, 'इदं रजतमि'ति ज्ञानम्, किन्तु तद्विपरीतं तत्। घटादिज्ञानेऽपि यद्यपि घटादीनामिव सतोऽप्यधिष्ठानज्ञाने विशेषाग्रहणे-शुक्तित्वाग्रहण इव वाऽविद्यादोषः कारणम्। तस्याधिष्ठानाश्रितत्वं वा, प्रमात्राश्रितत्वं वेत्यन्यदेतद्॥

सर्वथा तूभयत्रानावृतांशविशेषधिष्ठानांश इव रूप्यादीनां घटादीनां चाध्यासः समानः। निर्विशेषं ब्रह्म त्वखण्डाकारवृत्तिदशायामावृतखण्ड-शून्यत्वाद् नाधिष्ठानं कस्यापि; वृत्त्युपहितसंविद्रूपस्यैव तत्त्वमस्यादि-वाक्यजन्यवृत्तिविषयत्वात्, तत्राविद्यारूपदोषकृत्यस्यावरणस्याभावाद्, दोषासहकृतकरणजन्यज्ञानविषयत्वमेव, न तदन्यत्वमिति नातिव्याप्तिः॥

दोषत्वेन च काच-कामलादेरिवाविद्याया अप्यनुगमात् सर्वत्र लक्षण-समन्वयः। घटादयो ह्यानन्दाद्यंशविशेषेणाज्ञाते सदादिरूपेण ज्ञाते च संविन्मात्र एवाविद्यया तदावरणदशायामेव तत्राध्यस्यते, इति चक्षु-रादिना घटादिग्रहणकालेऽपि संविदविद्ययाऽऽवृतैवेति न विशेषः। ब्रह्मणि

त्वखण्डेऽखण्डाकारवृत्तिदशायामावरणसामान्यस्य निवृत्तेः, वृत्तेस्तत्रान्तःकरणपरिणामत्वेऽपि नाविद्यासहकारो ज्ञानजनने; तत्कृत्यस्यावरणस्य तत्र बाधात् । अतस्तत्रोक्तधीविषयत्वमेव, न धीविषयान्यत्वम् ॥

तच्चाऽऽवृत चैतन्यविशेष्यकधीविषयत्वं पर्यवसितं तद्योग्यत्वमेव, इति न तुच्छे, ब्रह्मणि वाऽतिव्याप्तिः ॥

वस्तुतस्तु—साध्यनिर्देश एवात्र, न लक्षणविवक्षा, इति तस्य तुच्छसाधारण्येऽपि तस्यापक्षत्वात्, तत्र हेतु-साध्ययोरुभयोरप्यभावेन नानेकान्तादिः ॥

### अविद्यया ब्रह्मण आवरणासंभवशङ्का-परिहारौ

यत्तु—आवरकदोषसद्भावपर्यन्तं ब्रह्मज्ञानोत्पत्त्ययोगेनाविद्याया आवरकतया दोषत्वं न संभवति, इति तत्त्वमस्यादिमहावाक्याद् ब्रह्मज्ञानासंभवः—इति, तदिदं तत्त्वमस्यादिमहावाक्यजन्याया अखण्डाकारवृत्तेरज्ञानविरोधिन्याः प्रतिबन्धेऽज्ञानस्य शक्त्यभावादसङ्गतम्, अन्यथा घटाद्यावरके तमसि सति कथं प्रदीपादिना तत्प्रकाशः ? यावदज्ञानं भ्रमः, अखण्डाकारवृत्तौ तु प्रदीपप्रभायामुत्पन्नायामिव तमसः, अज्ञानस्य च निवृत्तिरिति तु निष्कर्षः ॥

### सदभेदो न सद्विविक्तत्वविरोधी

सद्विविक्तत्वं सतो व्यावर्तमानत्वं कार्यात्मना, विवर्तात्मना वा तद्भिन्नत्वम् । तच्च सत्तादात्म्यपर्यवसितमित्यपि न दुष्टम् । यद्यपि भिन्नत्वम्, तादात्म्यं च नैकम्, यथा केवलमभिन्नत्वं तादात्म्यं च नैकम् । न हि घटो घट इति तादात्म्यव्यपदेशः । अयमेव न्यायः—'सन् घटः' इत्यत्रापि; अत्यन्ताभेदे तादात्म्यासंभवात्, इत्यभेदांशमादायाऽभिन्नव्यवहारवत्, भेदांशमादाय भिन्नव्यपदेशोऽपि न विरुध्यते ॥

तत्र यथा सत्यपि भेदे तादात्म्यम्, एवं सत्यप्यभेदे, भेदव्यपदेशोऽपि न विरुध्यते; अन्यथा "गुहां प्रविष्टौ परमे परार्ध्ये" इत्यादावपृथक्सिद्धयोः सामानाधिकरण्यप्रतीतियोग्ययोः कथं भेदव्यपदेशः, द्विवचनादिकं वा कथं ? कथं वा 'यस्य पृथिवी शरीरमि'त्यादिव्यपदेशश्च ? यदि निष्कर्षकविधया, विवक्षाभेदेन वा, तर्हि प्रकृतेऽपि समानम् । सत्तादात्म्यं मिथ्यात्वमिति वा तन्निष्कर्षो विवक्षाभेदेन कथं दुष्यति ?

### भेदाभेदव्यपदेशे तत्तन्मतभेदेन व्यवस्था

भेदाभेदस्वीकारस्तूभयसत्यत्वेन, अद्वैते त्वभेदमात्रसत्यत्वेन, भेदस्य तु मिथ्यात्वेनेति विशेषः, अपृथक्सिद्धिवादिनामपि भेदाभेदवादः समानः, विवक्षाभेदस्तु सर्वत्र समानः, इति कथं परस्परसाङ्कर्यम् ?

ब्रह्मोपादानत्ववादोऽपि परेषां न भेदाभेदवादं विना। तत्र ब्रह्मोपादानत्वानुपपत्तिरत्रापि विशदा, उपरि च विस्तृता स्वावसरे। शास्त्रसिद्धस्य मननम्, अनुमानं वा व्यर्थमिति वारंवारं घोषणमसाम्प्रतमिति, चर्वितम् ॥

### प्रपञ्चमिथ्यात्वस्य न प्रत्यक्षादिना विरोधः

तत्र प्रपञ्चे ब्रह्मगतसत्त्वसंसर्गमात्रस्याध्यासः, इति न सत्त्वस्योभयसाधारणस्य घटादौ भानं युक्तम्। अतः सद्भिन्नत्वं प्रपञ्चस्याबाधम्। अतो न प्रपञ्चसत्यत्वे प्रत्यक्षम्, अन्यद्वा प्रमाणम्। श्रुतिविरुद्धं प्रत्यक्षमप्रमाणं चन्द्रप्रादेशिकप्रत्यक्षवदिति व्यक्तं तत्र तत्र। असम्भाव्यमानदोषत्वात् स्वतःसिद्धप्रामाण्यका श्रुतिः, न तथा संभाव्यमानदोषं प्रत्यक्षं केवलं पौरुषेयम्। श्रुति-प्रत्यक्षयोर्बलाबलविचारो यथावसरं विशदीभविष्यति। एवमेव प्रत्यक्षानुमानयोरपि ॥

### मिथ्यात्वानुमानं न दुष्टम्

न च मिथ्यात्वानुमानं कथमपि दुष्टम्। तद्धि श्रुत्युक्तमुपपादयितुमेव, न तु तर्कप्रतिष्ठापनार्थम्, इति श्रुत्युपजीवनं नाम श्रुत्युक्तत्वमात्रम्। यदि तत्रासम्भावनाबुद्धिः, तर्हि तत्रानुमानेनोपपादनम्; अन्यथा ब्रह्ममीमांसा, धर्ममीमांसा वाऽपि श्रुत्युपजीविनी वितथा स्यात् ॥

तत्र पारमार्थिकाभावप्रसिद्धिस्तु शुक्तिरूप्यादावद्वैतमते प्रसिद्धा, सर्वज्ञानयाथार्थ्यवादे तु—सत्यत्वम्, किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वादित्यनुमानेन शुक्तिरूप्यादौ साध्यते, इति न विप्रतिपन्नम्। शुक्तिरूप्यादिकमेवात्र किञ्चित्पदार्थः, न तु तुच्छम्; येनानाधारत्वात् तस्य किञ्चिन्निष्ठत्वं दुरुपपादम् ॥

### मिथ्यात्वानुमानस्यादुष्टत्वम्, नित्यस्तम्भादि-<br>प्रत्ययसालम्बनत्वं च

मिथ्यात्वानुमानस्य तु परदृष्ट्या व्यतिरेकदृष्टान्तः साधिष्ठानमनिर्वचनीयवादं सिद्धवत्कृत्य शुक्तिरूप्यमपि लोकप्रसिद्धिमात्रेण, सर्वं याथार्थ्यवादस्त्वनुभवविरुद्धो बह्वनर्थावहश्चेति पूर्वमुक्तम् ॥

एतेन—स्तम्भादिप्रत्ययाः, अधिष्ठानज्ञानबाधितार्थविषयकाः, प्रत्ययत्वात्; स्वाप्नप्रत्ययवत्, शुक्तिरूप्यादिप्रत्ययवच्चेत्यनुमानम्—व्याख्यातम्। सौगतमते हि प्रत्ययानां निरालम्बनत्वम्, न तूक्तविधसाध्यवैशिष्ट्यं स्वाप्नस्य प्रत्ययस्य, अन्यस्य वा ॥

"वैधर्म्याच्च न स्वप्नादिवत्"इति दृष्टान्ते निरालम्बनत्वं सौगताभिमतमूरीकृत्य। वस्तुतस्तु जाग्रत्प्रत्ययेनैव स्वाप्नप्रत्ययस्य सालम्बनत्वं युक्तमिति तु शबरस्वाम्यादयः, इति न प्रत्यक्षबाधितं मिथ्यात्वानुमानम्। अधिकं शास्त्रबलीयस्त्वपरीक्षणावसरे ॥

### बाध्यत्वनिष्कर्षः, समन्वयश्च

तत्र बाध्यत्वं स्वरूपतः, कारणात्मना च ज्ञानप्रयुक्ताभावप्रतियोगित्वम्। तच्चातीतानागतकालादिसाधारणम्। अतीतानामनागतानां च कारणात्मनाऽवस्थानात्, अविद्यायाश्च स्वरूपतो नाशात् ॥

तत्र प्रमाणजन्यवृत्तेरेवाज्ञाननिवर्तकत्वात् प्रामाण्यग्राहिणा विषयगतस्याबाध्यत्वस्य ग्रहणेऽपि न प्रत्यक्षप्रमाणेनाबाध्यत्वरूपं सत्त्वं ग्रहीतुमलम्, इति न मिथ्यात्वानुमानस्य प्रत्यक्षेण बाधः। तत्र बाध्यत्वं तद्योग्यत्वमज्ञान-तत्प्रयुक्तान्यतरत्वम्। तत्राज्ञानं तूलाज्ञानम् मूलाज्ञानं वेत्यन्यदेतत्। अतो न मिथ्यात्वानुमाने दृष्टान्तासिद्धिः, दूषणान्तरं वा ॥

### सद्विविक्तत्वे श्रुतिः प्रमाणम्

सद्विविक्तत्वे प्रमाणं तु "अतोऽन्यदार्तमि"ति श्रुतिः। तत्राऽऽर्तत्वं विनाश्यत्वं स्वरूपेण, कारणात्मना वाऽभावः, मिथ्यात्वमिति चानर्थान्तरम् ॥

### दृश्यत्वानुमानपक्षत्वेऽप्यदोषः। तस्य व्यावहारिकप्रामाण्यं च

तत्र दृश्यत्वानुमानसाधितं मिथ्यात्वमपि यदि पक्षः, तर्हि न मिथ्यात्वानुमानस्य प्रत्यक्षेण बाधः। तस्य प्रमाणत्वं तु मिथ्यात्वांशे मिथ्यात्वेन, न तु दृश्यत्वेन, इति दृश्यत्वहेतुकानुमानस्य मिथ्यात्वविषयकस्य न प्रत्यक्षेण बाधः। न हि मिथ्यात्वं सत्यमिति प्रत्यक्षेण गृह्यते, येन तेनाद्वैतभङ्गापत्तिः। न चैतावता प्रमाणानां प्रामाण्यविघातः; व्यावहारिकप्रामाण्यस्योरीकारात् ॥

व्यावहारिकत्वस्य प्रामाण्याविरोधित्वं यावद्बाधम्

तत्र व्यावहारिकत्वं न प्रामाणिकत्वविरोधि, किन्तु प्रामाणिकत्वव्याप्यम्। तच्च व्यवहारप्रयोजकज्ञानविषयत्वम्। न तु सत्यत्वं प्रामाणिकत्वम्, अप्रामाणिकत्वं मिथ्यात्वमिति बाधकज्ञाने बाध्यत्वेनाविषयत्वम्, तद्विषयत्वरूपं वा। तच्च प्रमाणसिद्धभिन्नत्वरूपं पूर्वोक्तं सद्विविक्तत्वम्॥

तत्र व्यवहारः स्फुरणाभिवदनादिर्विषयगतः, प्रवृत्तिः पुरुषगतः, इति विषयसाधारणोऽपि। स च शुक्तिरूप्यादीनामपि स्फुरणाभिवदनादिविषयत्वाद् यावद्बाधं मिथ्यात्वेनानिश्चयोऽविशिष्टः। न बाधिष्यत इति ज्ञानं तु सति प्रबले प्रमाणे भवितुमर्हति, न चान्यथा, इति यावद्बाधकप्रमाणप्रवृत्ति प्रवृत्त्यादिविषयत्वानपायात् प्रमाणमित्येव तत्र व्यपदेशः। यथा घटादिज्ञाने। तदुक्तम्—

"देहादिप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्॥"

इति। बाधो भविष्यतीति ज्ञाने सत्यपि पित्तदूषितस्य शुक्तिकायां भ्रमोऽनुवर्तत एव। यथाहि 'गौरः' इति ज्ञानस्य बाधो भविष्यतीति निश्चयदशायामपि देहात्मज्ञानिनां व्यवहारः। अतो यावद्दोषसत्त्वं भ्रमानुवृत्तिः, तत्प्रयुक्तव्यवहारानुवृत्तिश्चाबाधितैव॥

यावद्बाधं मिथ्यात्वानुमानस्य बाधं को वा वारयति? इदमेवात्रालोच्यते—जगत्सत्यत्वज्ञानमपि नाप्रामाण्यानाशङ्कितम्, मिथ्यात्वानुमानवदिति, इति न मिथ्यात्वानुमानस्य सत्यत्वप्रत्यक्षेण बाधोऽपि। अतो दोषनिरासार्थमेव प्रबलश्रुतिरुपदिशति, इति यथा, तदुपदेशं तत्त्वविचारार्थं प्रयत्यताम्, न तु प्रत्यक्षमात्रशरणैर्देहात्मवादादिभिरिव कालो याप्यताम्, मोक्षमार्गाच्च मा प्रतार्यतामिति। तत्रापौरुषेयं वेदवाक्यं न कदापि पौरुषेयमिवाप्रामाण्यशङ्कास्पदमपि॥

ईश्वरस्यापि वेदे न स्वातन्त्र्यम्, तस्य जीवन्मुक्तानामिन्द्रादीनाम्,
समाहितानाम्, अवतारपुरुषाणां, चोपदेष्टृत्वं
वेदमूलकत्वेनैव

अन्यथा कर्मयोगे, भक्तियोगे, वैकुण्ठादिपुमर्थवादे चेश्वरवाक्यमपि न प्रमाणं स्यात्। न चेश्वरोक्तत्वेन तेषामपि प्रामाण्यम्, किन्त्वपौरुषेयवेदवाक्यमूलकत्वेन। तदुक्तम्—

"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥"

इति । वेदमूलकश्चाद्वैततत्त्वनिर्णयो वेदपुरुषस्येवेश्वरस्यापि, किं बहुना ? जीवन्मुक्तानाम्, समाध्यवस्थाकाष्टापष्ठभूमिकासमाहितानामाधिकारिणाम्, मृत्यु-महेन्द्रादीनामप्युपदेशकानां न विरुध्यते । मायोपहितो हीश्वरो मायिकदोषाननुषक्तः साक्षात्कृतस्वरूपः सर्वज्ञः कथमनुपदेष्टा भवितुमर्हति ? जीवसाक्षीवेश्वरसाक्ष्यपि स्वतादात्म्यापन्नं सर्वं विज्ञाय स्वेच्छागृहीतशरीरविशेष उपदेष्टा भवितुमर्हत्येव; अन्यथा मनुष्यावतारस्य भगवतस्तत्तदवतारदशायां तस्य स्मृतिमात्रेण व्यपदेशो नोपपद्येत । व्यास-पराशरादीनां व्यास-पराशरादित्वमपि न साक्षात्कृतात्मतत्त्वानाम्; तेषां व्यासत्वपराशरत्वादिशरीरधर्मेण व्यवहारायोगात्, वेदार्थनिर्णयोऽप्यनादिसम्प्रदायागतमीमांसान्यायानुसार्येव प्रामाणिकः, इति सन्न्यायानुगृहीता वेदान्ताः स्वयमत्र प्रमाणम्, न त्वाप्तोक्तत्वं तत्र प्रमाणतायां बीजम्, अन्यथेश्वरातिरिक्तेष्वनिश्चयात्, वेदातिरिक्तानां सर्वेषां तत्तत्संप्रदायानुसारिणामाहत्य दर्शनानमप्रामाण्यं स्यात् ॥

### ईश्वरोपदेष्टृत्वन्याय एव जीवन्मुक्ताद्युपदेष्टृत्वेऽपि

तत्रेश्वरः सर्वज्ञोऽप्यज्ञानलेशेनाप्यनावृतस्तत्तच्छरीराभिमानरहितो यद्युपदेष्टा, तर्हि जीवन्मुक्ता अपि तदभिमानरहितास्तेनैव व्यवहरमाणाश्च कथं नोपदेष्टारो भवितुमर्हन्ति ? अन्यथा कथं सर्वेषां भाष्यकाराणां सूत्रकाराणाम्, अन्येषां च मन्वादीनामुपदेष्टृत्वम् ? तेऽपि यदि श्रीभाष्याभिमततत्त्वदृष्टय एव शरीरेण व्यवहरन्त उपदेष्टारः श्रुत्यर्थमात्रविवेचनदृष्ट्या । तर्हि साक्षात्कृतात्मतत्त्वानां तत्तत्सम्प्रदायाचार्याणाम्, तत्तन्निबन्धकाराणाम्, भूषणान्तनिबन्धकाराणां च निबन्धरचनाऽपि, तत्तद्देहात्माभिमानेन जाग्रत्स्वप्नाद्यवस्थासु बहुविधभोगाभिरमणानामप्युपदेष्टृत्वे का वा कथा बाधितानुवृत्तेन शरीरेण व्यवहरतामुपदेष्टृत्वे ? आस्तामियं प्रासङ्गिकी कथा । विस्तरस्त्वस्या उपदेशानुपपत्तिवादे ॥

### अधिष्ठानांश एव सर्वेषां ज्ञानानां प्रामाण्यम्

प्रकृतमेवालोच्यते—तत्राप्रामाणिकत्वं मिथ्यात्वम्, प्रामाणिकत्वं सत्यत्वम् । तत्र प्रामाणिकत्वं बाधकज्ञानविषयाधिष्ठानस्वरूपत्वम् । तच्च 'सन् घटः' इत्यादिप्रतीतिविषयस्य सद्रूपस्याधिष्ठानस्य, यत्रैव ज्ञानानां प्रामाण्यमिति सन्मात्रग्राहिप्रत्यक्षप्रामाण्यवादे व्यक्तम् ॥

### घटादिविकल्पांशे तु ज्ञानानामप्रामाण्यमेव

तच्च न भूतलादेर्घटादेर्वा ज्ञानविशेषेषु विषयस्य। 'अस्ति' धात्वर्थः कालसम्बन्धो वा भवतु, प्रामाणिकत्वं वा, अबाधितत्वमेव सत्त्वं विषयगतम्, तत्तु सद्रूपस्यैव ॥

न च 'घटोऽस्ती'त्यादावधिष्ठानारोप्यविषयकत्वं ज्ञानस्य। कथञ्चन तस्यापि "अस्ती'त्यनेनैव सदर्थकत्वविवक्षायां तु तत्रापि परस्पराध्यासनिष्पन्नघटतादात्म्यापन्नसद्विषयकत्वात् तत्रैव प्रामाण्यम्, न घटांशे; विकल्पमात्रस्याप्रामाणिकत्वात् ॥

### घटादीनामप्रामाणिकत्वेऽपि प्रत्यक्षत्वस्य, दृश्यत्वस्य वा नापायः। न चैतद् ब्रह्मणि, इति न तत्र दृश्यत्वस्य व्यभिचारः

वस्तुतस्तथात्वम्, अबाधितत्वम्, प्रामाणिकत्वं चेत्यनर्थान्तरम्। प्रत्यक्षप्रमायां सन्मात्रविषयत्वमेव तत्रोक्तम्, न विषयस्याप्रत्यक्षत्वमपि। प्रत्यक्षत्वं तु न वृत्तिविषयत्वमात्रम्; परोक्षसाधारण्यात् ॥

दृश्यत्वं तु वृत्तिविषयत्वमात्रं घटादिसाधारणमपि साक्षात्, वृत्तिविषयचैतन्यावच्छेदकत्वाद्वेति गतमधस्तात्। ब्रह्मसाधारणमपीति कृत्वा तदसाधारण्यार्थं बहुविधाः प्रकारा अपि पूर्वमेव प्रदर्शिताः, इति न ब्रह्मणि व्यभिचारः, तुच्छे वाऽन्यत्र सर्वं पिष्टपेषणम् ॥

तत्र घटादीनां सत्तादात्म्यमात्रं कल्पितम, न तु सत्त्वमपि; अधिष्ठानसंसर्गमात्रस्यैवारोप्येऽध्यासात्। ब्रह्म तु सद्रूपम्, न तु सत्त्वविशिष्टम्, येन परस्परधर्माध्यासवशात् सत्त्वमपि घटादौ कल्पयेत्, किन्तु सत्तासामान्यम्, संविन्मात्रं वा, न तु सत्तादिविशिष्टम्। सत्यप्येवं सदित्येव सर्वत्र तस्य व्यपदेशः ॥

यदि कुत्रचन सत्तावैशिष्ट्यव्यपदेशः, तर्हि "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः" इति पञ्चपादिकासिद्धान्ताद् अविद्याऽध्यासवशाद् सोऽपि तत्र कल्पित आस्ताम् ॥

'सन् घटः' इत्यत्र तु सद्रूपस्यैवाधिष्ठानत्वम्, न तु सत्त्वविशिष्टस्य, इति न तस्य सद्रूपब्रह्मविषयकत्वेन निर्वाहः ॥

### सद्भिन्नत्वम् , ब्रह्माश्रिताज्ञान-तत्कार्यान्यतरत्वं वा मिथ्यात्वम्

सद्भिन्नत्वं निर्हेतुकभिन्नत्वमित्यप्यन्यानधीनप्रकाशस्वरूपान्यतरभिन्नत्वरूपं ब्रह्मविवर्तरूपत्वम् , न सहेतुकत्वमात्रम् , अपक्षयादिविकाररहितात्ममात्ररूपम् , इति परिणामादेरपि तद्रूपत्वे न क्षतिः; तस्यात्राविवक्षणात् । विवर्तत्वमेव हि मिथ्यात्वं नाम, न तु ततोऽन्यत् , शुक्तिरूप्यस्य विवर्तत्वं विना नान्या गतिः परेषामिति पूर्वमुक्तम् ॥

ब्रह्माश्रिताज्ञान-तत्कार्यान्यतरत्वं वा सद्भिन्नत्वम् । शुक्तिरूप्यमपि प्रमातृचैतन्याश्रिततूलाज्ञानस्य शुक्तित्वावच्छिन्नचैतन्य-प्रमातृचैतन्ययोरभेदावस्थायां शुक्त्यवच्छिन्नब्रह्मचैतन्याश्रयत्वमात्रेणैव रजतात्मना परिणामित्वात् तथेति न दृष्टान्तासिद्धिः । न च प्रकृतिः सत्या; अस्या परिणामिन्या अनादेरपि नाशस्य पूर्वमुपपादनात् ॥

### प्रकृतिरविद्या, न कर्म

तत्र प्रकृतिरविद्या चेत्यनर्थान्तरमिति व्यक्तमन्यत्र । व्यक्तीभविष्यति चेदमुपरिष्टात् । कर्मणोऽविद्यात्वमप्यविद्याप्रयुक्तत्वेनैव, न तु स्वत इति विष्णुपुराणानुसारेण पूर्वमुपपादितम् ॥

एतेन—सत्त्वाभावविशिष्टसद्रूपभिन्नत्वं सद्रूपत्वमपि व्याख्यातम् । प्रपञ्चेऽपि सद्रूपतादात्म्ये सत्यपि सत्त्वस्य, सद्रूपत्वस्य चाभावात् लक्षणसमन्वयः ॥

न च तयोर्विशेषः; ब्रह्मणि तदुभयसामञ्जस्यात् । न चेदं सत्त्वविशिष्टासद्रूपत्वम् ; अप्रसिद्धेः, इति नात्र विपरीतार्थसिद्धिः, सत्यत्वापत्तिर्वा ॥

### "सदेवेदमि"ति श्रुतिर्न प्रपञ्चसद्रूपत्वपरा । अतो न ब्रह्मसाम्यं प्रपञ्चस्य; तस्य ब्रह्मण्यध्यासेन सत्तादात्म्यमात्रात्

"सदेवेदमि" ति श्रुतिस्त्विदन्तादात्म्यं सद्रूपस्य ब्रह्मणो बोधयति, न तु प्रपञ्चस्य सद्रूपत्वम् । अत एव "एकमेवाद्वितीयमि" ति सर्वस्य जगतः सदतिरिक्तस्य तादात्म्यनिषेधः ॥

एतेन—ब्रह्मवत् सद्रूपत्वमादायार्थान्तरम्—परास्तम्; "एकमेवे"ति सद्रूपताया अत्युक्तविधया निषेधात् । न च सत्त्वाभावविशिष्टं सद्रूपत्वम् , सत्त्वविशिष्टं वा सद्रूपत्वम्; अप्रसिद्धेः, ब्रह्मणः सत्त्वावैशिष्ट्यात् , प्रपञ्चे

सत्तातादात्म्यमात्रमध्यस्यते, न तु सत्त्वमपि; सन्निकृष्टस्थलेऽन्यथाख्याति-स्वीकारात्। यत्र यत्र यदध्यस्यते तत्र तस्याभाव एव तस्य मिथ्यात्वम्, न तु तत्प्रतियोगिनोऽपीति। प्रपञ्चे सत्त्वस्यानध्यासाद् नान्यथाख्याति-वादेनापि कल्पितासत्ताः प्रपञ्चे सम्भवति ॥

### अनिर्वचनीयान्यथाख्यात्योर्विशेषः उभयत्राधिष्ठानमात्र-सत्यत्वम्, नाध्यस्तस्यापि

सत्यमन्यथाख्यातिवादेऽप्यस्त्यध्यासः, परन्तु संसर्गमात्रस्यैव, इति वैषम्यमनिर्वचनीयख्यातितोऽन्यथाख्यातिवादस्य, प्रतियोग्यध्यास-तदभावाभ्याम्। ततश्च तन्निष्ठाभावप्रतियोगित्वे सत्यध्यासमात्रविषयत्वं मिथ्यात्वं पर्यवसन्नम् तत्र तन्निष्ठात्यन्ताभावप्रतियोगित्वमन्यथाख्यातिवादेऽनध्यस्तस्य सत्यस्यापि भवति, अतोऽध्यासमात्रविषयत्वमपि ॥

तत्र मात्रपदं धर्मि-धर्मसंसर्गाध्यासाख्यसर्वाविद्याध्यासस्थलमभिप्रेत्य, तेन चान्यथाख्यातिनिरासः फलति। तेन चानिर्वचनीयप्रतियोगिविषयकत्वमपि यत्र, तत्रैव प्रतियोगिनो मिथ्यात्वम्। आपणस्थरूप्यदीनां तु नात्र प्रतियोगिनामप्यध्यासः, इति न तत्रातिव्याप्तिः; अध्यासप्रतीतौ भासमानस्यापि तस्य स्वयमनध्यस्तत्वात्। शुक्तिरूप्यादिस्थलेऽपीदं समानम्। तद्याथार्थ्यवादस्तु निरस्तः। उभयसम्मतत्वं तु व्यतिरेकविधया ब्रह्मणः ॥

### दृश्यत्वानुमानस्यापि दृश्यत्वेन मिथ्यात्वेऽपि न व्याघातः, मिथ्यात्व-दृश्यत्वयो रूपभेदेन साध्य-हेतुभावः

तत्र दृश्यत्व-मिथ्यात्वमेव तदनुमानादीनां मिथ्यात्वं दृश्यत्वेनैव सामान्येन, न तु मिथ्यात्वेन, न च तदनुमानादिना। अतो मिथ्यात्वानुमानस्य दृश्यत्वेन मिथ्यात्वेऽपि न दृश्यत्वानुमानेन मिथ्यात्वसाधकत्वानुपपत्तिः, इति न प्रमाणत्वम्, मिथ्यात्वं चानुमानस्य न व्याहतम् ॥

न च मिथ्याभूतस्यासाधकत्वमित्युपपादयिष्यते ब्रह्मसिद्ध्याद्यनुसारेण। संवित्सिद्धिस्तु नात्र न सङ्गच्छते। न चात्र प्रत्यक्षादिविरोधोऽपि। न ह्यर्थक्रियाकारित्वं सत्त्वं मिथ्याभूतस्य व्याहतम्; अबाध्यत्व-मिथ्यात्वयोरेव व्याघातात्। अतो विश्वमिथ्यात्वानुमानमिदं प्रत्यक्षाविरोधसहकृतशुक्तिरूप्यदृष्टान्तोपबृंहितं योगानुभवसिद्धम् ॥

### भाविबाधस्यापि योगिप्रत्यक्षविषयत्वात् तदुपबृंहणमपि मिथ्यात्वानुमानस्य, योगानुभवस्य प्रामाण्यं च

योगिनो हि सूक्ष्मं व्यवहितं विप्रकृष्टं सर्वं विद्यमानं योगमहिम्नाऽपरोक्षयितुमर्हन्ति। मिथ्यात्वमपि भावि विद्यमानमेव, नाविद्यमानम्—विद्यमानशब्देन यद्यस्तिप्रत्यययोग्यं विवक्ष्यते। अवर्तमानं योगिनः श्रुतिमूलयोगमहिम्नाऽपरोक्षयन्ति; अतीतं भाविनं वेति त्वपसिद्धान्तः। योगानुभवोऽपि प्रमैवेति हि योगिनो वेदान्तिनश्च। वेदाविरोधे प्रामाण्यमेव। व्यक्तञ्चै तदाकरे "एतेन योगः प्रत्युक्तः" इत्यत्राधिकाशङ्काकारणनिरूपणावसरे। तत्त्वदर्शनाभ्युपायत्वादीनि योगशास्त्रसंमतानीति संप्रतिपन्नानीत्यादि वर्णनात्॥

न च विपरीतभावनामूल एव योगानुभवः; श्रुतिसिद्धस्यार्थस्य श्रुतमत-निदिध्यासितस्यानुभवोऽपि योगानुभव एव। न च स विपरीतभावनामूलः। यद्यत्रापि योगिनो भ्रान्ताः, तर्हि कुत्र वा ते प्रमातारः? वेदानधिकारिणां जन्मत एव योगिनां गाथा अपि यदि प्रमाणानि, तर्हि वैदिकार्थानुभवो योगिनाम्, तन्निबन्धनानि वाक्यानि, अन्यान्यपि वा प्रमाणानि यथार्थानि कथमप्रमाणानि?

### विश्वमिथ्यात्वानुमानस्याज्ञाननिवर्तकत्वोपपत्तिः

तत्र यथा प्रदीपः प्रसरन्नेव तमो निवर्तयति, न तु तमसा सहावस्थाय, एवं निवर्तकं ज्ञानमपि प्रसरदेव तत्स्थानमुपधायाज्ञानं निवर्तयितुं क्षमते। न च विश्वमिथ्यात्वानुमानं व्याहतमिति व्यक्तं तत्र तत्र॥

### विश्वमिथ्यात्वानुमान-तत्सत्यत्वानुमानयोस्तन्मिथ्यात्वानुमानस्यैव प्राबल्यम्

तत्र प्रत्यक्षस्य संभावितदोषस्य निर्दोषश्रुतिमूलेन परेणानुमानेन बाधः। न चैवं श्रुतिमूलविश्वमिथ्यात्वानुमानविरोधि तत्सत्यत्वानुमानं श्रुत्यनुगृहीतं किमपि। श्रुत्योर्विरोधे निषेधापेक्षितप्रतियोगिसमर्पकश्रुतिदौर्बल्येन दुर्बलश्रुतिमूलविश्वसत्यतानुमानस्य प्रबलश्रुतिमूलानुमानेनैव बाधः। न हि परत्वमात्रं प्राबल्यप्रयोजकम्, प्राथम्यं वा तथा। दोषमूलकत्वम्, निर्दोषत्वं वा उभयोस्तात्पर्यानुग्रहाननुग्रहाभ्यामेव दौर्बल्यम्, प्राबल्यं

च। अतो विश्वमिथ्यात्वानुमानं प्रमैवेति सिद्धान्ताद् विश्वसत्यत्वानुमानानि सर्वाणि न दुष्टानि। व्यक्तं चेदमद्वैतसिद्ध्यादौ॥

### दृश्यत्वेन मिथ्यात्वमपि मिथ्यैव, शुक्तिरूप्यादौ त्वेकतरस्यैव मिथ्यात्वम्

एतेन—मिथ्यात्वमिथ्यात्वमपि—व्याख्यातम्; तस्यापि दृश्यत्वेन मिथ्यात्वात्, मिथ्यात्व-तत्प्रतियोग्युभयमिथ्यात्वे बाधकाभावात्। तत्र मिथ्यात्वं ब्रह्मनिष्ठस्य प्रपञ्चस्य ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वम्, तेन च सद्वितीयं ब्रह्मैव "सदेव सोम्येदमि"ति प्रस्तुतम्, इति सद्वितीये ब्रह्मणी'ह'पदोक्ते ब्रह्मणि वा "एकमेवाद्वितीयमि"ति "नेह नानाऽस्ती"ति वा द्वितीयनिषेधः, इति प्रतियोगि-तदभावयोरुभयोरध्यारोपापवादाभ्यां सामानाधिकरण्यलब्धः प्रपञ्चगतो धर्मविशेषः, यद्दृष्टान्तेनैकतरस्यैव निषेधः, नोभयोः। दार्ष्टान्तिके तूभयोरपि निषेधः; तत्रोभयोरपि पक्षत्वात्, दृश्यत्वाद् मिथ्यात्वधर्मत्वम्। अतो मिथ्यात्वमपि दृश्यत्वेन मिथ्या॥

### न च प्रपञ्चमिथ्यात्वमिथ्यात्वे प्रपञ्चसत्यत्वापातः, अतो न मिथ्यात्वं प्रपञ्चस्य दुरुपपादम्

तत्र मिथ्यात्वं यदि मिथ्या, प्रतियोगी प्रपञ्चोऽपि च, तर्हि मिथ्यात्वस्यापि प्रपञ्चान्तर्गतत्वाद् अप्रपञ्चं ब्रह्मेत्येव पर्यवस्यति। प्रपञ्चशब्दो हि दृश्यमात्रपरः, इति 'अघटम्' 'अपटमि'तिवत् अप्रपञ्चमिति प्रपञ्चाभावाभाववदपीति प्रपञ्चत्वेन प्रपञ्चाभावाभाववत्त्वं न प्रपञ्चसत्यत्वापादकम्॥

तथा चेदमनुमानं मिथ्यात्वसाधारणसर्वमिथ्यात्वमेकेनैव दृश्यत्वादिना बोधयति, इति कस्य सत्त्वमनुमानेन साध्यते? मिथ्यात्वस्यापि प्रपञ्चत्वात्। प्रपञ्चनिष्ठमेव मिथ्यात्वमत्र साध्यते, न तु प्रपञ्चाभावस्य तदभावत्वेन मिथ्यात्वं साध्यते, इति किं वाऽत्र दुरुपपादम्?

### मिथ्यात्व-तन्मिथ्यात्वयोरुभयोरपि व्यावहारिकत्वेनाविरोधाद् मिथ्यात्वमिथ्यात्वप्रातिभासिकत्वादिविकल्पानवसरः

तत्र व्यावहारिकसत्यत्वं ब्रह्मणि प्रपञ्च-तदभावयोरुभयोरपि यावत्प्रपञ्चबाधं प्रपञ्चत्वेनाविशिष्टम्; उभयोरप्येकब्रह्मज्ञानबाध्यत्वात्, इति नात्र सत्यत्व-मिथ्यात्वयोर्विरोधकथाऽपि; घट-पटादीनामिव प्रपञ्चा-

भावस्यापि यावद्बाधं व्यावहारिकत्वात् । अतो नात्र प्रपञ्चवद् तन्मिथ्यात्वेऽपि व्यावहारिके प्रातिभासिकत्व-पारमार्थिकत्वविकल्प-तद्दूषणानामवसरः ॥

एतेन—

"मिथ्यात्वस्य च मिथ्यात्वे सत्यत्वं स्थापितं भवेत् ॥"

इति—परास्तम्, मिथ्यात्वस्यापि प्रतियोगिवद् व्यावहारिकत्वस्यैव स्वीकारात्, तत्प्रातिभासिकत्वस्यास्वीकारात् ॥

तन्निष्ठं मिथ्यात्वं तद्विषमसत्ताकमिति नियमस्तु तन्मात्रनिष्ठमिथ्यात्वविषयकम्; यथा रजतनिष्ठं मिथ्यात्वं रजतविषमसत्ताकम्, न तु स न्यायोऽत्र; मिथ्यात्वस्याप्येकेन धर्मेण निषेध्यतावच्छेदकेन निषेधेनोभयमिथ्यात्वात्, दृष्टान्ते तु न तथा, इत्युभयनिष्ठमिथ्यात्व उभयोरपि व्यावहारिकसत्ताकत्वमपि न विरुध्यते ॥

## न चाद्वैतिनो मिथ्यात्वमिथ्यात्व एव निर्भराः, तत्सत्यत्वकल्पस्यापि स्वीकारात्

प्रातिभासिकप्रतियोगिकव्यावहारिकाभाववत् व्यावहारिकप्रतियोगिकपारमार्थिकाभावसाधनं यद्यत्र विवक्ष्यते, तर्हि मिथ्यात्व-पारमार्थिकत्वपक्ष एव पर्यवसानाद् नात्रानुमाने मिथ्यात्वस्य पक्षता ॥

## मिथ्यात्वे प्रपञ्चवैलक्षण्यं न प्रातिभासिकत्वेन, किन्तु पारमार्थिकत्वेनैव

तत्र तु न प्रपञ्चसत्यताया आपत्तिः; मिथ्यात्वस्यापि प्रपञ्चत्वेन निषेधे ब्रह्मव्यतिरेकेण प्रपञ्च-तदभावयोरुभयोरप्यभावात्, अनावृतसंविन्मात्ररूपस्यैव परिशेषाद् मिथ्यात्वमिथ्यात्वेन कस्य वा सत्यत्वमापाद्यते? तत्र मिथ्यात्वेन बाधात् कारणात्मनापि न प्रपञ्चो वर्तते, न मिथ्यात्वमपि वा बाधितत्वात् तथैव न तिष्ठति, इति धर्मिणोरुभयोरप्यभावे कयोर्वाऽत्र विषमसत्ताकत्वमापाद्यते? मिथ्यात्वे प्रपञ्चवैलक्षण्यं तु तस्य मिथ्याप्रपञ्चकोटावप्रवेशेन पारमार्थिकत्वेनैव वक्तव्यम्, न तु प्रातिभासिकत्वेन । तत्र ब्रह्मणि प्रपञ्चाभावस्य प्रातिभासिकत्वं सर्वप्रपञ्चबाधोपलक्षिते प्रमातृचैतन्याभिन्नविषयावच्छिन्नचैतन्याश्रिततूलाविद्याकार्यत्वं रजतादीनामिवोच्येत, येन प्रातिभासिकत्वं स्यात् ॥

मिथ्यात्वपारमार्थिकत्वपक्षे तत्र दृश्यत्वस्य न व्यभिचारः;
ब्रह्मवत् तद्धर्मकत्वात्

न हि तदा सप्रपञ्चं ब्रह्म। प्रपञ्चाभावस्तु प्रातिभासिकस्तदा स्यात्, यदि व्यावहारिकतदतिरिक्तोपाध्यवच्छिन्नचैतन्याश्रिततूलाविद्याकार्यत्वम्, मिथ्यात्वपारमार्थिकत्वपक्षस्तु तस्य ब्रह्मस्वरूपत्वमादाय सिद्ध्यादौ निरूपितः। ब्रह्मरूपत्वाच्च तस्य ब्रह्मणीव न तत्रापि दृश्यत्वहेतोर्व्यभिचारः। तत्र मिथ्यात्वं यद्यपि प्रपञ्चवति ब्रह्मणि विद्यमानाभावप्रतियोगित्वेनैव प्रपञ्चधर्मः, प्रपञ्चाभावस्वरूपं ब्रह्मैव; अन्यथा प्रातिभासिकशुक्तिरूप्यधर्मस्य मिथ्यात्वस्य कथं व्यावहारिकत्वम्? तत्र यदि तदभावस्य शुक्तिस्वरूपत्वात् तथा, तर्हि प्रकृतेऽपि ब्रह्मस्वरूपत्वेन तत् समानम्॥

तत्र यथा शुक्तौ कल्पितस्य रजतस्य धर्मो मिथ्यात्वं स्वाधारशुक्तिरूप्याधिष्ठानशुक्तिस्वरूपम्, न तु तदपि प्रातिभासिकम्, एवमत्रापि तत्पारमर्थिकत्वम्, न तु तत्प्रातिभासिकत्वम्, व्यावहारिकत्वं वा। तत्र यथा शुक्तिरूप्यं शुक्तिमदिति न प्रतीतिः, एवमत्रापि प्रपञ्चो ब्रह्मवानिति न प्रतीतिर्बाधदशायाम्॥

ततः पूर्वं तु ब्रह्म प्रपञ्चवत् 'इदं रजतमि'तिवदिति प्रतीतिरबाधिता। सर्वथा तु मिथ्यात्वमिथ्यात्वं न प्रातिभासिकम्, यदि न पारमार्थिकम्, किन्तु व्यावहारिकमेव, इत्युभयमिथ्यात्वान्न प्रतियोगिसत्यत्वापातोऽद्वैतमते॥

व्यावहारिकत्वं व्यवहारकालिकबाधाविषयत्वेन, न तु
कायिकादिव्यवहारविषयत्वेन, येन प्रपञ्चस्य तद्
बाधितं स्यात्। इदं सत्तात्रैविध्यवादेन

तत्र व्यावहारिकत्वं व्यवहारकालाबाध्यत्वमात्रम्, न तु कायिकवाचिकव्यवहारानुविद्धत्वम्, येन तद्व्यवहाराननुविद्धानां बहूनां हिमवद्गुहादौ विद्यमानत्वेन तदसाधारण्यं स्यात्। अन्तःकरणधर्मसुखदुःखादीनां कायिकव्यवहारायोग्यानां कथं नाम व्यावहारिकत्वम्? यदि वाचिकव्यवहारानुवेधेन मिथ्यात्वशब्दव्यवहारानुवेधः, तर्हि कथं न स मिथ्यात्वस्यापि? कथं च प्रातिभासिकानां वाचिकव्यवहारानुविद्धानामपि न व्यावहारिकत्वम्? यद्युभयव्यवहारसम्बन्धाभावात्, तर्हि जीवात्मनाम्, वैकुण्ठादिलोकानां च कथं व्यावहारिकत्वम्?

स्फुरणाभिवदनादिकं स्वसत्तायां स्वस्य व्यावहारिकत्वप्रयोजकम्। तच्च प्रपञ्चस्य यावद्बाधं घटादेरविशिष्टम्, मिथ्यात्वस्य तु प्रपञ्चत्वेन प्रपञ्चेन साकमेव बाधादखण्डाकारवृत्तेरिव यावद्बाधम् बाधेनैव व्यावहारिकत्वम्। तत्र यथा प्रपञ्चः, तत्सत्यत्वं वा ब्रह्मप्रमामात्रबाध्यम्, इति न तस्यापि प्रातिभासिकत्वम्॥

तत्र प्रपञ्चमिथ्यात्वं प्रपञ्चाभावरूपं तत्सूक्ष्मावस्थाऽज्ञानमेव; तस्यापि ब्रह्मप्रमैकबाध्यत्वात् कथं न व्यावहारिकत्वम्? किमज्ञानं सर्वप्रपञ्चोपादानं प्रातिभासिकं ब्रह्मप्रमेतरबाध्यं वा? इदं सत्तात्रैविध्यवादेन॥

एकसत्तावादे न प्रपञ्च-तदभावोभयसत्यताशङ्कापि, इति न मिथ्यात्वानुमानस्य प्रत्यक्षेण बाधः

एकसत्तावादे तु ब्रह्मणि प्रपञ्चस्य, तदभावस्य च सत्तादात्म्यमेव, इति स्वरूपेणाभाव एव। न च तत्र प्रपञ्चसत्यत्वापत्तिशङ्काऽपि; तत्र ब्रह्मव्यतिरिक्तस्य सत्तादात्म्येऽपि न सत्यत्वम्, इति कथं प्रत्यक्षबाधो मिथ्यात्वस्य? कथं वैकमिथ्यात्वेनापरसत्यत्वापत्तिः? सर्वथा त्वधिष्ठाननिष्ठात्यन्ताभावप्रातियोगित्वरूपस्य मिथ्यात्वस्य न प्रत्यक्षेण बाधः॥

"नेह नानाऽस्ति किञ्चन" इति श्रुतिर्दृश्यत्वेन प्रसक्तं सर्वं ब्रह्मणि निषेधन्ती प्रपञ्चाभावमपि प्रपञ्चत्वेन निषेधति, इति तस्यापरमार्थिकत्वमेवेति सर्वं सुस्थम्॥

तत्र मिथ्यात्वमिथ्यात्वस्य पारमार्थिकत्वमनावृतसंविन्मात्रतयैव, न त्वावृतसंविन्मात्रतया, इति यावदज्ञानेनावरणमनावृतस्य स्वप्रकाशस्याप्यप्रकाशात्, अविद्यावशाद् न भ्रमानुपपत्तिः। तदेवं मिथ्यात्वानुमाने मिथ्यात्वस्यापि पक्षत्वापद्यत्वपच्चयोरुपपत्तिः॥

दृश्यत्वविमर्शनम्, असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यतादात्म्याद् दृश्यत्वम्, न तु चैतन्यमात्रतादात्म्यात्, केवलवृत्तिविषयत्वाद् वा, इति न ब्रह्मणि व्यभिचारः

अथ दृश्यत्वशोधनमपि संप्रति परीक्ष्यते। तत्र दृश्यत्वं वृत्तिव्याप्यत्वम्। तच्च घटादेर्वृत्त्यवच्छिन्नचैतन्यविषयत्वेनैव। 'जानामी' ति व्यवहारविषयत्वं हि वृत्तिव्याप्यत्वम्; असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यस्यैव जानात्यर्थत्वात्॥

न च चैतन्यविषयत्वमात्रेण 'जानामी'ति व्यवहारः; । चैतन्यविषयत्वे हि घटादीनां चैतन्येऽज्ञानेनावृतेऽध्यस्तत्वं यावदावरणं न 'जानामी' ति व्यवहारं प्रयुङ्क्ते; अन्यथा सर्वदा सर्वस्य ज्ञानापत्तिः ॥

अतश्चैतन्यविषयत्वमात्रं न दृश्यत्वम् , इति वृत्त्यवच्छिन्नत्वविशेषितं तत् । न च वृत्त्यवच्छिन्नत्वं चैतन्येऽप्रसिद्धम्; 'जानामी'ति व्यपदेशस्याज्ञानाविषयत्वप्रयोजकधर्मभूतज्ञानापरपर्यायवृत्त्यवच्छेदमन्तराऽनुपपत्तेः । भासकज्ञानाभावे का वा सामग्री नाम ? येन ज्ञानवैयर्थ्यमापद्येत; अन्यथा परमतेऽपि धर्मभूतज्ञानेन किमन्तर्गडुना ? इत्यनुभूत्यनुभाव्यत्वकथा कथामात्रं स्यात् , जीवस्य घटादिबाह्यप्रकाशानुपपत्तिश्च ॥

तत्र लोके वृत्तिः साक्षात् , परम्परया वाऽज्ञानविरोधिनी प्रमाणजन्यं ज्ञानमिति प्रसिद्धम् । चैतन्यं तु स्वरूपज्ञानं शुद्धप्रत्यगात्मरूपम् , ईश्वरस्वरूपज्ञानम् , आवृतानावृतसंविन्मात्रं वा श्रुतिसिद्धमेव, नोभयं लोकसिद्धं मतद्वयेऽपि । अतो न हेत्वसिद्धिः, न वा व्यभिचारः । वृत्त्यवच्छेदमन्तरा हि चैतन्यमावृतं तत्तद्विषयावच्छिन्नं विषयांशे प्रत्यक्षतां नार्हति ॥

घटादीनां जडानामावरणाभावेन न साक्षाद् वृत्त्या भानम्
किन्तु तदभिव्यक्तचैतन्योपरागेणैव, अतस्तस्य न
स्वावच्छिन्नचैतन्यमात्रभास्यत्वम्

तत्र वृत्तेरज्ञानविरोधित्वं साक्षाद् विषयावच्छिन्नचैतन्योपरागेणैव, न तु तदवच्छेदकविषयोपरागमात्रेण । विषयस्याज्ञानकार्यस्य, जडस्य चाज्ञानाविषयत्वात् , इति न वृत्तिविषयत्वेन साक्षाद् घटादेर्भानम् । वृत्तिविषयत्वं हि वृत्तिसम्बन्धप्रयुक्तावारणविषयत्वाभावेन । न च घटादौ स सम्भवति । अतो न घटादेर्वृत्तिविषयत्वेनैव निर्वाहः, ब्रह्म तु संविन्मात्रं नाज्ञानकार्यमज्ञानेन साक्षादाश्रीयमाणतया वृत्तिमात्रेणाज्ञाने निवृत्ते सर्वोपाधिविरहितं स्वयंज्योतिरनावृतसंविन्मात्रतयाऽवतिष्ठते, इति वृत्तिव्याप्यतामर्हति ॥

इदमेवाभिप्रेत्य—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते ॥"

इति। अतो न श्रवणादिविध्यनुपपत्तिः। अतः केवलवृत्तिविषयत्वेऽपि ब्रह्मणो न चैतन्यविषयत्वम्। विदितमिदं भूषणस्यापि, येन विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यत्वस्य ज्ञानप्रत्यक्षत्वप्रयोजकस्य ब्रह्मण्यतिव्याप्तिराशङ्किता॥

भूषण्यास्तत्समाधानप्रकारस्तु तत एवावगन्तव्यः, इति स्थिते कथं चैतन्यविषयत्वमेव ब्रह्मणोऽपीति कृत्वा तत्रैनाक्रान्त आपाद्यते॥

स्वयंप्रकाशस्यापि ब्रह्मणोऽन्तःकरणवृत्त्या तदावरणनिवृत्तिर्भवति; प्रमाणजन्यवृत्तेरेवाज्ञाननिवर्तकत्वात्। तदुक्तम्—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति। अखण्डाकारवृत्तिर्हि स्वयं ब्रह्मोपधानमात्रेणाविद्या-तत्प्रयुक्तसर्वभेदप्रपञ्चं निवर्तयन्त्येवोदयमानाऽविद्यानिवृत्तिमात्रेण चरितार्था स्वयमपि विनश्यति॥

ततस्तु सर्वोपाधिविरहितं स्वयञ्ज्योतिरनावृतं संविन्मात्रमवतिष्ठते, इति सर्वं सुस्थम्। तत्र जीवेश्वरत्वोपलक्षितानावृतसंविन्मात्रम्, अभेद इति चानर्थान्तरमिति कल्पतर्वाद्यवलम्बेन पूर्वमुपपादितम्। वृत्त्या ब्रह्म प्रकाशत इति वृत्त्या ब्रह्मविषयाविद्यानिवृत्तिमात्रमिति चानर्थान्तरम्॥

### ब्रह्मणि वृत्तेरावरणाभिभवमात्रार्थम्, न घटादेरिव चिदुपरागार्थत्वम्, अभेदाभिव्यक्त्यर्थत्वं चेति त्रेधा वृत्तिविभागव्यवस्था

'अभेदाभिव्यक्त्यर्था' वृत्तिः; 'चिदुपरागार्था वृत्तिरि'ति चावरणाभिभवार्थत्वसहकारेणैव, घटादिविषयमपेक्ष्यैव, ब्रह्मणि त्वावरणाभिभवार्थैव वृत्तिरिति हि त्रेधा वृत्तिविभागः, इति तत्र वृत्त्युपरागदुर्निरूपत्वमकिञ्चित्करम्; तत्त्वोपधानमात्रेण वृत्तेरेव तदुपाध्यज्ञाननिवर्तकत्वात्। अत आवरणाभिभवमात्रार्थत्वमेवाखण्डाकारवृत्तेः। इदं चावरणाभिभवमात्रार्थत्वमविद्यामात्रोपाधिनिवृत्त्यभिप्रायम्॥

### साक्षिचैतन्यमपि न वृत्त्यवच्छिन्नचैतन्यभास्यम्; तस्य सदा भग्नावरणत्वात्, स्वेतरावभासनाच्चेति न तत्रापि भागासिद्धिः

अहमर्थोऽपि प्रमाता साक्षिचैतन्यमन्तःकरणोपहितमन्तःकरणोपधानमात्रेण सदा भग्नावरणमेव वर्तते। अत एव स्वयं सर्वदाऽपरोक्षं सत् स्व-

सम्बद्धानपि प्रकाशयति। इयान् विशेषः—अखण्डाकारवृत्तिरन्तःकरणपरिणामविशेषस्तत्रावरणाभिभवमात्रार्था। अत्र त्वन्तःकरणमेवावरणाभिभवमात्रार्थमिति। इदमेवाभिप्रेत्य भाष्यम्—साक्षिणोऽन्तःकरणसम्बन्धेनाज्ञानविषयत्वमात्रं निवर्तते, अवच्छिन्नचैतन्याश्रिताज्ञानावस्थाविशेषो वा, यथा घटादिज्ञानैस्तदा तदा तत्तदज्ञानविषयत्वमात्रम्, न तु मूलाज्ञानं निवर्तते, इति नाज्ञानाविषयत्वेऽप्यनावृतत्वम्। इदमेवाभिप्रेत्य भूषणं लिखति—

"आवरणकालेऽपि चैतन्यस्यावृतस्या'हमि'ति प्रकाशमानत्वादि"ति। सति चैव'महमि' ति ज्ञानदशायां सर्वात्मना कथमनावरणत्वम्? निरंशेऽपि ब्रह्मण्यनाद्यविद्यासम्बन्धप्रयुक्तानादिसच्चिदाद्यंशकल्पनाद् नांशभेदेनावारणानावरणोभयविरोधः॥

फलव्याप्यत्वं न दृश्यत्वम्; नित्यातीन्द्रियादौ व्यभिचारात्

तत्र वृत्त्यवच्छिन्नचैतन्यविषयत्वमिति पक्षोऽशुद्धमुद्रितपुस्तकपाठेन द्वितीयो भवतु, भूषणगुप्तशुद्धपाठमनुसृत्य स तृतीयो वा भवतु। तत्र भूषणानुमतप्रत्यक्षविषयत्वं फलव्याप्यत्वापरपर्यायं दृश्यत्वं नित्यातीन्द्रियेऽनैकान्तिकमिति न हेतुतामर्हति। मुद्रितपुस्तकदृष्ट्या तृतीये विकल्पे विषयत्वमात्रोक्तौ दूषणं तु दूषणमेव, इति तत्र विशेषणसार्थक्यं भूषणमपि स्वीकरोति, परन्तु तुच्छे न व्यभिचारप्रसक्तिः; तुच्छस्यापि मिथ्यात्वेन तत्र साध्यस्यापि तत्र सत्त्वेन व्यभिचाराप्रसक्तिरिति भूषणं वदति॥

मिथ्यात्वं स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभवप्रतियो-
गित्वं तुच्छव्यावृत्तम्, तत्तु जगति न सिद्धम्, इति
न सिद्धसाधनम्

इदमेवात्र पृच्छ्यते—किं वा मिथ्यात्वं तुच्छसाधारणं भूषणं मन्यत इति? तत्र ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वं भूषणमभिप्रैति, परन्तु नेदमद्वैतिनामेकविधमपि मिथ्यात्वम्। स्वप्रकारकधीविशेष्यस्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं हि मिथ्यात्वं द्वितीयम्। न चेदं तुच्छसाधारणमिति तुच्छे व्यभिचारातादवस्थ्यात् नोक्तमपि दूषणमत्र प्रसरति॥

न चोक्तविधे मिथ्यात्वे सत्त्वेन प्रतीयमानत्वे सतीति विशेषणमपि सप्रयोजनम्, येन साध्यविशेषणदलवैयर्थ्यापातः। स्वप्रकारकधीविशेष्यता-

रूपेणाधिकरणमात्रनिवेशे तु यद्यपि तुच्छसाधारण्यं मा भूदिति काल-सम्बन्धित्वम् ,सत्त्वेन प्रतीत्यर्हत्वं वा निवेश्यताम्। तत्रापि सत्त्वेन प्रतीय-मानत्वं सत्तादात्म्यमेव, न तु सत्त्वम् , इति न जगत्सत्यत्ववादिनां सिद्धसाधनम्। न चात्यन्ताभावप्रतियोगित्वमात्रं मिथ्यात्वम् ; स्वाधिकरणे स्वात्यन्ताभावप्रतियोगित्वस्यैव तद्रूपत्वात् , इति न बौद्धदृष्ट्यापि सिद्ध-साधनम् ॥

एकसत्तावादे दृक्तादात्म्यं दृश्यत्वमपि न दुष्टम्

दृक्तादात्म्यरूपं दृश्यत्वं च न ब्रह्म-तुच्छसाधारणम्। तदनन्यत्वा-धिकरणभाष्यभामतीकल्पतरुभावाः पूर्वमेवाविष्कृताः; तस्यैकसत्तावाद-मात्राभिप्रायत्वात् , अस्य च सत्तात्रैविध्यवादाभिप्रायत्वादिति न दोषः, तत्राभेदानिषेधः संविन्मात्रनिषेधाभिप्रायः, भेदव्यासेधस्तु स्वरूपतो भेदनिषेधाभिप्राय इति विवेकः। सत्तात्रैविध्ये तु पारमार्थिकत्वेनाभाव-स्यैव मिथ्यात्वाद् भेदाङ्गीकारोऽपि कार्यात्मनाऽविरुद्ध इति तु निष्कर्षः ॥

चिद्भिन्नत्वमपि चित्यव्यभिचाराद् न दुष्टम्

चिद्भिन्नत्वं तादात्म्यघटकं न पारमार्थिकम् , किन्तु कल्पितमेव। तच्च चिति 'चिद् चिन्ने'ति प्रतीत्यसम्भवाद् न सम्भवतीति व्यक्त-मन्यत्र। अतो न तस्य चित्यनैकान्त्यम् ॥

धर्मिसमसत्ताकचिद्भेदो वा दृश्यत्वम्

धर्मिसमसत्ताकचिद्भेदस्य विवक्षणाद् न चिति व्यभिचार इति तु परे। तत्र तु न तुच्छे व्यभिचारशङ्कापि। चिद्भिन्नत्वं चिद्व्यतिरेकित्वं चेत्यनर्थान्तरमिति भिन्नपदस्थाने व्यतिरेकपदप्रयोगोऽपि साधुः। न च पारमार्थिकत्वं भेदस्य कुत्रापि ॥

अविद्यानिवृत्तेः, भेदस्य वा पारमार्थिकत्वयोगः, ब्रह्मणि तु तत्सम्भवः

पारमार्थिकत्वं ह्यतीत-वर्तमान-भाविकालेषु स्वस्वस्थूल-सूक्ष्मावस्था-त्मनाऽवस्थायित्वम्। भावी च कालोऽविद्यानिवृत्त्युपलक्षितः। न च तत्र भेदः, प्रपञ्चः, अज्ञानं वा वर्तते, इति न कालत्रयावस्था प्रपञ्चस्य, ब्रह्म तु न तथा; कालत्रयेऽपि सत्त्वात्। अविद्यानिवृत्तिक्षणे वृत्तिरपि कालेन सह बाध्यते, इति न कालोऽबाध्यः। न च कालसम्बन्धो निवृत्तिकाले ब्रह्मणो विरुध्यते। अविद्यानिवृत्तिरपि निवृत्तित्वोपलक्षितब्रह्मरूपैव, इति न तस्याः पारमर्थिकत्वं विरुध्यते ॥

पञ्चमप्रकारा तु न पारमार्थिकी, न वाऽपारमार्थिकी, इति न पारमार्थिकभेदवत्त्वम्, उक्तविधं वा तत् तत्र वर्तते; चिति चिद्भेदस्य पूर्वोक्तरीत्या प्रातिभासिकस्यासम्भवात्, धर्मिसमसत्ताकत्वाभावाद्वा न तत्रानेकान्त इत्युक्तमेव।

दृक्पदार्थो न धर्मभूतज्ञानम्, जीवस्वरूपज्ञानं वा, किन्तु
सत्य-ज्ञानवाक्यावगम्यमधिष्ठानचैतन्यमेव, यत्
"सदेव" इति प्रस्तुतम्

तत्र दृक्पदेन संविन्मात्रमधिष्ठानचैतन्यं विवक्ष्यते, न तु चक्षुरिन्द्रियम्। अधिष्ठानचैतन्यं चेदं न पराभिमतं धर्मभूतज्ञानम्, जीवस्वरूपाणि ज्ञानानि वा, किन्तु "सत्यं ज्ञानमि"ति श्रुत्युक्तं त्रिविधपरिच्छेदशून्यं संविद्रूपम्।

यत् "सदेव सोम्येदम्" "सर्वं खल्विदं ब्रह्मे"त्यादौ सद्-ब्रह्मादिपदैर्विवक्ष्यते। तस्य प्रतिवादिनामर्थान्तरपरत्ववर्णनं तु श्रुतितात्पर्यविरुद्धम्। जीवेश्वरौ त्वौपाधिकौ न संविन्मात्रमज्ञानाश्रयविषयौ, इति व्यक्तमन्यत्र, इति तयोः; पक्षसमत्वाद् न व्यभिचारः; सत्ताभेदपक्षमादायैवोक्तहेतुपरिष्कारात्, तदनङ्गीकारपक्षे तु शङ्का नात्रोदेति॥

यत्तु—भूषणं प्रसङ्गादद्वैतसिद्ध्यादिनिरसनमपि प्रक्रमते, तदिदं केवलं ग्रन्थविस्तरार्थम्, इति यक्षानुरूपबलिन्यायेन सोऽप्यत्र यथायथं परीक्ष्यते॥

मिथ्यात्वविषयेऽद्वैतसिद्धिनिरासस्य भूषणीयस्य परीक्षा

तथाहि—प्रथमं मिथ्यात्वं सदसद्विलक्षणत्वम्। तत्र सत्त्वं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, तदभावोऽसत्त्वाभावः, सत्त्वाभावस्त्वबाध्यत्वात्यन्ताभाव इति सत्त्वासत्त्वोभयाभाववत्त्वं शुक्तिरूप्यादौ सत्त्वेन प्रतीत्यर्हे, बाध्ये च वर्तते, ब्रह्मणि तु न क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वम्, न वाऽबाध्यत्वाभाव इति न तस्य मिथ्यात्वम्। अयमेव न्यायस्तुच्छेऽपि॥

तत्रेदं वैलक्षण्यमभावरूपं मत्वा, भेदपरत्वे तु सद्भेदासद्भेदोभयवत्त्वम्। तत्रापि ब्रह्मण्युक्तविधासद्भेदः, सद्भेदो वा नास्ति। तत्र ब्रह्मणः क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हस्य नासद्विलक्षणत्वम्, न वाऽबाध्यभेदवत्त्वम्, शुक्तिरूप्यादौ तूक्तभेदद्वयमपीति सिद्धिः॥

### त्रिकालाबाध्यत्वाभाववत्त्वमपि ब्रह्मणि नास्तीति कृत्वा कृतस्य दूषणस्य सदसद्भेदस्यापि निर्धर्मकेऽभावात् परिहारः

तत्र भूषणम्—त्रिकालबाध्यत्वाभाववत्त्वस्यापि निर्धर्मके ब्रह्मण्य-सम्भवात् त्रिकालबाध्यत्वाभाववद्भिन्नत्वं ब्रह्मणोऽप्यस्तीति—वदति। तद्यदि ब्रह्मणो निर्धर्मकस्याभावधर्मित्वमपि नास्तीति सिद्धान्तमादाय, तर्हि कथं विलक्षणत्वरूपभेदधर्मित्वमपि ब्रह्मणः? इति न सदसद्भेद-वत्त्वं ब्रह्मणः ॥

### असद्भिन्नत्वस्य सद्भिन्नत्वमात्रस्य वा निवेशे "नासदासीदि"ति श्रुत्यर्थसङ्ग्रहानापत्तिरिति गुरुतरदलनिवेशावैयर्थ्यम्

इदं हि दलम् "नासदासीन्नो सदासीदि"ति श्रुतिगम्यमर्थमुपपादयितुम्, इति तदर्थानुगमार्थम्, प्रपञ्चस्यानिर्वचनीयत्वव्यवस्थापनार्थं च, इति न तस्य वैयर्थ्यम्; अन्यथाऽसद्भिन्नत्वमात्रोक्तौ नोक्तश्रुत्यर्थ उपपादितः स्यात्, न वा ब्रह्मवैलक्षण्यं प्रपञ्चस्योपपादितं स्यादिति गुरुतरदल-स्यात्र निवेशः ॥

### ब्रह्मणो न बाध्यत्वमज्ञानादेरिव; तस्य सद्रूपतयैव प्रमाणासिद्धत्वात्

त्रिकालाबाध्यत्वाभावः प्रपञ्चे न संभवतीत्यनुपदमेवोक्तं कालत्रयार्थ-निरूपणेन। तत्र बाधो नाम स्व-स्वोपादानान्यतरात्मनाऽभावः 'नास्ति' 'नासीत्' 'न भविष्यती'ति ज्ञानयोग्यत्वम्। तच्च वर्तमानस्याज्ञानस्य, तत्प्र-युक्तानम्, अतीतानाम्, भाविनां चाज्ञानात्मना स्थितानां तत्त्वज्ञानेनाज्ञाने निवर्तितेऽव्याहतम्। न चायं ब्रह्मणोऽपि; तस्य स्वरूपतो निषेधकज्ञानविष-यतदुपादानकारणान्तराभावाद्, उपादानरूपतो वा निषेधकस्य प्रमाणस्या-भावाच्च। श्रुतिसिद्धं हि सत्य-ज्ञानादिरूपं ब्रह्म कथं 'नास्ती'ति किमपि प्रमाणंगोचरयितुमलम्; अन्यथा सविशेषब्रह्मवादोऽप्यस्तमियात् ॥

न च परस्येदमपीष्टम्। ब्रह्म हि सद्रूपमिति सत्य-ज्ञानादिवाक्यादव-गम्यते; सत्तासामान्यमात्रत्वात्तस्य, न तु सत्त्वमपि तस्य धर्मः। न चानेन नयेन बाध्यत्वाभावेऽपि बाध्यस्वरूपं ब्रह्म स्यादित्यापादनं तद्बाध्यस्व-रूपबोधकप्रमाणाभाव औपनिषदे तत्र सम्भवति ॥

यथाप्रमाणं धर्मितया, स्वरूपमात्रतया च तात्पर्याद्यनुसारेण तत्त-त्स्वरूपस्याभ्युपगमविवक्षानुसारेण, वस्तुस्थित्यनुसारेण चैव हि व्यव-

व्यवस्था। तथाच यदि सर्वं निर्धर्मकमिति प्रमाणसिद्धम्, तर्हि कामं तथा स्यात्? न च तथा प्रतीयते। सम्प्रतिपन्ना चैषा प्रमाणानुसारेणार्थव्यवस्थेति ॥

ब्रह्मणि 'नास्ती'ति प्रतीतिविषयत्वाभावो घटादीनामिव, अतोऽपि न बाधस्तस्य

ब्रह्मणि 'नास्ती'ति ज्ञानमसत्त्वापादकतदाश्रिताज्ञानवशात् सत्त्वस्यावरणदशायां यद्यपि भवति; तथापि न तन्ना'स्ती'तिज्ञानम्; चिदात्मना तस्य भानात्। सर्वात्मना तु ब्रह्म स्वप्रकाशं नावृतम्। अत एव तद् विवर्तोपादानमिति व्यवस्था प्रकृत्यधिकरणे। अतो ब्रह्मा'स्ती'ति ज्ञानाभाव एव सत्त्वांशस्यावरणेऽपि भवति, न तु 'नास्ती'तिज्ञानम्। नास्तीति ज्ञानं तु स्वरूपेणाभावयोग्यानां घटादीनामेव, न तु ब्रह्मणः ॥

ब्रह्म 'नास्ती'ति न भ्रमात्मकमपि ज्ञानम्

अतो ब्रह्म 'नास्ती'ति न भ्रमात्मकमपि ज्ञानं भवितुमर्हति। ब्रह्म'नास्ती'ति ज्ञानं यदि केषाञ्चन, तर्हि तस्य ब्रह्मास्तित्वज्ञानाभावपरत्वमेव। न हि निरधिष्ठानं भ्रमात्मकं ज्ञानं नाम। न च धर्म्यध्यासं विना धर्ममात्राध्यासः कुत्रापि, येन 'नास्तित्व'मात्रमारोपितमादाय भ्रमत्वं स्यात्। अतो न ब्रह्मणो बाधोऽपि; स्वयं तस्याधिष्ठानस्याध्यस्तस्वरूपत्वाभावात् ॥

बाधस्वरूपं तु पूर्वमुक्तम्—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति। यद्यपि त्रिकालाबाध्यविलक्षणत्वस्थाने बाध्यत्वमेव सुवचम्; वक्ष्यते च यथा—तृतीयमिथ्यात्वस्वरूपविवेचनावसरे ज्ञानबाध्यत्वपरश्रुत्यर्थविवरणप्रसङ्गे, प्रकृते तु "नासदासीत् नो सदासीदि"ति श्रुत्यर्थोपपादनपरत्वात् सद्भिन्नत्वेन निवेश इति पूर्वमुक्तम् ॥

एतेन—उत्तरदलमप्यसद्विलक्षणत्वम्—व्याख्यातम्। न च तत्र सत्त्वमिति वक्तुं शक्यमपि; मिथ्यार्थस्य बाध्यत्व-सत्त्वयोः परस्परव्याघातेन ब्रह्मण उक्ताबाध्यत्वरूपसत्त्वस्य, सद्रूपताया वा अभावेनोभाभ्यां ताभ्यां मिथ्यात्वलक्षणासम्भवात्, बाध्यत्वेनैव ब्रह्मण इव तुच्छस्यापि वारणादिति श्रुत्यर्थोपपादनमतिदूरे स्यात् ॥

बाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वादिकमपि न मिथ्यात्वम्

एतेन—बाध्यत्वे सति सत्त्वेन प्रतीत्यर्हत्वं मिथ्यात्वमिति योजनापि—परास्ता; सत्त्वेनैव प्रतीयमानत्वदलवैयर्थ्यात्, बाध्यत्वमात्रेण निर्वाहाच्च।

यथा च न ब्रह्मणो बाध्यत्वम्; बाधशब्दार्थायोग्यत्वात्, तथा पूर्व-मुक्तम्। ब्रह्मज्ञानेन स्थूलात्मना, सूक्ष्मात्मना च घटाद्यभाववत् घटज्ञानेन न ब्रह्माभावः; अन्यथा 'इदं रजतमि'ति ज्ञानेन शुक्तेरपि बाधापत्त्या शुक्ते-रेव बाध्यत्वम्, रजतं तु पारमार्थिकमित्यापद्येत। इष्टापत्तौ तु रजतार्थ-क्रियाकारित्वाद्यापत्तिः : अन्यत्तु सर्वमप्रासङ्गिकमकिञ्चित्करं च; बाधस्व-रूपस्य पूर्वोक्तस्य विवक्षणे सर्वदोषनिःसारात्॥

स्वप्रकारकधीविशेष्यकात्यन्ताभावप्रतियोगित्वद्वितीयमि-
थ्यात्वस्य भूतलादौ घटाभावमादाय सिद्धसाधना-
प्रसरः; विशेष्यस्यानधिष्ठानरूपत्वात्

स्वप्रकारकधीविशेष्याधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वमेव बाध्यत्वम्। तत्तु न घटादीनां भूतलादावभावमादाय। तथाच सत्प्रतियोगिका-सत्प्रतियोगिकभेदद्वयवत्त्वं मिथ्यात्वमिति निष्कर्षः। तत्र सदसत्पदाभ्यां पूर्वोक्तस्यैवार्थस्य विवक्षणाद् न घटादियत्किञ्चित्प्रतियोगिभेदस्य पटादौ सत्त्वेन पटादेस्तथ्यत्वेऽपि समन्वयेन विवक्षितार्थसिद्धिः। सत्प-दार्थश्चात्राबाध्य इति तद्भेदवत्त्वमेव ब्रह्मभिन्नत्वपर्यवसितं विवक्षितम्, इति न ब्रह्मणोऽपि मिथ्यात्वापत्तिः। दलान्तरं तु न ब्रह्मणि सम-न्वितमपि॥

"नासदासीदि"तिश्रुतिमूलं सदसद्विलक्षणत्वं सदसद्रूपवादिनां
मतनिरासार्थम्, इति नात्र कस्यापि वैयर्थ्यम्; तत्रासद्वा-
दादिनिरासार्थतया तस्य विवक्षायां यथायथं
योजनसंभवात्

इदं हि मिथ्यात्वं "नासदासीदि"ति श्रुत्यर्थविचाररूपत्वात् सद्रूपम्, असद्रूपम्, सदसद्रूपं वा जगदिदमिति वादिनां त्रयाणाम्, तत्रापि प्राधान्येन सदसद्रूपतावादिनाम्, अन्येषां च तत्तन्निषेधेनापि, इति नात्र कस्यापि वैयर्थ्यम्॥

तत्र यदि जगत्सद्रूपतावाद्येव प्रतिपक्षी, तर्हि तं प्रति सद्भिन्नत्वमात्रं साध्यं भवतु, यदि तदसद्रूपमात्रमिति वादी तथा, तर्हि असद्भिन्नत्व-मात्रं भवतु, उभयवादिनं प्रति तूभयभेदः, सद्भेदासद्भेदोभयवत्त्वं सर्व-साधारणमिति न दोषः। व्यक्तं चैतल्लघुचन्द्रिकायाम्॥

### दृश्यत्वस्यापि सदसद्विलक्षणत्वप्रयोजकत्वसमन्वयः

दृश्यत्वं ह्यत्र तुच्छ-ब्रह्मव्यावृत्तं वृत्त्यवच्छिन्नचैतन्यविषयत्वमेव विवक्षितम्, इति मिलितस्य भेदः; द्वयस्यापि दृश्यत्वप्रयोजकत्वं च सङ्गच्छते। अत्र सद्भेदपदघटकसत्पदार्थः बाधकज्ञानविषयाधिष्ठानत्वम्। तच्च यथायथं शुक्त्यादि, सद्रूपं ब्रह्म च। तदार्ष्टान्तिके ब्रह्मभेदमादाय, दृष्टान्ते तु शुक्तिभेदमादायेति विवेकः॥

### सत्त्वाभावविशिष्टासत्त्वाभावादिकल्पोऽपि न दुष्टः

एतेन—सत्त्वाभावविशिष्टासत्त्वाभावः, सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयवत्त्वमपि—व्याख्यातम्। सत्त्वासत्त्वयोः पूर्वनिरुक्तयोरत्र विवक्षायां कस्यापि दोषस्याप्रसङ्गात्। तत्र सत्त्वमबाध्यत्वम्, तदभावो बाध्यत्वम्, तत्तु सद्रूपे ब्रह्मणि बाधितम्, एवं क्वचिदुपाधौ सत्त्वेन प्रतीत्यनर्हत्वाभावः, उपाधिविशेषे सत्त्वेन प्रतीत्यर्हत्वं च नास्तीति नास्ति॥

यदि तत्र सत्त्वाभावासत्त्वाभावपदाभ्यामुक्तरूपोऽर्थो विवक्ष्यते, तदाऽभावरूपेणैव तयोर्विवक्षायामपि तद्व्यतिरेकेण सर्वाभावात् स्वयमनावृतसंविद्रूपे सर्वोपाधिविरहितेऽभावसाधारणसर्वाभावाद् नामिथ्यात्वम्॥

### अस्थूलादिवाक्यानुसारेणाभावसाधारणसर्वनिषेधेन सर्वमिथ्यात्वकल्पोऽपि

एतेन—अस्थूलादिवाक्यमपि—व्याख्यातम्; ब्रह्मव्यतिरेकेणाभावसाधारणसर्वाभावस्य मिथ्यात्वस्यापि मिथ्यात्वपक्ष इव सर्वाभावविवक्षायामविरोधात्। न चैतावता सर्वोपाधिशून्यस्वयंज्योतिःस्वरूपसंविदसिद्धिः। न हि सर्वोपाधिशून्ये स्वयंज्योतिष्यनावृते संविद्रूपे वाङ्मनसागोचरे वक्तुमशक्यता दोषाय॥

॥ इति प्रथममिथ्यात्वनिरुक्त्युपपत्तिः॥

द्वितीयमिथ्यात्वघटकाधिकरणमधिष्ठानमेव । अतो न घटवति भूतले
घटाभाववद् विरोधः । अतोऽनिर्वचनीयस्यैवात्र पक्षता, तत्र
समन्वयश्च न बाधितः, न वा सोपाधिकाध्यास-
स्थल इव घटादेरन्यत्र सत्त्वापत्तिः

स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्, स्वाधिकरणताव्यापकाभावप्रतियोगित्वं वा। स्वाधिकरणता स्वप्रकारकधीविशेष्यता वा तादात्म्यसम्बन्धावच्छिन्ना; तादात्म्यसम्बन्धस्यापि 'पटे रूपमि'त्यादिप्रतीत्या वृत्तिनियामकत्वात्। तथाच 'नेदं रजतम्' 'नात्र रजतमि'त्याकारद्वयमपि बाधज्ञानस्य सुस्थम्। तेन भूतले 'न घटः' 'भूतलं न घटवत्' इति वा ज्ञानमादाय न मिथ्यात्वसमन्वयः। अधिकरणत्वम्, विशेष्यता वाऽत्राऽधिष्ठानविधया, इति न प्रतियोग्यभावयोः सामानाधिकरण्यविरोधः; अज्ञानप्रयुक्तत्वात्, तदधिकरणकत्वस्य, बाधज्ञानप्रयुक्तत्वाच्च तत्र तदभावस्य, यथा शुक्तौ रजत-तदभावयोः सामानाधिकरण्यम् ॥

तत्रानिर्वचनीयं भ्रमकाले स्वरूपेणोत्पद्यते, प्रतीयते च तदधिष्ठाने, बाधज्ञानेन तु स्वरूपेण, कारणात्मना च निवर्त्यते, इति स्वसामानाधिकरण्यम्, इति स्वप्रकारकधीविशेष्यवृत्तित्वम्, तद्व्यापकत्वं वाऽभावस्याव्याहतम्। अधिष्ठानविधयाऽधिकरणतायाः, विशेष्यताया वा विवक्षणात् सोपाधिकभ्रमस्य व्यावृत्तिः। तेन च बाधितस्य लोहितिम्न इव नान्यत्र सत्त्वं प्रातिभासिकस्य, व्यावहारिकस्य वा, निरुपाधिकाध्यासविषयस्य वा स्यात्। सोपाधिकाध्यासे ह्यन्यथाख्यातिरेव, नानिर्वचनीयख्यातिरिति व्यक्तं परिभाषायाम् ॥

निरुपाधिकाध्यासस्य सोपाधिकाध्यासतो विशेषः,
घटवति घटाभावज्ञानाद्विशेषश्च

निरुपाधिकाध्यासो हि शुक्त्यवच्छेदेन चैतन्ये प्रतीतिकाल उत्पद्यते, निषिध्यते च बाधज्ञानेन स्वरूपेण कारणात्मना च तत्रैव, इति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं शुक्तिरजतादेः; भूतलादौ तु न तथा; तस्य घटानधिष्ठानत्वात्, बाधज्ञानत्वाभावाच्च तदभावज्ञानस्य ॥

द्वितीयमिथ्यात्वेऽत्यन्ताभाव एव

अत्रात्यन्तपदं कारणात्मनाऽप्यभावाभिप्रायेण, प्रागभाव-प्रध्वंसाभावयोस्तेन व्यावृत्तिः, प्रागभाव-प्रध्वंसौ तु कार्यस्य कारणात्मतैव, घटवृत्तिश्यामरूपादौ घटस्य श्यामरूपानधिष्ठानत्वात्, तत्र तस्य बाधाभावाच्च न मिथ्यात्वव्यवहारः, इति न तद्व्यावृत्त्यर्थमत्यन्तपदम्। एतेन—अव्याप्यवृत्तिसंयोगव्यवच्छेदार्थमित्यादि—परास्तम्॥

द्वितीयमिथ्यात्वस्य शुक्तिरूप्यादौ समन्वयः

शुक्तौ रजताध्यासे 'इदं रजतमि'त्याकारे विशेष्यत्वं शुक्तित्वेनाज्ञातमिदमिति सामान्यतो ज्ञातं च शुक्तिस्वरूपस्य, तन्निष्ठा विशेष्यता रजतप्रकारतानिरूपिता, अधिकरणता वा रजताधेयतानिरूपिता तादात्म्यसम्बन्धावच्छिन्नैव, इति भ्रान्तिदशायां न तादात्म्यसम्बन्धावच्छिन्नाभावप्रतीतिरापतति। एतेन—'नात्र रजतमि'ति प्रतीतिरपि—व्याख्याता; तस्या अपि तादात्म्यसम्बन्धावच्छिन्नाभावविषयकत्वस्यैव स्वीकारात्॥

शुक्तिरूप्यादीनां न घटादिवद् व्यावहारिकत्वम्, किन्तु प्रातिभासिकत्वमिति मिथ्यात्वलक्षणसमन्वयः

इदं हि प्रातिभासिकरजतमात्रं बाधते, न तु व्यावहारिकं रजतमपि; तस्याप्रसक्तत्वेन निषेधायोगात्। तत्र रजतत्वं प्रातिभासिक-व्यावहारिकसाधारणमित्यन्यदेतत्। उभयसाधारण्यं हि रजतत्वस्य भ्रान्तस्यापीदंकाराभिमुखप्रवृत्तिनिर्वाहार्थमेव, न तु तावता व्यावहारिकरजतस्यापि तत्राध्यासो नाम। अधिष्ठानविधया विशेष्यता, यत्र रजतावयवावच्छिन्नचैतन्यस्य, रजतावयवस्य वा, तदवच्छेदकतया तन्निष्ठात्यन्ताभावप्रतियोगिकत्वमप्यत्र साध्यमिति निरूपणार्थमेव सिद्ध्यादौ विशेष्यताव्यापकत्वनिवेशः॥

सर्वथा तु तादात्म्यसम्बन्धावच्छिन्ना विशेष्यता न भूतलादौ, इति न पक्ष-दृष्टान्तयोरनन्वय उक्तमिथ्यात्वस्य। अधिकं लघुचन्द्रिकायाम्, विट्ठलेश्यादौ च॥

अधिष्ठानारोप्यभावो विशेष्याऽनुवेधादेव; यथा 'इदं रजतमि'त्यादौ, अतः शुक्तिज्ञानाद्रजतस्येव भूतलज्ञानात् घटस्य निवृत्त्यनापत्तिः

तत्राधिष्ठानतादात्म्येन प्रकाराध्यासोपादानमज्ञानमधिष्ठानविषयमेव, न तु भूतलाज्ञानं घटाद्युपादानम्, 'मृद् घटः' इति वत् 'भूतलं घटः' इति भूतलस्य घटप्रतीतावननुवृत्तेः। अत एव ब्रह्मज्ञानादेव मुक्तिः॥

शङ्खे पीतिमज्ञाननिवृत्तिरुपाधिनाशात्, न तु शङ्खशौक्ल्यज्ञानात्, इति तत्र न शौक्ल्यज्ञानं पीतिमाज्ञाननिवर्तकम्, उपाधिनाशप्रयुक्तत्वादौपाधिकधर्मनाशस्य। शुद्धं ब्रह्मैवानाद्यज्ञानकल्पितसदादिभेदमंशभेदेनाज्ञातम्, अंशभेदेन प्रकाशमानं चाधिष्टानम्, इति यदंशे ज्ञातम्, तदंशेन न भासते, यदंशे न ज्ञातम्, तदंशेन भासते। अधिष्टानत्वं तु ब्रह्मण एवाखण्डस्य यथे'दं रजतमि'त्यादौ ॥

आवृतानावृतरूपभेदवदधिष्ठानं भ्रमोपादानम्। उक्तभेदशून्य-
रूपाखण्डाकारवृत्तिरज्ञनिवर्तिका, यथा शुक्ति-
रूप्यादिज्ञानमिति लक्षणसमन्वयः

अतो ब्रह्मणोऽखण्डस्यैव कल्पितभेदस्याधिष्टानत्वात् तत्त्वज्ञानेनांशभेदकल्पकानाद्यज्ञाननिवृत्तौ भेदोऽपि निवर्ततां इत्यर्थादखण्डाकारता वृत्तेर्ज्ञाताज्ञातसर्वविषयकत्वं ब्रह्मोपाधेर्वृत्तेः, यथेयं शुक्तिरित्यत्र, इति 'इदं रजतमि'तिवत् "सर्वं खल्विदं ब्रह्मे"ति सामानाधिकरण्यं नानुपपन्नम् ॥

अत एव 'नेदं रजतम्' 'नात्र रजतम्' इतिवत् "नेह नानाऽस्ति किञ्चन" "नेति नेति" इत्यादिरूपेण तादात्म्यसम्बन्धावच्छिन्नरजतादिनिषेधेन बाधव्यपदेशोऽपि। तादात्म्यसम्बन्धावच्छिन्नावस्थितिसामान्यविरहो ह्यत्राभावो नाम, भेदस्तादात्म्यसम्बन्धावच्छिन्नोऽभाव इति चानर्थान्तरम्। तत्रेदंपदार्थः शुक्तिरेव, न रजतम्; 'नेदं रजतमि'ति रजतविशेष्यकरजतभेदप्रतीतिस्तु प्रातिभासिक-व्यावहारिकसाधारणरजतनिषेधाभिप्राया प्रातिभासिकरजतत्वस्य तदसाधारण्यपक्ष इदंकाराभिमुखरजतार्थिप्रवृत्तिनिर्वाहार्थम्, इदंज्ञानवशादेव व्यावहारिकरजततादात्म्यापन्नरजताध्यासपक्षे प्रातिभासिकस्य बाध्यताज्ञाने तद्व्यावहारिकतादात्म्याध्यासस्यापि निषेधाभिप्रायावगतेः। न चात्र निर्भरः; पक्षविशेषेण प्रस्थानभेदमात्रत्वात् ॥

अतो 'नेदं रजतमि'ति, 'इयं शुक्तिरि'ति च बाधज्ञानस्योभयाकारत्वमादायोक्तद्वितीयकल्प इदम्पदेनानिर्वचनीयस्यैव ग्रहणम्, पक्षान्तरे तु यथाश्रुतमेव। न चात्र व्यावहारिकशुक्तिभेदो रजतस्य विषयः, किन्तु तादात्म्यसम्बन्धावच्छिन्नरजताभाव एव। भ्रान्तिदशायामज्ञातो भेदो बाधज्ञानेन ज्ञाप्यत इति तु विवेकः ॥

अन्यथाख्यात्यनिर्वचनीयख्यातिस्थलव्यवस्था, तत्र रजताध्यासो-
ऽनिर्वचनीयख्यात्या, रजतत्वविशिष्टरजताध्यासे
तु रजतत्वाध्यासोऽन्यथाख्यात्येति विवेकः

तत्र शुक्तौ रजतमिव तत्तादात्म्यमपि प्रातिभासिकमेव। प्रातिभासिकस्यापि रजतस्येदंकाराभिमुखरजतार्थिप्रवृत्तिनिर्वाहार्थं खलु पूर्वोपपत्तिप्तौ पक्षौ। अत एव स्मृतिरूपत्वमध्यासस्य। पूर्वदृष्टसादृश्यं हि भ्रान्तिविषयस्यैव। न चात्रान्यथाख्यातिः; प्रातिभासिकस्यैवंरूपत्वात्। न च प्रातिभासिकरजताधिष्ठानकव्यावहारिकरजततादात्म्याध्यासोऽत्र। रजतत्वविशिष्टरजतस्याध्यासः, व्यावहारिकरजततादात्म्यापन्नरजताध्यास इति चानर्थान्तरम्। अतो नात्रान्यथाख्यातिद्वयमिति भावः॥

सन्निकृष्टविपये ह्यन्यथाख्यातिः, नासन्निकृष्टविपय इति व्यवस्था तु नात्रोल्लङ्घिता, इत्येकैवान्यथाख्यातिरनिर्वचनीयख्यातौ॥

रजतत्वस्य व्यावहारिक-प्रातिभासिकसाधारण्ये तु न व्याव-
हारिकत्वविशिष्टरजताध्यासः

पक्षान्तरे तु रजतत्वविशिष्टरजतस्यैवाध्यासाद् न कोऽपि विरोधः। अत्रापि हि न व्यावहारिकरजतत्वस्य संसर्गाध्यासः, किन्तु प्रातिभासिकमेव रजतत्वं विशेषणमपि तस्य। व्यावहारिकतत्तद्रजतसाधारण्यमिव प्रातिभासिकसाधारण्यमपीति परं विशेषः॥

तत्र शुक्तौ शुक्तित्वज्ञानदशायां न व्यावहारिकतादात्म्यम्; बाधितत्वात्, तदज्ञानदशायामपि शुक्ते रजतार्थक्रियाकारित्वस्य बाधाद् न तादात्म्यम्, प्रातिभासिकरजततादात्म्यं तु यावद्बाधं स्फुरणाभिवदनादिव्यवहारे प्रयोजकम्, बाधे तु नार्थक्रियाकारीति निर्वाहाद् न विरुध्यते, इति न व्यावहारिकरजततादात्म्याध्यास एव तत्र, किन्तु प्रातिभासिकरजततादात्म्याध्यासोऽपीति न व्याहन्यते॥

तादात्म्यं नैक्यम्

तादात्म्यं भेदसामानाधिकरण्योपलक्षितोऽभेदः, ऐक्यं तु पदार्थविधया भासमानं न भेदघटितम्॥

अत एव 'तत्त्वमसि'वाक्येऽभेदः संसर्गः। अतस्तादात्म्यस्य भेदघटितत्वेन सम्बन्धत्वं न दुष्यति। 'घटो घटः' इत्यत्र तु नाभेदः संसर्गविधया भानमर्हति, 'इदं रजतमि'त्यत्रेदमर्थविशेषणाभिन्नरजतत्व-

विशेषणवत्त्वं रजतस्यापि तत्राध्यासादविशिष्टम्, इति न सर्वात्मनैक्यम्, इति न तादात्म्याध्यासविरोधः। विशिष्टानिर्वचनीयख्यातिश्चोत्तरत्र साधयिष्यते ॥

सर्वत्र रजताध्यासेषु शुक्तित्वाद्यज्ञानं कारणम्, रजताद्यध्यासः कार्यम्, रजतत्वाज्ञाने शुक्त्यध्यासः

यत्र 'इयं शुक्तिः'इति ग्रहणानन्तरम् 'इदं रजतमि'ति भ्रमः, तत्रापि शुक्तित्वाज्ञानमेव कारणम्, रजतस्यैवाध्यासः, न तु शुक्तेः, इति न शुक्तेस्तत्र बाधः। रजते रजतत्वाज्ञाने शुक्तिभ्रमे तु शुक्तिबाधो यद्यपि वर्तते, तथापि सा शुक्तिः प्रातिभासिकी, इति 'नात्र शुक्तिरि'ति ज्ञाने तदभावोऽपि व्यावहारिक एव, न प्रातिभासिकः, इति न प्रातिभासिकाभावप्रतियोगित्वम् ॥

शुक्तित्वाग्रहे नेयं शुक्तिरिति भ्रमः शुक्तिभेदभ्रमः, न च स शुक्तेर्बाधः

शुक्तौ शुक्तित्वाग्रहे 'नेयं शुक्तिरि'ति ज्ञानं रजते रजतत्वाज्ञानदशायां रजतभेदभ्रमवद् यद्यपि प्रातिभासिकशुक्तिभेदविषयकम्; तथापि तत्र शुक्तिभेदस्यैव शुक्तिज्ञानबाध्यस्य मिथ्यात्वम्, न तु शुक्तेः। तत्रापि हि शुक्तिरेव विशेष्यम्, न तु रजतभेदः, इति कथं स्वप्रकारकधीविशेष्यतानिरूपितप्रकारताशालित्वेन तस्याः शुक्तेर्मिथ्यात्वापत्तिः?

बाध्यत्वं हि मिथ्यात्वं नाम। न च तत्र शुक्तिर्बाध्या, किन्तु शुक्तिभेद एव, इत्यप्रातिभासिकाभावप्रतियोगित्वादिविवक्षामादाय दूषणानां नात्रावसरः। स्वाप्नस्थलेऽपि स्वप्रकारकधीविशेष्यतानिरूपिततत्प्रकारताशाल्यभावप्रतियोगित्वेनैव प्रतियोगि-तदभावोभयमिथ्यात्वम्। तदन्यूनसत्ताकात्यन्ताभावप्रतियोगित्वमेव तु तन्मिथ्यात्वप्रयोजकम्, यत् स्वाप्नसाधारणमपि ॥

रजते रजतभेदभ्रमेऽपि न रजतस्य बाधः, किन्तु तद्भेदस्य; तस्यैव पारमार्थिकाभावप्रतियोगित्वात्

तत्र 'नात्र शुक्तिरि'ति काले "इदं रजतमि"त्यत्र रजतमिव रजते 'नेदं रजतमि'ति भ्रमस्थल इव यद्यपि भ्रमकाले पारमार्थिकतादात्म्येनैव प्रतीयते; तथापि नेयं प्रतीतिर्बाधप्रतीतिः, किन्तु भ्रान्तिः; शुक्तिज्ञान-

वाध्यत्वात्, इति न पारमार्थिकाभावप्रतियोगित्वं शुक्तेः। वाधात् प्राक् सत्त्वेन प्रतीतिस्तु रजतस्येवाकिञ्चित्करी, अन्यथा शुक्तिरूप्यस्यापि पारमार्थिकत्वापत्त्या भ्रमकथैव सर्वानुभवसिद्धा लुप्येत। न च शुक्तौ शुक्तिभेदोऽप्रातिभासिकः, येन पारमार्थिको व्यावहारिको वेत्यादिविकल्पतद्दूषणानि प्रसरन्ति ॥

प्रपञ्च-तदभावयोरुभयोरपि मिथ्यात्वे न प्रपञ्चसत्यत्वम्, स्वाप्नप्रतियोगि-तदभावस्थल इवान्यूनसत्ताकाभावप्रतियोगित्वस्यैव मिथ्यात्वात्

प्रपञ्च-तदभावयोरुभयोरपि व्यावहारिकत्वे न प्रपञ्चसत्यत्वापातः। प्रपञ्चाभावपारमार्थिकत्वपक्षोऽपि न दुष्ट इति चर्वितचर्वितम्। तत्र स्वप्न इव प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वेन प्रतियोगि-तदभावोभयमिथ्यात्वं न व्याहतम्; अन्यूनसत्ताकात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वप्रयोजकत्वात्। न चान्यूनसत्ताकत्वं समसत्ताकत्वं चानर्थान्तरम् ॥

समसत्ताकात्यन्ताभावप्रतियोगित्वे वा मिथ्यात्वे तु प्रतियोगिसत्यत्वं निषेध्यतावच्छेदकस्यैकत्वे

अस्तु वा समसत्ताकाभावप्रतियोगित्वमेव मिथ्यात्वम्; अभावस्याधिकसत्त्वाकत्वाभाव एव तात्पर्यात्, भिन्नसत्ताकयोर्विरोधेऽपि समसत्ताकयोरविरोधादित्युक्तिस्तु प्रतियोगिमात्रमिथ्यात्वमभिप्रेत्य, न तु प्रतियोगि-तदभावोभयमिथ्यात्वम्। अत एव स्वाप्नार्थस्य स्वाप्ननिषेधेन वाधदर्शनादित्युक्तिरद्वैतसिद्धावेव। तदधिकसत्ताकात्यन्ताभावप्रतियोगित्वं तु स्वाप्नप्रतियोगि-तदभावोभयमिथ्यात्वे व्यभिचरितमेव ॥

तत्र प्रतियोगिमात्रनिषेधेऽधिकसत्ताकत्वम्, उभयनिषेधे समसत्ताकत्वमित्यनुगमादन्यूनसत्ताकत्वमनुगतं विवक्षितम्, इति नाधिकसत्ताकत्वम्, समसत्ताकत्वं वा युक्तम् ॥

सर्वञ्चेदं सत्ताभेदमङ्गीकृत्यैव प्रवृत्तम्, इति सत्ताभेदानङ्गीकारादित्यन्ततो नैराश्येन पुनः पुनश्चर्वणमकिञ्चित्करम् ॥

पारमार्थिकत्वं त्रिकालावाध्यत्वं ब्रह्ममात्रस्य, न प्रपञ्चस्येत्युक्तमेव। ततश्चार्थसिद्धं वाध्यत्वमेव मिथ्यात्वमिति। तच्च ज्ञाननिवर्त्यत्वरूपमनुपदमेव परीक्षिष्यते यथावसरम् ॥

### शुक्तिरजतभ्रमे दोषनिवृत्त्या शुक्तिज्ञानम्, तेन शुक्त्यज्ञाननिवृत्तिः, ततः शुक्तिरूप्यनिवृत्तिरिति क्रमः

निवृत्तिस्तु शुक्तिरूप्यादौ शुक्तिज्ञानेनैव। शुक्तिज्ञानं तु दोषनिवृत्त्या। शुक्त्यज्ञानं हि तत्परिणामो रजतं वा दोषनिवृत्त्या निवृत्तिमर्हति, इत्यधिष्ठानज्ञाननिवर्त्यत्वमेवारोप्यस्य स्वीकर्तव्यम्। अयमेव न्यायो द्विचन्द्रादिभ्रमस्थलेऽपि। सर्वत्र भ्रमोपादानमज्ञानं ज्ञानैकनिवर्त्यम्; ज्ञानाज्ञानयोरेव निवर्त्य-निवर्तकभावात्॥

### प्रातिभासिक-व्यावहारिकमिथ्यात्वनिर्वचनस्य लघुचन्द्रिकागतस्य नासाधुत्वम्, तथापि ततो न निर्भरस्तत्र

एतेन—प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणाभावप्रतियोगित्वम्, यच्च विनाशिनिष्ठं स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वम्, तदन्यतरवत्त्वमिति चन्द्रिकापरिष्कारोऽपि—व्याख्यातः; तस्यान्यूनसत्ताकाभावप्रतियोगित्व एव तात्पर्यात्, इति न दृश्यत्वस्य मिथ्यात्वाप्रयोजकत्वम्॥

चन्द्रिका हि व्यावहारिक-प्रातिभासिकगतमिथ्यात्वस्वरूपं निष्कष्टुमेवैवं वदति, न तु तत्र निर्भरस्तस्याः। स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमिति ह्यादावेव समर्थितम्। न चात्र दोषलेशोऽपीति व्यक्तमधस्तात्॥

### प्रतियोगिसत्त्वेऽपि निषेधो न विरुध्यते

न च निषेधे प्रतियोगिसत्त्वं नियतम्; घटादेर्ध्वंसकाले, कपालादौ प्राचीनतार्किकमते तत्र व्यावहारिकस्य घटात्यन्ताभावस्यास्वीकारेण घट-तदत्यन्ताभावयोरुभयोरप्यारोपसंभवात्, तत्र प्रतियोगि-तदभावयोरुभयोरपि निषेधेऽपि प्रतियोगिसत्यत्वानङ्गीकारात्॥

### घटात्यन्ताभावस्य घट-तद्ध्वंस-तत्प्रागभावविरोधित्वात् घटात्यन्ताभावनिषेधे प्रतियोगिसत्त्वापत्तिस्त्वेकतरनिषेध एव, नोभयनिषेधे, इति नात्रोभयनिषेधे प्रतियोगि-सत्यत्वापत्तिः

भूषणं तु—ध्वंसप्रागभावाधिकरणे नात्यन्ताभाव इति प्राचीनतार्किकमते घटात्यन्ताभावं प्रति घट-तद्ध्वंस-तत्प्रागभावानां त्रयाणामपि

प्रतियोगितया घटात्यन्ताभावस्यात्यन्ताभावविरोधिनि तदन्यतम एव विश्राम इति घटैकपरिशेषसंभव इति—लिखति ॥

न चात्रात्यन्ताभावात्मकनिषेधे प्रतियोगिसत्त्वापत्तिशङ्कायाः प्रागभावात्मकनिषेधस्य निषेधे प्रतियोग्यसत्त्वदृष्टान्तसङ्गतिः ॥

सत्यमत्र प्रपञ्चाभावस्य प्रपञ्चप्रतियोगिकत्वम् ; तथापि नात्र तन्निषेधेन प्रपञ्चसत्त्वापत्तिः; उभयोरपि प्रकृते ब्रह्मणि कल्पितत्वात् , प्रतियोग्यभावयोरेकतरनिषेध एव ह्यपरस्य सत्यत्वम् ॥

प्रध्वंस-प्रागभावयोः सत्यत्वेऽपि न
प्रतियोगिसत्त्वनियमः

एतेन—ध्वंस-प्रागभावयोः सत्यत्वे प्रपञ्चसत्यत्वमपि—परास्तम् ; न्यायसाम्यात् । न चात्र ध्वंस-प्रागभावयोरविद्यावस्थारूपयोरपि सत्यत्वम् ; तयोरप्यधिष्ठानज्ञाननिवर्त्यत्वेनोभयबाधात् ॥

अभावस्य व्यावहारिकत्वेन मिथ्यात्वेऽपि नाप्रामाण्यम्

तत्राभावस्य व्यावहारिकत्वे न कृत्स्नस्य वेदस्याबाधितार्थबोधकत्वरूपप्रामाण्यायोगः; ब्रह्मभिन्नं प्रपञ्चनिषेधादिकमतात्त्विकमतात्त्विकत्वेन बोधनेन तत्प्रामाण्याक्षतेः । तत्रातात्त्विकत्वं यद्यपि मिथ्यात्वम् , तथापि मिथ्याभूतं नामिथ्येति श्रुतिर्बोधियतीति कथं बाधितार्थत्वम् ?

"अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥"

इति नयेन सर्वेषां सविशेषवाक्यानामपि निर्विशेषवाक्यशेषाणां तदविरोधेन प्रामाण्यस्य 'गुणे त्वन्यायकल्पने'ति न्यायेन स्वीकर्तव्यतया निर्विशेषवाक्यानामेव मुख्यप्रामाण्यस्य स्वीकारान्नात्रानुपपत्तिलेशोऽपि ॥

स्वप्रकाशस्य संविन्मात्रस्याप्यज्ञातत्वेऽपि न तद्बोधक-
तत्त्वमस्यादिमहावाक्यस्यापि नाप्रामाण्यापत्तिः

तत्त्वमस्यादिवाक्यं ह्यज्ञाताखण्डचैतन्यमात्रबोधकत्वाद् न प्राप्तार्थकम् । न हि स्वयंप्रकाशत्वमात्रेण ज्ञातत्वम् ; तस्याज्ञानाविरोधित्वेनाज्ञानेनावृतस्य प्रमाणजनितवृत्त्याऽज्ञाननिवृत्त्यनन्तरं हि प्राप्तत्वम् ; अन्यथा सर्वेषां घटादिज्ञानानामपि तदवच्छिन्नस्वयम्प्रकाशचैतन्यविषयकाणां प्राप्तार्थत्वेन प्रामाण्यकथैवास्तमियात् ॥

### वेदान्तानामविद्यादोषजन्यत्वेऽपि तज्जनितज्ञानस्य ब्रह्मणि नाप्रामाण्यापत्तिः

शब्दबाध्यत्वं न तज्जन्यज्ञानाप्रामाण्यं प्रयुनक्ति। दोषविधया निमित्त-कारणजन्यं हि ज्ञानमप्रमा। न च 'तत्त्वमसि'वाक्यजन्ये ज्ञानेऽविद्या दोषविधया निमित्तकारणम्; तस्य विद्योपहितस्याज्ञानाख्योपाधिनिवर्त-कत्वेन तदानीमविद्याया दोषत्वस्याभावेन दोषजन्यत्वाभावात्। न ही'दं रजतमि'त्यादिभ्रमकाले तत्कारणं काच-कामलादिकमिवाखण्डा-कारवृत्तिकालेऽज्ञानं समस्ति, येन तत्राप्यविद्या दोषविधया निमित्तकारणं स्यात्। अधिकं पञ्चममिथ्यात्वविचारे॥

### मिथ्यात्वस्य प्रपञ्चाभावरूपब्रह्मरूपत्वेऽपि न प्रपञ्चस्य सत्यत्वम्

मिथ्यात्वस्य प्रपञ्चाभावस्य ब्रह्मरूपत्वे तु मिथ्यात्वज्ञानमपि प्रमैव। तदापि समूलस्य प्रपञ्चस्य निवृत्त्या नाविद्या दोषविधया निमित्तकारण-मनुवर्तते। यावदविद्यासत्त्वं ह्यविद्याकार्यविषयकं ज्ञानमेव व्यावहारिकं प्रमाणं नाम। प्रपञ्चाभावत्वोपलक्षितं हि ब्रह्मानावृतसंविन्मात्रं सर्वो-पाधिशून्यं निष्प्रपञ्चम्, न तु सप्रपञ्चम्, इति तस्य प्रपञ्चेन न विरोधः। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥"

इति। तत्राभावत्वस्याप्युपलक्षणतयैव भानाद् न ब्रह्मणः सप्रतियो-गिकत्वम्। न चापरमार्थप्रतियोगिकः पारमार्थिकोऽभावो नामेति। न्यायम-तेऽप्यन्यथाख्यातौ रजतसंसर्गस्यापरमार्थस्य पारमार्थिकाभावस्वीकारा-न्नोपपद्यते। न चात्र संसर्गोऽपि पारमार्थिकः। सर्वज्ञानयाथार्थ्यवादस्तु निरस्तः॥

### 'इदं रजतम्'इत्यत्र रजतत्वस्य व्यावहारिकसाधारण्ये-ऽपि बाधितत्वादप्रामाण्यम्, 'प्रतिपन्नोपाधावि'ति द्वितीयमिथ्यात्वलक्षणोपसंहारश्च

यद्यपि 'इदं रजतमि'ति प्रतीतिकाले रजतत्वस्यापि प्रातिभासिकव्या-वहारिकसाधारणस्याध्यासात् यावद्बाधं रजतं सदिव प्रतीयते; तथापि बाधादेव तस्याप्रामाण्यम्, तत्प्रातिभासिकत्वं बाधापेक्षयैव। अत एव तद्वति तत्प्रकारकज्ञानत्वम्, मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं वा

स्वतो ग्राह्यं प्रामाण्यं भ्रमज्ञानस्यापि। न चैतावता मिथ्यात्वानिश्चय एव, प्रमाण्यमेव वा भ्रमज्ञानानाम्। अधिष्ठानज्ञाननिवर्त्यत्वम्, पारमार्थिकत्वं च प्रतियोगिनो व्याहतम्। सर्वथा प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वं मिथ्यात्वमपि सुस्थम्॥

॥ इति द्वितीयमिथ्यात्वनिरुक्तिः॥

## अथ ज्ञाननिवर्त्यत्वमिथ्यात्वनिरुक्तिः

### अधिष्ठानज्ञाननिवर्त्यत्वस्यैव मिथ्यात्वादुत्तरज्ञाननिवर्त्यपूर्वज्ञाने, सेतुदर्शननिवर्त्ये पापे च नातिव्याप्तिः

तद्धि अधिष्ठानज्ञानजन्यनिवृत्तिप्रतियोगिस्वस्वप्रयुक्तान्यतरत्वम्, तादृशस्वस्वीयसंस्कारान्यतरत्वं वा। निवृत्तिश्चाज्ञानप्रयुक्तस्याज्ञानावस्था, अज्ञानस्य तु ध्वंसमात्रम्। तेन चोत्तरज्ञाननिवर्त्यस्य पूर्वज्ञानस्य, सेतुदर्शननिवर्त्यस्य पापस्येव च सत्यत्वेऽपि न ज्ञाननिवर्त्यत्वोपपत्तिः; तयोरधिष्ठानसाक्षात्कारत्वाभावात्॥

### शुक्तितत्त्वज्ञाननिवर्त्यरजतादौ बाध्ये न ध्वस्तत्वव्यपदेशः; कारणत्मनाऽवस्थानस्यैव ध्वंसपदार्थत्वात्

तत्र शुक्तिरजतस्य तूलाज्ञानेनोपादानेन साकं निवृत्त्या बाध्यत्वम्, न तु ध्वंसमात्रम्। अत एव 'तद् ध्वस्तमि'ति न व्यपदेशः; कारणात्मनाऽवस्थानस्यैव ध्वंसपदार्थत्वात्। तत्त्वसाक्षात्कारात् पूर्वभाव्यनादिपदार्थानामप्यज्ञानकालिकत्वेनाज्ञानप्रयुक्तत्वादज्ञाननाशेनैव नाशाद् न मिथ्यात्वानुपपत्तिः॥

### अनादीनामप्यविद्यान्तत्प्रयुक्तानां तत्त्वज्ञाननिवर्त्यत्वेन मिथ्यात्वोपपत्तिः

तत्र "तरति शोकमात्मवित्" "तरत्यविद्यां विततम्" इत्यादिश्रुत्या ज्ञानेनाविद्यानाशावगमेन तत्प्रयुक्तानामपि तन्नाशप्रयुक्तनाशप्रतियोगित्वमर्थसिद्धमविशिष्टम्; "भिद्यते हृदयग्रन्थिरि"ति तूपलक्षणम्; नाद्यध्यासानामपि निवृत्तेः।

### ज्ञाननिवर्त्येषु नाशपदव्यपदेशनिमित्तनिष्कर्षः

तत्राज्ञान कार्याणामज्ञाननाशेन बाधः, अज्ञानस्य त्वनुपादानकस्य स्वरूपनाशमात्रं बाधः; कारणात्मनाऽवस्थाया अयोगात्। अतो 'घटो नष्टः' इत्यतोऽज्ञानं नष्टमित्यनुभवस्य विशेषः ॥

### अत्यन्ताभावस्यापि मिथ्यात्वं ज्ञानजन्यनाशप्रतियोगित्वम्

तत्र तत्तद्ध्वंसस्य तत्तदुपादानरूपत्वात् सर्वोपादानाज्ञाननाशेऽर्थसिद्ध एव तत्तदुपादाननाशः। अत एव श्रुतिः—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति। तत्र 'मृत्तिकेत्येव' इतीतिपदप्रयोगात् तदाद्यविद्यान्तस्य ततो ब्रह्मान्तस्य चोपादानस्य ग्रहणात्, ब्रह्मव्यतिरिक्तस्याविद्यान्तस्य मिथ्यात्वमवसीयते। बाधस्वरूपं तु निरूपितमधस्तात्। तत्रात्यन्ताभावोऽपि भावाभावविलक्षणतृतीयप्रकाराविद्याप्रयुक्तत्वात् मिथ्यैव, इति ज्ञानजन्यनाशप्रतियोगित्वं तस्यापि ॥

### बाध्यत्वमेव मिथ्यात्वम्, न तु नाश्यत्वमात्रम्। अतो न रजतादीनामिव घटादीनां न मिथ्यात्वम्। सत्त्वं तु रजत-घटादीनां सत्तादात्म्यमेव

तत्र रजतस्य मिथ्यात्वं तस्य ज्ञानप्रयुक्तावस्थितिसामान्यविरहेण, न तु शुक्तित्वज्ञानाधीनरजताभावज्ञानविषयाभावप्रतियोगित्वमात्रेण। न हि कारणात्मना सत्यत्वेऽपि मिथ्यात्वम्। अत एव घटादीनामपि मिथ्यात्वं ज्ञानप्रयुक्तावस्थितिसामान्यविरहेणैव; अन्यथाऽनित्यत्वमेव स्यात् , न तु बाध्यत्वं नाम मिथ्यात्वम् ॥

ब्रह्मणि घटादीनाम्, शुक्तौ रजतस्येवारोपितमेव सत्त्वम्, न तु वस्तुतः, इति कदाचित् स्थितस्यापि कारणात्मनाऽपि नाशयोग्यत्वादेव मिथ्यात्वम् , ॥

### अध्यासे पूर्वपूर्वानुभवाहितसंस्कार एव कारणम्, न तु पूर्वपूर्वप्रमाहितसंस्कारः; अत एव पूर्वदृष्टावभासः। न तु पूर्वप्रमिताध्यासोऽध्यासलक्षणम्

यथा च पूर्वपूर्वानुभवाधीनसंस्कारसहकारमात्रमविद्ययाऽध्यारोपे निमित्तम्, न तु पूर्वपूर्वप्रमाहितसंस्कारापेक्षा, तथा—"अन्योन्यस्मिन् अन्योन्यात्मकतामन्योऽन्यधर्मांश्चाध्यस्य मिथ्याऽज्ञाननिमित्तोऽहमिदमि'ति नैसर्गिकोऽध्यास इति भाष्ये व्यक्तम् ॥

अध्यासलक्षणेऽपि 'पूर्वदृष्टावभासः' इत्युल्लेखः, न तु 'पूर्वप्रमितः' इति। पार्श्वतः, उभयतश्च दर्पणमये गृहेऽध्यासादध्यसो दृश्यते=प्रतिबिम्बादपि प्रतिबिम्बान्तरदर्शनमनुभूयत एव। सर्वेऽप्यनुभवास्तत्तद्योग्यार्थावगाहिन एव, न तु निरालम्बनानार्थाकारवासनामात्रनिबन्धना इति सौगतमताद् विशेषः॥

सौगतमतादद्वैतमतस्य विशेषः, वासनाकार्यत्वं प्रथमे, भावरूपाज्ञान-संविदुभयोपादानत्वमद्वैत इति

भावरूपाज्ञानपरिणामाः खलु प्रातिभासिकाः, व्यवहारिकाश्च, न वासनामात्रमूलाः। अज्ञानं तु भावरूपं प्रकृत्यादिपदबोध्यमनादीति संप्रतिपन्नम्, इति न तस्योत्पत्तिः। अनुत्पन्नमपि तदनादि कल्पितमेवावतिष्ठते। निर्विशेषचैतन्यस्य तेनानिर्वचनीयेन योगोऽप्यनिर्वचनीय एव॥

अद्वैतमतेऽविद्यास्वरूपभेदो वासनाव्यतिरिक्तः

न च वासनासन्ततिरूपाऽविद्या; एकत्वात्, तस्यास्तदवस्था अप्यनादयो न सन्ततिरूपाः। सा च प्रतिजीवं भिन्नेति भामतीमतम्, विवरणमतं त्वेकब्रह्माश्रिता सा मूलाविद्याख्याऽप्येकैवेति; तत्तद्विषयात्मना परिणामभावात्तु तत्तदात्मनाऽवस्थारूपाऽनन्ताः तत्तज्जीवाज्ञानभेदेनेति केचन। मूलाविद्याविषयत्वान्येव नाना, न तु तदवस्थाभेदा अपीति परे। शक्तिभेदेन द्विधेतीतरे। एकैव सा शक्तिद्वयतीत्यपरे। अतो न जीवानादित्वसिद्धान्तभङ्गः॥

रजतादीनां यावद्बाधं सत्प्रतीतिरविरुद्धा,
इति नासत्ख्यातिः

'इदं रजतं सदि'ति यावद्बाधोदयं सदित्येव रजतं प्रतीयते। सत्त्वं चास्य सत्तादात्म्येन वा भवतु, तदसाधारणसत्त्वविशेषेण वा; उभयथा त्वधिष्ठानानुवेधेनैव तस्य प्रतीत्याऽधिष्ठानेऽवस्थानं नियतमुरीकर्तव्यम्; अन्यथा "इदं रजतमि" त्यधिष्ठानांशे प्रमात्वप्रतीत्यनुपपत्तिः। सा हि तत्रानिर्वचनीयरजतोत्पत्तिं विना न संभवति। अनिर्वचनीयत्वम्, मिथ्यात्वं वा तस्य बाधकज्ञानेन काममवसीयताम्, न तु प्रतीतिकालेऽपि तस्य भावः। अत एव 'नेदं रजतमि' ति बाधज्ञानम्। अधिकं भामत्यामन्यत्र च॥

अत एव तस्यापरोक्षप्रतीतिः; तस्य तुच्छत्वे तु तत्प्रतीत्यनुपपत्तिः। तत्र स्थितस्यापि तत्राभावो प्रमाणावसेयः कथमन्यथा स्यात्?

ज्ञानजन्याभावप्रतियोगित्वं वा ज्ञाननिवर्त्यत्वम् । उत्तरज्ञान-
निवर्त्यस्य पूर्वज्ञानस्य, सेतुदर्शननिवर्त्यस्य पापस्य
वा न मिथ्यात्वम् , तावता बाधाभावात्,
बाध्यत्वस्यैव मिथ्यात्वरूपत्वात्

ज्ञानजन्याभावप्रतियोगित्वरूपं मिथ्यात्वं शुक्तिरूप्यादौ दृष्टम् , इति तेनैव नयेन प्रपञ्चमिथ्यात्वमप्यवधार्यते श्रुतिबलात् । श्रुतिस्तु जगत्कारणत्वेन सप्रपञ्चं ब्रह्मोपन्यस्यैवाप्रपञ्चत्वं श्रावयति, इति तत्र स्थितस्यैव तत्राभाव इत्येव श्रुतीनां तात्पर्यम् ॥

तत्र नित्यपरोक्षाणामप्यज्ञानप्रयुक्तत्वात् ब्रह्मसाक्षात्कारनिवर्त्यत्वमज्ञाननिवृत्तिद्वारकमविरुद्धम् । तेषामनिर्वचनीयत्वं त्वनिर्वचनीयाज्ञानोपादानकत्वेन । व्यावहारिकेषु घटादिष्वनिर्वचनीयत्वं ज्ञाननिवर्त्यत्वमेव । न हि साक्षाद् घटादिकमविद्यापरिणामोऽपि ज्ञानेन नाश्यते; उपादानाऽविद्यात्मना नाशस्यैव तत्रापि ज्ञानाधीनत्वात् ॥

अनिर्वचनीयख्यातौ प्रातिभासिकाध्यासे तदधिकसत्ताक-तत्सदृश-
संस्कारकारणत्वम् , न च तत्र परोक्षभ्रमः

अनिर्वचनीयख्यातिवादो हि प्रातिभासिकमविद्यामात्रमवलम्ब्यैव व्यवहारदशायाम् , यत्र व्यावहारिकं तदधिकसत्ताकं प्रपञ्चान्तर्गतरजतं प्रातिभासिकसदृशमस्ति । न च परोक्षो भ्रमः सम्भवतीति तु वार्तिकम् । सत्यपि तस्मिन् तत्रान्यथाख्यातिरेव । न च तत्र ज्ञाननाश्यता विषयस्य ॥

व्यावहारिकाध्यासे तु तत्समसत्ताकसंस्कार एव कारणम्, सर्वत्रा-
वान्तरकारणमविद्यात्मना कारणम् , ज्ञाननिवर्त्यत्वं
तूभयत्र मुख्यं मूलाज्ञाननिवृत्तिप्रयुक्तनाश-
प्रतियोगित्वेनैव

न चायं न्यायो व्यावहारिकेषु प्रसरति, इत्यज्ञानद्वारा ज्ञाननिवर्त्यत्वेनैव घटादीनां मिथ्यात्वम् । ते हि न मायामात्राः, किन्तु मायापरिणामतत्तदुपादानान्तरापेक्षा अपि । न च तत्तदुपादानानि मृदादीनि साक्षाद् ज्ञाननिवर्त्यानि, इति विना मूलोपादानाविद्यानिवर्तकान्वेषणं न मिथ्यात्वव्यवस्था व्यावहारिकेषु, इति युक्तं ज्ञाननिवर्त्यत्वमपि मिथ्यात्वं तृतीयम् ॥

इति तृतीयमिथ्यात्वनिरुक्तिः

## अथ तुरीयमिथ्यात्वनिरुक्तिः

"नेह नानाऽस्ति किञ्चन" इति श्रुतिमूलं द्वितीयमिथ्यात्वम्, तेन च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसमर्थनेन साङ्ख्यानाम्, श्रीभाष्यानुयायिनां च प्रकृतिपरिणामवादो निरस्तः। 'सन् घटः' इत्यादिप्रतीतेर्न घटादिगतसत्ताविषयकत्वम्, किन्तु विवर्तोपादानब्रह्मतादात्म्यमात्रभानमिति शुक्तिरूप्यदृष्टान्तेन सद्विवर्तवादः सिद्धान्तितः। तेन च ज्ञाननिवर्त्यत्वरूपं तृतीयमिथ्यात्वमप्यर्थसिद्धमुपपादितमनन्तरेण पूर्वेण प्रकरणेन ॥

स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं परविद्यामूलमारम्भवाद-
निरासार्थम्, फलतस्तु द्वितीयमिथ्यात्वमेव, तेन च
तदनन्यत्वाधिकरणपूर्वपक्षनिरासः। तत्रोपादा-
नत्वं ब्रह्मणस्तत्र सदा प्रपञ्चाभावः
पारमार्थिकत्वमादायैव

सम्प्रति तु असत्कार्यवादस्यारम्भवादाख्यस्यापि निरसनेन परविद्यामूलं स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वरूपं तुरीयमिथ्यात्वं राद्धान्तयितुं प्रस्तूयते। फलं तूभयत्र सद्विवर्तवादः, न तु द्वितीयेन तुरीयस्य कृतार्थता, तत्र मृदादावसदेव कार्यमुत्पद्यत इति स्वात्यन्ताभावाधिकरण एव प्रतीयमानो घटादिः सत्य एव। तुल्यवित्तिवेद्यतया द्वितीयमिथ्यात्वस्यापि तत्रैव तात्पर्यम्। अतो न घटाद्यमिथ्यात्वमिति प्रथमा शङ्का। तत्र च तत्कार्यसमवायिनि कपालादौ तत्कार्यस्याभावात्, तेन च समवायिकारणत्वमात्रे सिद्धे न ब्रह्मोपादानता तद्विवर्तमानताख्या। ब्रह्म केवलं सविशेषं निमित्तकारणमिति तदनन्यत्वाधिकरणपूर्वपक्षः फलति ॥

तेन च प्रपञ्चसत्यत्वेऽप्युक्तमिथ्यात्वासिद्धेरर्थान्तरता। न हि प्रतियोगि-तदभावयोरुभयोरेकत्र संभवः कुत्रापि दृष्ट इति शङ्काहृदयम्। परिहारस्तु—आरम्भवादेऽपि स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं कार्यस्य तत्प्रागभावसत्त्वेन स्वीकृतम्, इति न प्रतियोगि-तदभावयोरेकत्र समवधानमुपादानत्वं विरुणद्धि, न वा विवर्तोपादानत्वम्, समवायिकारणत्वं वेति त्वन्यदेतत्। श्रुतिर्हि ब्रह्मोपादानत्वमपि श्रावयन्ती तद्विवर्तोपादानतामादायैव स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमभिप्रैति। कार्यसमवायिनि कपालादौ घटादि-तदत्यन्ताभावयोः सहावस्थानं केवलं दृष्टान्ततया प्रतिवा-

दिनां दृष्टयापि तत्प्रसिद्धिमुपपादयितुमेव, न तु तत्र निर्भरः, इति नात्र वेदान्तसिद्धान्ते समवायाद्यसिद्ध्या ब्रह्म-प्रपञ्चयोरिव घट-कपालयोस्तादात्म्यं सुवचमिति शङ्का भूषणस्यात्रावसरति ॥

यत्तु—काले सह संभववद् देशेऽपि सह सम्भवाविरोधात् प्रागभावसत्त्वेनोपादानत्वाविरोधः—इति, तदिदं घटप्रागभावविशिष्टे सदा घटशून्यत्वस्यैव घटोपादानत्वाभावव्याप्यत्वात्, तत्त्वादौ सदा घटशून्ये घटोपादानत्वाभावेऽपि कपालस्य न घटोपादानतां विहन्तीत्यभिप्रायम्। तत्र दृष्टान्त-दार्ष्टान्तिकयोः साध्यप्रसिद्ध्यंशमात्रे साम्यम्। तदिदं ब्रह्मविवर्तोपादानत्वमभिप्रेत्येत्यौपनिषदम्। न च श्रुतिः केवलतर्कमूलानुमानेन बाधं क्षमते, इत्यसत्कार्यवादनिरासेन सद्विवर्तवाद एव परविद्यायास्तात्पर्यमूरीकर्तव्यम्, तद्विरोधेनैव न मिथ्यत्वानुमितेरपि न प्रामाण्यम् ॥

"सदेवेदमि"ति श्रुतिः सद्विवर्तवादपरैव। अत एव
"नेह नानाऽस्ती"ति श्रुतिरपि

"तद्धैक आहुरसदेवेदमग्र आसीत्" इति श्रुतिस्तु "सदेव सोम्येदमग्र आसीत्" इति श्रुत्यर्थाविरोधार्थम्, अग्रे = प्रलये, इदम् नासीत्, न वा सदात्मकम्, किन्त्विदानीमिवार्थक्रियाकारित्वेन सदित्यर्थमेत्र बोधयति, न तु सर्वात्मनाऽसत्त्वम्; असतः सत्त्वविरोधात्। अधिकं तु "असदिति चेन्न प्रतिषेधमात्रत्वात्" इति सूत्रभाष्ये व्यक्तम्। अतो नासत्कार्यवादः श्रुतिसूत्रादिसंमत इत्यत्यन्ताभावाधिकरणे प्रतीयमानत्वं न तार्किकाभिमतं विवक्ष्यते, किन्तु श्रौतमेव सद्विवर्तवादोपपादकम् ॥

सदसत्कार्यवादनिरासेन तेन सविस्तरं सद्विवर्तवादोऽद्वैतब्रह्मसिद्धौ विशदीकृतः, इति 'नेह नानाऽस्ति' श्रुतिः सत्कार्यवादनिरासेन "यत्तदद्रेश्यमग्राह्यमगोत्रमचक्षुःश्रोत्रम् नित्यं विभुं सर्वगतं सुसूक्ष्मं तद् यद् भूतयोनिमि" ति परविद्या सत्कार्यवादनिरासेन सद्विवर्तवादं व्यवस्थापयतीति च सुस्थम् ॥

ब्रह्मणः सद्वितीयत्वं न प्रत्यक्षावगतम्, न वाऽनुमानगम्य-
मिति नाद्वैतश्रुतेः प्रत्यक्षादिना बाधः

न च प्रत्यक्षविरोधोऽत्र। उत्पत्तेः पूर्वं कार्यात्मना सत्त्वं हि न प्रत्यक्षं गृह्णाति, अनुमानं तु सूक्ष्मावस्थामादायापि घटते। तदुक्तम्—

"असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ॥"

शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥"

इति। परविद्याप्रतिपन्नं चेदं परेषामपि। नासत्कार्यवादे श्रुतेस्तात्पर्यम्। तत्र 'नेह नाने' ति श्रुताविहपदम्, "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पूर्ववाक्यात् सप्रपञ्चब्रह्मपरम्, न ब्रह्ममात्रपरम्। परविद्यायां तूपक्रमेऽद्वितीयं प्रस्तुत्य 'भूतयोनिमि'ति सद्वितीयोपसंहारः, इति श्रुतिद्वयस्य पूर्वोदाहृतस्य द्वितीय-तुरीयमिथ्यात्वयोः पर्यवसानमबाधम्॥

प्रपञ्चमिथ्यात्वे श्रुतिमूलमनुमानमपि प्रमाणमस्ति। अत एव तत्रोपन्यस्तस्ततोऽन्यः इति ब्रह्ममात्रोपदेशः

श्रुतिप्रतिपन्नोऽप्यर्थः श्रुत्या बहुश उत्सर्गापवादादिन्यायेन तात्पर्यवशाच्च सति प्रयोजनान्तरेण सार्थक्ये बोध्यते। जगत्कारणत्वं तु ब्रह्मणो न तेन रूपेणोपासनार्थम्; अन्यथा तत्क्रतुन्यायेन जगत्कारणत्वस्याप्यापत्त्या 'जगद्व्यापारवर्जमि'ति सूत्रविरोधापत्तिः। स्थूलारुन्धतीन्यायेन—ततोऽन्यस्ततोऽन्यः, इत्यन्नमयादिश्रुतिप्रतिपन्नार्थनिषेधेन सुसूक्ष्मात्मतत्त्वोपदेशः, "नेति नेति" इत्याद्युपदेशश्च तत्र तत्र श्रुतावेव तु दृश्यते। अतोऽध्यारोपापवादाभ्यां वस्तुतत्त्वनिर्णयार्थमेव कारणवाक्यानां प्रवृत्तिः। अधिकं व्यक्तमधस्तात्।

भावाभावयोर्विरोधकथा न तयोरेकत्र श्रौतत्वे; 'किमिव वचनं न कुर्यादि'ति न्यायात्, सत्ताभेदेन वा विरोधपरिहारः

भावाभावयोर्विरोधकथा तु तयोरेकत्र श्रुत्यप्रतिपन्नत्वे; अन्यथा "सदेव सोम्येदमग्र आसीत् "एकमेवाद्वितीयमि"ति श्रुतेः का वा गतिः? तत्र प्रतीयमानो विरोधो यदि परिहर्तव्यः, तर्हि यथाश्रुति यावद्व्यवहारं सद्वितीयत्वम् व्यवहारात्ययेऽद्वितीयत्वमिति परिहर्तुं सुशकम्। अद्वितीयपदस्यैव सद्वितीयत्वपरत्वं तु तमःपदस्य प्रकाशपरत्वमेव। द्वैतन्निवर्तकं त्वद्वितीयत्वोपलक्षितनिर्विशेषं संविद्रूपं प्रमाणजन्यवृत्त्युपहितमिति गतम्॥

द्वयोरेकस्यारोपितत्वे न विरोधकथाऽपि;स्वप्ने गज-तदभावयोरेकत्र गवि महिषाश्वयोरारोपे च

यत्रैकस्य द्वयोरारोपः, तत्रैव भावाभावयोरविरोधः। न हि कपाले घटस्यारोपः; तत्परिणामस्य तत्समसत्ताकत्वेनाविवर्तत्वेन चाऽऽरोपकथाया एव तत्राभावात्। स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्,

न तु स्वाश्रयमात्रनिष्ठात्यन्ताभावप्रतियोगित्वम्। तत्राधिकरणपदमधिष्ठानाभिप्रायम्॥

लोकसिद्धदृष्टान्तेन शारीरकार्थो नान्यथयितव्यः, शारीरकमीमांसा-
हि श्रुत्यर्थं घटयितुमेव, न्यायविरुद्धं व्याख्यानं न
प्रमाणम्; अन्यथा श्रीभाष्यविवरणं कथं
न व्याख्यानान्तरेणापि

यथा यथा श्रुतिराह, तथा तथाऽसति विरोधे वाक्यार्थ एषितव्यः, सति तु विशये न्यायैः, उपपत्त्या च स निर्णेयः; शारीरकमीमांसा श्रुतिप्रतिपन्नार्थोपपादिका। लोकसिद्धदृष्टान्तमूलकमनुमानादिकम्॥

यथासम्भवं श्रुत्यर्थनिर्णयं घटयितुमेव न्यायादि, न तु तं विघटयितुम्। भूषणं तु 'सिद्धिव्याख्यातार उपेक्षणीयाः' इति वदत् स्वयं स्वानुगुणं किमपि व्याचष्टे घटस्यैव पटीकरणेन। इत्थमपि व्याख्यैव, न श्रुतिः, स्मृतिपुराणेतिहासादिर्वा, इति कथं स्वबुद्धिमात्रमूला प्रमाणम्॥

इति तुरीयमिथ्यात्वनिरुक्तिः

## सद्विविक्तत्वमिथ्यात्वनिष्कर्षः

सद्विविक्तत्वं पञ्चममिथ्यात्वम्। तच्च प्रमाणसिद्धभिन्नत्वम्। प्रमाणसिद्धत्वं च दोषनिष्ठनिमित्तकारणताकज्ञानान्यज्ञानविषयत्वम्, तद्भिन्नत्वं सद्विविक्तत्वमिति निष्कर्षः॥

तत्र दोषत्वं काच-कामलादेस्तत्सत्तादशायामधिष्ठानांशविशेषावरकत्वेन निश्चप्रचम्। अयमेव न्यायोऽविद्याया अपि दोषत्वे नियामकः, अतो यावदविद्योपधानं जायमानं केनचनांशेनाधिष्ठानस्यावरणात् 'सन्-घटः' इत्यादिज्ञानं प्रमाणजन्यमप्यविद्यादोषेण ब्रह्मणोऽखण्डस्यावरणात्, अधिष्ठानज्ञानरूपकारणनिर्वाहकतया दोषविधया निमित्तकारणमेवाविद्या, काच-कामलादिकमिव प्रातिभासिकभ्रमे॥

अविद्या-काच-कामलादिदोषवैलक्षण्यं ज्ञानदशायाम-
विद्यमानत्व-विद्यमानत्वादिना

अखण्डाकारवृत्तौ प्रमाणनिर्वर्तितायां तदुपधानमात्रेणाविद्योपाधिविलयेनाविद्यायाः तदावरणस्य चाभावाद् न विषयांशे ज्ञानस्य भ्रमत्वमिति तत्त्वमस्यादिवाक्यजन्यमेकमेव ज्ञानं प्रमा॥

यस्मिन् ज्ञाने जातेऽविद्याऽप्यनुवर्तते, तत्रैवाविद्याया दोषविधया कारणत्वम्। तच्चाखण्डाकारवृत्तेरविद्यापरिणामविशेषान्तःकरणस्य, विविदिषायाः, ईश्वरसंकल्पादिकारणकलापस्य चापेक्षायामपि तद्वृत्तिकाले भ्रमकाले काच-कामलादेरिवानुवृत्त्यभावात् कथमविद्याया विनश्यदवस्थायाः, विनष्टाया वाऽनावृतचैतन्यावरणविधया निमित्तकारणत्वम्? व्यावहारिकप्रपञ्च-सविशेषज्ञानादिरिव प्रमाणजन्यतत्त्वमस्यादिवाक्य-जन्यज्ञानस्याप्यविशिष्टमविद्यादोषजन्यत्वं स्यात्॥

न चात्र विषयपारमार्थ्यादिकमविद्याया दोषविधया कारणत्वे प्रयोजकम्, किन्त्वविद्यायाः स्वरूपत आवरकतया। तत्र विषयस्याप्याविद्यकत्वे सुतरामप्रामाण्यम्; अविद्यापरिणामस्य बाधितत्वादपीति त्वधिकम्॥

"सन् घटः" इत्यादौ सदंशो नाविद्याकार्यम्, बाधितं वा,
इति न तत्राप्रामाण्यम्

अत एव 'सन् घटः' इत्यादौ, साक्षिज्ञानादौ चाविद्यादशायामपि तस्या आवरणशक्त्यभावात् प्रामाण्यम्। तत्र सत्पदार्थः, साक्षी च परमार्थोऽविद्याया अकार्यमिति त्वन्यदेतत्॥

अविद्यानिवृत्त्या, तत्कार्यनिवृत्त्या च तस्य मिथ्यात्वम्

तत्राविद्यापरिणामत्वं सर्वेषां कार्याणाम् "अजामेका"मिति श्रुतिः श्रावयति। अविद्या च ज्ञानाद् निवर्तमाना तत्प्रयुक्तेन साकं निवर्तते, इत्येतावदेव पर्याप्तमपरमार्थतानिर्णये। तत्र बन्धमिथ्यात्वे प्रमाणानि तानि तानि तत्र तत्रोपन्यस्तानि। भ्रमत्वं हि ज्ञानस्यांशविशेषस्याधिष्ठानगतस्य दोषविशेषेणावरणेनैवेति सम्प्रतिपन्नम्॥

ब्रह्मणोऽविद्याऽकार्यत्वाद् न मिथ्यात्वम्, न वा तस्मिन्नंशे भ्रमत्वं
कुत्रापि ज्ञाने, किन्तु तत्कार्यांश एव; तथैव शुक्तिरूप्यादि-
स्थले दर्शनात्, शुक्तिरूप्यादिज्ञानं दोषजन्यं
भ्रम इत्यादिज्ञानं तु व्यावहारिकमेव

तत्र ब्रह्म न मिथ्या, अज्ञान-तत्प्रयुक्तान्यतरत्वाभावात्, दृश्यत्वादेस्तदसाधारण्यात्, इति ज्ञानकालेऽविद्याया अभावेन तज्ज्ञानस्य

दोषजन्यत्वाभावात्, आविद्यकविषयत्वाभावाच्च न ब्रह्मज्ञानं भ्रम इति सद्विविक्तत्वं न ब्रह्मसाधारणम् ॥

तत्र शुक्तिरजतज्ञानं काच-कामलादिदोषजन्यत्वाद् भ्रमः, शुक्तिरजतज्ञानं दोषजन्यमिति ज्ञानं तु व्यावहारिकप्रमा व्यावहारिकप्रपञ्चज्ञानमिव, इति तस्य काच-कामलादिदोषाजन्यत्वेऽप्यविद्यादोषजन्यत्वेन तस्यापि प्रमाणसिद्धभिन्नत्वमिष्टमेव ॥

अत्रोपहितविषयतावादे वृत्त्युपहितातिरिक्तस्यैव लक्ष्यत्वात्, तदीयज्ञानमादायापि नाव्याप्तिः, अंशतो बाधो वा ॥

घटादिज्ञानस्य तत्प्रतीतिदशायां घटादीनां बाध्यत्वयोग्यत्वाद् -
व्यावहारिकप्रामाण्येऽपि ब्रह्मज्ञानवत् न मुख्यं
प्रामाण्यम्, ब्रह्मज्ञानं तु तद्विलक्षणं
प्रमैव तत्त्वमस्यादिवाक्यजन्यम्

तत्र प्रमात्वमबाधितार्थविषयकत्वरूपं यावद्बाधं प्रपञ्चज्ञानस्यापि यद्यपि नास्ति; तथापि व्यावहारिकाणामाविद्यकत्वात् ब्रह्मप्रमातिरिक्ताबाध्यत्वयोग्यत्वाच्च न प्रमाणसिद्धत्वम्। बाध्यत्वयोग्यतावच्छेदकं त्वज्ञान-तत्प्रयुक्तान्यतरत्वम्, इति न कोऽपि दोषः। प्रपञ्चज्ञानं भ्रमः, प्रपञ्चज्ञानं पुंदोषजन्यं न प्रमेत्यादिज्ञानान्यप्यनिवृत्ताविद्यानां व्यावहारिकप्रमैव, निवृत्ताज्ञानानां तु न तथा; आविद्यकार्थविषयकज्ञानानामविद्यारूपदोषजन्यत्वमेव, न तु दोषत्वव्याप्यधर्मावच्छिन्नकारणताकज्ञानान्यत्वम्, इति दोषत्वेनैव सर्वेषां काच-कामलादीनामपि कारणत्वम्, न तु दोषत्वधर्मावच्छिन्नकारणताकज्ञानान्यत्वं कस्यापि ॥

न चाद्वैतमते सर्वं ज्ञानं भ्रमः; अखण्डाकारवृत्तेः प्रमात्वात्, इति नेन्द्रियसन्निकर्षादीनामेव दोषविधया कारणत्वम्; अन्यथा प्रातिभासिकज्ञानेष्वपि तेषामपि कारणत्वापत्त्या भ्रम-प्रमाविवेको न स्यादिति। 'तत्त्वमसि'वाक्यजन्यं ज्ञानं त्वनाविद्यकाबाधितार्थविषयत्वात् प्रमैव, न कदाऽप्यप्रमा प्रपञ्चज्ञानमिव ॥

विवरण-भामतीप्रस्थानभेदेन तत्त्वमस्यादिवाक्यजन्यज्ञानस्य
प्रमात्वनिष्कर्षः

तद्धि तद्दशायामज्ञानविषयत्वानुपहितार्थविषयकमप्यज्ञानोपहितविषयकमपि, इति न मुख्यानधिगतार्थविषयकम्। अत एव तस्य व्याव-

हारिकं प्रामाण्यम्, शुक्तिरूप्यादीनामिव प्रातिभासिकं तत्। इदं तु विवरणमतेन। भामतीमते तु नेदं मिथ्यात्वं विवक्ष्यते, उपहितब्रह्मातिरिक्तविषयत्वादुक्तलक्षणस्येति व्यक्तं चन्द्रिकादौ॥

वस्तुतस्तु—वृत्त्युपधानमात्रेणाविद्यानिवृत्त्या स्वाविषयकत्वाच्च वृत्तेः स्वरूपमात्रस्योपहितस्यापि प्रमाणसिद्धत्वमव्याहतम्। विवरण-भामतीमतयो र्विशेषस्तु वृत्तेरुपाधित्व-विशेषणत्वाभ्याम्॥

इदमेवाभिप्रेत्य शुद्धं ब्रह्म न दृश्यम्, किन्तूपहितमिति भामतीसिद्धान्तः, उपहितत्वाकारेणौपाधिकमिथ्यात्वमुपहितस्योपाधिमात्रमिथ्यात्वाभिप्रायेण। इदं तु वृत्तेरुपाधेर्विशेषणत्वाभिप्रायेण, विषयत्वं वृत्तेःस्वतोऽनावरणात् निष्प्रयोजनमिति। वृत्तेरुपाधेः पारिभाषिकोपाधित्वम्, न तूपहितं सर्वात्मनोपाध्यविशेषितम्॥

वृत्तेर्विषयतायामनन्वयेन पारिभाषिकोपाधित्वेऽपि स्वरूपमात्रविषयवृत्तेरविद्यादोषाजन्यत्वात् प्रमाणसिद्धत्वं वर्तते। सर्वथा त्वविद्याया दोषविधया निमित्तकारणत्वं तद्विरोधिवृत्त्युपधाने व्याहतमेव॥

दोषजन्यज्ञानविषयत्वस्यैव मिथ्यात्वेऽपि प्रमाणसिद्धभिन्नत्वमिति निवेशः सद्विविक्तत्वसमन्वयार्थम्

यद्यपि दोषजन्यज्ञानविषयत्वं मिथ्यात्वमित्यत्रैवास्य पर्यवसानम्; तथापि सद्विविक्तत्वपदार्थताऽपरित्यागेन लक्षणं वक्तव्यमित्यभिप्रायेण प्रमाणसिद्धभिन्नत्वमिति निरुक्तम्॥

अस्तु वा तदपि षष्ठं मिथ्यात्वान्तरम्। भ्रम-प्रमाविभागे वक्तव्यं तूक्तम्। तत्र शुक्तिरूप्यादौ काच-कामलादिदोषजन्यत्वेन, आगन्तुकदोषजन्यत्वेन वा प्रातिभासिकभ्रमत्वम्, घटादिज्ञानेष्वविद्यादोषजन्यत्वेन व्यावहारिकविषयकभ्रमत्वम्, निर्विशेषस्वप्रकाशचैतन्याकारवृत्तेः प्रमात्वमात्रमिति न साध्याप्रसिद्धिः॥

भ्रमाजनकधीविषयान्यत्वं वा सद्विविक्तत्वम्

भ्रमाजनकधीविषयान्यत्वं वा सद्विविक्तत्वम्। तत्र भ्रमाजनकं तत्त्वमस्यादिवाक्यमेव, चक्षुरादीनां त्वविद्याविषयाविद्यकोपाध्युपहितविषयकज्ञानजनकत्वमविद्यादोषसहकारेणैव, इति भ्रमजनकत्वमेव। व्यवहारदशायामेव भ्रमत्वाप्रसिद्धिस्तु शुक्तिरजतादिज्ञानस्येव तद्विषयस्य मिथ्यात्वानिश्चयेन। भ्रमत्वं तु दोषसहकृतज्ञानसामग्रीजन्यत्वमिति

१०४

न चात्रात्माश्रयः। एतावदर्थानुधावनं तु सद्विविक्तत्वनिर्वचनं मनसि कृत्वैव। तात्पर्यं तु तस्य भ्रमविषयत्व एव। तत्तु लक्षणान्तरम्, इति त्वन्यदेतत् ॥

यत्तु—सत्यानामेव पदार्थानां प्रमाविषयत्वम्, भ्रमविषयत्वं च सर्वेषाम्—इति, तत् सर्वज्ञानयाथार्थ्यवादे युज्यते, न त्वनिर्वचनीयख्यातिवादे। तत्र हि मिथ्यात्वेनानिश्चयदशायामर्थानां सत्यत्वभानमात्रेण प्रमाविषयत्वोपचारमात्रम्, यथा शुक्तिरूप्यादीनाम्। न च युगपत् प्रमाविषयत्व-भ्रमविषयत्वयोरेकत्र प्रतीतिः। कालभेदेन तथा व्यवहारस्तु बाधाबाधनिर्णयापेक्षयैव, इति बाधितावस्थामाश्रित्य तत्तद्विषयाणां भ्रमविषयत्वमेव, अबाधितदशामाश्रित्य-प्रमाविषयत्वमेव। न च प्रमाविषयत्वज्ञानमात्रेण विषयाणां सत्यत्वम्, इति भ्रम-प्रमाविवेको बाधाबाधाभ्याम्। अनिर्वचनीयख्यातिस्तु तत्र तत्र व्यक्ता ॥

ब्रह्मावृत्तिधर्मवत्त्वं सद्विविक्तत्वम्; अतिव्याप्त्याद्यसंभवात्

एतेन—अविनाश्यवृत्तिधर्मत्वं मिथ्यात्वमिति—व्याख्यातम्; अविनाशित्वं ह्यज्ञान-तत्प्रयुक्तान्यतरभिन्नत्वम्, इति ब्रह्मैवाविनाशिपदार्थः, तदवृत्तिधर्मश्च तुच्छ-ब्रह्मव्यतिरिक्तेषु सर्वेषु स्वरूपेण, कारणात्मना वाऽविनाशित्वस्यैवाविनाशिपदार्थत्वात्, तस्य च ब्रह्मण्येव पर्यवसानादिति न किमप्यवद्यम्। अविद्याया अनुपादानाया नाश एव बाधः, न तु घटादीनामिवावस्थान्तरमिति परं विशेषः। अत एव श्रुतिः—"भूयश्चान्ते विश्वमायानिवृत्तिः"इति। निवृत्तिरत्र घटादाविव नाश एव। घटादयो ह्यज्ञानावस्थाविशेषाः, बाध्यत्वं तत्तदुपादानात्मता। उपादानस्य तु स्वरूपतोऽभावः। एवं मृदाद्युपादानमप्यविद्यान्तं नश्यत्येव; परिणामित्वाविशेषात्; अन्यथा परिणामित्वस्य विनाशाप्रयोजकत्वे ब्रह्मपरिणामवादेन किमपराद्धम्? इति परेषां तत्खण्डनं शिवद्रोहतात्पर्येणैव। अधिकं पूर्वमुक्तम् ॥

न चाविद्याया निरन्वयविनाशमात्रेण वैनाशिकत्वम्, ब्रह्मणो विवर्तोपादानस्याज्ञानोपहितस्यान्वयेन निरन्वयविनाशाभावात्, स्थिरविज्ञानस्वरूपस्वीकाराच्च ॥

॥ इति पञ्चममिथ्यात्वनिरुक्तिः ॥

## अथ दृश्यत्वनिरुक्तिः

तत्र दृश्यत्वं वृत्तिव्याप्यत्वम्, व्यवहारप्रयोजकधीविषयत्वम्, वृत्ति-व्याप्यत्व-फलव्याप्यत्वान्यतरवत्त्वम्, चित्तादात्म्यम्, स्वातिरिक्तसंविज्जन्यस्वव्यवहारकत्वम्, स्वव्यवहारव्यापकस्वातिरिक्तसंविदपेक्षत्वम्, स्वातिरिक्तचिदधीनस्फुरणकत्वम्, स्वापरोक्ष्ये स्वातिरिक्तानपेक्षत्वरूपस्वप्रकाशत्वभिन्नत्वम्, अन्यानधीनापरोक्षभिन्नत्वम्, अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं वा ॥

### वृत्तिव्याप्यत्वमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचित्तादात्म्यं सर्वलक्ष्यवृत्ति, अलक्ष्यावृत्ति च

तत्र वृत्तिव्याप्यत्वमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचित्तादात्म्यं घटादिविषयाणां परोक्षापरोक्षसाधारणम्; शुक्तिरूप्यादावप्याऽऽविद्यकवृत्तेः स्वीकारात्, शुक्त्याकारान्तःकरणवृत्त्युपहितसाक्षिभास्यत्वाद्वा वृत्तिव्याप्यत्वस्य समन्वयः। न चास्य ब्रह्मणि व्यभिचारः; तत्रोक्तविधचित्तादात्म्याभावात् ॥

### वृत्तिव्याप्यत्वस्यानुपदोक्तस्यालक्ष्यव्यावृत्तिः, सर्वलक्ष्यसमन्वयश्च

एतेन—उपहिते व्यभिचारोऽपि न भवति; वृत्तिविषयत्वमात्रस्यात्राविवक्षणात्, न्यायरत्नावल्युक्तरीत्याऽज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यत्व-तादृशचैतन्यतादात्म्यान्यतरस्यैव वृत्तिव्याप्यत्वेनोपहितसाधारण्यमपि, इति न तत्र भागासिद्धिः; शुद्धचैतन्ये तु नोक्तविधमन्यतरमपि दृश्यत्वम्, इति न तत्र व्यभिचारः। तत्रोपहितपदेन प्रपञ्चोपहितस्य, अज्ञानोपहितस्य वा विवक्षणेऽपि तस्यापि पक्षत्वादुक्तविधान्यतरोक्तविधचित्तादात्म्यसत्त्वात् साध्यस्यापि सत्त्वान्न विरोधः। तत्र वृत्त्युपहितं ब्रह्म विषय इत्यस्य वृत्तिप्रयुक्ताज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यमात्रत्वात् तत्र ब्रह्ममात्रं विषय इत्यर्थः, न तु वृत्तिरपि विषयः इति तत्र न वृत्तेर्विषयत्वम्, किन्तु भग्नावरणकचित्तादात्म्यमेव ॥

### अखण्डाकारवृत्तेर्न पक्षत्वम्, घटादौ समन्वयश्च

अतो न वृत्तौ भागासिद्धिः; अखण्डाकारवृत्तेरज्ञाननिवृत्तिरूपायाः ब्रह्मरूपाया वाऽपक्षत्वात्। न चायं न्यायो घट-पटादौ; तत्र घटादेरज्ञाना-

विषयत्वेन, तदनुपाधित्वेन च वृत्तेर्घटाद्युपधानासम्भवात्; अन्यथा समानविषयकत्वेनैव ज्ञानाज्ञानयोर्विरोधात्, अज्ञानस्य च चैतन्यमात्राश्रयविषयकत्वात् नाज्ञाननिवृत्तिः, घटादिभानं वा स्यात्। वृत्तिप्रतिफलितानावृतचैतन्यभास्यत्वेन हि घटादीनां जडानां भास्यत्वम्, न तु वृत्त्युपधानमात्रेणावरणनिवृत्त्या स्वप्रकाशत्वं चैतन्यस्येव॥

वृत्त्युपहितत्वमुपाधिविधया चैतन्योपरागित्वम्, न तु तदाश्रयत्वमन्तःकरणादेरिव। न च सत्यासत्ययोरुपरागायोगः; आध्यासिकसम्बन्धस्याविरोधात्, शुक्तिरजतादौ तयोरुपरागदर्शनाच्च। तत्र विवरणमताद् भामतीमतस्य वृत्तेरपि भानाभानाभ्यां विशेष इति पूर्वमुक्तम्॥

### वृत्तिविषये भामती-विवरणमतविवेकः

तत्र वृत्तेरपि भानेऽपि तस्या अप्यविद्याप्रयुक्तत्वादविद्यानाशेन दग्धेन्धनाग्निवत् स्वयं वृत्त्युपरमे शुद्धसंविन्मात्रभानं विवरणमते। ब्रह्मविषयतया साकं तत्र वृत्त्यनन्तरक्षणेऽज्ञाननिवृत्तिः, भामतीमते तु वृत्त्युपरागदशायामेवेत्यपि विशेषः। निष्कर्षस्त्वविद्यानिवृत्त्या भामतीमते, प्रकाशस्तु वृत्तिकाल एव स्वयं ब्रह्मणः, विवरणमते तु वृत्त्युपरागेऽज्ञाननिवृत्तौ वृत्तेरपि निवृत्तौ स्वयंप्रकाशस्य शुद्धस्यावस्थानम्। फलत उभयोरपि न विशेष इति त्वन्यदेतत्॥

तत्र विवरणमते वृत्तेरपि भानं ब्रह्मण इव मन्यते, 'घटं जानामी'त्यादौ घटादिज्ञानमिव ज्ञान-विषययोर्विषय-विषयिभावेन। भामती तु न तथा; उपधानमात्रेणाज्ञाननिवृत्तेः। तत्रोपहितमात्रस्य वृत्तिविषयत्वं तदुपाध्यज्ञाननिवृत्तिमात्रम्। न चैकमेव कालभेदेन मिथ्या सत्यं चैकेन रूपेण। रूपभेदेन मिथ्यात्वं तु नैकस्य। तच्च प्रपञ्चकाले वृत्त्यनुपहितरूपेण वर्तते। मुक्तिकाले तु वृत्त्युपहितमात्रेण रूपेण॥

### "तत्त्वमसी"त्यादावभेदे सामाधिकरण्यम्, न बाधायाम्। जहदजहल्लक्षणा च, विवरण-भामतीमतयोर्मोक्षस्वरूपं च

तत्रोपहितस्यापि जीवेश्वरयोरिवौपाधिकं मिथ्यात्वं स्वीक्रियते। न चैतावता "सर्वं खल्विदं ब्रह्मे"त्यादाविव बाधायां सामानाधिकरण्यम्; उपाधिमात्रस्य बाधात्, स्वरूपस्यावस्थानात्। अतस्तत्त्वमसीत्यादौ स्वरूपमात्रविवक्षायामभेद एव सामानाधिकरण्यम्। तदभिप्रायैव जहदज-

हल्लक्षणा "तत्त्वमसी"त्यादौ। न च विशिष्टयोः कल्पितत्वमात्रेण विशेषणविवक्षायामपि सामानाधिकरण्यमबाधितस्वरूपाभेदाभिप्रायं व्याहन्यते, इति जीवत्वेश्वरत्वोपलक्षिताखण्डाकारवृत्तिनिवृत्ताज्ञानम्, स्वयंप्रकाशसंविन्मात्रतैव मोक्षः, विवरणमतेनानेकजीववाद ईश्वरभावो वा विगलितसर्वोपाधिजीवस्वरूपस्य, इति न विना तत्त्वज्ञानमुपासनाऽऽराधितपरमात्मप्रसादाधीनमीश्वरसाम्यादिकं मोक्षः ॥

मुक्तिर्हि नाम संविन्मात्रस्यानाद्यविद्यायोगप्रयुक्तजीवभावनिवृत्तिरेव; यथा बद्धस्य बन्धनिवृत्तिः। न च मुक्तावस्था बद्धस्य, किन्तु विमुक्तबन्धस्य। तदुक्तम्—"विमुक्तश्च विमुच्यते" इति। अनेन हि बन्धनिवृत्तिरेव मोक्ष इति विशदम्, इति नोपहितस्यैव मुक्तस्यापि भेदः ॥

### जीवत्वम्, ईश्वरत्वं चौपाधिकम्

उपहितज्ञानं च नोपाधिविषयम्, किन्तु स्वरूपमात्रविषयम्। तत्र वृत्तिविषयत्वं वृत्त्युपधानमात्रमेव, इति न तदानीं शुद्धतेति कृत्वैव शुद्धं न वेदान्तवेद्यमिति भामतीप्रस्थानम्, जीवस्य जीवत्वमीश्वरत्वं चोपाधिप्रयुक्तम्, न संविन्मात्रस्येति ॥

### वृत्तिविषयत्वं परिष्कृतं न तुच्छादिसाधारणमित्युपसंहारः

आस्तामियं प्रासङ्गिकी कथा। वृत्तिव्याप्यत्वं दृश्यत्वमसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यतादात्म्यं घटादिविषयाणाम्, प्रत्यक्षाणां परोक्षाणां वाऽव्याहतम्। न चेदं तुच्छ-ब्रह्मसाधारणम्, इति न तत्र व्यभिचारः। उपहितस्याप्युपाध्युपधानतामात्रेण दृश्यत्वं वर्तते, मिथ्यात्वं च। वृत्तिस्त्वखण्डाकारवृत्त्यविषयोऽपि तदुपहितचैतन्यतादात्म्यात् दृश्यैव, इति न तत्र भागासिद्धिर्विवरणमते, भामतीमते तु न पक्षः; ब्रह्मरूपत्वात् ॥

एतेन—वृत्तेरदृश्यत्वेऽपि न दोषः; तस्या अपि स्वयंप्रकाशत्वादिति—परास्तम्; तस्या अन्तःकरणपरिणामरूपाया अप्यन्तःकरणस्येव मिथ्यात्वात्; अन्यथा दृश्यत्वस्य तत्र भागासिद्ध्यापत्तेः। अत एव दृश्यत्वस्य मिथ्यात्वमित्यादि पूर्वमुपपादितम् ॥

### 'शुद्धं स्वप्रकाशमि'त्यस्याशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थो भामतीमते

शुद्धं तु भामतीमते न वृत्तिव्याप्यम्, न वा मिथ्या, पक्षो वेति तु तत्त्वम्। स्वप्रकाशत्वम्, वृत्तिव्याप्यत्वं च यद्यपि न विरुद्धम्; आवरणनि-

वृत्तिमात्रार्थत्वात् प्रमाणजन्याया वृत्तेः; तथापि तयाऽऽवरणनिवृत्त्यैवेष्टनिर्वाहात् स्वप्रकाशस्यापि तद्विषयावरणनिवर्तनेन वृत्तिव्याप्यत्वव्यपदेशः, न तु वृत्तिविषयत्वं तस्येति तत्र तत्र चर्चितम् ॥

शुद्धत्वम्, वृत्तिविषयत्वं च व्याहतम्; सर्वविशेषराहित्यस्यैव शुद्धपदप्रवृत्तिनिमित्तत्वात्, सति वृत्तिविषयत्वे च तद्बाधात्। इदमेवाभिप्रेत्य वृत्तिविषयत्वे शुद्धस्य शुद्धत्वहानिरिति चन्द्रिका ॥

उपहितमात्रविषयत्वेऽपि वृत्तेस्तदर्थमेव वेदान्तशास्त्रविचारः; अविद्यातत्प्रयुक्तभेदनिवर्तकवृत्तिमात्रेण शास्त्रविचारस्य साफल्यात्। न हि शास्त्रं विचार्यमाणमपि ब्रह्माज्ञाननिवृत्तिव्यतिरेकेणेदन्तया ब्रह्मबोधनेऽपि क्षममिति हि तदाशयः। 'शुद्धं स्वप्रकाशमि' ति वाक्यस्योपहितमस्वप्रकाशमित्यर्थवर्णनं त्वगत्या। तदपि भामतीमत एव। विवरणमते तु तदपि यथार्थमेव ॥

तत्र भामतीमतेऽस्वप्रकाशत्वमज्ञान-तत्प्रयुक्तान्यतरत्वम्, तदुपहितत्वं वा। न च शुद्धं तथा, येन शुद्धचैतन्यानपेक्षस्य तस्यासिद्धिः, शुद्धविषयत्वापरिहारो वा। यत्र यत्रास्वप्रकाशत्वम्, तत्र तत्रोक्तमुपहितत्वरूपमशुद्धत्वम्। शुद्धं त्वनुपहितम्, अनावृतं वा स्वप्रकाशमिति पर्यवसानम्। न चास्य नियमस्य शशविषाणे व्यभिचारः; तत्रोक्तस्याशुद्धत्वस्याभावात् ॥

न च तावता स्वप्रकाशत्वस्य शुद्धेऽज्ञानम्; अनुपहितमुपाध्युपधानशून्यं शशविषाणम, न तु शुद्धम, इति पर्यवसानत एवानावृतसंविन्मात्रस्य स्वप्रकाशस्य सिद्धिः ॥

### भामतीमत उपहिततादात्म्यमेव सर्वस्य, न तु शुद्धतादात्म्यम्

भामतीमते ह्यज्ञानोपहितसर्वतादात्म्यम; तस्यैवोपादानत्वात्, न तु शुद्धचैतन्यस्य, इति नोपहितचित्तादात्म्यं शुद्धचिति। तेन चोपहितचित्तादात्म्यात्यन्ताभावव्यापकस्योपहितचिदत्यन्ताभाव इति निश्चयोत्तरं तादृशात्यन्ताभावविशिष्टोपहितचित्तादात्म्यं यदि पर्यवस्यति, तर्हि कुतो वा शुद्धचित्प्रतीत्यपेक्षा, येनोपहितचित्तादात्म्यं शुद्धचित्यप्यस्ति, इति तज्ज्ञानमनिवारणीयं स्यात् ॥

उपहित-विशिष्टचैतन्यस्याप्यौपाधिकं मिथ्यात्वमिष्टमिति न तत्र व्यभिचारो दोषः

तत्रोपहितस्यैव मिथ्यात्वे का वा कथा मायाविशिष्टस्य ब्रह्मणः? इति तस्यापि पक्षकोटिप्रविष्टत्वात् साध्यवत्त्वाच्च न व्यभिचारः, मिथ्यात्वं तु तस्यौपाधिकम्, न तु स्वरूपत इति परं विशेषः ॥

तत्र विशेषणस्यापि कार्यान्वयस्य नियततया न वृत्तेरज्ञानस्य च समानविषयकत्वम्, इति नोपहितस्थले वृत्त्युपधानमात्रेणाज्ञाननिवृत्तिः, इत्यसत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचैतन्यतादात्म्यापन्न-फलव्याप्य-मायाविशिष्टचैतन्यं नामिथ्या भवितुमर्हति; अन्यथा घटाद्यवच्छिन्नचैतन्यस्यापि वृत्त्या भाने शुद्धस्यापि भानम्, इति कथं घटादिज्ञानादेव न मुक्त्यापत्तिः ॥

उपहितान्याविषयकत्वे सत्युपहितविषयकत्वं नेश्वरज्ञाने, घटादिज्ञाने वा, इति नेश्वरादिज्ञानादेव मुक्त्यापत्तिः

शुद्धविषयत्वं हि वृत्तेरुपहितान्याविषयकत्वविशिष्टोपहितविषयत्वकम्। न च मायाविशिष्टब्रह्मज्ञानं तथा, इति न तस्य ब्रह्मणः शुद्धत्वम्, तज्ज्ञानस्य वा शुद्धविषयकत्वम् ॥

न चात्र विषयतापर्याप्त्यादिविवक्षया शुद्धाविषयकत्वम्, किन्तु शुद्धमात्रस्य वृत्त्यनुपधानादेव। घटत्वादिविशेषणांशे विविक्ते, तदविविक्ते वा घटादौ तदवच्छिन्नचित्तादात्म्येनैव तत्तदाकारवृत्तिमादायैव दृश्यत्वसमन्वयः, न तु तत्तदाकारवृत्त्यभावेऽपि, इति न कुत्रापि व्यभिचार उक्तविधदृश्यत्वस्य। साक्षिभास्यानामपि वृत्तिभास्यत्वमपीति पक्ष एव वृत्तिव्याप्यत्वमुक्तविधं हेतुरिति ॥

इतरविषयत्वानिरूपितात्मविषयकज्ञानस्यैवाज्ञाननिवर्तकत्वम्

अत एवाज्ञान-तत्कार्याविषयकज्ञानस्यैवेतरविषयत्वानिरूपितात्मविषयकज्ञानस्यैवाज्ञाननिवर्तकत्वम्, 'तत्त्वमसि' वाक्यजन्यं ज्ञानं तूपहितमात्रस्य विषयत्वकल्पेऽपीतरविषयत्वानिरूपितात्मविषयकमेव, इति नाज्ञाननिवर्तकज्ञानस्य शुद्धचिद्विषयकत्वनियमः ॥

अस्वप्रकाशत्वं वा दृश्यत्वं हेतुः । तच्च विवरणमते, न तु भामती-
मते, तत्रोपादानकारणमज्ञानोपहितम्, वृत्त्युपहितमात्र-
मज्ञाननिवर्तकम्, न तु वृत्तिविषयकमपि

स्वव्यवहारे स्वातिरिक्तचिदपेक्षानियतिरप्रकाशत्वम्, तदभावोऽस्वप्रकाशत्वमिति तु तत्र शुद्धचित एव चित्पदेन ग्रहणाद् न दुष्टं विवरणाभिप्रायेणेति सिद्धावेव व्यक्तम्, इति नानेन भामतीमतेऽपि शुद्धविषयताऽऽपादनं विकल्पसहम् ॥

भामतीमते ह्यज्ञानोपहितं प्रत्यक्चैतन्यमुपादानम् । तत्र प्रत्यक्चैतन्यस्याज्ञानोपधानमेवाज्ञानाश्रयत्वं नाम । जीवस्त्वज्ञानविशिष्टोऽज्ञानसम्बन्धिसर्वदोषभाग् बद्धः । तत्र जीवाश्रिताज्ञानविषयो ब्रह्मोपादानकारणम् । तत्र विशिष्टजीवीयान्तःकरणवृत्त्याऽज्ञानोपहितस्योपधानेऽज्ञानोपाधिनिवृत्तौ ब्रह्मण आवरणमपि निवर्तते, इति तदावरणनिवृत्त्यर्थमेव प्रमाणापेक्षा । तत्र चैतन्यस्य शुद्धस्याज्ञानोपहितस्य वृत्त्युपहितं रूपमेव शास्त्रगम्यम् । तत्र वृत्त्यज्ञानयोरुभयोरप्युपहितमात्रविषयकत्वेनैव विरोधः । आवरणनिवृत्तिस्तु तदाश्रयाविद्यानिवर्तकत्वमेव, इति न वृत्तेः शुद्धसंविन्मात्रविषयकत्वापेक्षा, येन साक्षादावृतस्य ब्रह्मणो वृत्तिविषयत्वं विना न ब्रह्माज्ञाननिवृत्तिः ॥

इदमेवाभिप्रेत्य चन्द्रिका—उपहितान्याविषयकत्वं ज्ञानाज्ञानयोः समानविषयकत्वमिति । अत्रोपहितान्येति नोपाधिमात्रस्य, किन्तु शुद्धस्यापि साक्षाद् ज्ञानाज्ञानविषयत्वायोगः सूच्यते, ज्ञानाज्ञानयोरुपहितमात्रविषयकयोर्निवर्त्य-निवर्तकभावः । चैतन्यावरणनिवृत्तिस्त्वाश्रयनाशादेव, न तु साक्षात् । तत्राज्ञाननाशकसामग्री वृत्तिरिति हृदयम् ॥

उपहितान्याविषयकत्वे सतीत्यस्यान्यथाग्रहणेन भूषणेनाद्वैत-
दूषणम्, तदनुपपत्तिश्च; अन्यथा सत्यकामत्वादि-
विशिष्टज्ञानस्याप्यज्ञाननिवर्तकत्वापत्तिः

भूषणं ह्युपाध्यविषयकत्वे सत्युपहितान्यविषयकत्वे सत्युपहितविषयकत्वमिति विशेषणद्वयविशिष्टं विशेष्यमत्रानुसन्दधाति । तत्रोपाध्यविषयकत्वे सतीति मूलव्याख्यानरूपमुपहितान्याविषयकत्वे सतीति दलमपि स्वतन्त्रमेकं विशेषणमित्यन्यथा गृहीत्वा ॥

आस्तामिदम्—उपाध्यविषयकत्वे सतीत्यस्योपाधेरुपलक्षणत्वज्ञप्तये उपाध्यविषयकत्वनिवेश इति दलप्रयोजनमपि व्याचष्ट इत्येवात्र चित्रम् । तेन चोपलक्षणविधयोपाधेर्भानं चन्द्रिकाभिप्रेतं तत् मन्यते ॥

अत्रोपाधिपदं विद्यमानत्वे सति कार्यानन्वयि व्यावर्तकम्, विशेषणाद् भिन्नं पारिभाषिकं तन्मात्रस्याविषयत्वमेव मन्यत इति शङ्का भवतु वा, मा वा भवतु इत्येवाभिप्रेत्योपहितान्यसर्वविषयकत्वनिरासः, उपहितमात्रविषयकत्वविवक्षा च तत्र । तत्र दलप्रयोजनं चन्द्रिकायां तद्व्याख्यायां च व्यक्तम् । तावन्मात्रेण चास्य सन्दर्भस्य शुद्धिः । तेन हि शुद्धविषयकस्य विशेषणतया धर्मान्तरसत्यकामत्वादिविशेषणविषयकस्यापि ज्ञानस्याज्ञाननिवर्तकत्वं वार्यते ॥

### उपहितज्ञानस्यैवाज्ञाननिवर्तकत्वोपसंहारः

अज्ञानोपहितं ब्रह्म साक्षीत्यत्राज्ञानमुपाधिः, तत्राज्ञानविषयस्य साक्षित्वं न तदुपाधेरज्ञानस्यापि; तस्य वर्तमानस्यापि कार्यानन्वयात्, एवं वृत्त्युपहितं ब्रह्म प्रमाणजन्यवृत्तिविषय इत्यत्र वृत्तिरपि न विषय इत्यादि विशदीकृतं मूल एव, इत्यस्थाने संरम्भो भूषणस्य, प्रकरणाननुगुणं विवरणं वा स्वीयमाश्रित्य समानविषयकत्वपरिष्कारतद्दूषणादीनां विस्तारेण । तत्सिद्धमुपहितज्ञानस्यैवाज्ञाननिवर्तकत्वम्, न तु विशिष्टविषयकस्य, शुद्धविषयकस्य समूहालम्बनज्ञानान्तरस्य वा । अधिकं न्यायरत्नावलीतोऽवगन्तव्यम् । तत्र 'अहं ब्रह्म घटो विनाशी'ति ज्ञानस्यापि निवर्तकत्वे कल्पभेद उक्त इति त्वन्यदेतत् ॥

### भामतीमते वृत्त्युपधानमात्रं मुक्तिः; अज्ञाननिवृत्तिरूपत्वात्, इति प्रस्थानभेदो न विरोधाय

तत्त्वज्ञानादज्ञाननिवृत्तिरित्यपि साक्षात् शास्त्रमुख्यतात्पर्यविषयज्ञानमभिप्रेत्यैव । अनावृतं स्वयंप्रकाशं सविन्मात्रमेव तत्त्वमिति कल्पे तु तत्त्वज्ञानमनावृतं स्वप्रकाशं संविद्रूपमेव मुक्तिरिति पञ्चम्या अभेदे लक्षणामभिप्रेत्य, भामतीमते तु यथाश्रुतमेव तदस्तु; तत्र प्रस्थानभेदमात्रत्वात्तयोर्न सुन्दोपसुन्दन्यायेनोभयाप्रमाणता; अन्यतरमात्रप्रमाणता वा ॥

### शब्दाजन्यवृत्तिविषयत्वादिकं दृश्यत्वमिति तु विवरणमतम्, तस्यापि न ब्रह्मणि व्यभिचारः, अखण्डस्य शब्देतर-प्रमाणजन्यवृत्त्यविषयत्वात्

तत्र शब्दाजन्यवृत्तिविषयत्वं वा, सप्रकारकज्ञानविषयत्वं वा दृश्यत्व-मिति प्रकारान्तरावलम्बनं तु प्रस्थानान्तरमभिप्रेत्य, इति न तेन भामती-प्रस्थानस्य बाधः ॥

शब्दाजन्यवृत्तिविषयत्वं शब्देतरप्रमाणजन्यवृत्तिविषयत्वम्। शुद्धं ब्रह्मौपनिषदं न प्रमाणान्तरवेद्यम्, इति न तत्र व्यभिचारः। 'सन् घटः' इत्यत्र तु सद्रूपं ब्रह्मानन्दात्मनाऽज्ञायमानत्वात् सखण्डत्वाच्च न शुद्धम्, इति तस्य मानान्तरविषयत्वेऽपि न शुद्धे व्यभिचारतादवस्थ्यम् ॥

अनुभूतिः, स्वप्रकाशा, अनुभूतित्वादित्यपि संविदंशमात्रं विषयी-करोति, वृत्तिः, चैतन्याधीनप्रकाशा, जडत्वादित्यत्र तु चैतन्यं संविन्मात्रं तदवच्छिन्नमेव भासते, इति न निर्विशेषचैतन्यस्यानुमानजन्यवृत्तिवि-षयत्वम्। अनुमानमपि तत्र शब्दमूलकत्वाद् न शब्देतरप्रमाणम्, शब्द-पदेन चात्र मुख्यतात्पर्यकमहावाक्यमेव वा विवक्ष्यते, इति न धर्माधर्मादौ भागासिद्धिः ॥

### विकल्पेतरशब्दजन्यवृत्तिविषयत्वरूपस्य तुच्छे-ऽभावेन तत्राव्यभिचारः

एतेन शशविषाणं तुच्छमिति शब्दजन्यप्रमामात्रविषये तुच्छे व्यभि-चारोऽपि नावसरति। न चात्र वस्तुत्वमपि हेतुघटकम्; घटादौ भागा-सिद्धेः, किन्तु शब्दाजन्यवृत्तिविषयत्वमात्रम्। तत्र विकल्पेतरशब्दजन्य-वृत्तिविषयत्वरूपं तुच्छेऽपि वर्तते, इति न तत्र व्यभिचारः ॥

विनापि शब्दप्रयोगं तुच्छस्य ज्ञानं नान्येन मानेन, न वा तज्ज्ञानं विकल्पः। "शब्दज्ञानानुपाती वस्तुशून्यः" इति शब्दातिरिक्तविषयशून्यत्वे विकल्पत्वमभिप्रेत्य, न तु शशविषाणस्य शब्दप्रमाणजन्यवृत्तिविष-यत्वाभावमपि। व्यक्तञ्चैतत् चन्द्रिकाव्याख्यायाम्। शब्दप्रमाणजन्यवृत्ति-विषयत्वं तुच्छस्यापि समानम्। 'पुरुषस्य चैतन्यम्', 'राहोः शिरः' इत्यादौ तु पुरुषातिरिक्तस्य चैतन्यस्य राह्वतिरिक्तस्य शिरसोऽप्यवस्तुत्वात् तथा शब्दप्रयोगमात्रम्। तत्र षष्ठ्यन्तपदघटितस्य तस्य तस्मिन्नंशे विकल्पत्वमेव, तथाप्यभेदे षष्ठीमाश्रित्य विकल्पत्वनिर्वाहमात्रम्, इति न विकल्पत्वं

तस्य वस्तुविषयत्वेऽपि। षष्ठ्या अभेदार्थकत्वं न वस्तुत्वोपपादकमिति त्वन्यदेतत्। सर्वथा तु तुच्छस्य शाब्दवृत्तिविषयत्वमवस्तुत्वेऽपि यथाश्रुतं पुरुषस्य चैतन्यमित्यादाविवाबाधम्॥

सप्रकारकधीविषयत्वं वा दृश्यत्वम्, अतो न ब्रह्मणि, तुच्छे वा व्यभिचारः, 'सन् घटः' इत्यादौ सत्तादात्म्यविषयकत्वेन घटादिप्रकारकत्वम्। न च भागासिद्धिः

शशविषाणं तुच्छम्, पुरुषस्य चैतन्यमिति पुरुषाभिन्नं चैतन्यम्, राहुभिन्नं तच्छिर इति चानर्थान्तरम्; सर्वेषामेषां शब्दजन्यवृत्तिविषयत्वात् तत्र न व्यभिचार इति तु निष्कर्षः॥

यद्येवं शशविषाणम्, न तुच्छम्; प्रतीतिविषयत्वादिति शब्दानुमानविषयत्वस्यापि सत्त्वेन कथं न व्यभिचार इति शङ्का तु भवति, सत्यम्, तथापि तुच्छ-शुद्धयोर्व्यभिचारपरिहारार्थं सप्रकारकवृत्तिविषयत्वं दृश्यत्वं विवक्ष्यताम्। निर्विशेषं तुच्छं च न तथा। "सत्यं ज्ञानमि" त्यादिमहावाक्यं चाखण्डार्थं न सप्रकारकज्ञानजनकमित्युत्तरत्र विशदम्॥

प्रकारश्चात्रास्तीतिप्रतीतिविषयत्वरूपः 'सन् घटः' इत्यादाविव सत्तादात्म्यनिबन्धनो न तुच्छस्य, न वा ब्रह्मण इति सम्प्रतिपन्नमुभयोरपि, इति न दोषः। सत्त्वप्रकारकधीविषयत्वमिति तु नात्र विवक्षितम्; घटादौ सत्तादात्म्येऽपि सत्त्वाभावेन सत्त्वप्रकारकधीविषयत्वाभावेन भागासिद्धेः॥

"अस्ति ब्रह्मेति चेत्"इत्यत्रापि ब्रह्म सद्रूपमेवार्थः; सत्तासामान्यमात्रत्वात् तस्य, इत्यस्तिपदप्रयोगमात्रेण न तत्र व्यभिचारतादवस्थ्यम्। स तु धर्मो घटत्वादितत्तदसाधारणकल्पितधर्मविशेषो, न निर्विशेषेऽखण्डे वेदान्तप्रमाणजन्यज्ञानविषये, तुच्छे वाऽस्ति॥

श्रुतिर्हि मुख्यस्य ब्रह्मणोऽशेषधर्मशून्यत्वम्, तन्मिथ्यात्वं वा बोधयति, न तु समानसत्ताकधर्मवत्त्वं घटादेरिव ब्रह्मणो बोधयति। अतो न वृत्तिव्याप्यत्वरूपं दृश्यत्वं मिथ्यात्वानुमानहेतुर्दुष्यति॥

वृत्तिव्याप्यत्व-फलव्याप्यत्वान्यतरत्वं वा दृश्यत्वमपि न दुष्टम्

वृत्तिव्याप्यत्व-फलव्याप्यत्वान्यतरवत्त्वे दृश्यत्वे वृत्तिव्याप्यत्वस्य पूर्वोक्तस्य विवक्षणे यद्यपि फलव्याप्यत्वं नापेक्षितम्; फलव्याप्यत्व-

विवक्षायां तु गुरुत्वादौ भागासिद्धिः स्यात् ; तथापि व्यवहारप्रयोजकविषयत्वेनानुगतेन रूपेणोभयोरपि संग्रहार्थमन्यतरनिवेशः। इदं साक्षिभास्यानां न वृत्तिविषयत्वमिति मतेन, इति नान्यतरवैयर्थ्यमपीत्यन्यत्र व्यक्तम्। चित्तादात्म्य-वृत्तिविषयत्वान्यतरवत्त्वमुक्तं दृश्यत्वमिति तु निष्कर्षः॥

फलव्याप्यत्वमात्रं तु न दृश्यत्वम्,

चित्तादात्म्यं तु न दुष्टम्

तत्र फलव्याप्यत्वमात्रं न हेतुः; नित्यपरोक्षगुरुत्वादौ, अतीतानागतादौ च भागासिद्धेः। चित्तादात्म्यं व्यवहारप्रयोजकविषयत्वपर्यवसितं न निर्विशेषेऽखण्डाकारवृत्तिमात्रविषये; तस्य व्यवहारायोगात्, तादात्म्यप्रयोजकाधिष्ठानारोप्यभावायोगाच्च, इति चित्तादात्म्यं न चिति, किन्तु जगत्येव। अतो न दुष्टम्, इति चित्यपि न सत्त्वेन व्यभिचारशङ्काया उत्थितिः; अखण्डाकारवृत्त्युपधानमात्रेण संविन्मात्राश्रिताज्ञाननिवृत्त्या तत्र चैतन्यस्य वृत्तिफलनस्यानपेक्षितत्वात्। व्यवहारं प्रति चितः, तत्प्रतिफलनस्य वाऽपेक्षा चैतन्यावच्छेदकविषयमभिप्रेत्यैव, न तु निर्विशेषं संविन्मात्रम् ; तस्य व्यवहारायोग्यत्वात्, इति न चितोऽपि चित्तादात्म्यम्॥

जगतस्तु जडस्याज्ञानाविषयस्य, स्वयंप्रकाशायोग्यस्य च प्रकाशमात्रं चैतन्यावच्छेदकत्वेन, इति युक्तं तदाकारवृत्तिप्रतिफलितचैतन्यतादात्म्यापेक्षा तद्व्यवहारं प्रति, न त्वेवं चैतन्यस्य॥

चितः, तुच्छस्य च न चित्तादात्म्यमिति न व्यभिचारः

न च चितश्चित्तादात्म्यमपि; भेदसामानाधिकरण्योपलक्षिताभेदस्यैव तादात्म्यरूपत्वेन भेदघटितस्य तस्य स्वयं चिद्रूपे ततो भेदायोग्येऽसम्भवाद् न धर्म-धर्मिणोरिव तादात्म्यम् ; तथापि; धर्मिणोर्धर्मयोश्च; परस्पराध्यासस्थले तथैव नियमात्, गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादिति गुण-गुणिनोरपि भेदघटिताभेदस्यैव संसर्गत्वमिति चन्द्रिकादौ व्यक्तम्। तत एव च तुच्छेऽपि व्यभिचारपरिहारः॥

न च तुच्छेऽपि वृत्तिफलितचित्सम्बन्धः, अज्ञातविषयोपरक्ताया एव वृत्तेः प्रतिफलनोपाधित्वेन विकल्पाख्यवृत्तेरप्यन्तःकरणवृत्तित्वा-

विशेषेऽपि तुच्छस्य तत्र न प्रतिफलनम्, तुच्छानवच्छिन्नत्वाच्च चैतन्यस्य न घटादिस्थल इव तत्र चैतन्यप्रतिफलनम् ॥

चिति चित्त्वस्य कल्पितत्वमपि नानावृतास्थायामेव, इति न शुद्धस्य चित्तादात्म्यम्। अतो न निर्विशेषचितश्चित्तादात्म्यम्, इति न तत्रानैकान्तः ॥

तत्र जडाऽपि प्रमाणजन्यवृत्तिरेवाज्ञाननिवर्तिका। सा हि घटादिद्वारा, चैतन्योपरक्ता वा। तत्र द्वितीये वृत्तेश्चैतन्यप्रतिफलनपेक्षा, आद्ये तु नेति व्यवस्था। न हि लौकिकघटादिप्रत्यक्षसाम्यमखण्डाकारवृत्तिभानस्याऽऽवरणाभिभवमात्रार्थस्य ॥

स्वातिरिक्तसंविदपेक्षव्यवहारसामान्यकत्वं
वा दृश्यत्वम्, न च तस्य
जीवेश्वरादौ भागासिद्धिः

एतेन—स्वातिरिक्तसंविदपेक्षस्वव्यवहारसामान्यकत्वरूपमपि दृश्यत्वम्—व्याख्यातम्। तत्र जीवत्वेश्वरत्वविशिष्टचैतन्यस्यापि व्यवहारस्तदतिरिक्तशुद्धसंविदपेक्ष एव, इति न तत्र भागासिद्धः ॥

तत्राहमर्थस्य स्वयम्प्रकाशत्वमपि तदधिष्ठानसंविदपेक्षमेव; चिदचिद्ग्रन्थिरूपत्वादहमर्थस्य। अयमेव न्याय ईश्वरेऽपि। साक्षी ह्यहमर्थोऽन्तःकरणोपधानेन नियतेन सदाऽनावृतोऽपि न संविदनपेक्षः स्वव्यवहारे। संवित्पदं चात्र शुद्धं चैतन्यमेव; विवरणप्रस्थानानुसारित्वादस्य सन्दर्भस्येति चन्द्रिकायां व्यक्तम् ॥

न हि संवित् शुद्धा स्वप्रकाशे स्फुरणाख्ये स्वातिरिक्तां संविदमपेक्षते; वृत्तिमात्राधीनत्वात् तत्स्फुरणस्य। अत एवात्र सामान्यपदम्। अधिकं चन्द्रिकायाम् ॥

भूषणं हि चन्द्रिकामपहाय तत्र तत्राऽऽशङ्कामात्रमनुवदत् तदुदितान् परिहारप्रकारान् द्वित्रान् केवलं संगृह्णाति—अप्रसक्तमपि विचारप्रपञ्चम्। स च सिद्धि-तद्व्याख्या-चन्द्रिकादिष्वेव विशद इति सूचनार्थमेतावान् प्रपञ्चः, अस्यापि विस्तरस्य सर्वस्य सिद्ध्यादिदूषणविस्तारस्य परिहारा अपि विस्तृता सिद्धिव्याख्या-विठ्ठलेश्यादौ दृश्यन्ते, इत्येतावन्मात्रसूचनेनोपरम्यते ॥

भूषणं हि सर्वोऽयं परिष्कारः स्वसिद्धान्तवासनावासितान्तःकरणं प्रत्ये-त्येव शोभते, न तु प्रतिवादिनं प्रतीति लिखदद्वैतसिद्धान्तप्रस्थानमव-लम्ब्य तस्य साधुत्वं हृदयेनानुमन्यते, तेन चानुक्तोपलम्भनान्येव प्रायेण श्रीभाष्यमारभ्याद्यतननिबन्धानानीति तु विशदमेव शतभूषणी, अन्ये वाऽद्वैतनिबन्धा अपीदमेव तत्त्वमाम्रेडयन्ति, इति वितथं पुनरप्याऽऽम्रेड-नमनुक्तोपलम्भनानामित्यत्रैव प्रकरणमिदं समाप्यते ॥

इति दृश्यत्वानुमानोपपत्तिः

# व्यावर्तमानत्वोपपत्तिः

### व्यावर्तमानत्वहेतोः सर्वत्र जगति समन्वयः, ब्रह्मण्यभावश्च

जगत्, मिथ्या, व्यावर्तमानत्वादित्यनुमानम्। तत्र मिथ्यात्वं सद्विविक्तत्वम्। तत्र दृश्यत्वमेको हेतुः, व्यावर्तमानत्वमपरो हेतुः। तत्र दृश्यत्वं तत्तदाकारवृत्त्यवच्छिन्नचैतन्यविषयत्वम्, तत्तत्प्रतीतिमात्रविषयत्वमभिप्रेत्य। तेन च प्रतीत्यन्तराविषयत्वेऽपि दृश्यत्वं न व्याहतम्। सत्पदार्थस्तु 'सन् घटः' इत्यादिप्रतीतिषु सर्वासु भासते, इति सदर्थविषयकसर्वप्रतीत्य—विषयत्वस्य व्यावर्तमानत्वस्य वा नैक्यम्। अतो न व्याघातः॥

तत्र व्यावर्तमानत्वं घटादेः, सतश्चानुवर्तमानत्वमिति "नासतो विद्यते भावः" इति गीताभाष्ये—यद्विषया बुद्धिर्न व्यभिचरति, तत् सत्, 'यद्विषया बुद्धिर्व्यभिचरति, तदसदिति सदसद्विभाग इति भाषणात्। सर्वासु प्रतीतिषु सदनुवर्तते, यदधिष्ठानं विशेष्यं वा। प्रकारस्तु विकल्पस्तत्तन्मात्रप्रतीतौ भासमानः, सद्विषयकसर्वप्रतीत्यविषयत्वात् सतो व्यावर्तते। ततश्च व्यावर्तमानत्वात् सद्विलक्षण इति विशदीभवति॥

### सदनुविद्ध-स्वेतरसर्वप्रतीत्यविषयत्वं व्यावर्तमानत्वं न व्यभिचारि

न चात्र कतिपयबुद्ध्यविषयत्वमात्रं व्यावर्तमानत्वम्, किन्तु सदनुविद्धस्वेतरविषयकसर्वप्रतीत्यविषयत्वम्, इति सद्बुद्धिव्यभिचरितत्वमेव व्यावर्तमानत्वम्। तत्र सत्पदार्थनिरूपणापेक्षत्वं न हेतोः; तस्य प्रसिद्धत्वात्, श्रुत्यादिसिद्धत्वाच्च। अतो नात्र सत्त्वमादाय सत्त्वनिरूपणम्, इति नात्माश्रयः। सद्बुद्धिव्यभिचरितत्वात् सद्विलक्षणत्वमात्रमत्र साध्यते॥

### सत्पदेनाधिष्ठानस्यैव ग्रहणम्, न सत्ताजात्यादेरननुगतस्य

न च घटबुद्धिव्यभिचरितत्वं पटादेरिव सद्बुद्धेः, इति न सतोऽघटत्वम्; यावत्तत्प्रतीति घटात्मनैव प्रतीतिः, घटात्मता तु पटस्य तत्र

घटादेस्तादात्म्याध्यासेनैव, इति सतोऽनुवर्तमानत्वेन परमार्थत्वमप्यर्थ-सिद्धम्। घटबुद्धिव्यभिचरितोऽघट एव, इति न तयोः परस्पराध्यासेन तादात्म्यमाध्यासिकम्, पारमार्थिकं वा। अत एव 'घटो घटः' इति नाभेदप्रत्ययोऽपि। सामानाधिकरण्यं हि न विशेषण-विशेष्यभावे सद्घटयोः, न वाऽत्यन्ताभेदे, किन्तु बाधायामेवे'दं रजत'मित्यादाविव; सद्रूपाधिष्ठानज्ञानबाध्यत्वात्, सद्विविक्तत्वाच्च सर्वं लगति॥

अतो नात्र सत्पदं तत्तन्मात्रानुगतसत्ताविशिष्टपरम्; एकेनैवानुगतेन सर्वत्र सत्प्रतीत्युपपत्तावनेकसत्त्वभावकल्पने गौरवात्, सामान्याभावादिसाधारण्याच्च सत्प्रत्ययस्यानुगतस्य न सत्ताजातिमादायोपपत्तिः, इति सत्पदमत्र सद्रूपाधिष्ठानब्रह्मपरमेव। सद्बुद्धिव्यभिचरितत्वं हि सद्विशेष्यकसर्वबुद्ध्यविषयत्वम्॥

सत्पदेनाबाध्यब्रह्मविवक्षणात् तत्राध्यस्तानां घटादीनां
मिथ्यात्वमर्थसिद्धम्

तत्र सत्पदार्थः—

"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते॥"

इति वचनात् सद्रूपमबाध्यम्, इत्यबाध्यसद्रूपविलक्षणत्वं मिथ्यात्वपर्यवसाय्येव। तत्र शशविषाणमपि सदर्थविशेष्यकसर्वप्रतीत्यविषयो यद्यपि व्यावर्तते; तथापि तद्विलक्षणत्वं यदि बाध्यत्वम्, तर्हि हेतौ प्रतीयमानत्वे सतीति विशेष्यम्; अन्यथाऽवस्तुमात्रविवक्षायां न दोषलेशोऽपि। व्यक्तं च विठलेशीव्याख्यायामवस्तुत्वं ब्रह्मव्यतिरिक्तसर्वसाधारणमिति॥

शशविषाणादिव्यावृत्तमेव व्यावर्तमानत्वं तत्र विवक्षितम्,
इति न तत्र व्यभिचारः। शशविषाणादिसा-
धारण्येनार्थान्तरं वा

न च शशविषाणातिरिक्तं सद्व्यतिरिक्तञ्च असद्बुद्धिविषय; येन शशविषाणातिरिक्तस्य सर्वस्य सद्बुद्धिविषयतयाऽविषयत्वाभावात् शशविषाणादेरेव तद्व्यभिचरितत्वात् सिद्धसाधनं स्यात्, इति न व्यावर्तमानत्वस्य मिथ्यात्वाप्रयोजकत्वम्। यत्किञ्चिद्व्यभिचरितत्वं न मिथ्यात्वप्रयोजकम्, येन घटबुद्धिव्यभिचरितत्वेन पटस्य मिथ्यात्वम्

ब्रह्म तु न सद्बुद्धिव्यभिचरितम्, घटादिबुद्धिव्यभिचरितं वा। घटादि-बुद्धावपि ब्रह्मणः सद्रूपेण भानादिति तु निष्कर्षः॥

न चात्र व्याहतिः; ब्रह्मण एव सर्वत्रानुवर्तमानत्वेन व्यावर्तमानत्वा-भावस्यैवोपपादनेन मिथ्यात्वाभावस्यैव साधनात्, घट-पटयोस्तु 'कार्या-त्मना तु नानात्वमि'ति न्यायाद् न तादात्म्यप्रत्ययस्यावसरोऽपि॥

### परस्पराध्यासेन घटादिव्यावृत्तत्वं ब्रह्मणोऽपि, इति शतदूषण्या अयोगः

यतः कुतश्चिदन्यत्वं व्यावर्तमानत्वमिति शतदूषण्याः प्रथमः कल्पस्तु "युष्मदस्मत्प्रत्ययगोचरयोरि"ति भाष्योपष्टब्धो ब्रह्मसाधारण्यात् तया निरस्तः। शतभूषणी तु तत्र पूर्वपक्षभाष्यत्वात्तस्य न प्रकृतोपष्टम्भक-त्वमिति वदति॥

### "युष्मदस्मत्प्रत्ययगोचरयोरि"ति पूर्वपक्षभाष्यम्, सिद्धान्तस्तु तत्र ब्रह्मणः संसर्गमात्राध्यासः, न तु स्वरूपतः स इति न दोषः

अयमत्राशयः—अहमर्थो मुख्यात्मा। तस्यान्तःकरणस्य च विवे-कग्रहाद् नाध्यास इति पूर्वपक्षः, सिद्धान्तस्तु नाहमर्थो मुख्यात्मा, किन्तु प्रत्यक्चैतन्यं संविन्मात्रम्। तस्यान्तःकरणस्य च न विवेकग्रहः। अतस्तत्र विवेकाग्रहादहमिति चिदचिद्ग्रन्थिरूपोऽध्यासोऽनादिसिद्ध इति॥

तत्र पूर्वपक्षेणानेन न संविन्मात्रस्यान्तःकरणाद् भेद उपन्यस्तः, इति तदनुसारेण निर्विशेषेऽपि व्यावृत्तिर्नोपपादयितुं शक्यते। अत एव भाम-त्यामहमर्थं शरीरातिरिक्तमहम्प्रत्ययः पूतिकूष्माण्डायमानो नेदन्तया गोच-रयति, न स वेदान्ततात्पर्यविषयः, यत्रानात्मनोऽन्तःकरणस्याध्यासोऽत्र विषय इति सिद्धान्त इति व्यवस्था। तत्राहमर्थस्य पराभिमतस्यानात्मनो भेदो घट-पटयोरिव भेदः, न तु संविदोऽनात्मना भेदः, इति नेदं पूर्वपक्ष-भाष्यं शतदूषण्या अवलम्बो भवितुमर्हति—इति॥

सद्बुद्ध्यघटितं भिन्नत्वं न व्यावर्तमानत्वपदार्थः, न वा सद्बुद्धिव्य-भिचरितत्वमिति न तस्य मिथ्यात्वसाधकत्वम्। न हि सद्विविक्तत्वमिव घट-

भिन्नत्वं पटादेः, सतो वा मिथ्यात्वप्रयोजकम्। पूर्वपक्ष्यभिमतो भेदो न ब्रह्मणोऽनात्मनो भेद इति तु निष्कर्षः ॥

न चानात्मव्यभिचरितो ब्रह्मणाऽनात्मब्रह्मणो भेदोऽपि, येन सत इव घटस्याप्यधिष्ठानत्वेन घटस्य सत्यत्वं ब्रह्मणो मिथ्यात्वं चापतेत्। सद्विशेष्यकस्वातिरिक्तघटादिबुद्ध्यविषय इत्यत्र सद्विशेष्यकेति निर्देशेन तद्घटकब्रह्मविषय इत्यत्राप्रकारकत्वमेव विवक्ष्यते, इति तत्रापि सतः प्रकारतया भानस्य बाधितत्वात् स्वातिरिक्तसद्विषयकत्वमादाय दूषणमनवसरम् ॥

सतो न घटादिव्यावर्तमानत्वम्

व्यावर्तमानत्वं सद्विविक्तत्वसाधकं सतोऽनुवृत्तिमप्युररीकृत्यैव वक्तव्यम्, न स्वाविषयकबुद्ध्यविषयमात्रेण सद्भिन्नत्वं साधयितुमलम्। न हि घटादयः, सद्भिन्नाः, स्वाविषयकबुद्ध्यविषयत्वादित्यनेन घट-पटयोरपि भेदः संभवति। न वा सतः स्वाविषयकघटादिबुध्यविषयत्वम्; सर्वत्र सतो विशेष्यतया भानात्। यत्र व्यावर्तमानत्वं समन्वेयम्, तस्यैव स्वपदार्थत्वम्, इति घटदीनामेव स्वपदेन ग्रहणम्, न तु सतः; तस्यानुवर्तमानस्य व्यावर्तमानत्वाभावात्। सत्, घटभिन्नम्, व्यावर्तमानत्वादित्यनुमानं तु सिद्धसाधनम्, असिद्धं च ॥

शुक्तिरूप्यादावपि व्यावर्तमानत्वस्य समन्वयः

एतेन—यत्किञ्चिद्बुद्ध्यविषयत्वादित्येवालमिति—परास्तम्; असिद्धेः। यत्तु—स्वविशेष्यकेति निवेशे साधनवैकल्यम्—इति, तदिदं सत एव सर्वत्र विशेष्यत्वात् घटादीनामेव व्यावर्तमानत्वस्य सिसाधयिषितत्वाच्च नोचितम्। घटादिषु तस्यावैकल्यं व्यावर्तमानत्वस्यावैकल्यात् 'इदं रजतम्' 'अयं सर्पः' इत्यादावपीदमर्थोऽधिष्ठानं शुक्त्यावच्छिन्नं सद्रूपं ब्रह्मैव, न तु शुक्त्यादिः; तस्याधिष्ठानतावच्छेदकतयैवाधिष्ठानत्वव्यपदेशात्, इति तत्रापि सद्विशेष्यकत्वं बुद्धेरबाधम्। सद्रूपाधिष्ठानविशेष्यकस्वातिरिक्तप्रकारकबुद्ध्यप्रकारकत्वादिति तु निष्कर्षः। स्वाधिष्ठानपदार्थस्त्वत्र स्वात्मना परिणममानाविद्याविषयसद्रूपचैतन्यम्, यथा 'सन् घटः' इत्यादौ सत्पदार्थः। घटोऽस्तीत्यादावपि, 'सन् घटः' इत्येव ज्ञानाकारः। अस्तिपदार्थस्तु तत्तदधिष्ठानसम्बन्धमात्रं तादात्म्यादिः, न तु घटादिधर्मः ॥

### सति घटादेरध्यासः श्रौतोऽपि । अत एव विकल्पाप्रामाण्यवादः

सति घटादेरध्यासः "सदेव सोम्येदमग्रे" इति श्रुतिसिद्धः, इति न मिथ्यात्वसिद्धावधिष्ठानत्वसिद्धिः; बाधकज्ञानबाध्यत्वेन सिद्ध्यधीनत्वाद् बाध्यत्वस्य, विशेष्यतया भानसिद्ध्यधीनत्वाच्चाधिष्ठानत्वस्य। सत एव सर्वत्र विशेष्यत्वम्; अधिष्ठानत्वेन तस्यैव श्रुतिसिद्धत्वात्, घटादीनां तु विकल्पानां प्रकारत्वस्यैव नियमात्। अत एव विकल्पाप्रामाण्यस्य सन्मात्रप्रामाण्यस्य च 'सन् घटः' इत्यादौ व्यवस्था॥

तत्र सतो व्यावृत्तत्वं सत्त्वस्याबाध्यत्वस्वरूपत्वात् घटादीनां ततो व्यावृत्तानां मिथ्यात्वं विना न निर्वहति, इति नात्राप्रयोजकताशङ्कावसरः, विशेष्ये सति सर्वाणि प्रमाणानि व्यवतिष्ठन्ते, प्रकारेषु विकल्पाख्येषु विप्लवन्ते इति हि प्रत्यक्षम्। सर्वप्रमाणानुगतं सद्रूपं न कस्यापि प्रमाणस्यागोचरः। व्यवस्थाविवेको हि समसत्ताकविकल्पाभिप्रायः, न तु सद्विषयकः, शुक्तिरजतादावपि तत्तदवच्छिन्नचैतन्यमेवाज्ञानविषयोऽधिष्ठानमिति गतमनुपदम्॥

इदमेवाभिप्रेत्य शतभूषणी—अधिष्ठानविशेष्यकोक्तबुद्धिविषयत्वाद् न ब्रह्मणो व्यावर्तमानत्वमिति॥

### व्यावहारिक-प्रातिभासिकाधिष्ठानस्वरूपविवेकः

तत्र प्रातिभासिकस्थले तूलाविद्याविषयः शुक्त्यवच्छिन्नचैतन्यमधिष्ठानम्, व्यावहारिकस्थले प्रस्थानभेदेनोपाहितचैतन्यं शुद्धं वा चैतन्यमधिष्ठानम्। तत्रावच्छिन्नचैतन्यस्वरूपमपि स्वरूपतः सत्यम्, अवच्छिन्नरूपेण त्ववच्छेदकमिथ्यात्वेनौपचारिकमिथ्याऽपि तूलाविद्याविषयत्वादधिष्ठानतामर्हति॥

न चात्र शुक्त्युपहितचैतन्यम्, शुद्धचैतन्यं वाऽधिष्ठानं प्रातिभासिकस्थले, व्यावहारिकविषयत्वात् तदधिष्ठानतावादस्योक्तरीत्याऽऽभासचैतन्यमनाभासाधिष्ठानं न भवति, न त्वाभासानधिष्ठानमपि; आरोप्याधिकसत्ताकत्वमधिष्ठानस्येत्येव नियमः, न तु तत्राभासत्वानभासत्वादिविशेषे निर्भरः॥

### मतद्वयेऽप्यधिष्ठानान्तर्यामिपदं नामभेदमात्रम्, न स्वरूपभेदः

तत्र विशिष्टाद्वैतिनामन्तर्यामी, अद्वैतिनामुपहितचैतन्यमिति नामभेदमात्रम्; शरीरपदस्योपाधिमात्रपरत्वात्, इति तत्तदुपाध्युपहितमधिष्ठा-

नमज्ञानोपाधिकतया, तदाश्रयशुद्धरूपेण वा। अन्यत्तु सर्वमुपाधिजातम्, शरीरितावच्छेदकं तत्र कल्पितमद्वैते, विशिष्टाद्वैते तु नियमाक्रमात्रं शरीरी॥

अत एव 'सन् घटः' इत्यादावपि ब्रह्मणः सद्रूपेण भानम्, शुक्तिरजतादौ शुक्त्यवच्छिन्नचैतन्यमिवेदमिति। न ह्यन्यथा सर्वानुगतैकरूपसत्प्रतीत्युपपत्तिः, इति नानुभवविरोधोऽद्वैतसिद्धान्ते। सर्वथा तु स्वाधिष्ठानविशेष्यक-स्वातिरिक्तविषयकबुद्ध्यप्रकारत्वलक्षणे व्यावर्तमानत्वे घटादिकं व्यावर्तमानमेव स्वपदार्थः, न त्वधिष्ठानं ब्रह्म, इति न ब्रह्मणोऽपि व्यावर्तमानत्वम्, तत्रानेकान्तो वा॥

तत्राधिष्ठानस्यारोप्यतादात्म्यापन्नत्वं नाधिष्ठानज्ञानमात्रदशायाम्, किन्तु तत्र विकल्पस्यारोपानन्तरमेव, इति नाधिष्ठानविषयकत्वेन परिष्क्रियते॥

प्रातिभासिक-व्यावहारिकाध्यासभेदेन, तत्तदुपादानतूल-मूलाविद्याभेदेन चाधिष्ठानभेदो लोकसिद्धः, इति न ब्रह्मणि कथमप्यनैकान्त्यम्॥

### ज्ञाननिवर्त्यत्वं वा व्यावर्तमानत्वम्, तत्तु मूलाविद्यान्तस्यैव, न तु ब्रह्मणः, शशविषाणादेर्वा

एतेन—ध्वंसवत्त्वं ज्ञानप्रयुक्तावस्थितिसामान्यविरहरूपं व्यावर्तमानत्वमिति तृतीयकल्पोऽपि—व्याख्यातः; कार्यात्मना नाशः कारणात्मता, कारणात्मना नाशो बाधः, इति कार्यविषयणी व्यवस्था, मूलकारणस्य नाशस्तु तस्यान्यात्मताया असंभवात् बाधरूप एव, तस्याधिष्ठान-नित्यब्रह्मरूपमात्रस्य विनाशाभावात्। अविद्याध्वंसस्य ब्रह्मात्मताऽपि ब्रह्मव्यतिरेकेणाभाव एव, इत्यविद्यानिवृत्तिर्बाध एव पर्यवस्यति। न चात्राऽर्थान्तरकल्पना, वाचारम्भणश्रुत्यर्थत्वादे तदर्थकत्वस्य॥

तत्र यद्यवस्था द्रव्यं धर्मि विहाय न स्थातुमर्हति, यदि च धर्मि द्रव्यं प्रकृतावस्थाविरोध्यवस्थात्मना न विकुरुते, तर्हि तस्याध्यस्तस्य, अप्रलीनस्य चावस्था बाधावस्थैव। कारणात्मताऽपि नावस्थान्तरात्मनाऽवतिष्ठते वा, न वेत्येवात्र विचारः। तत्र प्रकृतेरपि ध्वंसप्रतिपादकानां वचनानां बलेन बाधावस्थाऽपि कार्यस्य, कारणस्योभयस्य च स्वीकारमर्हति, इति प्रध्वंसवत्त्वं बाध्यत्व एव पर्यवस्यति॥

### लय-बाधावस्थाभेदः शास्त्रसिद्धः अतो न विद्यायां भागासिद्धिः

तत्र विशिष्टाद्वैतिनः प्रकृतावस्थाविरोध्यवस्था कार्याणां कपालात्मता, सा चैककपालावस्था, तदवस्थाविरोध्यवस्था कार्याणां कारणात्मता लय इति निष्कृष्यन्ति। स च लयो यदि प्राकृतो लयः, तर्हि तदवस्थाविरोध्यवस्थैव। तस्या आत्यन्तिकप्रलयो बाध इति शास्त्रीया मर्यादा। तत्र घटादीनां कपालाद्यात्मता यद्यपि लोकसिद्धा; तस्या अपि कारणत्मता तु लयाख्या शास्त्रत एवावगन्तव्या, इति तत्सामान्यात् बाधावस्थाया अपि शास्त्रप्रामाण्येन स्वीकारे का वा बाधा?

पूर्वपूर्वावस्था कार्यात्मनां तत्तदुपादानकपालाद्यात्मता ध्वंसस्ततदवस्थाविशेषः; कारणात्मना लय इति क्रमेण तत्तदुत्तरावस्थापि बाधाख्याऽद्वैतिनाम्। तत्र द्वितीयाद्यवस्था तत्तद्दृष्ट्या ध्वंस एव कपलात्मना कारणात्मता, इति तत्तदुत्तरावस्थाऽपि ध्वंस एव फलतो बाधः, इति कारणात्मतायां लयशब्दप्रयोगवत् तदुत्तरावस्थायां ध्वंसरूपायामेव बाधशब्दप्रयोगः इति न किमपि नूतनमद्वैतसिद्धान्ते॥

### प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा व्यावर्तमानत्वम्

अयमेव न्यायो "नेह नानाऽस्ति" इति श्रुतिसिद्धे प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्व-सन्निष्ठात्यन्ताभावप्रतियोगित्व-कादाचित्क-काचित्कप्रकाशमानत्वात्यन्ताप्रकाशमानत्वादावप्यनुसन्धेयः॥

### मिथ्यात्वरूपसाध्य-हेतूनामत्रानुसन्धानं विशदीकरणार्थमेव

तत्रैकस्य मिथ्यात्वस्य साधनत्वेऽपरं मिथ्यात्वं साधनमिति न हेतु-साध्ययोरैक्यम्; एकेनैव साधितेनेष्टनिर्वाहेऽपि विशदीकरणार्थं रूपान्तराण्याप्यनुमीयमानानि प्रकृतमर्थं दृढीकुर्वन्ति, इति बहुभी रूपैः, बहुभिश्च हेतुभिर्बहूनामनुमानानामेकसाध्यस्वरूपविषयाणां साधनं न दूषणम्। प्रातिभासिक-व्यावहारिकाधिष्ठानभेदविषयिणी चर्चा पुनः पुनराम्रेडीयमाना तदा तदा सम्यक् परीक्षिता। तत्र विकल्पानां प्रकाशो विनाऽधिष्ठानं न भवति॥

"न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते॥"

इति वचनात् सर्वत्राधिष्ठानविशेष्यकत्वमर्थसिद्धमेवानूद्यते, तेन च नोक्तानां दूषणानामवसर इति सूचयितुम् 'अर्धजरतीय'न्यायेन दूषणप्रयत्नो न किञ्चित्कर इति सूचयितुम् ॥

तत्र यत्किञ्चित्प्रतीतिविषयत्वं प्रतीतिविशेषाविषयत्वसूचनद्वारा प्रतीतिविषयव्यभिचारित्वं ज्ञापयति, तेन सर्वप्रतीतिविषयसद्रूपब्रह्मवैलक्षण्यं सत्याद् ब्रह्मणो वैलक्षण्यं मिथ्यात्वं च स्थिरीभवति। यथा च ब्रह्मणः प्रतीतिविषयत्वं मिथ्यात्वहेतुदृश्यत्वातिरिक्तम्, तथा पूर्वत्र प्रकरणे व्यक्तम् ॥

तत्र ब्रह्मणः सर्वत्र प्रकाशमानस्य स्वप्रकाशस्याप्यज्ञानप्रयुक्तावरणनिबन्धनमंशविशेषावच्छेदेनाधिष्ठानत्वनिर्वाहकम्। अतो नाधिष्ठानत्वं तस्य विरुद्धम्। अतोऽप्रकाशमानस्यापि ब्रह्मणः सर्वत्र प्रत्ययेषु प्रकाशमानत्वमपि। घटादीनां त्वप्रकाशमानत्वं स्वतो जडतया प्रकाशायोग्यतयैव। अत एव तेषां प्रकाशव्यभिचरितत्त्वम् ब्रह्मणस्तु प्रकाशाव्यभिचरितत्वम्, इति न ब्रह्मण्यनेकान्तः; अज्ञानावरणप्रयुक्तप्रकाशाभाववत्त्वं वाऽत्र हेतुः। घटादीनामप्रकाशो हि नाज्ञानावरणप्रयुक्तः; जडस्वभावानां तेषमप्रकाशस्य तत्स्वभावप्रयुक्तत्वात्। चैतन्यस्य स्वप्रकाशस्याप्रकाशो न तत्स्वभावप्रयुक्तो भवितुमर्हति, इति तदीयोऽप्रकाशोऽज्ञानावरणप्रयुक्त एव, इति नानेकान्तो ब्रह्मणि। यथा च चैतन्यं स्वप्रकाशं नाज्ञानविरोधि, किन्तु प्रमाणजन्या वृत्तिरेव तद्विरोधिनी, तथा तिरोधानोपपत्तिप्रकरणे व्यक्तीभविष्यति। तदुक्तम्—

> "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला।
> "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥"

इति—इदं मूलाविद्याभिप्रायेण, तूलाविद्या तु शुक्त्यवच्छिन्नचैतन्यमेवांशत आवृणोतीति व्यक्तं तत्र तत्र ॥

### प्रकाशाप्रकाशयोर्घट-चैतन्ययोर्व्यवस्था, घटादीनामप्रकाशस्वरूपत्वं च, अतोऽप्रकाशस्वभावत्वमपि व्यावर्तमानत्वम्

तत्र घटादीनां प्रकाशाप्रकाशौ कादाचित्कौ तदवच्छिन्नचैतन्यप्रकाशाप्रकाशप्रयुक्तौ, नावरणभावाभावप्रयुक्तौ। तत्र चैतन्यस्य स्वप्रकाश-

स्यावरणानुपपत्तिशङ्काऽपि पौनःपुन्येनाभ्यस्यमानाऽद्वैतसिद्धान्ताऽसंस्पर्शित्वादकिञ्चित्करीति व्यक्तमनुपदम्। अन्यत् सर्वमुदाहरणविशेषानादाय विस्तरमात्रमकार्यकारि ॥

अवच्छिन्नचैतन्य-शुद्धचैतन्याविवेकेन, अज्ञानविरोध्यविरोधिज्ञानाविवेकेन च कृता विचारविस्तारा: प्रकृतानुपयुक्तत्वादनुक्तोपालम्भनत्वाच्चोपेक्ष्यन्ते; चर्वितचर्वणत्वाद् तदनुबन्धिनां विचाराणाम् ॥

इदमेवात्र चिन्त्यम्—शतदूषणी प्रतिवादिनां मतं तदीयप्रक्रियाः सर्वा अन्यथानुवादेन निरस्यन्ती भूषणेन भूष्यते, भूषण्या तु स्वसिद्धान्तप्रक्रिययाऽद्वैतसिद्धान्तं साधयन्त्या प्रतिवाद्यसंमतयाऽद्वैतप्रक्रियाणां दूष्यते पौनःपुन्येन ॥

### जीवकिञ्चिज्ज्ञत्वेश्वरसर्वज्ञत्वव्यवस्था न घटाप्रकाशादिव्यवस्थाविरोधिनी

एतेन—घटादीनां तिरोधानं जीवानामेव तत्प्रकाशप्रतिबन्धकम्, ईश्वरस्य तु मायोपहितचैतन्यस्य न स्वोपहितब्रह्मावरणम्; तस्य घटादिभानं स्वाश्रितमायावृत्त्या। अत एव तस्य सर्वज्ञत्वम्। न च घटादीनामेतावता नित्यं प्रकाश इति—व्याख्यातम् ॥

इदं ह्यत्यन्तमप्रकाशमानत्वम्, नित्यप्रकाशराहित्यं वा, नित्यप्रकाशवत्त्वेनास्माभिरनुभूयमानत्वं वा न व्यावर्तमानत्वम्; घटादेः सर्वप्रकाराप्रकाशमानत्वायोगात्। घटादेः स्वरूपतः, शुक्तिरूप्यादेर्भ्रान्तिबुद्धिगोचरत्वेन चेश्वरनित्यप्रकाशविषयत्वात्, ईश्वरनित्यप्रकाशवत्त्वेनास्माभिरनुभूयमानत्वाच्च हेत्वसिद्धेरिति शतदूषणीमधिकृत्य लिखितं भूषण्येति भूषणं लिखति ॥

अयं तु भूषणस्यान्यथाऽनुवादः, दुरनुवादो वा। शतभूषणी हि घटादीनाम्, तदवच्छिन्नचैतन्यस्य वा तिरोधानं जीवानामेव प्रतिबन्धकम्, न त्वीश्वरस्य तत्प्रतिबन्धकम्; वेदान्तादिजनिततत्तदाकारान्तःकरणवृत्तेरेवांशतः सर्वात्मना वाऽज्ञाननिवर्तकत्वात्। यावदन्तःकरणवृत्ति जीवदृष्ट्यैव ब्रह्मणोऽवच्छिन्नस्य, अनवच्छिन्नस्य वा प्रकाशाप्रकाशौ, ईश्वरस्य तु मायोपहितचैतन्यस्य न मायया स्वोपहितब्रह्मावरणम्, न वा तन्निरासार्थं प्रमाणजनितवृत्त्यपेक्षा, ईश्वरस्य घटादिभानं तु स्वाश्रितमायावृत्त्या सर्वदा वर्तत एव। न च तज्जन्यम्, कादाचित्कं वा।

अत एव तस्य सर्वज्ञत्वम्। न चेश्वरीयमायावृत्त्या नित्यसिद्धया जीवानां मोक्ष इति स्व-परसिद्धान्तः; अन्यथा शास्त्राचार्योपदेशादिवैयर्थ्यात्। अतो "नित्यो नित्यानामि"त्यादिशास्त्रसिद्धनित्येश्वरबुद्धिविषयत्वेन न जीवानां नित्यं घटादिप्रकाशः संभवति। भूषणं त्विदं सर्वमन्यथाऽनूद्याऽसम्बद्धं विस्तरमात्रमिति लिखति॥

इदं हि सर्वं प्रकाशमानत्वाप्रकाशमानत्वे अज्ञानतिरोधाननिबन्धने ब्रह्मणः स्वप्रकाशस्य युज्येते, न तु घटादीनां जडानां सर्वदा प्रकाशायोग्यानामिति प्रसङ्गमुपलक्ष्य लिखितं भूषण्या, न तु भूषणोक्तरीत्या पञ्चमकल्पमधिकृत्य। स हि कदाचिदेव प्रकाशमानत्वम्, न त्वत्यन्तमप्रकाशमानत्वम्, नित्यप्रकाशत्वराहित्यं नित्यप्रकाशवत्त्वेनास्माभिरज्ञायमानत्वं वेति॥

कदाचित् क्वचित् प्रकाशमानत्वं वा व्यावर्तमानत्वम्,
तच्च जीवदृष्ट्या

तत्र कदाचित् क्वचित् प्रकाशमानत्वं व्यावर्तमानत्वं पञ्चमः कल्पः, सद्वितीयत्वकल्पादविशिष्ट इति तत्रादौ भूषणी, अनन्तरं तु तत्प्रसङ्गेन घटादीनां प्रकाशमानत्वाप्रकाशमानत्वे आवृतानावृतचैतन्यावच्छेदेन जीवदृष्ट्या. ईश्वरदृष्ट्या तु तदीयमायावृत्त्या। तत्रेश्वरदृष्ट्या घटादीनां प्रकाशमानता सर्वदा, इति न तदभिप्रायेण पञ्चमः कल्पः प्रवर्तते, जीवदृष्ट्या तु तदपि व्यावर्तमानत्वमुपपद्यत एवेति कथमत्र न सङ्गतिरुक्तस्य विस्तरस्य॥

तत्रेश्वरदृष्ट्या कदाचित् कथञ्चित् प्रकाशमानत्वं यदि न विवक्ष्यते, तर्हि कामं मा विवक्ष्यताम्॥

अद्वैतमते जीवानां ब्रह्मणो जीवत्वेन भेदस्यैव स्वीकारेण न
सौभर्यादिदृष्टान्तेनेश्वरदृष्ट्येव सर्वदा घटादि-
प्रकाशापत्तिः

यत्तु भूषणं लिखति—यदि नित्यसिद्धेश्वरबुद्धिविषयत्वेन घटादिप्रकाश आपद्येत, तर्हि तत्परिहारो दुष्करः; अद्वैतमते जीव-ब्रह्मणोरैक्यात् सौभर्यादिवदेकशरीरावच्छेदेनानुभूतस्यान्यशरीरावच्छेदेन प्रतिसन्धानवद् एकैकेनापि जीवेन ब्रह्मजीवान्तरानुभूयमानानुसन्धानस्य कर्तुं शक्यत्वात्, देहानां मिथो भेदेऽप्यात्मनि भेदग्रहायोगात्—इति॥

तद् यद्यपि प्रकृतासम्बद्धम् , परन्तु नेयमापत्तिर्दुष्परिहरा। परिहारप्रकारोऽनन्तरं परीक्षिष्यते यदि स परीक्षणीयः। तत्र प्रथमं कथं वा सौभर्यदृष्टान्तस्यात्रापादकस्य सङ्गतिरिति परीक्ष्यते। सौभरिर्हि जीव एकसूक्ष्मशरीरोपहितो योगवशात् बद्धशरीरान्तरपरिग्रहेऽपि जीवत्वमात्मन औपाधिकं न परित्यजति, न वा जीवान्तरात्मनैव तच्छरीरावच्छेदेन तत्तदर्थमनुसन्दधाति, किन्तु सौभर्यात्मनैव; अन्यथा जीवान्तराणां तच्छरीरे प्रविष्टसौभर्यभेदेन सौभरिवदेव तदनुभूतसर्वानुसन्धानापत्तिः। अतस्तत्रापि शरीरभेदवत् सौभरेर्जीवान्तराणां च तत्तदुपाधिकानां भेदग्रहो न विहन्यते ॥

वस्तुगत्या जीवैक्येऽपि नान्येनानुभूतस्यान्येनानुसन्धानापत्तिः

न चैवं जीवैक्यसिद्धान्तेऽप्यापत्तेः सम्भावना; तत्तदुपाद्युपहितानां स्वरूपत ऐक्येऽपि शुद्ध-तत्त्वप्रत्यगात्मस्वरूपस्य तस्य ब्रह्मणैक्यस्य यावदज्ञाननिवृत्ति न विज्ञानम्, इति शरीरान्तरावच्छिन्नानां न परस्परप्रतिसन्धानसंभावना; अन्यथा सौभरेर्योगमहिम्ना यत्र शरीरे न प्रवेशः, तदात्मनाऽनुसन्धानम् , तत्रापि जीवानामैक्यात् कथं न तदनुभूतानुसन्धानम् ?

इदमेवात्र पृच्छ्यते—जीवैक्यसिद्धान्तमाश्रित्याऽऽपत्तेरुपपादनार्थं किमिति भूषणं सौभरिमनुधावतीति ? अत उपहितावस्थायां स्वरूपैक्यमाश्रित्यान्येनानुभूतस्यान्येनानुसन्धानापत्त्यादिकमत्र न प्रसरमपि लभते ॥

तत्र शतदूषणीपाठपरीक्षायां श्रीभाष्यपाठपरीक्षायामिव स्वाचार्यचरणाननुकुर्वद् भूषणं शतदूषणीं भूषयति वा, दूषयति वेति तदेव विमृशतु। तत्र श्रीभाष्यपाठपरीक्षायां भूषणाचार्यचरणाः श्रुतप्रकाशिकामपि न तत्र तत्र प्रमाणं मन्यन्ते, एवं भूषणमपि यदि दूषणीपाठम् , दूषणीं वाऽन्यथयितुमिच्छति, तर्हि कामं तत्र प्रयतताम् ॥

बाधितत्वं वा व्यावर्तमानत्वम् , तच्च शास्त्राचार्योपदेशा-
वगतं हेतुः, तदेव गृहीत्वा जीवन्मु-
क्तानामुपदेष्टृत्वोपपत्तिः

एतेन—बाधितत्वं व्यावर्तमानत्वमिति षष्ठः कल्पः—व्याख्यातः; तत्र बाधितत्वं शास्त्राचार्योपदेशावगतं हेतुरिति भूषणी। न हि शास्त्रावगतं परो-

क्षमनुमानेऽहेतुः, प्रत्यक्षमेव हेतुरनुमितिसाधनमिति कल्पते । जीवन्मुक्तानां तदपि भवतीति भूषणी वदति ॥

जीवन्मुक्ता हि स्वानुभूतं बाधितत्वं शास्त्रसिद्धं गृहीत्वा शिष्यानुपदेष्टुमर्हन्ति, तत्त्वोपदेशप्रकरणे परार्थानुमानपथेन तत्तदर्थमधिगच्छन्तोन्येऽपि तेषां तेषां तत्तदुपदेशानुसारमपदिशन्तः सम्प्रदायाविच्छेदेन परस्परं शिष्यान् प्रतीव प्रतिवादिनं प्रत्यपि बोधयितुं शक्नुवन्ति, इति का वाऽनुपपत्तिरत्र जीवन्मुक्तानामुपलम्भमाश्रित्य बाधितत्वस्य हेतूकरणे ? बहून् खलु साम्प्रदायिकान् विषयान् श्रुत्यनवगतान् परासम्मतान् वा अवतारपुरुषाणां स्वाचार्यचरणानामनुभवमात्रं हेतूकृत्य भूषणादयोऽपि श्रीभाष्यादिपाठभेदान्, जैमिनिसूत्रपरिवर्तनम्, अभिनवमीमांसाभाष्यादीनपि स्वाभिमतार्थोपपादकतयाऽऽश्रयन्ति ॥

तत्र जीवन्मुक्ता अपि समाधितो व्युत्थिता लौकिकवदेव व्यवहरन्तस्तत्त्वोपदेष्टारः शास्त्रतत्त्वानि समाध्यवस्थायां साक्षात्कृत्य निर्विचिकित्सपरोक्षज्ञानिनो व्युत्पन्नचित्ता इव तं तमर्थं स्वसाक्षात्कृतं हेतूकृत्य कथंचन प्रपञ्चमिथ्यात्वादिकं बाधितत्वादिकमनुमानविधयोपदेष्टुमर्हन्ति ॥

तादृशाः साम्प्रतं सन्तु वा, मा वा जीवन्मुक्ताः, परमैकान्तिनो वा । आसन्नेव तादृशा वसिष्ठ-पराशर-बादरायणादयः, पुराणेतिहास-मीमांसानां यथासम्प्रदायं परिपालने प्रवर्तकाः, तत्तन्मीमांसाभाष्यकाराश्च भगवदवतारपुरुषाः, इति तत्तदाचार्यसम्प्रादायतोऽवगम्यमाना अर्था बाधिता इति नैकान्तेन वक्तुं शक्यं किञ्चिज्ज्ञैरपि कैश्चित् ॥

तदिदं सिद्धम्—यद् व्यावर्तमानत्वं षड्विधमपि पूर्वोक्तरीत्या प्रपञ्चमात्रासाधारणं ब्रह्मण्यव्यभिचरितं च प्रपञ्चमिथ्यात्वस्य साधकम् । जडत्व-परिच्छिन्नत्वांशित्वहेतूनधिकृत्य भूषणविचारश्चन्द्रिकादावेव निरस्तः ॥

अज्ञानत्वं जडत्वमित्यपि साधु,

तत्र जडत्वं ज्ञानभिन्नत्वमिति सिद्धिः । ज्ञानपदं च 'सत्यं' ज्ञानमि'"तिश्रुतिबोधितं सत्यमात्मस्वरूपम्, न तु जन्यं वृत्तिज्ञानम्, धर्मभूतज्ञानं वा, यदेव सविषयकं सकर्तृकं च, इति नाज्ञानत्वं ब्रह्मण्यनेकान्तम् । लोकसिद्धज्ञानपदार्थविवक्षायामपि ज्ञानस्य तत्तद्विषयवृत्त्यवच्छिन्नचैतन्यरूपत्वस्यैव

युक्तत्वात्, तस्य चार्थोपलक्षितप्रकाशत्वेनैव हेतुत्वविवक्षणाद् न ब्रह्मणि व्यभिचारः ॥

अर्थोलक्षितप्रकाशत्वस्यैव ज्ञानपदार्थत्वात्
न तस्य सविषयकत्वादिनियमः

ज्ञानस्य सविषयकत्वस्वभावो ज्ञानत्वस्य विशेषणतयोपाधितया वा भानदशायामेव, न तूपलक्षणविधया ज्ञानदशायाम्, ज्ञानत्वोपलक्षितचिदंशः शोधितस्त्वंपदार्थः, तादृशस्तत्पदार्थश्च ब्रह्मैव। न तद्भिन्नत्वं ब्रह्मणि; येन चात्र व्यभिचारः स्यात् ॥

सत्यम्, ज्ञानत्वोपलक्षितत्वं तदत्यन्तायोगव्यवच्छेदः। स च ज्ञानत्वस्य प्रथमं स्वाश्रयकाले सत्तामात्रमपेक्षते, न तु तस्यान्यत्र वृत्तिमपि, स्वावच्छेदककालावच्छिन्नस्वाश्रयवृत्तिकस्वाभावकत्वस्यैव तदुपलक्षितस्वरूपत्वात् ॥

उपलक्षणस्य नान्यत्र सत्त्वनियमः

न तूपलक्षणस्यान्यत्र सत्त्वम्। काकस्योपलक्षणत्वमप्येवमेव। प्रतियोगिव्यधिकरणतदभावो हि न नियतः, पूर्वं गृहाश्रितस्य काकस्योपलक्षणतादशायां मरणेऽप्युपलक्षणत्वाव्याहतेः, इति ज्ञानत्वस्य विशिष्टदशायां सत्त्वेऽपि मुक्तिदशायां तदत्यन्ताभावमात्रेण ज्ञानत्वोपलक्षणत्वं निर्वहति। तत्र विशिष्टदशायां विशेषणस्य कालावच्छिन्नत्वं न बाधितम्।

अर्थोपलक्षितप्रकाशत्वं च मुक्तिदशायाम्, न त्वध्यासदशायाम्, इति नाध्यासाधिष्ठानस्वरूपचिद्भिन्नत्वमत्र हेतुरित्यद्वैतिनो वक्तुमर्हन्ति, मुक्तिदशायामेवंरूपत्वं श्रुतित उपलब्धमनुसृत्यैव ज्ञानत्वोपलक्षितत्वस्यात्र निर्देशः ॥

अस्वप्रकाशत्वं जडत्वमित्यपि साधु

अस्वप्रकाशत्वं जडत्वमपि नादुष्टम्—यदि दृश्यत्वनिरुक्तिप्रकरणोक्तरीत्या तद्विवक्ष्यते, परन्तु न सिद्धौ तदपि जडत्वमिति निरुक्तम् ॥

परिच्छिन्नत्वं वा व्यावर्तमानत्वम्, सद्विविक्तत्वादिकमपि
मिथ्यात्वं दुवचम्

एतेन—परिच्छिन्नत्वमपि—व्याख्यातम्। तद्धि स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं द्वितीयमिथ्यात्वरूपम्, सद्विविक्तत्वादिरूपं वा जगत्येव, न ब्रह्मणीति पूर्वमुक्तम्; श्रुतिसिद्धं मिथ्यात्वमुपपादयितुमेव मिथ्यात्वानुमानमित्यसकृदुक्तत्वात्। सत्ताभेदोऽपि श्रुतिसिद्ध

एव, इति सिद्ध्युक्तरीत्या समसत्ताकाभावप्रतियोगित्वस्य मिथ्यात्वं न दुष्टम् ॥

अयमेव न्यायः—अंशित्वहेतुकानुमानेऽपि । अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वादित्यत्रैतत्तन्तुपदं तत्तदुपादानपरम् । पटपदं च तत्तदुपादेयपरम् । उपादानं विवर्तविधया ब्रह्म, परिणामिविधया तन्तवो वा, तत्तत्कारणात्मताभिप्रायेणाविद्या वा, उभयत्रापि तत्तदुपादाने तत्तदुपादेयाभावसाधने कथं सिद्धसाधनम्? एतत्तन्तुरूपरसादीनामपि तत्तदुपादाननिष्ठात्यन्ताभावप्रतियोगित्वं साध्यते ॥

तत्रोपादानोपादेययोस्तादात्म्यसम्बन्धस्यैव युक्तत्वात् तस्यापि चन्द्रिकोक्तरीत्या वृत्तिनियामकत्वात्, तन्तूनामेव पटत्वेऽपि पटस्य तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वसाधनं न सिद्धसाधनम्—यदि पटेऽपि विनाप्येतदनुमानं सर्वेषामुपादीयमानानां स्व-स्वोपादानेऽभावः स्वीक्रियते, तर्हि सिद्धसाधनमिदं दूषणमपि शिरसा समाद्रियते । अन्यत्तु सर्वमत्रत्यं पिष्टपेषणं तत्र तत्र पूर्वमेव परीक्षितम् ॥

यत्तु—यद्यनुमानेन पटस्य मिथ्यात्वं चित्सुखाचार्यानुमतम्, तर्हि निरुच्यतां किं वा मिथ्यात्वमनेन साध्यते? किं ब्रह्मज्ञानबाध्यत्वम्, उत तन्तुज्ञानबाध्यत्वम् । तत्रान्त्यमनुभवापेतम् । आद्ये पटेन सह तन्तवोऽपि बाधिताः, इति तेषामेवाभावे कथं तन्निष्ठाभावप्रतियोगित्वस्यात्र सिद्धसाधनम् । अस्तु वा तन्तुः, पटाभावः, तथापि कथं सर्वत्र तदभावः, येन सत्यत्वविरोधिमिथ्यात्वमनेन साध्येतेति भूषणम् ॥

तत्तदुपादाननिष्ठात्यन्ताभावस्यैवात्र विवक्षणात् एतत्तन्तुपदेन मूलकारणाविद्याया विवक्षायामपि तत्तदुपादानात्मना परिणामात्मनाऽवस्थानस्याविद्याया अपि मिथ्यात्वात् तदात्मनाऽपि तन्त्वाद्यात्मनैव पटस्याविद्यानिवृत्तावस्थानासम्भवात्, 'पटः तन्तवः' इत्यनुभवस्यापि पर्यवसानतो ब्रह्मज्ञानबाध्यत्वान्न विकल्पसहम् ॥

सर्वाण्युपादेयानि स्वोपादाने तादात्म्यसम्बन्धेनोत्पद्यन्ते, अध्यस्यन्ते वा, इति तेनैव सम्बन्धेन तत्राभावस्तेषां तेषामत्र साध्यते ॥

तद्वदेव च मिथ्यात्वमपि । भूतलादावन्यत्र वा केनापि सम्बन्धेनापरेण सत्त्वं तु यावत्स्वोपादानाविद्यया साकं बाधः, तावत् तत्तन्मिथ्यात्वाविरोधित्वादकिञ्चित्करम् ॥

तत्र कार्यतावच्छेदकसम्बन्धोऽपि कार्यसमसत्ताकं प्रातिभासिकम्, व्यावहारिकं वा तादात्म्यमेव, इति तेनैव सम्बन्धेन कार्यस्य स्वोपादानेऽत्यन्ताभावसाधनम् "नेह नानाऽस्ति किञ्चने"त्यादिश्रुतिसिद्धं प्रत्यक्षविरोधमात्रेणाकिञ्चित्करेण कथं सुबाधम् ॥

व्यवहारस्तु पटादीनां यावद्बाधं प्रत्यक्षसिद्धं केन वा दण्डेन वार्यते ? बाधानन्तरं शुक्तिरूप्यादिकस्येव न चैव व्यवहारोऽपि ॥

अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्कार्यत्वादिति प्रकरणसमं तु पटपदेनोपादेयविशेषस्य एतत्तन्तुपदेन तदुपादानस्य च विवक्षायां तु—तत्तदुपादानमपि यद्यविद्यात्मना विवक्ष्यते, यदि वा तत्तद्विवर्तोपादानात्मना, तर्हि सर्वेषामविद्यात्मनाऽसत्त्वमेव साधनीयम् ॥

न चात्र निदर्शनं किमपि; पटान्तरस्याप्यविद्यात्मना बाधदशायां सत्त्वस्य प्रत्यक्षासिद्धतया दृष्टान्तताया असंभवात् ॥

सिद्धौ प्रकरणसमस्यास्य प्रकरणसमान्तरेण व्याप्यत्वासिद्धिमूलकेन, चन्द्रिकायां तस्य सविस्तारं प्रपञ्चनेन साधकानुमानस्यैव दृढीकरणं तु तत्रैव व्यक्तम् ॥

तत्र प्रकरणसमेऽत्र यथाश्रुतमङ्गीकृत्य तत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वमुपाधिः सिद्धौ व्यतिरेकव्याप्तिमाश्रित्य चोपन्यस्तः प्रागभाव-प्रतियोगित्व-तदभावयोः कार्योत्पत्ति-तदभावप्रयोजकत्वकल्पमाश्रित्य। भूषणं तु नामुं कल्पं स्वीकरोतीति लिखत् तार्किकाणामपि नायं कल्पः संमत इति च लिखत् प्रागभावकथां कथामात्रं मन्यते ॥

भवतु सत्कार्यवाद उपादानभावातिरिक्तप्रागभावो नाङ्गीक्रियत इति। प्राक्कालिकस्वस्वरूपात्यन्ताभाव एव वा प्रागभाव इत्यादिकं लघुचन्द्रिकायामपि तत्र तत्र व्यक्तम् ॥

इदमेवाभिप्रेत्य चन्द्रिकाऽत्र एतदुपादानकान्यत्वमुपाधिरिति—वदति ॥

अत्र भूषणम्—एतत्कार्यकत्वाभावस्यैतदुपादानकत्वाभावस्य चैकतया तत्रैव तस्योपाधित्वायोग इति, तत्रैवैतत्कार्यत्वाभाव एतदनिमित्तकत्वेऽपि नैतदनुपादानकत्व एवेति नैतत्कार्यत्वाभावैतदुपादानकान्यत्वयोरैक्यम्, इति न तस्यानुपाधित्वं शक्यमवगन्तुम्। वस्तुतस्तु—कार्यत्वहेतुकानुमान एवायमुपाधिः साध्यव्यापकत्वाद्युपपादकपरं व्यतिरेकदृष्टयेत्येवात्र विवक्ष्यते ॥

एतेन—विमतम्, मिथ्या, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादिति विद्यासागरानुमानमपि—व्याख्यातम् ॥

अत्र ज्ञानशब्देन सद्रूपं ब्रह्म विवक्ष्यते, न तु जन्यं क्षणिकं वा ज्ञानम्, तद्व्यतिरेकेणानुभ्यमानत्वात्। तच्च सदनुवेधमन्तरेणानुपलभ्यमानत्वम्, सदविषयप्रतीत्यविषयत्वं वा विवक्ष्यते ॥

तथा च यद् यदननुविद्धप्रतीत्यविषयः, यथा शुक्तिरूप्यमिदमननुविद्धप्रतीत्यविषयः, तत् तज्ज्ञानबाध्यं, मिथ्येति शुक्तिरूप्यादौ दृष्टम्, इति प्रपञ्चोऽपि सद्रूपज्ञानबाध्यः, मिथ्या चेति युक्तम् ॥

"वैधर्म्याच्च न स्वप्नादिवत्" इति सौगतमतनिराकरण-
परम्, न प्रपञ्चमिथ्यात्वनिरासपरम्, सौगता-
द्वैतमतयोर्विशेषश्च

तत्र "वैधर्म्याच्च न स्वप्नादिवत्" इत्यनुमानं ज्ञानस्य निरालम्बनत्वानुमाननिरासपरम्, न तु मिथ्यात्वनिराकरणपरम्। इदमेव योगाचारमताद् अद्वैतमतस्य वैलक्षण्यम्—यद् ज्ञानाकारातिरिक्तविषयाकाराभावो योगाचारमते, अद्वैतमतेऽधिष्ठानसंविद्व्यतिरेकेण विषयाभावः, विषयमिथ्यात्वम्—इति ॥

तत्र स्वप्नस्य निरालम्बनत्वं कृत्वाचिन्तया चोररीकृत्य जागरप्रत्ययानां तद्वैलक्षण्यं प्रत्यक्षसिद्धं यावद्ब्रह्मसाक्षात्कारं व्यावहारिकसत्यत्वेन योगाचारेणापि स्वाप्नसाधर्म्यं वर्णयितुं न शक्यते। प्रत्यक्षविरुद्धत्वादनुमानस्येति सूत्राशयः। स्वाप्न-जागरवैधर्म्यं विषयाभाव-तद्भावाभ्यामुभयसम्प्रतिपन्नम्। विषयाभावस्तु प्रातिभासिकस्य मायामात्रस्य बाधेन स्वप्न इत्यद्वैतमतम्, योगाचारमतं तु ज्ञानाकारातिरिक्तविषयाभावेनेति त्वन्यदेतत् ॥

न चैतावता योगाचारमतनिरासेनाद्वैतमतनिरासोऽपि, तत्र ज्ञानव्यतिरेकेणानुपलभ्यत्वं पूर्वोक्तरूपमेव हेतुः, न तु तद्विनाऽनुपलभ्यमानत्वं यथाश्रुतम्, सहोपलम्भनियमो वेति न दोषः, अधिकमन्यत्र बोद्धव्यमिति ॥

इति व्यावर्तमानत्वानुमानोपपत्तिः

## अवेद्यत्वोपपत्तिः

वृत्तिव्याप्यत्वफलाव्याप्यत्वाभ्यामनुभूतिसंवेद्यत्वासंवेद्यत्वे
ब्रह्मसिद्ध्युक्तरीत्या

अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात् ; व्यतिरेकेण घटादिवत्, अन्यथाऽनुभूतेरपि घटादिवदननुभूतित्वप्रसङ्ग उत्तिष्ठति ॥

ब्रह्मसिद्धिस्तु—"संविदोऽसंवेदने सन्नप्यसत्कल्पः, इति व्यर्थं तत्संकीर्तनम्। पुरुषार्थत्वाय हि तत्संकीर्तनम्। असंवेद्यश्च कथं पुरुषार्थ उच्यते; फलवत् कर्तृवच्चेदं द्रष्टव्यम्। तथाहि प्रमाणस्य फलमर्थान्तरम्, वा अनर्थान्तरं वा सर्वपरीक्षकैः प्रतिज्ञायते, प्रज्ञायते च। न च तद-संवेद्यम्; तदसंवेद्यत्वे सर्वासंवेद्यत्वप्रसङ्गात्, तत्कृतत्वाच्च संवेद्यभावस्य भावानाम्। न च संवेद्यम्; फलान्तरानुपलब्धेः, अनवस्थाप्रसङ्गाच्च। तस्मात् संवेद्यम् ; आत्मप्रकाशत्वात्, असंवेद्यत्वम् ; विषयस्य कर्म-भावाभावात्, कर्मत्वे चानात्मत्वप्रसङ्गात्। तस्मादात्मप्रकाशतैव संवे-द्यता। तथा ब्रह्मणः स्वात्मप्रकाशस्यानन्दस्वभावो न संवेद्यः; कर्मत्वा-भावात्, न चासंवेद्य; स्वप्रकाशत्वात्—इति ॥

अनुभूतिस्वप्रकाशत्वानुमानेऽनुभूतिः स्वरूपज्ञानम् न तु धर्म-
भूतज्ञानम्, तस्यानुभाव्यत्वस्येष्टत्वात्

तत्रनुभूतिः शुद्धानावृत-सर्वोपाधिशून्य-मुक्तात्मस्वरूपं प्रत्यगभिन्नं वा संविन्मात्रम्, नाहमर्थः, अविद्योपहितं ब्रह्मस्वरूपं वेति ह्यद्वैतिनां सिद्धान्तः ॥

तच्च शुद्धं प्रत्यगात्मस्वरूपम्, अनुपहितं चैतन्यं वा निवृत्तावरणं स्वप्रकाशं घटादिवद् न संवेद्यम ; प्रतीतिकर्मत्वाभावात्, नासत्कल्पम् ; आत्मस्वरूपत्वात्, स्वप्रकाशत्वाच्च ॥

तत्रानुभूतिशब्दार्थो न जन्यज्ञानं वृत्त्यात्मकम्, धर्मभूतज्ञानं वा, किन्तु स्वरूपज्ञानमेवोभयसंमतम्, विशेषस्तु स्वरूपज्ञानस्य वृत्ति-ज्ञानाश्रयत्वम्, धर्मभूतज्ञानाश्रयत्वं वा न नियतम्, किन्तु यावदावर-णनिवृत्त्येव तद्योग्यता। ततस्तु न तत्सम्बन्धयोग्यताऽपि, इति तादृश-स्वप्रकाशस्वभावमात्मानं संविन्मात्रमवलम्ब्यैवेदमनुमानम्, न त्वा-

वरणनिवृत्तिप्राक्कालिकामवस्थामादाय, इति लौकिकानुभूतीः, अलौकिकानुभूतीर्वाजन्या अदायोक्तानुमाननिरासोऽद्वैतिनामिष्टापत्तिरेव ॥

अनुभूतेः संविन्मात्रस्यानुभाव्यत्वनिषेधस्तत्स्वरूपज्ञानात्मकानुभवविषयत्वस्यैव

अत्रानुभूतेरनुभाव्यत्वनिषेधो हि सर्वोपाधिशून्यस्वप्रकाशसंविदतिरिक्तप्रकाशविषयत्वाभावः, स्वप्रकाशात्मस्वरूपतेति स्पष्टं ब्रह्मसिद्धिराह—"न च संवेद्यः; कर्मत्वे कर्तृव्यतिरेकप्रसङ्गात्, अनात्मत्वप्रसंगाच्च। तस्मादात्मप्रकाशतैव तस्य संवेद्यता। अतो नात्रानुभाव्यत्वं निषिध्यमानं स्वात्मकानुभवविषयत्वम्, किन्तु स्वेतरानुभवविषयत्वमेव इति ॥

स्वरूपज्ञानस्य स्वातिरिक्तजन्यज्ञानविषयत्वमिष्टमेव

तत्र स्वेतरानुभवविषयत्वं यदि लौकिकानुभवमपेक्ष्य, तर्हि तेषां चैतन्यावच्छेदकत्वमात्रेणानुभाव्यत्वात्, तदवच्छिन्नचैतन्यतादात्म्यस्यैव तदवच्छेदकत्वरूपत्वात्, स्वातिरिक्तचैतन्यतादात्म्याख्यं स्वातिरिक्तानुभवविषयत्वं नानिष्टम् ॥

घटादिसाधारणानुभाव्यत्वस्य फलव्याप्यत्वस्यैवानुभूतेर्निषेधः वृत्तेरावरणाभिभावमात्रार्थत्वपक्ष एव स्वरूपज्ञाने

यदि घटादीनामिव तत्तदाकारवृत्तिफलितचैतन्यविषयत्वमत्र निषिध्यते—वृत्तेश्चिदुपरागार्थत्वम्, अभेदाभिव्यक्त्यर्थत्वं वा कल्पमाश्रित्य, तदा तु तत्संविदो निषेध्यम्। यदि तु वृत्तेरावरणाभिभवार्थत्वमेवेति कल्पमादायानुभाव्यत्वमत्र निषेद्धव्यम्, तर्हि नेदं घटादिसाधारणम्, घटादिस्थलेऽज्ञानकार्याणां तेषामज्ञानाविषयत्वेन तत्तदाकारवृत्तीनामावरणाभिभवार्थत्वमात्रायोगात, इति घटादिसाधारणं स्वातिरिक्तसंवेद्यत्वमत्र निषिध्यते ॥

आवरणाभिभवार्था वृत्तिरिति कल्पेन वृत्तेरावरणनिवृत्तिमात्रेणोपक्षयाद् आवरणनिवृत्तिमात्रस्यानुभवविषयत्वपदार्थत्वे संविदोऽपि स्वातिरिक्तवृत्तिमात्रविषयत्वमनुभाव्यत्वं यावद्वृत्त्युदयं न वार्यते। ततो वृत्तेरप्युदितायामज्ञाननिवृत्तिप्रयुक्तानां निवृत्तौ तु तदपि संविदोऽपगच्छति,

इति तदानीं तदतिरिक्तानुभवकथैवास्तं गता; तदा निषेध्यस्यैवाभावाद् न निषेधकथा ॥

घटादेस्तदा तदाऽनुभाव्यवत् संविदोऽनुभाव्यत्वमप्रसक्तमेवेति सत्त्वाऽनुभाव्यत्वनिषेधाभिप्रायत्वे, तूक्तानुमानस्य स्वातिरिक्तस्यान्यस्य कस्याप्यनुभवस्याभावादननुभाव्यत्वमनुभूतेः ॥

अनुभूतिस्वप्रकाशत्वानुमानसंविन्मात्रं पक्षः, न तु जन्याऽनुभूतिः,
इति तामादाय दूषणं भूषणस्यानुक्तोपालम्भनम्,
दुरनुवादश्च

एतेन—अनुभूतीनां लौकिकीनां स्वरूपज्ञानव्यतिरिक्तानामेकात्मगतानां परकीयानुभवगोचरत्वादेः सम्प्रतिपन्नत्वादनुभूतिस्वप्रकाशानुमानं कातीतीतमित्यादि—परास्तम्; तासामपक्षत्वात्, संविन्मात्रस्वरूपज्ञानस्य सर्वोपाधिशून्यस्यैव पक्षत्वाच्च ॥

स्वसंवेद्यतयैवासत्कल्पत्वनिरासे सिद्धे किमिति संविदन्तरसंवेद्यत्वं स्वीकर्तव्यम्, इत्यनुवादस्तु दुरनुवादः, स्वप्रकाशतयैवासत्कल्पत्वनिरास इति ब्रह्मसिध्युक्तिर्न स्वसंवेद्यत्वमपरमभिप्रेत्य ॥

तत्रासत्कल्पत्वशङ्का तु निर्विशेषसंविन्मात्रं शशशृङ्गायमाणमिति यदि केचन मन्येरन्, तदा तान्प्रत्येवासत्कल्पत्वनिरासः। यदि भूषणम्—नासत्कल्पत्वपरिहारमपि काङ्क्षति, तर्हि तेनैव बहुव्रीहिः परितोषयिष्यति। अन्यार्थमपि संविदन्तरवेद्यत्वं निषिध्यत इति भूषणम्, यदि ब्रह्मसिध्यभिप्रेतामेव संविदमभिप्रेत्य, तर्हि सर्वव्यवहारातीतस्य सत्यस्य, अबाध्यस्य च न स्वाभावकालः, व्यवहारो वा, इति स्वाभावकाले-स्वव्यवहारः संविदन्तरमपेक्ष्यैवेति कथं न व्याघातः?

अनुभूतेरननुभाव्यत्वे ब्रह्मसिद्धिः, परानुभावस्तु नात्र पक्षः

तत्रेयं पक्षीकृताऽनुभूतिर्न कस्याप्यनुभाव्येति ब्रह्मसिद्धिर्विशदयति। स्वात्मप्रकाशस्य ब्रह्मण आनन्दस्वभावो न संवेद्यः; कर्मत्वाभावात्, न चासंवेद्यः; स्वप्रकाशत्वात्, "तत् केन कं पश्येत्" इत्यपि निषेधः कर्मविषयः ॥

तथाहि—सर्वकर्मप्रत्यस्तमयहेतुरेवोच्यते—"यत्र त्वस्य सर्वमात्मैवाभूदि"ति। परानुभवानां परेणानुमानेनानुभवो जन्यवृत्तिरूपज्ञानाभिप्रायः, न तु सर्वोपाधिशून्यसंविद्रूपाभिप्रायः ॥

### अनुभूतिस्वप्रकाशत्वानुमानदूषणं भूषणस्य नाद्वैताभिमतानुभूत्य-भिप्रायम्; अन्यथाऽनुवादात्

भूषणं हि प्रकरणेऽत्र स्वरूपज्ञानमद्वैताभिप्रेतमाश्रित्य नानुभाव्यत्व-मनुभूतेः समर्थयति, तदननुभाव्यत्वं वा निरस्यति, किन्तु लौकिक-जन्यसविषयत्व-सकर्तृत्वादिस्वभावामनुभूतिमादाय, इति पक्षभेदाद् विषयभेदाच्च परकीयानुभववेद्यत्वं परकीयानुभवानां वर्तते, इति कृत्वा दूषणोद्भावनं नाद्वैतराद्धान्तदूषणस्य पर्याप्तम् ; अस्थानदूषणत्वात् , अद्वैत-सिद्धान्ताभिप्रेता संविद्प्रसिद्धा, असत्कल्पा वेति शङ्का तु दूरदृष्ट्या समालोच्य स्वप्रकाशत्वेन ब्रह्मसिद्ध्यैव स्वयं निरस्ता ॥

एतेन—वेद्यस्यैकत्वेऽपि वेदितुर्वेदनफलस्य च भिन्नतया वेदना-न्तरापेक्षासंभव इति—परास्तम् ; अनुक्तोपालम्भनत्वात् , भिन्नविषय-त्वाच्च दूष्य-दूषणयोः ॥

### निषिध्यमानमनुभूत्यनुभाव्यत्वमद्वैतिनामन्यवत् , भूषणसमर्थ्य-मानं तु पृथक् , अनुभूत्यसत्त्वानुमानस्याभाससाम्यस्य धर्मभूतज्ञाने व्यभिचारश्च

अत्रानुभूतेः स्वप्रकाशत्वम् "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुति-सिद्धं स्वप्रकाशापरोक्षस्वभावत्वमेव साध्यम् , न तु घटादीनामिव प्रमातृ-चैतन्याभेदरूपं जन्यप्रत्यक्षविषयत्वम् । अत एव—"अन्यथा घटादि-वदननुभाव्यत्वेऽननुभूतित्वप्रसङ्गादिति वाक्यशेषः ॥

तथा च स्वसत्ताकाले स्वाश्रयपुरुषगतानुभवान्तराननुभाव्यत्वं स्वप्रकाशत्वमेव यदि भूषणोक्तविधया साध्यम् , निषिध्यमानं चानु-भाव्यत्वमितरापेक्षापरोक्षत्वरूपम् , तर्हि धर्मभूते ज्ञानेऽपरोक्षरूपे स्व-सत्ताकाले स्वाश्रयपुरुषगतानुभवान्तराननुभाव्यत्वरूपमननुभाव्यत्वं वर्तत एव, इति—अनुभूतिः, असती, अननुभाव्यत्वादित्याभाससाम्यस्य धर्मभूतज्ञाने कथं नानेकान्तः? परानुभवानां धर्मभूतज्ञानानां परेणा-नुभवो हि परोक्षः, न त्वपरोक्षः ॥

एतेन—यं प्रति प्रत्यक्षवेद्यम् , तं प्रत्यनुमानादिवेद्यमितिवत् , यं प्रति सत्तामात्रेण प्रकाशमानम् , तदन्यपुरुषं प्रति ज्ञानान्तरवेद्यमित्युक्त्या विरोध इति—परास्तम् ; अन्याधीनापरोक्षत्वनिषेधस्यैवात्र विवक्षितत्वात् ।

स्वप्रकाशं संविन्मात्रं साक्षादपरोक्षं सर्वेषु ज्ञानेषु स्वांशे सर्वदाऽपरोक्षमेव, इति तत्र परोक्षकथाया एवाभावाद् नात्रानुभाव्यत्वमात्रनिषेधोऽननुभाव्यत्वं नाम ॥

### अनुभूतिस्वप्रकाशत्वानुमानस्य पक्ष-साध्य-हेतुनिष्कर्ष-समर्थनोपसंहारः

तदिदं सिद्धम्—अनुभूतिः = अनावृतसर्वोपाधिशून्या संवित्, (न तु लौकिकानुभावः, वृत्तिज्ञानधर्मभूतज्ञानादिरूपा) स्वप्रकाशा, स्वातिरिक्तसंविदन्तराश्रयज्ञानविषयत्वरूपानुभाव्यत्वविकला, अनुभूतित्वात् = निरुपाधिकप्रकाशस्वरूपत्वात्; व्यतिरेकेण घटादिवत्; अन्यथा घटादेरिवानुभाव्यत्वप्रयुक्तत्वादनात्मत्वस्य, अननुभूतित्वस्य वा घटादिवदनात्मत्वम् = अननुभूतित्वं वा स्यात्, घटादेस्तु विलक्षणस्याननुभूतित्वं ह्यनुभाव्यत्वप्रयुक्तमेव; लाघवात्, न तु घटत्व-पटत्वाद्यननुगतम्; गौरवात्—इति ॥

### अनुभाव्यत्वस्य विषयाप्रकाशकत्वलक्षणा-स्वप्रकाशकत्वयोगः

तत्रानुभाव्यत्वं ब्रह्मसिद्धिदृष्ट्याऽप्रकाशस्वभावशून्यत्वम्, फलाव्याप्यशशशृङ्गादिसाधारणानुगतो धर्मः। स च भूषणोक्तरीत्या काममस्वप्रकाशत्वं भवतु। तत्रास्वप्रकाशत्वं विषयाप्रकाशकत्वरूपमिति तु स्वप्रकाशसंवित्साधारण्याद् नोपपद्यते। न हि घटादयः स्वसत्ताकाले चैतन्याधिष्ठानकाश्चैतन्याविनाभूता विना वृत्त्या चिदुपरागम्, अभेदाभिव्यक्तिं वा प्रकाशन्ते, इति चैतन्यं स्वयं प्रकाशमपि घटादीनां सर्वदा न प्रकाशकम् ॥

अयमेव न्यायः श्रीभाष्यमतेऽपि; सर्वकारणस्य सर्वदा सर्वसम्बन्धेऽपि स्वरूपज्ञानात्मकस्येश्वरस्य सर्वदा सर्वजीवान् प्रति सर्वप्रकाशकत्वेऽपि तत्तज्जीवोपरागं विना न सर्वप्रकाशत्वमिति यद्यपि न विप्रतिपन्नम्, तथापि चैतन्यमात्रस्य विषयाप्रकाशत्वं स्वतो बाधितमिति परं विशेषः ॥

तद्वाप्रकाशस्वभावत्वम्, अनुभाव्यत्वम्, व्यावर्तमानं प्रकाशस्वभावत्वं साधयत् संविन्मात्रस्यानात्मत्वम्, किं बहुना? असद्वैलक्षण्यमपि साधयतीति सुस्थमिदमनुमानं स्वस्थानेऽवस्थितिमर्हति ॥

### अज्ञानाविरोधित्वस्याननुभूतित्वप्रयोजकत्वनिरासः संविन्मात्रस्याप्यननुभूतित्वापत्तिश्च

एतेन—अज्ञानाविरोधित्वमननुभूतिप्रयोजकमिति—परास्तम्, स्वप्रकाशसविन्मात्रस्याज्ञानविरोधित्वे न तस्याननुभूतित्वापत्तेः; अन्यथा लौकिकानुभवानामेवाज्ञानविरोधित्वात् तन्मात्रस्य स्वप्रकाशत्वमापद्येत, न तु प्रत्यगात्मनः स्वरूपज्ञानस्य वा श्रीभाष्यमतेऽपि स्वप्रकाशत्वमुपपद्येत ॥

अत्रानुभाव्यत्वं प्रत्यक्षविषयत्वमेव निषिध्यत इति प्रकृतानुमानाभिप्रायमेव, तेन नित्यपरोक्षाणामतीन्द्रियाणां प्रकृतानुमानसाध्यशून्यत्वेऽपि तत्रानुभूतित्वरूपहेतोरभावाद् नानुमानं दुष्यति ॥

वस्तुतस्त्वननुभाव्यत्वम्, स्वप्रकाशत्वं वाऽत्र साध्यमप्रकाशविरहस्वरूपत्वमेवेति नातीन्द्रियसाधारणम् ॥

### अनुभूतिस्वप्रकाशत्वानुमानस्थानेऽनुभूत्यननुभाव्यत्वानुमानायोगः

परमार्थतस्तु—इष्टसिद्धेरनुमानम्—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वादित्येव, न तु—अनुभूतिः, अननुभाव्या, अनुभूतित्वादिति। सत्यप्येवं दूषणसौकर्यार्थं द्वित्रकक्ष्यविश्रान्तिमुपलक्ष्य भूषणेनानूदितमपि कृत्वा चिन्तया स्वीकृत्यानुभाव्यत्वपरिष्काराय यतितम् यथाश्रुतार्थविवक्षायां नोक्तानुमाने दूषणलेशोऽपि, इति ज्ञानान्तरवेद्यत्वे घटादिवदनुभूतित्वप्रसङ्ग इति सुष्ठूपपादितम् ॥

### अनुभूत्यसत्त्वानुमानस्य दूषणम्

एतेन—अनुभूतिः, असती, अननुभाव्यत्वादित्याभाससाम्यमपि—परास्तम्; अत्राननुभाव्यत्वं यदि प्रकाशस्वभावराहित्यमात्रम्, तर्हि तस्य घटादौ व्यभिचारः, प्रकाशस्वभावतयोभयाविप्रतिपन्नस्य स्वरूपज्ञानस्यापि तदभावादसिद्धिः, तस्य पक्षबाह्यत्वे तत्र व्यभिचारः। तत्रासत्त्वेऽवस्तुत्वस्यैव प्रयोजकत्वेनोक्तानुमानस्याप्रयोजकत्वम् ॥

### अननुभाव्यत्वस्यासत्त्वाप्रयोजकत्वम्

एतेन—धर्मभूतज्ञाने व्यभिचारोऽपि—व्याख्यातः। तत्राननुभाव्यत्वमात्रस्य हेतुत्वविवक्षायामनुभाव्यत्ववदननुभाव्यत्वस्यापि स्वीकारात् कथं न तत्र व्यभिचारः ? अनुभाव्यत्वमात्रं तु हेतुरसिद्धः; विप्रतिपन्नत्वात्। न

हि परान् प्रति प्रयुक्ताऽऽभाससाम्ये परासिद्धो धर्मो हेतुतामर्हति। विशिष्टहेतुत्वपक्षेऽप्ययं दोषोऽनुसन्धेयः ॥

अज्ञानाविषयत्वस्यासत्त्वाप्रयोजकत्वम्

अत एवाननुभाव्यत्वस्यासत्त्वाप्रयोजकत्वादज्ञानाविषयत्वमेव साक्षात्परम्परासाधारणमसत्त्वप्रयोजकम्; तत्र साक्षादज्ञानविषयत्वाद् न ब्रह्मासत्, तदवच्छेदकतया परम्परयाऽज्ञानविषयत्वाद् न घटादिकमसत्, शशविषाणं तु न साक्षात्, परम्परया वाऽज्ञानविषयः, इति न तदसदिति ॥

वस्तुतस्तु—परानुभवादीनामिवासतोऽपि विकल्पाख्यवृत्तिविषयत्वेनानुभाव्यत्वस्य, ज्ञानाविषयत्वमात्रस्य विवक्षणे कथमननुभाव्यत्वस्यासत्त्वप्रयोजकत्वम्, इति दृष्टान्ते हेत्वसिद्धिरपि ॥

प्रकाशानर्हत्वस्यासत्त्वाप्रयोजकत्वम्

एतेन—यत्, प्रकाशनर्हम्, तदसदिति—परास्तम्; अनेनेदमेव विवक्ष्यते—प्रकाशार्हत्वम्, अनुभाव्यत्वम्, तदनर्हत्वमननुभाव्यत्वमिति। तत्र प्रकाशशब्देन ज्ञानमात्रं विवक्ष्यते, उत प्रत्यक्षज्ञानम्, उत प्रमाणजन्यप्रत्यक्षपरोक्ष-साधारणम्, आहो नित्यानित्यसाधारणज्ञानमात्रम्, उताहो नित्यसंविन्मात्रस्वरूपज्ञानम्। आद्येऽसत्साधारण्यं प्रकाशार्हत्वम्, इति न तस्यासत्त्वप्रयोजकत्वम्, द्वितीये नित्यातीन्द्रियाणामप्यसत्त्वापत्तिः। तृतीये शुक्तिरूप्यादीनामसत्त्वापत्तिः, न चेष्टापत्तिः; असत्ख्यातेरनङ्गीकारात् प्रमातुः साक्षिणः स्वप्रकाशस्य प्रमाणजन्यवृत्तिविषयत्वाभावादहमर्थेप्यसत्त्वापत्तिश्च ॥

अनुभूतित्वस्यासाधारणधर्मस्य स्वप्रकाशत्वसाधकत्वाविरोधः

तत्रानुभूतेरनुभूतित्वम् धर्मः कल्पितत्वाद् यद्यपि मिथ्याभूतः, तथापि उक्तार्थोपपादनमात्रत्वात्तस्यानुमानस्य तदसाधारणस्यापि तस्य स्वप्रकाशत्वसाधकत्वं न विरुद्धम्, तन्मात्रवृत्तिधर्मस्य तत्स्वभावविशेषानुमापकत्वं न दोषः ॥

अत एव पृथिव्यसाधारणधर्मस्य पृथ्वीव्यवहारहेतुत्वस्य तदितरव्यावृत्तेर्वाऽनुमापकत्वम्। नचैवं घटः, स्वप्रकाशः, घटत्वादित्यनुमानं सम्भवति; घटत्व-प्रकाशत्वयोर्व्याप्त्यभावात्, अप्रकाशस्वभावघटधर्मस्य घटत्वस्य प्रकाशत्वासाधकत्वात्, विरुद्धयोरपि हेतु-हेतुमद्भावे घटः, स्वप्रकाशः, अनुभाव्यत्वादित्यनुमानमपि कथं न भवति?

यद्यप्यनुभाव्यत्वं घटासाधारणो धर्मः; तथापि साधारणधर्मस्यापि सति विरोधेऽसाधकत्वे कैव कथाऽसाधारणधर्मस्य तथात्वे; अन्यथा घटः, पटः, घटत्वादित्यनुमानं न कथम्? यदि तत्र घटत्व-पटत्वयोर्विरोधान्न तथाऽनुमानम्, तर्हि प्रकृतेऽपि समानम्; व्यतिरेकव्याप्तौ व्यभिचारस्योभयत्र समानत्वात्, पक्षत्वात्तु घटस्य नान्वयव्याप्तिः ॥

अननुभाव्यत्वासत्त्वयोर्न प्रयोज्यप्रयोजकभावः

तत्राननुभाव्यत्वासत्त्वयोर्न प्रयोज्य-प्रयोजकभावः; वस्तुत्वाभावस्यैव सर्वथा व्यवहारायोग्यत्वस्यासत्त्वप्रयोजकत्वात्, अननुभाव्यत्वस्य स्वप्रकाशात्मस्वभावस्यासद्व्यावृत्तस्य तदप्रयोजकत्वाच्च । अतो धर्मिण एवाभावे कथं तस्य स्वप्रकाशात्मस्वभावताख्याऽननुभाव्यतापि, इति व्यतिरेकव्याप्त्याऽसत्त्वाननुभाव्यत्वयोः प्रयोजकभावोऽपि न सम्भवति । अधिकं तु न्यायरत्नदीपावलीतोऽधिगन्तव्यम् । इदमत्र यथा—

अज्ञानाविरोधित्वस्यानुभूत्यसत्त्वानुमाने नोपाधित्वम्
अनुभूत्यसत्त्वानुमानायोगश्च

इदमत्र यथाऽवसरं सूच्यते—श्रीभाष्यकाराः, अन्ये च तदनुयायिनो बहुषु प्रस्तावेष्वानन्दानुभवकृत्युपक्षिप्तपूर्वपक्षांशमात्रं तदीयसिद्धान्तगोपनेनोपक्षिपन्ति । अज्ञानविरोधित्वं हि साक्षिप्रत्यक्षस्य, वृत्त्यवच्छिन्नचैतन्यस्य, वृत्तेश्च । तत्र स्वप्रकाशत्वं निरुपाधिकसंविन्मात्रस्य, न तु साक्षिणः, वृत्त्यवच्छिन्नचैतन्यस्य, वृत्तेर्वा । साक्षिण आवरणविरोध्यन्तःकरणोपधानेन, वृत्त्यवच्छिन्नचैतन्यस्यापि वृत्त्युपधानेन, वृत्तेश्चैतन्यावच्छेदकतया प्रकाशमानैकस्वभावत्वेऽपि संविन्मात्रस्येव स्वप्रकाशत्वाभावात्, इति यत्र यत्र स्वप्रकाशत्वम्, तत्र तत्राज्ञानविरोधित्वं यद्यपि वर्तते; तथापि तस्य साक्षिमात्रेऽनुभाव्येऽपि सत्त्वाद् न साधनव्यापकत्वमपि ॥

इदमनुपहितावस्थसंविन्मात्रमभिप्रेत्य, उपहितस्वरूपमात्रस्य संविन्मात्रस्यापि स्वप्रकाशत्वे तु तत्र वृत्त्युपधानदशायामिवाज्ञानाद्युपहितावस्थायामपि स्वप्रकाशत्वात्, तस्य चाज्ञानाविरोधित्वाद् यत्र यत्र स्वप्रकाशत्वम्, तत्र तत्र संविन्मात्रे नाज्ञानविरोधित्वम्, इति न साध्यव्यापकत्वम्, इति न तस्योपाधित्वम् ॥

अनेन—व्यतिरेकव्याप्तिरपि—व्याख्याता । यत्र स्वप्रकाशत्वाभावो यत्र घटादौ, शशशृङ्गादौ, तत्र तत्र नाज्ञानविरोधित्वमिति यद्यपि न

साधनव्यापकत्वम्, तथापि यत्र यत्रानुभाव्यत्वाभावः, संविन्मात्रे तत्राज्ञानविरोधित्वं नास्ति; प्रामाणजन्यवृत्तेः तदुपादानान्तःकरणोपाधेर्वाऽज्ञानविरोधित्वम्; संविन्मात्रस्याज्ञानाविरोधित्वात्, इति न साध्यव्यापकत्वमपीति नाज्ञानाविरोधित्वमत्रोपाधिः ॥

तत्र—ज्ञानस्वरूपमेवाज्ञानविरोधि, न वृत्तिरेव तद्विरोधिनीत्यद्वैतसिसिद्धान्तो नोरीक्रियत इति भूषणम्—वदति। इदमेवात्र पृच्छ्यते—अद्वैभिमतं संविद्रूपमपि किं भूषणं नाङ्गीकरोति, उताज्ञानविरोधित्वं वृत्तरेवेत्यंशमात्रमिति। आद्येऽद्वैताभिप्रेतस्य स्वप्रकाशस्य सर्वदाऽनावृतस्य संविन्मात्रस्यानङ्गीकारे कस्य वाऽनुभाव्यत्वमननुभाव्यत्वनिषेधेनाद्वैतमतनिरासार्थं साध्यतेऽज्ञानाविरोधित्वोपाधिविवक्षया यदि घटमात्रस्य, तर्हि अनुभूतिस्वप्रकाशत्वानुमानस्य का वा हानिः ? यद्यनुभूतिः, सा सिद्धाऽसत्कल्पेति, तर्हि सैव समाधिर्ब्रह्मसिद्धिगताऽत्रानुसन्धेया—आनुभूतिरसतीति प्रयोगो मम माता वन्ध्येति प्रयोग इति हि ब्रह्मसिद्धिरभिप्रैति। अतः प्रकाशमाना, असतीति च व्याहतम् इत्यनुभूत्यसत्त्वानुमानमसङ्गतम् ॥

न च संवित्स्वरूपमात्रमज्ञानविरोधि; अन्यथा तदुपादानात्वाद्ययोगेन श्रुतिविरोधापत्तेः, शुद्धं संविन्मात्रमङ्गीकृत्य हि ब्रह्मणोऽज्ञातस्यैव जगदुपादानत्वं निर्वोढुं पार्यते; अन्यथा विशिष्टस्य, विशेषणमात्रस्य वा परिणाम्युपादानत्वे तदनित्यत्वापत्तिर्दुष्परिहरा। अधिकमुत्तरत्र ॥

### संवित्स्वरूपस्याज्ञानविषयत्वम्, तेन तस्याविरोधश्च

तत्र 'अहमस्मि' इति प्रतीतौ साक्षिण एव भानात् तस्य चानावृतस्यैव यावत्सत्त्वमवस्थानाच्च तस्य शुद्धसंविन्मात्रत्वाभावाच्च न 'नाहमस्मी'ति प्रतीत्यापत्तिः। चिन्नास्तीति प्रतीतिस्तु न तदसत्त्वापादकाज्ञानं विना संभवति, इति तदावरणविषयः सविन्मात्रमस्तीति स्वीकर्तव्यम्। अत एव श्रुतिः—"असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति" इति ॥

असत्त्वापादकाज्ञानविरोधित्वादेव चिन्नास्तीति न ज्ञानमित्यादिस्त्वसदनुवादः; तथा प्रतीतेरनङ्गीकारात्, विना वृत्तिम्, असत्त्वापादकाज्ञाननिवृत्तिं वा तदधीना चिदस्तीतिप्रतीतिर्न संभवति; अन्यथा चिन्नास्ति ब्रह्म नास्तिती वा प्रतीतिरविरुद्धैव ॥

निर्विशेषब्रह्मासत्कल्पवादिन एव 'चिन्नास्ति', ब्रह्म नास्तीति वादिषु प्रधानं निदर्शनम् , अन्यथा कथं श्रीभाष्यानुयायिनां विप्रतिपत्ते रपि 'घटो नास्ति' 'ईश्वरो नास्ती'त्यादिज्ञानमपि तत्तदवच्छिन्नोपहितादिस्वरूपचैतन्यासत्त्वापादकाज्ञाननिबन्धनमेव, इति स एव न्यायः सविन्मात्रेऽपि विना वृत्तिं सत्त्व-चित्त्वादिज्ञानं तस्य तस्य चैतन्यांशमात्रस्याज्ञानाविरोधित्वेन, वृत्तौ तु तद्विरोधेनैव सा निरुह्यते । अतो नानुभूतिमात्रमज्ञानविरोधि ॥

अयमत्र निष्कर्षः—वृत्त्यतिरिक्तोपाध्युपहितमज्ञानाविरोधि, वृत्तिमात्रोपहितमखण्डं चैतन्यं त्वज्ञानविरोधि । न चाज्ञानाविरोधित्वेऽपि संविन्मात्रमप्रकाशैकस्वभावम् , येन तस्य जडत्वमापद्येत ॥

एतेन—अनुभूति, स्वप्रकाशा, अनुभूतित्वादित्यनुमानेऽज्ञानाविरोधित्वमुपाधिरिति—परास्तम्; यत्र यत्राननुभूतित्वं घटादौ, तत्र तत्राज्ञानविरोधित्वमिति साध्यव्यापकत्ववत् , पक्षेऽनुभूत्यां पूर्वोक्तरीत्याऽज्ञानोपहितायां साधनव्यापकत्वस्यापि विद्यमानत्वात् , इति नोपाध्यभावेन साध्याभावानुमानमत्र । तत्र घटादिकमिव परानुभवा अपि वृत्तिरूपा विपक्षा न पक्षकोटौ, तत्समकोटौ वा प्रविष्टा, इति न तत्र साधनाव्यापकत्वेनोपाधिलक्षणसमन्वयः ॥

### परानुभवादौ नाभानापादकाज्ञानविरोधित्वम्

प्रकाशस्वभावत्वाभाववति परानुभवादौ यद्यप्यसत्त्वापादकाज्ञानविरोधित्वं वर्तते; तथापि साक्षादपरोक्षस्वभावाया एव तस्याः साध्यत्वात् तद्विरोधित्वमभानापादकाज्ञानविरोधित्वेनैव वक्तव्यम् , इति न तत् परानुभवादौ वर्तते इति निष्कर्षः ॥

### अनुभूतेः प्रत्यक्षविषयत्वरूपानुभाव्यत्वनिषेध एवात्र, न तु परोक्षापरोक्षत्वसाधारणानुभाव्यत्वनिषेधः

अपरोक्षसंविद्रूपत्वाभाव इत्यस्य स्वरूपबोधनार्थम् , स्वप्रकाशत्वातिरिक्तसाध्यस्य नात्र विवक्षेति सूचनार्थं वा स्वप्रकाशप्रत्यक्षसंविद्रूपत्वाभावस्योपाधौ साधनतावस्थावत्त्वेन निर्देशः, इति न स्वप्रकाशपदनैरर्थक्यम् । तत्रानुभवपदं यद्यपि भ्रम-परोक्षज्ञानसाधारणम् ; तथाप्यनुभूतिस्वप्रकाशत्वनिषेध्यमनुभाव्यत्वं नित्यापरोक्षत्वादनुभूतेः प्रत्यक्षरूपत्वमेव ॥

अयं भावः—अनुभूतिपदं वस्तुत उपहितम्, अनुपहितं वा संविन्मात्रमभिप्रेत्य, अनुभाव्यत्वं तु फलव्याप्यत्वमत्र विवक्षितम्, तेन च संविन्मात्रस्य वृत्तिव्याप्यत्वमात्रत्वेऽपि न क्षतिः। तदुक्तम्—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते॥"

इति। तेन लौकिकानुभवानामपि व्यावृत्तिः; तेषामपि तदभिव्यक्तचैतन्यभास्यत्वेन फलव्याप्यत्वात्। साक्षिचैतन्यमपि सर्वदा स्वोपाध्यन्तःकरणवृत्तिफलितमेव भासते, इति तदपि फलव्याप्यमेव, इति न तस्याप्यनुभाव्यत्वभङ्गः॥

अत एव ब्रह्मसिद्धौ—संविन्मात्रस्य ब्रह्मणः स्वप्रकाशात्मस्वरूपत्वमेव, न तु घटादिवत् संवित्कर्मत्वमिति वर्णितम्। पुरुषार्थत्वं हि न प्रकाशमानतामात्रेण, किन्तु प्रकाशस्वभावतयाऽपीति हि सनिदर्शनं तत्र समर्थितम्, इति तु न प्रकाशविषयत्वं तदर्थं संविन्मात्रस्यापेक्ष्यते। न चैतावता पुरुषार्थस्य पाषाणकल्पता॥

अतः स्वातिरिक्तसंविदमन्तराऽवेद्यत्वरूपास्वप्रकाशत्वाभाव एव स्वप्रकाशत्वपदार्थः। तत्र स्वपदेनास्वप्रकाशानामेव ग्रहणम्, न तु प्रकाशस्वभावस्य, इति न स्वपदार्थानन्वयः संविन्मात्रपक्षतायामपि॥

अनुभूतिपदमत्र संविन्मात्रपरम्, न तु लौकिकजन्यानुभवसाधारणम्

तत्रानुभूतिपदेनाधिष्ठानस्य, अबाध्यस्य च वस्तुनो निर्विशेषस्य चैतन्यस्यैव ग्रहणम्; तस्यैव चैतन्यपदमुख्यार्थत्वात्। तत्र शुद्धं चैतन्यमपि व्यवहारदशायां स्फुरणरूपत्वात्, उपहितरूपेणाभिवदनाच्च व्यवहारमर्हतीति पक्षतया निर्देशमर्हति; तस्यैव पूर्वोक्तरीत्या स्वप्रकाशत्वस्य श्रुतिसिद्धत्वात्॥

परानुभवविषयत्वं लौकिकानुभवस्य चैतन्यावच्छेदकत्वेन, न तु स्वभावतः, संविन्मात्रस्यैव संवित्पदमुख्यार्थत्वात्

तत्र प्रमाणजन्यवृत्त्यभिव्यक्तानां चैतन्यानां सर्वेषु ज्ञानेषु चैतन्यांशे सोपाधिकेषु स्वतः प्रत्यक्षत्वात्, वृत्तिमात्रस्य चैतन्यभासकत्वायोगाच्च,

इति प्रत्येकं सर्वप्रत्यक्षग्रहणेऽपि न क्षतिः। परानुभवविषयत्वमप्यनुभवस्य चैतन्यावच्छेदकत्वेनैव, न स्वत इति न दोषः॥

एतदनुमानफलं तु प्रकाशस्वभावात्मस्वरूपसंवित्सिद्धिः। तेन च परस्पराध्यासेऽपि नारोप्याणामिवाधिष्ठानस्यापि बाध्यत्वमिति निर्णयः। तत्रावच्छिन्नचैतन्येषु तत्तदुपाधिमात्रेण संविन्मात्रस्यैकस्यौपाधिकेऽपि भेदे वस्तुतो निर्विशेषतायां संविदैक्यसिद्धिः फलति॥

न च लौकिकानुभवाः प्रमाणजन्या मुख्यसंवित्पदार्थाः, इति न तेषां संविदश्चैक्यम्, येन तत्र प्रमाणेदन्ताप्रश्नः सफलः स्यात्। लौकिकानुभूतीनामुपाधिमात्राणां स्वरूपतोऽपि भिन्नानामपि घटव्यक्तीनां बहूनां घटत्वेनैक्यव्यवहारवदैक्यमनुभवव्यक्तीनामत्राविरुद्धम्॥

### प्रमाणजन्यवृत्तीनामभिव्यक्तचैतन्यावच्छेदकत्वेनैव प्रत्यक्षत्वम्, न तु स्वरूपतः

सर्वत्र ज्ञानानां ज्ञानत्वं चैतन्यावच्छेदकत्वमात्रेण, न स्वतः, इत्यनुभूतिपदेन चैतन्यांशस्यैव ग्रहणम्, न तु विशिष्टस्य। तच्च चैतन्यं स्वांशे साक्षादपरोक्षम्, न तु प्रमाणाधीनं तस्य प्रत्यक्षत्वादि। प्रमाणापेक्षा तु तत्र तद्विषयावरणाभिभवार्थम्। अभिव्यक्तचैतन्यमात्रात्तूपाधीनां प्रत्यक्षत्वादिः। अतो न विशेषण-विशेष्योभयप्रत्यक्षत्वव्यवहारभङ्गः॥

तत्तद्विषयांशे प्रत्यक्षत्व-परोक्षत्वादिव्यवहारार्थमेव प्रमाणापेक्षेति हि परिभाषा। अतो न प्रत्यक्षानुमानादिसाङ्कर्यम्, न वा पुरुषभेदेन प्रत्यक्ष-परोक्षाविवेकादिश्च॥

### चिदुपरागादिना भानस्थल एव भासके वृत्तेरप्यपेक्षा, न तु केवलावरणभङ्गार्थतायाम्

तत्र ज्ञानं सर्वत्र चैतन्यमेव, वृत्तिस्त्वावरणाभिभवमात्रार्थतया, अनावृतचैतन्यावच्छेदकतया वोपचाराद् ज्ञानमिव, यथा शुक्त्यादिकमधिष्ठानतावच्छेदकतयाऽधिष्ठानमिव, इति न प्रतिज्ञानं वृत्तिश्चैतन्यं चेत्यंशद्वयमस्ति। तत्र यत्र वृत्त्यभिव्यक्तं चैतन्यं विषयस्थतदवच्छेदकस्य भासकम्, तत्र, सत्यम्, अस्ति वृत्तिः, चैतन्यं चेत्यंशद्वयम्, यत्रोभयं मिलित्वा भासकम्। आवरणाऽभिभवमात्रेण वृत्तेरुपक्षयाद् भासके नास्त्यंशद्वयम्॥

### वृत्तिनिर्गमोपयोगस्थलनिष्कर्षः

तत्र घटादिभानार्थमन्तःकरणस्य तदाकारेण घटदेशसम्बन्धार्थं तन्निर्गमवादः, आन्तरसुखादीनां भाने तु न वृत्तिनिर्गमापेक्षा, एवं प्रत्यगात्मस्वरूपसाक्षात्कारे, प्रत्यगभिन्नाखण्डाकारसाक्षात्कारे च ॥

### आनुमानिकपरानुभवस्य न प्रत्यक्षत्वम्

देवदत्तः, घटप्रत्यक्षवान्, तथाऽऽप्तेनोक्तत्वादित्यनुमानं त्वनुमातृदेवदत्तीयघटप्रत्यक्षत्वांशेऽपि परोक्षमेव; अन्यानुभवस्यान्येन परोक्षत्वस्य संप्रतिपन्नत्वात्, अन्यथा परकीयानुभवादेर्धर्मभूतज्ञानेन परोक्ष एवानुभव इति भूषणमप्यसंगतं स्यात् ॥

### अनुभूतिस्वप्रकाशत्वं त्वानुमानिकमप्यपरोक्षमेव शाब्दापरोक्षवादे

अनुभूतिः, स्वप्रकाशा, अनुभूतित्वादित्यनुमानं तु शाब्दापरोक्षवादनयेऽपरोक्षम्, मतान्तरे तु परोक्षमेव। अतोऽनुभूतिः, स्वप्रकाशा, अननुभाव्या वेत्यनुमानं न बाधितम् ॥

### प्रत्यक्ष-परोक्षविभागो वृत्तिविशिष्टचैतन्यविषयः, न संवित्स्मात्रविषयः

तत्र विशिष्टं चैतन्यं न शुद्धम्, किन्तु तत्र विशेष्यांशमात्रम्, विशेषणोपलक्षितं वा शुद्धम्, इति विशिष्टज्ञाने न शुद्धस्य प्रत्यक्षता; अन्यथाऽतीन्द्रियकथा लुप्येत; अन्यथा गुरुत्वादिविशिष्टचैतन्यस्यापि प्रत्यक्षत्वापत्तेः। अत एव तत्तद्विषयावच्छिन्नत्वरूपेणैव प्रत्यक्ष-परोक्षत्वादिविभागः, चैतन्यांशमात्रे तु सर्वस्य ज्ञानस्य नित्यं प्रत्यक्षत्वमिति सिद्धान्तोऽद्वैते। विषयविषयिभावो हि चैतन्यमात्रस्य, न चैतन्यकर्मत्वेन, किन्तु विषयस्य चैतन्यतादात्म्येनेति हि ब्रह्मसिद्धिः ॥

### एकस्यैव संविद्रूपस्य विज्ञातत्वाविज्ञातत्वादिव्यवस्था

तथा च श्रुतिः—

> "विज्ञातारमरे केन विजानीयात्।
> न शब्दगोचरो यस्य योगिध्येयं परं पदम् ॥"

इत्यादिः। तत्र विज्ञप्त्यादिशब्दा वृत्तिजनकप्रमाणभेदमपेक्ष्य, न तज्जनितवृत्तिविषयचैतन्यभेदेन। तेन च ब्रह्मण एकस्यैव विज्ञा-

तत्त्वाविज्ञातत्व-मतत्वामतत्व-श्रुतत्वाश्रुतत्वादिव्यवस्थाऽपि व्याख्याता; वृत्तिमात्रविषयतया श्रुतत्वादि, तत्प्रतिफलितचैतन्याभास्यत्वादश्रुतत्वादि, नान्यथा "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्" इति श्रुतावेकत्रैव मतत्वामतत्वादिनिर्देशोपपत्तिः। ब्रह्मांशतो वेद्यते, अंशतो न वेद्यत इति तदज्ञानदशायाम्, कल्पितानन्दादिभेददशायां वा सम्भवति। तत्राज्ञानस्यांशतो वृत्त्या निवृत्तिः, अखण्डचैतन्यप्रकाशे तु नेदं संभवति ॥

तत्र घटादीनां जडानामज्ञानावरणस्यासंभवात् तदाकारवृत्तिः, तत्र चैतन्यस्य प्रतिफलनम्, तत्तादात्म्येन घटादिभानं चेति व्यवस्था। यत्र त्वावरणभङ्गमात्रं वृत्तिफलम्, तत्र वृत्तिमात्रम्, न तत्र चैतन्यप्रतिफलनादेरपेक्षेति निष्कर्षः ॥

### स्वप्रकाशत्वं चैतन्यस्यानुपहितस्यैव, न तु विशिष्टस्योपहितस्य वा; अत एवावरणाभिभवमात्रार्था वृत्तिः वेदान्तसार्थक्यं च

सर्वथा तु चैतन्ये चैतन्यविषयत्वेन, अनुभाव्यत्वेन वा न प्रकाशः; स्वप्रकाशस्य तस्य प्रकाशकान्तरानपेक्षणात्। सा चानुभूतिः स्वत एका, तत्तदुपाध्यवच्छेदात्तूपाधिभेदेनौपाधिकभेदवत्यपि। अनुभूत्यंशे तु स्वप्रकाशात्मस्वभावत्वमबाधितम्, किन्तु तत्प्रयुक्तावरणनिवृत्तिमच्चैतन्यमात्रम्, इति तस्याऽऽवरणाभिभवार्थतया वृत्त्यतिरिक्तसंविदनपेक्षणात् स्वप्रकाशत्वं न हीयते। वृत्तिरेव ह्यज्ञानविरोधिनी, न संविन्मात्राऽनुभूतिः; अन्यथा ब्रह्मोपादानत्वाद्यनिर्वाहादिति गतमधस्तात् ॥

स्वप्रकाशात्मस्वरूपमात्रं ह्यनुभूतिर्नाहम्प्रतीतौ विषयः; अहमर्थस्य चिदचिद्ग्रन्थिरूपस्य शुद्धसंविन्मात्रत्वायोगात्। अहमर्थो ह्यन्तःकरणोपहितः साक्षी मनःसम्बन्धमात्रेण निवृत्तावरणोऽप्यचिदुपधानाद् न शुद्धः प्रत्यगात्मा; अन्यथाऽहंज्ञानादेव मोक्षापत्तेरात्मविचारशास्त्रं वितथं स्यात्, इत्युपहितस्यापि तस्य साक्षिणो नासत्त्वापादकम्, अभानापादकं वाऽज्ञानमावरकं वर्तत इति युक्तम् ॥

### वृत्तिविरोध्येवाज्ञानम्, न तु संविन्मात्रविरोधि

अखण्डं चैतन्यमज्ञानविषयस्तदावरकानाद्यज्ञानवशादानन्दादिभेदेन सखण्ड इवेति वेदान्तिनां मर्यादा, वृत्तिविरोध्यपि तदज्ञानमेव। तत्र

नित्यत्वैकत्वादिधर्मा अप्यनाद्यज्ञाननिवृत्त्यैव निवर्तन्ते, इति श्रुतिसिद्ध-मनुभूतिस्वरूपमेवाऽऽत्मा, ततो नान्यदात्मतत्त्वं नामेति निरूपणार्थमेवा-नुभूतिस्वप्रकाशत्वानुमानम् , तेन च 'जानामी'त्यादिप्रतीतिविषयो ज्ञान-मन्यत् , ततोऽन्यत्तु स्वप्रकाशमात्मस्वरूपमिति फलति। अन्याश्च लौकि-कानुभूतयः साक्षात् , परम्परया वाऽज्ञानप्रयुक्तास्तत्तत्प्रमाणजन्या भिन्नाः, मिथ्या च ॥

आत्मनः शुद्धस्यैक्यम् , भेदस्तूपहितस्य, तन्नोपाधिनाशार्थ-मेव वेदान्तादिप्रमाणापेक्षा

आत्मस्वरूपं तु स्वत एकम् , न तु नानेति व्यक्तीभविष्यति, इत्येकै-कस्याऽऽत्मनः स्वं स्वं प्रति स्वप्रकाशत्वम् , परं प्रत्यप्रकाशत्वमिति न युक्तम्। स्वप्रकाशस्यैकस्याप्यात्मतत्त्वस्य शास्त्रजनितज्ञानेन परमात्मस्वरूप-स्येव तत्तदुपाधिनिवृत्तिमात्रेण ह्यैकात्म्यं नाम; तत्तदुपाधीनामेव बन्धत्वेन, तन्निवृत्तेरेव तत्त्वज्ञानाधीनाया बन्धनिवृत्तिरूपत्वात् ॥

अनुभूतिस्वप्रकाशत्वं तु न जन्यानुभूतिसंकोच-विकासावस्थधर्म-भूतज्ञानमभिप्रेत्य, किन्तु संविन्मात्रं चैतन्यमात्मस्वरूपमात्रमिति सुस्थम् ॥

॥ इत्यवेद्यत्वोपपत्तिः ॥

# अथ संविदनुत्पत्तिः

संविदनुत्पत्तिभङ्गवादोऽनुक्तोपालम्भनम् , स्वरूपज्ञानस्या-
नुत्पत्तेः सम्प्रतिपन्नत्वात् , वृत्तेर्धर्मभूतज्ञानस्य वो-
त्पत्तेरङ्गीकाराच्च

तत्र श्रीभाष्यानुयायिनः संवित्पदार्थो लौकिकानुभवः, धर्मभूतज्ञानं वा-ऽभिप्रेत्यानुभूतिस्वप्रकाशत्ववादं निरस्यन्ति। एवमेव संविदनुत्पत्तिवादम् , संविदात्मत्ववादम् , संविदेकत्ववादं चाद्वैताभिप्रेतं मत्वा। इदं त्वनुक्तोपालम्भनम्; स्वप्रकाशात्मस्वरूपां संविदमपेक्ष्यैव तत्तद्वादानां प्रवृत्तत्वात्। सति चैवमनुक्तोपालम्भनत्वादेवेमानि प्रकरणान्युपेक्षणमर्हन्ति; तथापि यक्षानुरूपबलिन्यायेन कृत्वा चिन्तयैवात्र परीक्ष्यते॥

तत्र—अनुभूतिर्जीवत्वेश्वरत्वोपलक्षितम् , तुरीयम् , अनुपहितम् , स्वप्रकाशं संविन्मात्रम् , न तु वृत्तिज्ञानम् , धर्मभूतज्ञानं वा। अतोऽनुभूतिरिति संविन्मात्रत्वाद् ब्रह्मणः प्रत्यगभिन्नस्यैव निर्देशः। न च लौकिकानुभूतिर्मुख्यो ज्ञानपदार्थः; "सत्यं ज्ञानमि"ति वाक्ये "अत्रायं पुरुषः स्वयंज्योतिरि"त्यादाविव शुद्धचैतन्यस्यैव मुख्यज्ञानपदार्थत्वात्। ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारमात्रम्॥

तार्किकसम्मतं जन्यं ज्ञानं न श्रीभाष्यमतेऽपि ज्ञानपदार्थः, न वा मीमांसकसम्मतम् , साङ्ख्याभिप्रेतं वा। अद्वैतमते तु साङ्ख्य-योग-द्वैत-सिद्धान्ताभिमतोऽन्तःकरणवृत्तिविशेष एव ज्ञानपदार्थः॥

विशेषस्तु—तस्या आत्मधर्मत्वमन्तःकरणतादात्म्याध्यासप्रयुक्तधर्माध्यासेन। ज्ञानावच्छेदकत्वेन तु ज्ञानत्वोपचारोऽज्ञाननिवर्तकत्वोपयोगमात्रमपेक्ष्य। ततो न तार्किकादिसम्मतज्ञानमत्र पक्षः; तस्य सर्वस्य चैतन्यस्वरूपव्यतिरिक्तस्योत्पत्तेरेवाद्वैतिभिरपि स्वीकारेण तस्यैव पक्षत्वं नाद्वैतमतेऽपि। ततो यदि तस्यैवोत्पत्तिभूषणेन, शतदूषण्या वा मन्यते, तर्हीष्टापत्तिरेव। अतः संविच्चैतन्यमात्रस्य पक्षत्वाद् नांशतो बाधः, न वा तार्किकादिसम्मतज्ञाने व्यभिचारः; तस्य ज्ञानपदार्थत्वस्य मुख्यस्यास्वीकारात्॥

तत्र वृत्तेर्ज्ञानत्वोपचारेऽपि न ज्ञानत्वमिति वृत्तिव्यतिरिक्तेत्यादि-विशेषणं वृथा, वृत्त्यवच्छिन्नं चैतन्यं यद्यपि चैतन्यांशे ज्ञानमेव; तथापि

तस्यौपाधिकस्यौपाधिक्युत्पत्तिरेव स्वीक्रियते। अत एव तस्य प्रमाणजन्यत्वेन प्रमात्वमिति परिभाषादौ व्यक्तम्। सर्वथा तु शतदूषण्याः संविदुत्पत्तिसमर्थनमनुक्तोपालम्भनदृष्टिमात्रेण ॥

### प्रतिकर्मव्यवस्था-दृष्टिसृष्टिवादयोरद्वैतसिद्धयोर्विषयविवेकः

तत्र सकलविषयविरक्तायाः संविद एवानुभूतिशब्दार्थत्वात्, तस्य च विषयमिथ्यात्वं विनाऽनुपपत्तेर्दृष्टिसृष्टिवादेन, प्रतिकर्मव्यवस्थावादेन वा निर्विषयत्वं निर्वहणीयम् ॥

तत्र हि प्रतिनियतकारकव्यवस्था प्रातिभासिक-व्यावहारिकार्थक्रियाकारित्वादिकं च मिथ्यात्वेऽपि जगतः स्वीक्रियते; तेन च निर्विषयत्वं परमार्थतो न विरुध्यते प्रतिकर्मव्यवस्थायां मिथ्यात्व इत्येवाद्वैतसिद्धान्तः ॥

तत्र व्यावहारिकत्वमर्थानाम्, प्रमाणानां यथार्थं प्रामाण्यं च स्वीकृत्य, पारमार्थिकत्वेन प्रपञ्चाभावात् प्रपञ्चमिथ्यात्वं युक्त्या सम्यगुपपाद्यते। दृष्टिसृष्टिवादस्तु स्थितप्रज्ञानाम्, जीवन्मुक्तानां वा ॥

"अतीतस्याननुसन्धानं भविष्यदविचारणम्।
औदासीन्यं वर्तमाने जीवन्मुक्तस्य लक्षणम् ॥"

इति नयेन प्रतीतिकालमात्रे प्रपञ्चस्य सत्त्वमिव, वस्तुतोऽपारमार्थिकत्वेऽपि। उभयत्र प्रपञ्चमिथ्यात्वं न विरुध्यते। इदमेवाभिप्रेत्य पक्षद्वयस्यापि मध्यमाद्यधिकार्यभिप्रायत्वम्, उत्तमाधिकारिविषयत्वं च। तत्र तु यथाधिकारं रुचिरबाधा ॥

### दृष्टिसृष्टिस्वरूपनिष्कर्षः

तत्र दृष्टिसृष्टिवादे दृष्टिपदं तत्तदाकारवृत्त्यवच्छिन्नचैतन्यपरम्, न तु वृत्तिमात्रपरम्, चैतन्यमात्रपरं वा। तत्र वृत्तिरपि विषयवद् यावत्सत्त्वमेव सती, इति न विषयतो वैलक्षण्यम्, येन तस्या अपि वृत्त्यन्तरेण भानापत्त्याऽनवस्थापत्तिः। तत्र वृत्तिनाशक्षण एव तदुपाधिकं चैतन्यमप्यौपाधिकनाशेन विनश्वरमिव, न तु स्वतो नश्वरम्, इति न सत्यासत्यविवेकायोगः, न वा चैतन्यस्येव वृत्तेरप्युपाधेस्तत्समसत्ताकत्वेन सत्यत्वापत्तिः ॥

तत्रेश्वरस्येव जीवस्याप्यनादित्वादज्ञानावस्थाविशेषान्तःकरणस्याप्यनादित्वम्। अत एवोक्तम् —

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥"

इति, इति न वृत्तेरन्तकरणपरिणामत्वविरोधः। वस्तुतस्तु—जीवन्मुक्तानां वृत्तिर्बाधितानुवृत्तिनयेनानुवर्तमानाऽविद्यालेशपरिणाम एव, इति न कोऽपि दोषः। तेषां हि सर्वमन्तःकरणाविद्यादिसंस्कार एव। अतो दृष्टिसृष्टित्वं नानुपपन्नम्॥

कार्य-कारणभावादिकं सर्वमेतन्मते प्रतीतिकालमाश्रित्य। तत्र दृष्टिरिव द्रष्टाऽपि जीवोऽनादिरनुवर्तमान एव तदुपाधेरनुवृत्त्या यावत्प्रतीत्येव, परं तु बद्धानां दृष्ट्या, गुणातीतानामेषां दृष्ट्या तु जागरोऽपि स्वप्न एव॥

दृष्टिसृष्टिर्बाधितानुवृत्त्या जीवन्मुक्तानां दृष्टिरेव, येन प्रतिकर्म-
व्यवस्थायामिव न बन्धः, तेनावस्थाविशेषमात्रं
सृष्टिदृष्टिवादः, दृष्टिसृष्टिवादश्च

तत्र बद्धानां जागरे जागरा इवैतेषां सर्वं जागरेऽपि स्वप्नवत्, सुषुप्तवत् प्रपञ्चानां भानमात्रम्, अभानमेव वा। आत्मस्वरूपमात्रं विशदमवभासते। इममेव पुरुषधौरेयमधिकृत्य—

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी॥
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥"

इति भगवान् गायति॥

तत्र मिथ्यात्वाविशेषेऽपि कारणस्याविद्याया अनादेः, तत्प्रयुक्तानां च सादित्वायोगाद् न तत्र दृष्टिसृष्टिः। मिथ्यात्वं तु तेषां संस्कारात्मनाऽप्यविद्यानाश एव॥

दृष्टिसृष्टिवादवत् प्रतिकर्मव्यवस्थाया अपि सौत्रत्वम्,
अध्यारोपापवादप्रक्रिया दृष्टिसृष्टिप्रक्रिया, व्यावहा-
रिकादिव्यवस्थया प्रतिकर्मव्यवस्था

तत्राज्ञानं सुषुप्ति-प्रलययोरप्यनादिस्तन्निवर्तकानुत्पत्तावनुवर्तते। जन्मान्तरानुभूतानामप्यविद्यात्मना विद्यमानानामेव दृष्टिसृष्टौ प्रतीतिरिति न कोऽपि विरोधः॥

तत्र शुक्तिरूप्य-स्वाप्नादिकमपि जागरघटादिसमानयोगक्षेमत्वात् वृत्तिनाशे कारणात्मान एव वर्तन्ते, इत्यज्ञानातिरिक्तस्य सर्वस्य प्रातिभासिकत्वे न कोऽपि विशेषो दृष्टिसृष्टेषु सर्वेषु। तत्र शून्यवादी त्ववैदिको न कथमपि मोक्षाधिकारी, अधमाधिकारी वा, मध्यमाधिकारी वा, उत्तमाधिकारी वा॥

तत्र सुषुप्ति-प्रलययोरज्ञानात्मना सर्वानुवृत्त्याऽविद्यापरिणामदृष्टिवशात् पुनरपि जागरे सृष्टिर्नानुपपन्ना; तत्राज्ञानाभावः श्रुत्या शरीरवियोगकालिकाखण्डाकारवृत्त्यैवावसीयते, यावत्तत्साक्षात्कारमज्ञानस्य स्वरूपतः, संस्कारात्मना वाऽवस्थानं नासाम्प्रतम् ॥

तत्र दृष्टिसृष्टिवादस्याप्रमाणिकता, प्रतिकर्मव्यवस्थाकल्पे मध्यमाधिकारिमात्रदृष्ट्या। सर्वत्र सृष्टिप्रक्रिया दृष्टिसृष्टिवादेऽध्यारोपापवादप्रक्रियया। अत एव "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः" इति सूत्रे भाष्यम्—"भवेदपि कार्यस्य विगीतत्वम्, अप्रतिपाद्यत्वात्। न ह्ययं सृष्ट्यापि प्रपञ्चः प्रतिपिपादयिषितः; ब्रह्मप्रतिपत्त्यर्थत्वाच्च सृष्ट्यादिप्रपञ्चस्ये"ति। यत्तु—न 'वियदश्रुतेरि'त्यादिना वियदाद्युत्पत्तिविरोधाविरोधचिन्तादिकम्, तदिदं सूचयति प्रतिकर्मव्यवस्थयाऽपि मध्यमाधिकारिणोऽपि ब्रह्मजिज्ञासायामधिक्रियन्त इति, इत्यलमनेन प्रासङ्गिकेन विचारेण ॥

अनुभूत्यनुत्पत्त्यनुमाने संविन्मात्रमनुभूतिपदार्थः, अतो
न बाधः; निर्विशेषात्मवादस्यैवाद्वैतपदार्थत्वात्

प्रकृतं त्वनुभूत्यनुत्पत्त्यनुमानम्—अनुभूतिः, अनुत्पन्ना, प्रागभावाभावादिति। अत्रानुभूतिपदेन पूर्वत्रेव स्वप्रकाशस्वभावस्वरूपज्ञानम्, अनुपहितात्मस्वरूपं विवक्षितम्। संविच्चेयमुपहितेषु विशेष्यांशमात्रम्, अनुपहितं शुद्धं प्रत्यगात्मस्वरूपं निर्विशेषं ब्रह्म वा। तत्राद्ये, द्वितीये वा संवित्स्वरूपमेकमेव; उपाधिभेदमात्रनिबन्धनत्वादुपहितभेदस्य ॥

घटादिसंवित्प्रत्यक्षता तु घटाकारवृत्तिप्रतिफलितसंविदभिन्नसंविद्रूपतया, इति न साऽनादिः, किन्तु प्रमाणजन्यवृत्त्यवच्छेदात् सादिरेवोपाधिसादित्वेन, इति प्रत्यक्षेण वर्तमानग्राहिणाऽपि न घटादेरप्यनादित्वप्रसंगः। न केवलं तत्र जन्यवृत्तिसम्बन्धमात्रेणौपाधिकं सादित्वम्, किन्तु जन्यघटाद्यवच्छेदेनापि, इति घटाद्यवच्छिन्नत्वम्, अनादित्वं च न संविदो व्याहन्यते। श्रुतिसिद्धा तु संवित्, शुद्धा नासत्कल्पेति ब्रह्मसिद्धावुक्तम् ॥

द्वितीये कल्पे नाश्रयासिद्धिः—निर्विषया, निराश्रया च संविदसिद्धेति यदि प्रमाणजन्यवृत्तिमाश्रित्य, तर्हि नानिष्टम्; शुद्धनित्यसंविन्मात्रं तु न

तथा। न च तत्र प्रमाणम्, प्रत्युत "एकमेवाद्वितीयमि"ति श्रुतिर्निर्विशेषमेव ब्रह्म श्रावयतीति कथं तस्या असिद्धिः ? इति नैव सिध्यादिग्रन्थव्याहतिः; निर्विशेषात्मवादस्यैवोपनिषदस्याद्वैतपदार्थत्वात् ॥

निर्विषयनिराश्रयसंविदतिरिक्तवृत्त्या अप्रसिद्धिः, इति वृत्तेरनुभूतिपदार्थत्वं तु नेष्टम्, नो वा तद्विषयमुक्तानुमानम्, अहमर्थानात्मता च

वस्तुतस्तु—वृत्तिरपि सर्वा संवित्स्वरूपातिरिक्तविषया भवतीति न नियमः, सुषुप्तौ वृत्तेर्निर्विशेषाया निराश्रयायाश्च सत्त्वात्। न च तत्र वृत्तिरेव नासीत्; न किञ्चिदवेदिषमि'ति प्रतिसन्धानेन तदसत्त्वायोगात्। न च तदा व्यक्तात्माऽहमर्थोऽपि; अन्यथा साक्षिस्वरूपस्य-स्वप्रकाशस्य तस्य सुषुप्तावपि भानप्रसङ्गात्। न चाहमर्थोऽज्ञानाश्रयः॥

अज्ञानाश्रयत्वं हि विवरणमते शुद्धसंविदः। न च सोऽहमर्थः, इति नाज्ञानाश्रयस्तत्र भासते। भामतीमतेऽप्यज्ञानाश्रयः, अज्ञानोपहितमात्रं जगत्कारणमेव। न च सोऽप्यहमर्थः। तत्र जीवोऽज्ञानाश्रयः, इति व्यपदेशो ह्युपाधिभूताज्ञानधर्मभाक्त्वमात्रेण, नाज्ञानविशिष्टरूपेण, इति न तद्दृष्ट्याऽपि नाहमर्थस्याज्ञानाश्रयस्य भानम्। सर्वथा तु नाहमर्थस्याज्ञानवृत्त्या भानं कदापि नित्यनिरस्तावरणस्य। न वाऽज्ञानस्यापि तत्संसृष्टस्य भानार्थं वृत्तेरपेक्षा, इति का वा वृत्तिः प्रमाणजन्या, तदन्या वा तत्र सविषया, साश्रया च ॥

एतेन—'सुखमहमस्वाप्समि'ति प्रतिसन्धानमपि—व्याख्यातम्; तद्धि संविन्मात्रस्य सुषुप्तावज्ञानोपहितस्य स्वतो भानात्, तस्य च तदा निर्विषयाश्रयत्वाद् न सविषयत्वम्, साश्रयत्वं वा; तस्याप्याश्रयस्यान्यस्याभावात्, न वा सविषयत्वम्; अज्ञानस्य, अन्यस्य वा तदविषयत्वाच्च, इति सुषुप्तौ, जागरे वा संविन्मात्रस्य स्वप्रकाशस्यैवानुवृत्तिः। अहंकारोपहितात्मना भानं तु न स्मरणम्, किन्त्वनुभव एव। प्रतिसन्धानं तु संविन्मात्रमपेक्ष्य। तदुक्तम्—

"न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः ॥"

इति। अतोऽत्र निर्गलिताहंकारोपाधिकं संविन्मात्रमेवानुभूतिशब्दार्थः, इति श्रुतिसिद्धनिर्विशेषमत्र पक्षः, न त्वहमर्थः। अहमर्थोऽपि ह्यहङ्कारोपाधिकोऽज्ञानप्रयुक्तत्वादहङ्कारस्य प्रावाहिकनित्यस्य, सादिरेवेति नात्र पक्षतामर्हति, न वा तस्यारोपनिष्पन्नस्यानुत्पत्तिरद्वैताभिमता ॥

निर्विशेषसंविदोऽनुत्पत्तिनिरासस्तु वृत्तिरूपामनुभूतिमादाय
व्यधिकरणः, सिद्धान्तविरुद्धश्च न सिद्धसाधनमेव

अनुत्पत्तिशब्दार्थो ह्यज्ञानाप्रयुक्तत्वमेव, न तु प्रथमभावविचारशून्यत्वमात्रम्, इति संविन्मात्रपक्षतायामेवाद्वैतिनां तात्पर्यम्। सा चाध्यारोपदृष्ट्या सविषयाऽपि न वस्तुतस्तथा, इति तस्या निर्विशेषाया एवानुत्पत्तिरुक्तानुमानविषयः॥

सुषुप्तौ ज्ञानाभावानुभवो न संविदभावाभिप्रायः

वस्तुतस्तु—सुखमहमस्वाप्समि"त्याद्यनुभवो न संविन्मात्रम्, किन्तु सुखाद्याकाराविद्यकवृत्त्यनुभवः, तत्तद्विषयावच्छिन्नं संविद्रूपं वा, इति सुषुप्तौ न विशुद्धसंविन्मात्रस्य साश्रयत्वम्, सविषयत्वं च संभवति; उपहितचैतन्यस्यैव तदा भानात्॥

एतेन—अज्ञानविषयकसंविदः सुषुप्तेः प्रागूर्ध्वं चाभावस्य गृहीततयोत्पत्ति-विनाशोभयवत्त्वं निश्चितमित्यनुत्पत्त्यनुमानं बाधितमिति—परास्तम्। प्रागूर्ध्वं चाज्ञानविषयकसंविदभावग्राह्यनुभवस्य शुद्धसंविद्रूपत्वाभावात्॥

एतेन—कार्यात्मना, कारणात्मना वाऽहमर्थानुभवोऽपि—व्याख्यातः। तत्राहमर्थानुभवो यदि साक्षिरूपः, यदि वा तदाकाराऽविद्यावृत्तिरूपः; उभयथापि नायमनुभवः शुद्धसंविद्रूपः, इति वृत्तिरूपानुभवस्योत्पत्तिसाधनं नानिष्टसाधनम्॥

अहमर्थज्ञानाभावं सौषुप्तमादाय न संविदनुत्पत्त्यनुमानस्य
बाधः, अहमर्थस्य मिथ्यात्मत्वात्, अपक्षत्वाच्च

तत्राहमर्थो न मुख्यात्मा, किन्तु मिथ्यात्मा, इति न तद्विषयानुभवान्तरस्य, तस्यैव वा सविषयकत्वं विरुद्धम्, न वा तस्य सुषुप्तौ प्रत्यहमुत्पत्तिः; इति कस्य वोत्पत्तिमादाय कालात्ययापदेशः? कं प्रति वा?

तत्र सुषुप्तावज्ञानप्रकाशस्तस्यैव तदा संविदुपाधितयोपहितचैतन्याधीनः, इति न तत्राज्ञानप्रकाशानुपपत्तिः; तथापि नाज्ञानोपहितचिदुत्पद्यते, न वा सा शुद्धसंविदिति तु निष्कर्षः॥

सौषुप्त-मुक्तादिभेदः, संविदुत्पत्तिशङ्कानिरासश्च

एतेन—सुषुप्त-मुक्तयोरविशेषोऽपि—व्याख्यातः। सर्वोपाधिशून्यानावृतस्वप्रकाशस्वरूपप्रयुक्ताज्ञानोपहितस्वरूपत्वान्मुक्तस्य, अज्ञानो-

पहितस्वरूपत्वाच्च सुप्तस्य प्रलयकालीनस्येश्वरस्य च। न चैतावतापि संविदुत्पत्तिरापतति, न वा निर्विषयत्वनियमः संविदतिरिक्तस्यापि ज्ञानस्य ॥

धर्मभूतज्ञानस्य, स्वरूपज्ञानस्य च श्रीभाष्यमतेऽपि सुषुप्तौ निर्विषयत्वात् ज्ञानसविषयत्वनियमभङ्गः

श्रीभाष्यमतेऽपि धर्मिनिष्ठत्वादिविशेषधर्मयोगिनोऽपि धर्मभूतज्ञानस्य सुषुप्तौ, समाधौ च निर्विषयत्वं सम्मतमेव। सर्वथा त्वर्थोपलक्षितप्रकाशस्यैव मुक्तिकालीनस्य मुख्यसंविद्रूपत्वात्, तत्र सविषयकत्वं "एकमेवे"त्यादिश्रुतिविरुद्धं न संभवति ॥

अन्यथा सुषुप्तौ धर्मभूतज्ञानस्य सविषयकत्वनियमात् तेन सर्वस्य प्रकाशो जीवं प्रति स्यात्। न च तदा बाह्याभ्यन्तरविषयाः प्रकाशन्ते केऽपि। आत्मस्वरूपज्ञानं तु स्वयं स्वस्मै प्रकाशाय न धर्मभूतं ज्ञानमपेक्षते ॥

एतेन—अन्तर्याम्यपि—व्याख्यातः। सोऽपि बाह्यप्रकाशार्थमेव धर्मभूतज्ञानमपेक्षते, न स्वप्रकाशार्थम्, इति स्वरूपज्ञानस्यापि ज्ञानत्वाद् न ज्ञानसामान्यं सविषयकम्, साश्रयकं चेति नियमः संभवति, इति तत्रैव सविषयकत्वनियमस्य भङ्गः ॥

जीवस्येश्वरस्य वोत्पत्तिरौपाधिको न तु स्वतः

तत्र जीवेश्वरयोरुभयोरप्यनादित्वाद् नाज्ञानस्येवोत्पत्तिः, किन्तु साक्षात्कारमात्रनिवर्त्योपाधिकत्वमात्रेण नाशमात्रमौपाधिकम्, नोत्पत्तिरपि, इति तत्रापि विशेष्यांशमात्रे नोत्पत्तिरद्वैतमते। तत्रौपाधिकस्यान्तस्वीकारेणानित्यत्वेऽप्यौपाधिके न स्वरूपत उत्पत्तिः, विनाशो वेति तु न विप्रतिपन्नम् ॥

तत्र घटादिप्रकाशलक्षणा संविद् घटाकारवृत्त्यवच्छिन्ना घटावच्छिन्ना च संविदेव, इति तदवच्छेदकोत्पत्तिमात्रेण न संविदुत्पत्तिः संभवति। तत्र घटावच्छिन्नत्वं संविदस्तदधिष्ठानकत्वम्, तदुपहितत्वं वा। श्रीभाष्यरीत्या पारिभाषिकघटादिशरीरकत्वं वा, येन तयोरवच्छेद्यावच्छेदकभावः। व्यक्तं च भूषणाचार्यनिबन्धेषु घटशरीरकत्व-घटावच्छिन्नत्वयोरैक्यमेवेति ॥

तत्र घटाकाश-मठाकाशादाविव व्यापकस्य व्याप्येन परिच्छेदोऽप्यत्र न विरुध्यते। तत्र घटाकाशस्य संयोगसम्बन्धेन घटस्यावच्छेदकत्वम्, चैतन्यस्य तु तेनावच्छेदस्तत्रारोपेणेति विशेषः। तत्र घटावच्छिन्ना घटविषयिणी चेत्यनर्थान्तरम् ॥

### अविद्योपहितचैतन्यस्यैवाधिष्ठानत्वम्

तदवच्छिन्नत्वम्—तदुपाधिकत्वम्, तदधिष्ठानत्वम्, घटाद्यध्यासाधिष्ठानत्वं चेति पर्यायमात्रम्। तत्राविद्योपहितमेव चैतन्यमधिष्ठानम्, अविद्या च स्वकार्यात्मना परिणममाना घटादीनामपि तद्विषयब्रह्मविवर्तने दोषविधया कारणम्, इति मृत्कार्यं घटादिकं वस्तुगत्याऽविद्यापरिणामः, ब्रह्मविवर्तश्चेति वक्तव्यम् ॥

### वाचारम्भणश्रुतेः मृत्तिकादृष्टान्तस्य चाद्वैत एव स्वारस्यम्

अत एवैकविज्ञानेन सर्वविज्ञानमुपपादनीयम्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति घट-मृत्तिकयोरेव कार्य-कारणयोर्दृष्टान्ततयोपादानम्। तत्र मृत्तिकायाः, तदात्मनाऽविद्याया वा कारणत्वं ब्रह्मविवर्ततां विना न संभवति, इति तन्निदर्शनं तटस्थलक्षणविधया विवर्तोपादानोपादेयभावस्याप्युपलक्षणम्, इति न मृत्तिकादृष्टान्तोऽद्वैतवादाननुगुणः। अधिष्ठानत्वं तु चैतन्यस्य केनचन रूपेणाज्ञातस्यैव। तच्चाज्ञायमानं ज्ञानमात्रेण निवर्तकमेवेति शुक्ति-रजतादिस्थले दृष्टचरम्, इति यावदखण्डाकारवृत्ति घटादिज्ञानम्, तदाकारवृत्त्या तत्तदवस्थांशस्य निवृत्तावेव, इति संविन्मात्राध्यासेऽपि घटादीनां सर्वदा न भानापत्तिः ॥

### संविद्विवर्तत्वेन संविद्येवाध्यासेऽपि जगतो न सर्वदा भानम्

भास्य-भासकभावो हि भासकस्याधिष्ठानस्यानावृतावस्थाविशेषेषु व्यावहारिकेषु। अत एव प्रमात्रभिन्नत्वं विषयप्रत्यक्षत्वमिति परिभाषा, इति संविदध्यासेऽपि न सर्वदा सर्वस्मै सर्वं भासेत। न ही'दं रजतमि'ति कस्य चन भ्रमः सर्वेषामपि ॥

तत्र व्यावहारिकेषु तत्तत्प्रमातृचैतन्यसम्बन्धेन तस्य तस्य तत्तच्चैतन्यावच्छेदकस्य भानं तत्तदुपादानमृदाद्याकाराविद्याविषयचैतन्यस्यैव तत्तदादिरूपेण; तत्तदाकारवृत्तिं विना तत्तदावरकाज्ञाननिवृत्तेरसंभवेन

सर्वदा सर्वप्रतिभानायोगात् , अन्यथा सर्वान्तर्यामित्वस्य भगवत एकस्यैव स्वीकारात् तत्तत्कर्मानुसारेणापि तत्तन्मात्रनियम्यत्वनियमनं कथमुपपद्यते ?

अद्वैतमतेऽपि जीवेश्वरविभागः

तत्र यथा सर्वनियामकोऽपि परमात्मा प्रतिनियतनियमनस्वभावः, तत्तत्कार्ये तं तमेव नियच्छति, एवं मायोपहित ईश्वरः स्वमायावस्थाविशेषोपहितस्तत्तत्कार्यावच्छेदेनेश्वरत्वम् , तदवस्थाविशेषतत्तदन्तःकरणावच्छेदेन तत्तन्मात्रोपहितस्तत्तत्पुरुषं प्रत्येव तत्तदाभासयति। तत्तदाकारवृत्तिदशायाम् , इति सर्वमुपपन्नम् , तेन च मूलाविद्याऽवच्छेदेन यावत्तदवच्छेदं तत्तज्जीवत्वम् , इति जीवेश्वरविभागोऽप्यद्वैतसिद्धान्ते न व्याहन्यते ॥

तत्र घटावच्छिन्नत्वं घटात्मना विवर्तमानत्वम् ; घटात्मना परिणामिमृदवस्थाऽज्ञानकार्यत्वं वा, यथा रजतविवर्तत्वं तदवच्छिन्नचैतन्यस्य, तदवच्छेदकत्वेन शुक्तेः प्रातिभासिकस्थले रजताद्यात्मना परिणामिमूलाज्ञानावस्थाविशेषतूलाज्ञानविषयत्वम् , इति न दोषलेशोऽपि । इदमेव घटरूपेणपरिणताज्ञानविषयत्वमपि । तत्राज्ञानं मृदवस्थमिति पूरणीयमिति तु विशेषः। सति चैवं तत् किं घटत्वावस्थाज्ञानविषयत्वमित्यादिविकल्प-तद्दूषणानां नावसरः ॥

ब्रह्म-मायोभयोपादानत्वेऽपि कार्यात्मना जगतो ब्रह्मणो भेद एव

तेन च घट-पटान्तःकरणाद्युपाधीनां तत्तत्साक्षात्परिणाम्यज्ञानावस्थाविषयचैतन्यविवर्तानामप्यविद्यापरिणामत्वेन, चैतन्यविवर्तत्वेन चाविद्योपादानकत्वेन चाविद्यात्मना, ब्रह्मात्मना च कारणात्मनाऽभेदेऽपि तत्तत्कार्यात्मना भेदात् तत्तदवच्छेदकभेदेन चैतन्यभेदोऽप्यर्थसिद्धः।

अद्वैतसिद्धान्ते घटादिषु प्रत्यक्षत्व-परोक्षत्वविवेकः

तदुक्तम्—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना ॥"

इति । सत्यप्येवं वहिर्निर्गतान्तःकरणवृत्तिसम्बन्धप्रयुक्ताभेदाभिव्यक्त्या, उपाध्योरेकदेशस्थत्वेनोपधेयभेदाप्रतीत्या वा प्रत्यक्षत्व-परोक्षत्वादिविवेको घटाद्यवच्छिन्नान्तःकरणावच्छिन्नचैतन्याभेदेन, तयोर्भेदेन वा निरूह्यत इति त्वन्यदेतत् ॥

एतेन—अज्ञानावच्छिन्नचैतन्य-घटावच्छिन्नचैतन्ययोर्भेदोऽपि—व्याख्यातः; तत्रावच्छेदकरूपभेदेनावच्छेद्यरूपस्यापि भिन्नतया तत्तद्रूपेण भेदस्य वा, अभेदस्य वा वक्तव्यत्वेन रूपान्तरेणाभेदोऽस्तीति रूपान्तरेण भेदस्य सर्वथा निरासो नोपपद्यते ॥

प्रलयावच्छिन्नचैतन्यस्य नाभेदः

एतेन—घटावच्छिन्नं चैतन्यं प्रलयावच्छिन्नं चैतन्यं चैकं स्यात्; उभयोरपि वस्तुगत्याऽविद्यावच्छिन्नत्वादिति—परास्तम्। तत्र यद्यविद्यात्मनाऽभेद आपाद्यते, तर्हि किमिति प्रलयपर्यन्तमनुधावनम्। घटप्रतीतिदशायामपि हेमात्मना कटककुण्डलादीनामिवाभेद इष्ट एव। न चैतावता कुण्डलात्मनाऽपि कटक-कुण्डलयोरिव घटात्मना, पटात्मना वा कार्यत्मना वाऽभेदः सर्वलोकविरुद्धोऽङ्गीकारमर्हति ॥

संविदनित्यत्वानुमनसमर्थनोपसंहारः

अत एव 'सन् घटः' इत्येवं सर्वेषां लोकानामनुभवः। अयं हि मृदात्मनाऽविद्याया इव, सदात्मनाऽधिष्ठानस्य ब्रह्मणोऽप्युपादानत्वेनैव निर्वहति। अत एव दृग्दृश्यविवेके—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति। तदेवं संवित्, नोत्पन्ना, प्रागभावाप्रतियोगित्वादिति सुस्थमनुमानम्। संविच्छब्देनात्र लोकानुभवानामग्रहणात्, नित्यसंविन्मात्रस्य स्वरूपज्ञानस्यात्मन एव विवक्षणाच्च। "नाभावः" इति सूत्रे संविदोऽपि प्रागभावोपलम्भसाधनं तु लोकानुभवाभिप्रायम्, धर्मभूतज्ञानाभिप्रायं वा। न च लोकानुभवः, धर्मभूतज्ञानं वा संविन्मात्रं स्वरूपज्ञानात्मकं नित्यमात्मस्वरूपम्, यत्तु प्रकृते पक्षतया विवक्ष्यत इत्यलमधिकेन ॥

॥ इति संविदनुत्पत्तिः ॥

## संविन्निर्विकारत्वोपपत्तिः

### उपाधिभेदेनोपहितजीवेश्वरभेदः, अनुपहितरूपेण तु संविन्मात्ररूपेणैक्यमेव

जीवत्वोपलक्षितं संविदात्मस्वरूपमेकमेवेत्यद्वैतिनः, यत्राहमर्थो न मुख्यात्मा, किन्तु मिथ्यात्मा। तदुक्तम्—

"गौण-मिथ्यात्मनोऽसत्त्वे पुत्र-देहादिबाधनात्॥
सद्ब्रह्माहमित्येवं बोधे कार्यं कथं भवेत्॥"

इति। अत्रा'हं ब्रह्मे'ति ब्रह्मसामानाधिकरण्यं प्रत्यगात्मनोऽहंत्वस्य भूतपूर्वगत्या, न तु वर्तमानतया। अत एव तत्र तस्याविवक्षयाऽभेद एव सामानाधिकरण्यम्। जीवात्मबहुत्वं तु तदुपाधिभेदात्। "तदुक्तम्, न त्वेवाहमि"ति श्लोकव्याख्यावसरे गीताभाष्ये—'अहम्' 'त्वम्' इमे जनाधिपाः' इति शरीरभेदाभिप्रायः, न त्वात्मभेदाभिप्रायः—इति॥

ईश्वरस्तु स्वरूपतः, उपाधितश्चैक एव। निर्विशेषं-ब्रह्मैकमेव। तस्यापि भेदस्तु तत्तदुपाधिसत्त्वाद्यधिकगुणमायोपाधिभेदेन ब्रह्म-विष्णु-रुद्रात्मनैश्वरेण॥

### अनुभूतिपदार्थो न वृत्तिज्ञानम्, धर्मभूतज्ञानं वाऽत्र

तत्र तत्तदुपाध्यवच्छिन्नचैतन्यात्मना स्फुरत् संविन्मात्रं तु न लौकिकानुभूतिः। सा तु तत्तदाकारान्तःकरणवृत्तिविशेषः, धर्मभूतज्ञानं वा, न प्रकृतानुभूतिशब्दार्थः, इति वृत्तीनाम्, धर्मभूतज्ञानस्य वा नानात्वे नाद्वैतिनोऽपि विसंवदन्ते॥

### संवित्पदेन धर्मभूतज्ञानमभिप्रेत्य निर्विकारत्वानुमाननिरासोऽनुक्तोपालम्भनम्, ब्रह्मविवर्तोपादानतायां तस्य सविकारत्व-निर्विकारत्वोभयाविरोधश्च

संविद्विचारप्रकरणं सर्वमादित आन्तं धर्मभूतज्ञानमवलम्ब्यैव शतदूषण्याः, भूषणस्य च, न तु वृत्तिज्ञानम्। अत एव शतभूषणी लौकिकानुभूतिपक्षकत्वं संविन्निर्विकारत्वानुमाने परित्यजति। निर्विकारत्वं चात्र यद्यनुत्पत्तिः, यदि वाऽविनश्वरत्वम्, उभयथाऽपि तदनुत्पत्तिवादकल्पगतैव

नीतिरत्रापि, इति पूर्वेणैव प्रकरणेन यद्यपि गतार्थमिमपि प्रकरणम् ; तथापि यत्तानुरूपबलिन्यायेनैवेदमपि प्रकरणं प्रक्रियते ॥

इदमेवाभिप्रेत्य शतभूषणी—सर्वविकाराधिष्ठानमपि ब्रह्म तदात्मना विवर्तमानत्वात्, तदधिकसत्ताकत्वेन वस्तुतो निर्विकारमेव। यथा रजतात्मना विवर्तमानमिदम्, एवमज्ञानान्ता अपि विकारा ब्रह्मणो विवर्तत्वात् मिथ्याभूताः इत्यध्यारोपापवादनयेन सविकारम्, अविकारं च ब्रह्म। अत एव श्रुतिः—"सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयमि"ति ॥

तत्र रजतात्मना विवर्तमाना शुक्तिर्न रजतसमसत्ताका, सत्यरजतकार्यकरी वा; अन्यथा शुक्त्याऽपि रजतकार्यकटक-घटादिनिर्वाह आपद्येत। सर्वज्ञानयाथार्थ्यवादेऽपि तस्या रजतकार्यकारित्वं नेष्टमिति स्थिते, का वा कथा मिथ्यारजतवादे ॥

### परिणाम-विवर्तपदयोः पर्यायत्वात् क्वचित् परिणामस्थाने विवर्तपदस्य, विवर्तस्थाने परिणामपदस्य च प्रयोगेण नाद्वैतव्याघातः

विवर्तमानत्वं ह्यविद्यापरिणामात्मानां ब्रह्मणो तदात्मना भानमात्रम्, न तु तथा भावावस्थाविशेषः, इति न तत्रातिशयापेक्षा। व्यक्तं चैतत् 'कृत्स्नप्रसक्त्यधिकरण'भामत्यादौ, इति न विवर्तैरनन्तैरपि ब्रह्मणः सविकारता। उक्तं च भाष्ये—"तत्रैवं सति तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते"इति। न हि परिणाम इव विवर्तोऽप्यवस्थाविशेषो विवर्तमानस्याविद्यात्मतां भजते, किन्तु तस्या अपि निवृत्तौ बाध्यतेऽपि, न तु विवर्तस्तथा; विवर्तमानस्य तस्य विवर्तमानात्मताया अभावेन तेन सह निवृत्त्याः, बाधस्य वाऽभावेन परिणामिन इव विकारकथाया एवायोगात् ॥

वृश्चिकात्मना गोमयस्य विवर्तकथाऽपि परिणामिकथैव, तत्र विवर्तपदस्य परिणामपरत्वात्। साङ्ख्या हि परिणामविवर्तपदे पर्याये मन्यन्ते, इत्यद्वैतिनां विवर्ताभिप्रायमेव न सर्वत्र विवर्तपदम्। न चाद्वैतिनो ब्रह्मपरिणामितावादमुरीकुर्वन्ति, इति "दृश्यते तु"इत्यत्र विवर्तपदप्रयोगमात्रं न ब्रह्मनिर्विकारतासिद्धान्तं प्रतिरुणद्धि ॥

तत्राध्यारोपनयेन सविकारत्वम्, निर्विकारत्वं तु विषयमिथ्यात्वेऽपीति सूचयितुमेवोक्तानुमाने—विकारात्मना विवर्तमानत्वादिति दलनिवेशनम्। तेन च परिणामिनामिवावस्थाविशेषो न विकारो विवर्तमानस्येति सूच्यते ॥

प्रकृतनिर्विकारत्वानुमानोपपत्तिः

तत्र विकारित्वं परिणामिदृष्ट्या, विवर्तमानदृष्ट्या न विकारित्वमपि सिध्यति। अतो विवर्तमानत्वं न विकारसाधकम्, इति न विरुद्धत्वमुक्तानुमानस्य। तदिदं सिद्धम्—अनुभूतिः, निर्विकारा, अनुत्पन्नत्वादित्यनुमानात् संविन्निर्विकारत्वं सुस्थमिति ॥

परिणामिन्या अविद्याया बाध्यत्वान्न सविकारत्वमिति न तत्र व्यभिचारः

तत्र निर्विकारत्वं धर्मिसमसत्ताकविकारराहित्यम्। तच्चानुत्पन्नायामविद्यायां यद्यपि नास्ति, तथापि सविकाराऽप्यविद्या; तस्या अपि बाध्यत्वात्, वस्तुगत्या सविकारा न तिष्ठतीति पक्षसमत्वाद् न तत्र व्यभिचारः ॥

अत एव चित्सुखाचार्याणाम्—'अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगीत्यनुमानम्। तत्राऽविद्यानिवृत्तेः प्राग् सविकारत्वं ब्रह्मणोऽपि, तथापि भाविनीमपेक्ष्यैव ब्रह्मणो निर्विकारत्वमत्र साध्यते। तच्च विकाराणां तद्विवर्तत्वे परिशिष्यति। सविकारत्वं परैरापाद्यमानं विकारात्मनाऽवस्थानमेव, न तु विकारित्वमात्रम्; सिद्धसाधनात् ॥

सविशेषब्रह्मपरिणाम्युपादानत्ववादि इवाविद्योपहितब्रह्मविवर्तोपादानतायां न सविकारत्वमर्थक्रियाकारि

तत्राविद्याशबलायां चित्येव सविकारत्वं निर्विकारत्वम्, चाद्वैतिनो मन्यन्ते; यावदविद्यमविद्याख्यविकारेणैव सविकारत्वात्, किन्तु शुद्धचिन्मात्रस्य शबलावस्थायां सविकारत्वेऽपि तत्त्वसाक्षात्कारेऽविद्यान्तसर्वविकारनिवृत्त्या निर्विकारत्वम्। तत्र यदि तादृशीं शुद्धचितमविकारामेव मन्यते भूषणादिकम्, शुद्धचितो निर्विकारत्वे विवादपुरस्कारेण, तर्हि कस्य वाऽद्वैतमते निर्विकारत्वानुपपत्तिस्तेनाऽऽपाद्यते ॥

तत्र सविशेषमेव ब्रह्म स्वतः, विशिष्टरूपेण वा परिणममानं परमते कथं निर्विकारं नाम ? किं परसिद्धान्ते न कोऽपि विकार एवास्ति ?

विद्यमानो वा स ब्रह्मसम्बद्धरूप एव वर्तते, तर्हि तदसम्बन्धद्धस्य जगतः सर्वस्य विकारजातस्य कथं वा तत्कारणकत्वमपि? तत्रापि हि सूक्ष्मचित्, सूक्ष्माचिद्वा विकुर्वाणैव ब्रह्मणाऽपृथक्सिद्धा वर्तते, इति कथं निर्विकारत्वम् ॥

तत्र यदि तत्सम्बन्धप्रयुक्ततदीयदोषाभाक्त्वमेव निर्विकारत्वम्, तर्ह्यद्वैतसिद्धान्तेऽपि समानम्। विशेषस्तु प्रकृत्यादेः सर्वात्मना निवृत्तौ वस्तुतोऽविकारत्वमित्यद्वैतम्। प्रकृत्यपृथक्सिद्धस्यैव तद्दोषमात्राभाक्त्वमिति विशिष्टाद्वैतमतम्। तत्र यावत्प्रकृतिसम्बन्धं परमार्थतोऽप्रकृतिकत्वमिति कल्प एव वरः, दुष्टा प्रकृतिरेव यद्यपि तस्य शरीरम्, परन्तु तद्दोषमात्रं नात्मनि प्रसरतीति कल्पनायां न केवलं परमात्मनः, किन्तु जीवात्मनोऽपि सशरीरत्वं नानर्थाय ॥

तत्र यदि सशरीरत्वाज्जीवस्य तद्दोषभाक्त्वं नियतम्, कथं तद् न परमात्मनोऽपि। यदि श्रुतिस्तत्र प्रमाणम्, तर्हि सर्वत्र तत्कारणत्वं कथम्? जीवोऽपि प्रत्यगात्मा शुद्धो निर्विकार इत्येव श्रुतयो वदन्तीति को वा विशेषो जीव-परमात्मनोः। शरीरविनश्वरत्वं तूभयत्र समानम्; प्रकृतेरपि नश्वरतायाः श्रुतिसिद्धत्वात्, इति वस्तुतो निर्विकारत्वं तयोः समम् ॥

### हेतौ धर्मिसमसत्ताकत्वविवक्षायां नाविद्यायां व्यभिचारः

यदा तु—अनुत्पद्यमानत्वं धर्मिसमसत्ताकमेव हेतुरत्र, इति न व्यभिचारः, ब्रह्मणि तस्याभावस्याधिकरणात्वस्मपत्ते तद्विषमसत्ताकएवोत्पत्त्यभाव इति न दोषः। न च परमार्थनिष्ठस्याभावस्यापरमार्थप्रतियोगिकस्यापि परमार्थिकत्वं नियतम्; मिथ्यात्वमिथ्यात्वकल्पे तस्यापि ब्रह्मण्यपरमार्थप्रपञ्चाभावस्यापि व्यावहारिकत्वेन व्यभिचारात्। यथा चात्रैवं सति न प्रपञ्चसत्यतापातः, तथा व्यक्तमन्यत्र ॥

### ब्रह्मण एव कार्य-कारणभावायोगः, सप्रपञ्चत्वं कारणावस्थायाम्, निर्विकारत्वं निष्प्रपञ्चत्वं वा बाधावस्थायामिति विशेषः

ब्रह्मणोऽपि कार्यत्ववादस्तु कार्य-कारणयोरैक्यायोगाद् नोपपद्यते। तत्र कारणावस्थं ब्रह्मैव यदि कार्यावस्थमपि, तर्हि न कार्यत्वम्। यदि तत् ततो भिन्नम्, तर्हि न तद् ब्रह्मैव कार्यम्, कार्यात्मना भेदे तु—ब्रह्मात्मनाऽजायमानत्वात् "सद्भावेन ह्यजं सर्वमि"त्यजातवादे पर्यव-

सानम्, निर्विशेषसंविदात्मना तु न कारणत्वम्, न वा कार्यत्वम्, परिणामरूपोऽपि विकार इति तु निष्कर्षः ॥

वस्तुतस्तु—पूर्वेण प्रकरणेन पूर्वावधिराहित्यस्योपपादनादुत्तरावधिराहित्यमेव निर्विकारत्वेनात्र विवक्षितम्; तथापि स्वसमानसत्ताकोत्तरावधिराहित्यस्यैवात्र विवक्षणाद् नाविद्यायां व्यभिचारः। तत्र स्वसमानसत्ताकत्वं यद्यपि ब्रह्मणि न प्रसिद्धम्; तथाप्यन्यत्र प्रसिद्धत्वाद् न विकारनिषेधानुपपत्तिः ॥

अस्तु वा ब्रह्मण एव स्वशब्देन ग्रहणम्, तत्समसत्ताकत्वं चोत्तरावधेः, तावताऽपि तत्र विकारस्याप्रसिद्धिरेव तद्राहित्यं निर्वाहयिष्यति ॥

एतेन—स्वसमानसत्ताकोत्तरावधिकभिन्नत्वं निर्विकारत्वमपि—व्याख्यातम्; तत्र व्यावहारिकघटादिनिवृत्तिर्मृदादिरूपा तत्समसत्ताकैव। अयमेव न्यायः शुक्तिरूप्यादावपि; रजतनिवृत्तेरपि तदुपादानतूलाविद्यारूपतयोभयोरपि प्रातिभासिकत्वाविशेषेण समसत्ताकत्वात् ॥

एतेन—प्रागभावे व्यभिचारोऽपि—परास्तः, तस्याप्याविद्यकत्वेनाविद्यायां व्यभिचारपरिहारनीतेरविशेषात्। भावत्वे सतीति विशेषणमपि यथाश्रुताभिप्रायेण। अविद्याया अपि तृतीयप्रकारत्वेनानिर्वचनीयत्वम् ॥

सदसद्विलक्षणत्वमेवाविद्यायाः पूर्वाचार्यसंमतम्। तत्त्वप्रदीपिकोक्ता भावाभावविलक्षणा तृतीयप्रकारैवाऽविद्या ब्रह्मसिध्यादेरपि संमता, इति नात्र तत्त्वप्रदीपिकाकाराणामपूर्वा काऽपि कल्पना। विवरणाचार्याणामपि ज्ञानप्रागभावत्वखण्डन एव तात्पर्यमिति व्यक्तमद्वैतसिध्यादौ। सत्त्वासत्त्वयोः परस्परविरहरूपत्वासंभवस्तु न्यायचन्द्रिकायां व्यक्तः ॥

### सत्त्वासत्त्वस्वरूपनिर्णयः

तत्र भावत्वं सत्त्वम्, अबाध्यत्वम्, सद्रूपत्वं वेत्यनर्थान्तरम्। असत्त्वं स्वरूपतः, प्रतीतितश्च वस्तुत्वाभावः, यथा शशविषाणादीनां क्वचिदुपाधौ सदिति प्रतीत्यविषयरूपम्। तत्र ब्रह्म भावरूपमेव, शशशृङ्गादिकमभावरूपमेव, प्रपञ्चस्तूभयविलक्षणः, इति भावाभावविलक्षणत्वेनानिर्वचनीयत्वमविद्याया अपि ॥

तत्र यद्यपि—ब्रह्मणो निर्विकारत्वे भावत्वमपि हेतुः; तथाप्युदुष्टत्वाद् हेत्वन्तरं विवक्ष्यते। प्रागभावव्यावर्तनार्थं विशेषितभावत्वमात्रस्य हेतुत्वे तु निर्विकारस्योत्तरावधिराहित्यस्याप्यत्र भावत्वरहितत्वात् , हेतु-साध्ययोरैक्यापत्तिः। अतो विशिष्टो हेतुरत्र विवक्ष्यते॥

निर्विकारत्वं हि स्वरूपतो विकाराभाव एव; एकसत्तावादे विकारे पारमार्थिकत्वस्यासंभवात्। स तु ब्रह्मण्यविकारे, न तु प्रपञ्चे; तस्य स्वतो विकारित्वात्। अत्र पक्षे समसत्ताकत्वस्याविशेषणाच्च न दोषः॥

आनन्दादिधर्माणां कल्पितानां न विकारत्वम्, अतो ब्रह्मणि न बाधः, धर्ममात्रस्याविकारत्वात्,

"आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः" इति पञ्चपादिकासिद्धान्ताभिमता धर्मा अनाद्यविद्याकल्पिताः। अत्र अनन्दादयोऽनाद्यज्ञानप्रयुक्ता ब्रह्मणो नाविद्याया उत्पत्त्यादिकमिव परिणामविशेषाः, किन्तु धर्ममात्राः कल्पिताः, इति न तैर्ब्रह्मणो निर्विकारत्वस्य बाधः; उत्पत्त्यादिभावधर्माणां परिणामनिबन्धनानामेव विकारशब्दार्थत्वात् , निर्विकारत्वानुत्पन्नत्वयोः समव्याप्तत्वात्। यत्र यत्रोत्पन्नत्वम , तत्र तत्र निर्विकारत्वाभाव इति व्याप्तिशरीरमपि न दुष्टम्॥

अन्यथा श्रीभाष्यमतेऽपि ब्रह्मणो निर्विकारत्वं कथम्? यदि श्रुतिबलात् , तर्ह्यद्वैतेऽपि समानम्। अनुमानं तु तदर्थोपपादनमात्रार्थत्वाद् न स्वतोऽद्वैतमतेऽपि प्रमाणम्। यथा च परिणामविशेषत्वाभावात् सर्वज्ञत्वसर्वशक्तित्वादिकं न विकारः; षड्भावविकारानन्तर्भावात् , निष्कृष्टस्येश्वरतत्त्वस्य संविन्मात्रस्यैव निर्विकारत्वसाधनाच्च, तथा सार्वज्ञ्यादीनामीश्वरधर्माणां विकारत्वेऽपि संविन्मात्रनिर्विकारत्वं न विरुध्यते॥

जीवस्यापि निष्कृष्टं संविन्मात्रमादाय निर्विकारत्वापादनं त्विष्टापादनमेव; तत्साधारण्यात् पक्षस्य, सार्वज्ञ्यादीनामीश्वरधर्मविशेषाणामपि विकारपदार्थत्वे कथं श्रीभाष्यमतेऽपीश्वरस्य न सविकारत्वापत्तिः? भोक्तृभोग्यभावप्रकारा एव विकारपदार्था इति केन वोपदिष्टम्? किं श्रीभाष्यमते षड्भावविकारा न विकारपदार्थाः, यद्योम् , तर्हि ब्रह्मपरिणामवादेन भोग्य-भोक्तृभावप्रकारातिरिक्तविकारपदेन किमपराद्धम्? कथं वा सर्वस्य जगतः, प्रकृत्यादेरपि वा न निर्विकारत्वम्?

### सविशेषस्य ब्रह्मणो विशेषाणामपि विकारत्वापत्त्या न निर्विकारत्वोपपत्तिः

तत्र सविकारमायाशरीरकस्य, तद्विकारजगच्छरीरकत्वस्य च परमात्मनो नित्यसम्बद्धस्यापि यदि निर्विकारत्वम्, तर्हि आरोपितजगदधिष्ठानस्य विनश्वरस्वभावाविद्याविषयस्य, तदाश्रयस्य च ब्रह्मणः कथं न निर्विकारत्वम्? उभयथाऽपि सृज्य-पाल्य-संहार्यजगद्भेदस्य तत्तदभिमतप्रकारस्याऽऽरम्भणाधिकरणन्यायसिद्धस्य स्वीकाराद् निर्विकारत्वं समानम्। स्रष्टृत्वादिकं तु ब्रह्मणोऽविद्याशब्दलक्ष्याविद्यानिवृत्तौ बाध्यत इति परं विशेषोऽद्वैतसिद्धान्ते। तत्र विशेष्यब्रह्मानुपादानत्ववादः, विशेषणमात्रोपादानत्ववादश्चाविदुषामेवेति लिखद् भूषणम्—शतदूषणीकारम्, वादावलीकारम्, किं बहुना? श्रुतप्रकाशिकाकारम्, विकारापुरुषार्थयोः चिदचिद्रूपदेहमात्रगतत्वाद् न ब्रह्मणि प्रसक्तिरिति वदन्तं नयद्युमणिकारम्, अन्यांश्च स्वसम्प्रदायाचार्यानप्यविदुषोऽभिप्रैति ॥

### ब्रह्मोपादानतायां भास्करमतप्रवेशापत्तिः, तत्र भास्कराद्वैत-श्रीभाष्यसिद्धान्तनिष्कर्षः

को वा विशेषो विशिष्टोपादानतापक्षस्य भास्कराद्यभिमतब्रह्ममात्रोपादनतापक्षस्य च? तत्र भास्करमते ब्रह्मण एवाचिच्छक्त्यात्मनैव परिणामाभ्युपगमाद् यदि विकारप्रसक्तिः, तर्हि विशिष्टपरिणामितायां विशिष्टस्य कथं न विकारप्रसक्तिः? यदि विशेषणस्य चिदचिच्छरीरयोरिव विकारापुरुषार्थादिसम्बन्धः, तर्हि कुतो वा न विशेष्यस्य ब्रह्मणोऽपि। यदि विशेषणमात्रस्य, परिणामित्वम्, तर्हि किंवाऽधिकस्य विशिष्टोपादानत्वस्य कृत्यम्? अधिकमुपादानत्वशोधनावसरे परीक्षिष्यते ॥

यद्यप्यद्वैतमत एवोपादानत्वं ब्रह्मणो नोपपद्यते, तत्रोपादानोपादेयभावो नासत्कार्यवादेनानभिमतेन, न वा सांख्याभिमतेन सत्कार्यवादेन ब्रह्म-जगतोः, तथापि सर्वविवर्तवादेनाद्वैतब्रह्मसिद्धौ विस्तृतं प्रथममुद्गरे, इति नायमेकान्तः सांख्याभिमतः सत्कार्यवाद एव वेदान्तसिद्धान्तः, न वा तत्र संप्रतिपत्तिः ॥

सत्कार्यवादो हि कार्यात्मना कारणस्यावस्थाम्, सामग्रीमिश्रितकार्यावस्थाया अभिव्यक्तिमात्रं वाऽऽश्रित्य। तत्राभिव्यक्तिरपि स्वरूपतः सती वा,

असती वेति विचारेऽनवस्थापत्त्या दुर्वचेति शतदूषण्यपि तद्वादं निरस्य-त्युत्तरत्र, कामं सा कथा यापि कापि भवतु; प्रकृतेः कार्यात्मनैवाऽऽविर्भाव इति तु सम्प्रतिपन्नम् ॥

तत्र तत्रोपादानत्वं कथं जगतः? किं प्रकृत्यात्मतेव ब्रह्मात्मताऽपि सृष्टेः पूर्वं जगतः सत्येव प्रकृतिवद् ब्रह्मणोऽपि परिणामवादेन ? यदि सत्कार्य-वादः, तर्हि प्रकृतेरपि मृदात्मना कार्याया एव घटाद्युपादानत्ववत् , प्रकृति-परिणामितयैव तदितरोपादानत्वमिति वक्तव्यम्, इति भास्करमतादवि-रोधः श्रीभाष्यसिद्धान्तस्य। तत्र च प्रकृतेरप्यनित्यत्वं ब्रह्मणोऽपि, इति महाननाश्वासः। न चारम्भवादो युक्तः अत एव शुक्तिरजतादिन्यायेना-विद्या-ब्रह्मोभयोपादानत्वं रूपभेदेन—परिणममानतया, विवर्तमानतया चेति वक्तव्यम्। तेन च नारम्भवादः, न वैकान्तेन परिणामवादः, किन्त्वंश-भेदेनोभयविधमुपादानत्वमिति व्यवस्था। तेन च "अजामेकाम्" इत्यादि-श्रुतिसिद्धप्रकृत्युपादानता, "यतो वे" इत्यादिवाक्यसिद्धा ब्रह्मोपादनता च दृढीभवति ॥

### सर्वस्य ब्रह्मणि बाधात् न सविकारत्वप्रसङ्गोऽपि

तत्र ब्रह्मण उपादनत्वेन तदुपादेयस्य ब्रह्मणाऽभेदो नाम तद्व्यतिरे-केणाभावः, ब्रह्मण एकस्यैवाधिष्ठानतत्त्वसाक्षात्कारदशायां परिशेषः पर्यव-स्यति; यथा शुक्तितत्त्वसाक्षात्कारे शुक्तिरेव परिशिष्यति, इति परिशेष-सिद्धब्रह्ममात्रसत्त्वमभिप्रेत्यैव बाधायां सामानाधिकरण्यं "सर्वं खल्विदं ब्रह्म" इत्यादौ। न चान्यविधयोपादानत्वं ब्रह्मणः सुनिरूपम् ॥

तत्र शरीरित्वं निरस्तसमस्तदोषत्वं च व्याहतम् ; लोके तथाऽदर्शनात्। शास्त्रप्रामाण्यात् सशरीरत्व-निरस्तसमस्तदोषत्वोभयकल्पनापेक्षया ब्रह्मणि सजातीय-विजातीय-स्वगतसर्वविशेषशून्यत्वेन सर्वेषां तेषां दोषत्वेन च निरस्तसमस्तदोषत्वमात्रकल्पनमेव वरम्, येना'ध्यारोपापवाद' न्यायेन सविशेषत्वम्, तन्निषेधेन निर्विशेषत्वं चोभयमुपपद्यते ॥

### सर्वशरीरत्वे ब्रह्मणो न निरस्तसमस्तदोषत्वाभावनिर्वाहः

अन्यत्र शरीरसम्बन्धेनानन्तकल्याणगुणानामदर्शनात् दिव्यमङ्गलवि-ग्रहेऽपि समस्तकल्याणगुणाकरत्वमपि परास्तम् ; अन्यथा मनुष्यगन्धर्व-गन्धर्व-कर्मदेवाऽऽजानजदेवेन्द्र-बृहस्पति-प्रजापतीनां प्राप्तब्रह्मलोकानां

वैकुण्ठवासिनां नित्यसूरिणामपि दिव्यमङ्गलविग्रहाणां समस्तकल्याण-गुणाकरत्व-निरस्तसमस्तदोषत्वबाधापत्त्या न मुक्त-परमात्म-विवेकः। तत्र तारतम्यकल्पनायां तु नित्यदिव्यमङ्गलत्वहानिः, मोक्षस्य सातिशय-त्वापत्तिश्च ॥

एतेन—"जगद्व्यापारवर्जमि"ति सूत्रमपि—व्याख्यातम्; अन्यथा तत्क्रतुन्यायेन कथं न जगत्कारणत्वमपि मुक्तानाम्? कुतश्च तन्न्या-यस्य संकोचः? जगत्कारणत्वस्यानुपास्यत्वे किं वा प्रयोजनं तदुपन्यासस्य? अद्वैतमते तु निर्विशेषतत्त्वोपदेशोपयोगितया तदुपन्याससार्थक्यमिति व्यक्तमधस्तात् ॥

इदमेवात्र पृच्छ्यते—यदि भगवतः सशरीरस्यापि निरस्तसमस्तदो-षत्वम्, तर्हि कुतो वा भगवतो रामचन्द्रादेर्निरतिशयदुःखाद्यनुभवः? अभिनयमात्रं तु स्थितप्रज्ञानां समाधितो व्युत्थितानां गौणबद्धानामपि समानम्। अयमेव न्यायो वैकुण्ठवासिनोऽपि भगवतो दुःखाद्यभिनयक-थायाम्। श्रुतिवशात् तत्त्वनिर्णयकथा तु निर्विशेषवादेऽपि समाना, इति निर्विकारत्वश्रुतिरद्वैतसिद्धान्त एव स्वरसा ॥

॥ इत्यनुभूतिनिर्विकारत्वोपपत्तिः ॥

## संविद्नानात्वोपपत्तिः

संविन्नानात्वं वृत्तिज्ञानमपेक्ष्येष्टम् , संविद्रूपत्वेन त्वपसिद्धान्तः,
अहमर्थोऽपि न संवित् , अतो न विरोधः

पूर्वप्रकरणेनैवेदमपि प्रकरणं गतम् ; निर्विशेषसंविद एवानुभूतिशब्दमुख्यार्थताया अत्रापि विवक्षणात् , तस्याश्च पूर्वप्रकरणोपक्रमोक्तरीत्या सर्वोपाधिशून्याया उपाधिभेदप्रयुक्तनानात्वस्यावाधात् स्वरूपैक्यमेव । लौकिकानुभवानां नानात्वं स्वरूपतोऽप्यस्ति, इति स्वीकारात् तदनानात्वभङ्गो नानिष्टोऽद्वैतसिद्धान्तेऽपि ॥

"नानाऽऽत्मानो व्यवस्थातः" "शास्त्रसामर्थ्याच्चे" त्यादयोऽहमर्थोपाधिकात्मभेदाभिप्राया न निर्विशेषसंविन्नानात्वे प्रमाणानि । "न त्वेवाहमि" ति गीताभाष्यमपि आत्मनामौपाधिकं नानात्वमुररीकुर्वाणं निरुपाधिकसंविन्मात्रैक्यमेव सिद्धान्तयति । तेन—

"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥"

इति परमात्मनो जीवात्मनश्चौपाधिकभेदाभिप्रायम् , "न त्वेवाहमि"ति तु निरुपाधिकसंविन्मात्राभिप्रायम् । अत एव—

"संविदाकाशमेवाहं भवानपि जना अपि ।
म्रियामहे नो कदाचित् कुतः संविद् विनश्यति ॥"

इति योगवासिष्ठवचनमपि, "न त्वेवाहमि"ति श्लोकव्याख्यारूपं तत्समानार्थं चोपपद्यते ॥

'बहूनि मे व्यतीतानि' 'न त्वेवाहमि'त्यादेर्नात्मनानात्वे
प्रामाण्यम्

"यत्तु = बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।" इति श्लोकः सार्वकालिकस्थितिमात्रपरः, "न त्वेवाहमि"त्यपि तत्पर एव—इति, तदिदं 'बहूनि' 'जन्मानि' 'व्यतीतानि'पदस्वारस्यात् बहुजन्मपरम् । सत्स्वपि बहुषु जन्मसु शरीरभेदमात्रम् , नात्मभेदः, शरीरसंश्लेष-विश्लेषयोरेवात्मनो जन्ममरणरूपत्वात् ; उभयत्राप्यात्मैक्यप्रतिपादनपरत्व एवोक्तश्लोकस्वारस्यमिति फलतोऽविशिष्टम् । योगवासिष्ठवचनप्रामाण्यं न कुतो भूषणमभिप्रैति ? यदि स्वसिद्धान्तविरुद्धत्वात् , तर्हि विविच्यताम्—किं "ज्ञानी"त्वा-

त्मैव मे मतमि''ति वाक्यमप्यप्रमाणम् ? तत्रापि हि तात्पर्यचन्द्रिका—त्र्यय-सिद्धान्तो भवतु वा, मा वा, कृष्णसिद्धान्तस्त्वयमेवेति वदति ॥

न च "संविदाकाशमेवाहं भवानपि जना अपि" इत्यप्यात्मभेदाभिप्रायम्; 'अहं भवान्' 'जना' इति भेदव्यपदेशात् , सर्वत्र संविदात्मनाऽभेदव्यपदेशो हि नान्यथोपपद्यते । तत्र सर्वेषां संविद्रूपत्वं वा भवतु सूक्ष्म-दृष्ट्या वा भवतु, दृष्ट्यन्तरेण वा, संविद्रूपेणैक्यं तु निराबाधम् ॥

यत्तु—

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्" ॥

इति "सूक्ष्मत्वादाकाशवदविनाशित्वाभिप्रायदमि"ति तद्वचनाशवर्णनात् , तद् भूषणमतेऽणोर्जीवस्याऽऽकाशवत् स्वतो व्यापकत्ववचनस्यानुपपन्नत्वाद् न सङ्गतम् ॥

गीतायामविनाशित्वमात्मनः संविद्रूपत्वेनैव,

सा चैकैव, न नाना

तत्र भूषणं शरीरविशिष्टाकारेणात्मनां नित्यत्वं यदि नोरीकरोति —शरीरविविक्तमेवात्मस्वरूपमविनाशि बोधनीयमिति, तच्च आत्मनां भेदं सिद्धवत्कृत्यैव, तर्हि "न त्वेवाहमि" ति दृष्टान्ततया भगवत उपन्यासोऽत्र कुतः ? यदि शरीरविशिष्टरूपेणेश्वरस्यापि न नित्यत्वमित्यभिप्रायेण, तर्हि दत्तस्तिलाञ्जलिः सर्वशरीरकपरमात्मनित्यतावादस्य । भीष्मादिनाशप्रयुक्तात् पापाद् भीरुमर्जुनं प्रति तेषामेव नाशे निषेद्धव्ये किमिति वाऽर्जुनस्यापि भगवत इवात्रोपन्यासः ? अतः सर्वेषां जीवानां परमात्मनश्चैक्यबोधनद्वारेणैवात्मनित्यत्वमत्रोपदिश्यत इति वक्तव्यम् ॥

लोकप्रसिद्धोऽप्यात्मभेदः शरीरभेदप्रयुक्त एव, न तु स्वरूपभेदप्रयुक्तः। अत एव—'त्वम्' 'अहं' 'जनाधिपाः' इत्यादिनिर्देशः । ते हि शरीरविशिष्टमेवात्मानमभिदधति । न हि लोकप्रसिद्धमेवात्मानं नित्यं भूषणमपि स्वीकरोति, इत्यलौकिकमेवात्मतत्त्वं संविन्मात्रमत्र नित्यतया प्रतिपाद्यते; अन्यथा सूक्ष्मशरीरस्य, कारणशरीरस्य वा तद्विशिष्टरूपेण वाऽऽत्मनोऽपि स्वतः, उपाधिनाशेन वा नश्वरत्वाद् नित्यत्ववचनमत्र नोपपद्यते ॥

न च प्रमातृस्वरूपमन्तःकरणोपहितम् , अविद्योपहितं वा मुख्यात्मा; सुषुप्ति-समाध्योः, मुक्तौ च तदुपाधिनिवृत्तावपि तदुपाधिविविक्तस्यात्मस्वरूपस्य संविन्मात्रस्य सत्त्वात् । अतोऽत्र संविन्नानात्वविचारे संविद्पदेन

स्वप्रकाशात्ममात्रस्य ग्रहणम् , न लौकिकानुभवानामेव; संवित्पदस्य स्वप्रकाशात्मस्वरूप एव मुख्यत्वात् , तस्य लौकिकानुभवासाधारण्यात् ॥

अत एव श्रुतिः—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यन्तःकरणाविद्याद्युपहितमात्मानमेकमेव श्रावयति । अनुभूतिनानात्वानुमाने प्रत्यनुमानादिविरोधः । स्मरति च—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"
"सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः ॥"

इति । अतोऽत्रानुमानम्—अनुभूतिः, न नाना, अजत्वात् , व्यतिरेकेण घटवदिति । अत्र पूर्वोक्तयुक्तिभिरात्मैक्यस्य समर्थनाद् न कालात्ययापदेशः, प्रकृत्यन्तस्य सर्वस्य विनश्वरत्वात् , परमाणुवादस्य सूत्रेषु निरासेन तन्नित्यताया अप्यप्रामाणिकत्वाद् नाप्रयोजकः, न वाऽनेकान्तो हेतुः । सच्चिदानन्दांशास्त्वात्मनोऽविद्याकल्पिता भेदा न स्वयमात्मनः । अनुभूतिपदं त्वखण्डात्मपरम् , न तु कल्पितभेदात्मपरमिति नात्र बाधकथाऽपि ॥

### अनुभूत्यनानात्वानुमानहेतोर्न जीवादौ व्यभिचारः

एतेन—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति वचननिर्दिष्टेष्वजस्येश्वरस्यैक्ये न विप्रतिपत्तिः । तथाऽविद्यायाम् , शुद्धचिति, जीवेऽप्यविद्योपहित एक्ये न विप्रतिपत्तिः । अतो नाविद्यादिषु व्यभिचारोऽजत्वस्य । तत्रान्तःकरणस्यैव जीवोपाधित्वे तु तस्यौपाधिकं जन्यत्वमपीति नाजन्यत्वस्य हेतोस्तत्रान्वयः ॥

### आत्मनां स्वरूपतो भेदाभावे प्रमाणम्, युक्तयश्च

तदेवमात्मनां परस्परनानात्वं परास्तम् ; स्वरूपतो नानात्वनिषेधस्यैवात्मप्रतियोगिकस्याऽऽत्मनि विवक्षणाद् जीवेशभेदोऽप्यनिषिद्धप्रायः । अत एव च गीता पूर्वोक्ता—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"

इति । किं बहुना ? न केवलमात्मनां स्वरूपतो न नानात्वम् , किन्तु संविद्रूपस्याधिष्ठानस्यापि; सर्वेषां तत्राध्यारोपेण तद्व्यातिरेकेण स्वरूपतो

मिथ्यात्वादात्ममात्रपरिशेषात्, यतः कुतश्चन तदन्यतोऽपि भेदो नानुभूतौ संविन्मात्रतायां संभवति ॥

देहादीनां परमात्मव्यतिरेकेणाभावाद् न तद्भेदप्रयुक्तभेदोऽपि वस्तुतः

तत्र देहादेरपरमार्थत्वं तदधिष्ठानसाक्षात्कारबाध्यत्वरूपम्, न तु केनापि रूपेण सत्त्वम्, इत्यधिष्ठानव्यतिरेकेण सर्वाभावे कथं यतः कुतश्चिदपि भेदः संभवदुक्तिकोऽपि ?

तत्र यथा शुक्ति-रजतयोस्तादात्म्यप्रतीतिमात्रम्; प्रातिभासिकमात्रत्वात्, तथा घटादावपि। घटादिवदेव तत्तादात्म्यस्याधिष्ठाने कल्पितत्वादपारमार्थितैव, न परमार्थता; तत्राधिष्ठानव्यतिरिक्तस्य सर्वस्य व्यावहारिकत्वात्। वस्तुतोऽभावस्तूभयत्र समानम् ॥

"युष्मदस्मत्प्रत्ययगोचरयोरि"ति भाष्यस्य जीव-ब्रह्मभेदे प्रमाणत्वनिरासः, तत्रैव 'तदनन्यत्वा'धिकरणमपि

यथा च "युष्मदस्मत्प्रत्ययगोचरयोरि" ति पूर्वपक्षः पूर्वपक्षिदृष्ट्याऽहमर्थमात्मानं मत्वा प्रवृत्तः, न त्वौपनिषदं संविन्मात्रमात्मतत्त्वमाश्रित्य। तत्र च विवेकाग्रहो न संभवति। सिद्धान्तस्तु तत्र विवेकाग्रहोपपादनेनेति, पूर्वमुक्तम्। सिद्धान्त्यभिमतसंविन्मात्रमुख्यात्मतायां त्वज्ञाननिमित्तोऽध्यास उपपद्यते, तत्त्वसाक्षात्कारे तु संविद्व्यतिरेकेण सर्वाभाव एव तत्रापि। अत एवात्र कल्पतरुः—'तदनन्यत्वाधिकरण'सिद्धस्यैवाध्यासस्य प्रत्यक्षागमयोः 'समबलत्वमङ्गीकृत्योपपादनमि'ति ॥

एतेन—संविन्मात्राज्ञानयोर्विरुद्धस्वभावत्वं पूर्वपक्ष्यभिमतमपि—व्याख्यातम्। तत्र पूर्वपक्षश्चैतन्याज्ञानयोर्विरोधमादाय, यमाश्रित्य परेषां सप्तानुपपत्तयः, सिद्धान्तस्तु तयोरविरोधः, वृत्त्यज्ञानयोरेव विरोधः—इति ॥

तत्र पूर्वोत्तरोभयपक्षदृष्ट्याऽस्मत्प्रत्ययगोचरो ज्ञानस्वरूपमात्मैव प्रकाशः, युष्मत्प्रत्ययगोचरोऽन्तःकरणादिरेव तमः, परं तु तयोर्विरोधाविरोधयोर्विप्रतिपत्त्याऽध्यासभाष्यम्। सर्वथा त्वहमर्थात्मतायां विवेकग्रहः, अनध्यासश्च। अध्यासस्तु मुख्याहमर्थस्य संविन्मात्रस्य प्रत्यक्षागम्यत्वात् 'ममान्तःकरणमि'त्यादिभेदग्रहस्य संविन्मात्रात्मविषयभेदग्रहरूपत्वाभावादुपपद्यत इति ॥

"एक आत्मनः शरीरे भावादि"त्यहमर्थस्य कर्तुः शरीराद् भेदं लोक-प्रतीतिसिद्धमनूद्य मुख्यात्मस्वरूपमुपपादयितुमेवेति पूर्वमुक्तम्। सर्वथा त्वज्ञानदशायां तादात्म्यघटकतया भेदभानेऽप्यज्ञाननिवृत्तौ न भेदः, न वा तत्प्रतियोग्यधिष्ठानव्यतिरेकेण सत्त्वमिति सुस्थम्—येन केनापि नानात्वमपि परमार्थतः संविन्मात्रस्य न संभवति—इति । अयमेव 'तदन-न्यत्वाधिकरण'सिद्धान्तः ॥

अनिर्वचनीयत्वादपि भेदसामान्यस्य, न जीवभेदः, जीवेश्वरभेदो वा

निष्कर्षस्त्वद्वैतसिद्धान्ते नासत्कार्यवादः, न वा सत्कायवादमात्रम्, किन्तु सदसद्विलक्षणकार्यवाद, य एव सद्विवर्तवादो नामेत्येव 'वाचारम्भ-णाधिकरण'तात्पर्यम्। 'वाचारम्भण' पदं व्यावहारिकपरम्, नामधेयमिति परमार्थतोऽसत्त्वपरमिति तु विवेकः। यथा शुक्तिरूप्यं व्यावहारिकमात्रम्, प्रतिभासिकमात्रं वा, परमार्थतस्तु नास्ति, यावद्बाधं व्यवहारयोग्यत्वेन प्रामाणिकत्वं वाचारम्भणपदार्थः, नामधेयपदं तु बाधकालीनां दशामादाय स्वरूपतोऽभावमादायेति विभागः ॥

इदमेवाभिप्रेत्याध्यासभाष्यम्—नैसर्गिकोऽयं लोकव्यवहारः केवलं मिथ्याऽज्ञाननिमित्तो यावद्बाधमित्याशयम्। सर्वथा तु तत्त्वम्पदार्थशोध-नावस्थायां भेदव्यवहारः सर्वोऽपि तच्छोधने न प्रतियोगी, भेदो वा को-ऽपीति तत्त्वम् ॥

एतेन—संवित्, न नाना, अजत्वादित्यनुमानमपि—व्याख्यातम्; इदं हि तत्त्वसाक्षात्काराभावदशायाम्। तदा तु नानात्वं व्यवहारिकमनु-वर्तते, इति पक्ष-साध्य-हेतुभावो भेदनिबन्धनो निवर्हत्येव । परमार्थदृष्ट्या हि भेदो निषिध्यते, न तु व्यावहारिकोऽपि, इति भेदमात्रनिषेधे पक्ष-साध्य-हेतूनामैक्यमिति शङ्काऽपि नावसरति ॥

व्यावहारिक एव जीवात्मभेदः, न तु पारमार्थिकः

तत्र व्यावहारिकस्य भेदस्य तत्प्रतियोगिनश्चाध्यासमात्रस्य बाधक-ज्ञानं त्वखण्डाकारवृत्तिर्भेदाविषयिण्येव, यथा प्रातिभासिकरजतबाधक-मियं शुक्तिरित्यधिष्ठानसाक्षात्कारमात्रम्। 'नेदं रजतमिति' तु तद्व्यतिरेकेण रजताभावानुवादमात्रम्, येन तदुत्तरव्यवहाराणां भ्रान्तिदशायां वैल-क्षण्यमवाप्यते। अत्र तु त्वखण्डाकारसाक्षात्कारानन्तरं व्यवहर्ता, व्यव-

हार्यम् , व्यवहारो वा न समस्तीति न तद्भावानुवादोऽपीति त्वन्यदेतत् , शास्त्रचिन्तकाः केवलं विवेचयन्ति शास्त्रेण, सम्यक् परीक्षणं तु व्यवहारदशायामपि, ब्रह्मव्यतिरेकेण किमपि नास्तीति शास्त्रदृष्ट्या बोधो नाबाधितः ॥

वस्तुतस्तु—न केवलं शास्त्रचिन्तकमात्रदृष्ट्या, किन्तु साक्षात्कृतात्मतत्त्वानां राम-कृष्णाद्यवताराणाम्, बादरायणादीनामपि तथा व्यवहारोऽत्र प्रमाणमेव। अत एव सूत्रम्—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति। स्मृतिश्च—

"ज्ञानं विज्ञानसहितमिदं वक्ष्याम्यशेषतः।
यद् ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते॥"

इति। सर्वथा तु तत्त्वसाक्षात्कारो न भेदविषयः, इति नात्मनानात्वं पारमार्थिकं यतः कुतश्चिदपि संविन्मात्रस्य॥

इदमेवाभिप्रेत्य भामती—"अपारमार्थिकप्रतियोगिकः स्वयं चापरमार्थो भेदः" इति। न च भेदापारमार्थ्ये प्रतियोगिपारमार्थ्यं नियतम् ; उभयापारमार्थिकताया अप्यविरोधात् ॥

### अजत्वहेतुकानुभूतिनानात्वनिषेधानुमाननिरासः

न च अनुभूतिः, न नाना, अजत्वादित्यत्राप्रयोजकत्वशङ्का; विपक्षे नानात्वाजत्वयोरेकत्र दर्शनस्य साधनेन बाधकतर्कविघातात्। न चानुभूत्यन्तराणां परस्परमभेदशङ्काऽपि। तानि यदि लौकिकानि, तर्हि तन्नानात्वमेव तदुत्पादकविषयादिभेदेन। संविन्मात्रं त्वेकम् , नावान्तरभेदभिन्नम् , इति प्राच्यानामनुभूत्यवान्तरभेदनिषेधतात्पर्येणोक्तानुमानम् ॥

### अविद्यात्मैक्यापत्तिनिरासः

एतेन—अविद्यायाः परमार्थतो विभागो भेदापरनामा नात्मनश्चेदिष्यते, वस्तुतोऽविद्यैव स्यादिति श्रीभाष्यम्—व्याख्यातम्; तत्राविद्यावशाद् विभागः, परमार्थतस्तु स नास्तीत्यद्वैतसिद्धान्तात् भेदनिषेधेनाभेदपर्यवसानकथा वाचारम्भणम् ; वस्तुस्थितिकथनमात्रत्वादस्य, इति नात्रोन्नेयं किमपि। भ्रान्तिदशायां भेद इत्युन्नयस्तु विषयसाक्षात्कारदशायां नास्तीत्येव ॥

न हि साक्षात्कारदशायामविद्याऽस्ति, इति तस्या आत्मत्वापत्तिर्व्याहता। परमार्थतो यदि भेदो नास्ति, तर्हि तस्याः परमार्थाधिष्ठानव्यतिरेकेणाभाव एवोऽन्वयनमर्हति। न हि शुक्तौ परमार्थतो रजतनिषेधेन शुक्तिरूप्यस्य भ्रान्तिदशायामपि पारमर्थिकत्वमुन्नीयते॥

### संवित्सजातीयमात्रनिषेधेऽपि श्रीभाष्यमते, अद्वैतमते वा न सिद्धसाधनम्

एतेन—अनुभूतिः, न नाना, संविज्जातीयमात्राद् न भिन्नेति कल्पोऽपि—व्याख्यातः। अत्र हि शतदूषणी सिद्धसाधनं दूषणं वर्णयति। इदमेवात्र पृच्छ्यते—कं वा संवित्पदार्थमाश्रित्य संविज्जातीयमात्रभेदाभावसाधनं सिद्धसाधनं दूषणम्? तत्र यदि त्वहमर्थं संविदमभिप्रेत्य, तर्हि न श्रीभाष्यमतेऽहमर्थानां सर्वेषामैक्यम्, न वाऽद्वैतमतेप्यहमर्थस्य चिदचिद्ग्रन्थिरूपस्य तत्तदुपाधिभेदभिन्नस्यैक्यम्, इति कथं तत्र भेदाभावसाधन इष्टापत्तिः; पक्षद्वयेऽपि तत्र सर्वेषामहमर्थानां साजात्यमपि घटत्वेन घटानामिवाहंत्वेन तत्तत्स्वरूपमात्रपर्यवसन्नस्य तस्य तस्याहमर्थस्य प्रतिनियतभेदस्य घटाकाश-मठाकाशयोरिव हरिपदबोध्यानां बहूनां हरिपदार्थत्वमात्रेणैवैक्यस्यासंभवात्, इति कथंचन साजात्यविवक्षयैव यदि भेदनिषेधोऽत्र विवक्ष्यते, तर्हि न सिद्धसाधनम्॥

न हि तत्र संवित्त्वावच्छिन्नप्रतियोगिताकभेदाभावः साध्यो भवितुमर्हति, संवित्त्वस्य प्रतिनियतस्य सर्वाहमर्थसामान्यत्वाभावात्, इति संवित्पदेन पक्षपरेणाहमर्थविवक्षायां न सिद्धसाधनम्। सर्वोपाधिरहितसंविन्मात्रपक्षतायां तु सर्वाहमर्थानुगतोपहितसंविदर्थमात्रं गृहीत्वा सर्वसंवित्स्वरूपाणामौपाधिकं भेदमादाय तन्निषेधाभिप्रायेण भेदनिषेध उपपद्यते। यथा—घटाकाश-मठाकाशादिगतमाकाशस्वरूपम्, न नाना, उपाधिभेदप्रयुक्तभेदवत्त्वादित्यनुमानेनाकाशनानात्वनिषेधः, इति नात्रापि कोऽपि दोषः॥

### संवित्प्रतियोगिकभेदराहित्यसाधनमपि न दुष्टम्

एतेन—भेदवत्त्वेन प्रतीयमानसंवित्प्रतियोगिकभेदराहित्यस्य साध्यत्वेऽविद्यायां संविद्भेदस्यैव सत्त्वादविरोध इति शतदूषणी—व्याख्याता। अत्राविरोधपदमनुमानप्रतिबन्धमात्रपरम्, न तु हेत्वाभासविशेषपरम्। तत्रैव पक्षे तेनैव हेतुना तदभावसाधने हि विरोधो नाम हेत्वाभासः॥

### अविद्याया अपि बाधाद् संविद्व्यतिरेकेणाभावरूपसंविद्-भेदवादो न वो नानिष्टः

अत्र च पक्षः संवित्, तत्र संवित्प्रतियोगिकभेदाभावः साध्यः, न चाविद्या पक्षः, हेतुस्त्वजत्वं पदार्थभिन्नेऽविद्यायां वर्तते, साध्यं तु नास्तीति स्थितौ किमयं विरोधो व्यभिचारः, हेत्वाभासविशेषो वेति तार्किकसार्वभौम एव पश्यतु। को वाऽविद्यामनेनानुमानेन संविद्-भेदाभावं साधयति, येन तत्रैव तस्यैव साध्यस्याभावस्य तेनैव हेतु-नाऽभावः साध्येत ?

वस्तुतस्तु—ब्रह्मण्यध्यस्तरूपेणैवानादिनाऽविद्याऽप्यनादिसम्बन्धवती, इति तस्या अपि तत्त्वसाक्षात्कारेण निवृत्तौ संविद्व्यतिरेकेण पूर्वोक्त-दिशाऽभाव एव, इति कथं वाऽविद्यायामपि संविद्भेदवादो नासद्वादः ?

### संविदि निषिद्ध्यमानो भेद औपाधिक एव

तत्र संवित्, न नानेति वादिना संविद्व्यतिरेकेण भेदनिषेधपरेणा-नुमानेन संवित्प्रतियोगिकभेदनिषेधमात्रतात्पर्ये तु भेदस्यौपाधिकस्य स्वरूपेण वस्तुतो निषेध एव साध्यते, तेन सर्वत्र संवित्स्वरूपैक्यं घटा-काशादाविवाकाशैक्यं पर्यवस्यति, न त्वन्यादृशाभेदसाधनम्। ततश्च संविद्धर्मिकौपाधिकभेदनिषेध एवात्र मुख्यार्थः, यस्तत्र प्रसक्तः। अत्र च स्वस्य स्वस्मिन्नेव स्वतो भेदप्रतीतेरप्रसक्तावप्युपाधिभेदप्रयुक्तभेद-वत्त्वेन प्रतीयमानसंवित्प्रतियोगिकभेदनिषेधविवक्षायां पर्यवसानम्, यथा घटाकाश-मठाकाशादौ घटाद्युपहिताकाशभेदनिषेधस्य शुद्धाकाशा-भेदे। तत्र यथा शुद्धाकाशस्यान्यस्याप्रसिद्धावप्युपहिताकाशभेदप्रसिद्धि-मादायाऽऽकाशभेदनिषेधः, तथाऽत्रापीति स्थितिः; शुद्धाकाशभिन्नघटाका-शादिप्रसिद्धिमात्रेण तत्र भेदनिषेधवदत्रापि भेदनिषेधनिर्वाहः, इति भेदे स्वसमानसत्ताकत्वविशेषणं न देयम्॥

### कार्यस्याधिष्ठानात्मनाऽभेदः, न तु कार्यान्तरात्मना, कारणात्मना वा,

तेन घटावच्छिन्नाकाशस्य, घटस्य चेवात्रापि व्यवहारदशायां कार्या-त्मनाऽत्यन्तभेदस्यैवोपाध्युपहितयोरपि स्वीकाराद् न किमपि वैषम्यम्। न चात्र मिथ्या-तथ्ययोरत्यन्तमैक्यं मिथ्या-तथ्यभावेन, किन्तु मिथ्या-

ऽधिष्ठानकारणात्मना। कारणात्मता हि कार्यस्य; कार्यस्य तत्र स्वरूपतोऽध्यासात्, न तु कार्यात्मना; कारणस्य, तत्राधिष्ठानसंसर्गाध्यासेऽप्यधिष्ठानस्य स्वरूपतोऽनध्यासात्। तथाच स्मृतिः—

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः॥"

इति। अत एव बाधमात्रेऽधिष्ठानमात्रपरिशेषात् 'इदं रजतमि'तिवद्भेदप्रतीतिः॥

तत्राध्यासस्थले भेदोऽपि प्रातिभासिकः, उपहितस्थले तूपाधिकृतो भेदः। उपहितयोरिवोपहितानुपहितयोरपि विशिष्टस्येवोपहितस्येव शुद्धस्याप्यग्रहणादविवेक एव। स च भेद उपाधिसमसत्ताक इति परं विशेषः, यथा सोपाधिकाध्यासस्थले—'लोहितः स्फटिकः' इत्यादिसोपाधिकाध्यासस्थले लौहित्यादेः, तन्निषेध एवात्र, नोपहितांशस्यात्र निषेधः। यथा 'लोहितः स्फटिकः' इत्यत्र लौहित्योपहितस्फटिकत्वं शुद्धस्फटिकस्य भेदः प्रतीयमानो निषिध्यते॥

विशेषस्तु—संविन्न नाना इत्यनेन संविदतिरिक्तसर्वाभावो बाधदशायाम्, तन्मात्रावशेषश्चेति व्यक्तमधस्तात्॥

अत्र प्रमाणं तु "नात्र काचन भिदाऽस्ति" "उदरमन्तरं कुरुते अथ तस्य भयं भवति" "एकमेवाद्वितीयमि"त्यादिश्रुतयः। तन्मूलकं चेदं भेदनिषेधानुमानम्, संविन्मात्रं ब्रह्मैव सत्यम्, तदतिरिक्तं सर्वं ततोऽतिरिक्तं नास्ति। निर्विशेषोऽस्य प्रकरणस्य विषयः॥

तत्र जीवोऽपि शुद्धः प्रत्यगात्मा ब्रह्मैव, इति तयोः स्वरूपैक्यमात्रविवक्षायां द्वितीयाभाव एव पर्यवसानम्। अतो जीवनानात्वनिषेधोऽप्यर्थसिद्धः॥

अत एव—"तत्त्वमसी"ति तत्त्वम्पदलक्ष्यार्थाभेदपरं वाक्यम्। तत्रानुपहितयोरैक्योपदेशात्, श्रुत्यैवाभेदस्यैव साक्षाद् बोधनाच्च नोपाधिभेदप्रयुक्तभेदशङ्काऽपि, इति तत्त्वम्पदार्थयोर्भेदनिषेधोऽप्यजत्वहेतुकोऽपेक्ष्यते; उपाधिभेदप्रयुक्तभेदनिषेधमात्रार्थत्वादनुमानस्य, अप्रयोजकत्वशङ्का तु परिहृतैव॥

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि॥"

इति सत्यमौपाधिकं भेदं निषेद्धुमुपाश्रितः पृथक्करणार्थम्। यथा—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"

इत्यत्र । अत एवात्र 'क्षेत्रेष्वि'ति बहुवचनम्, अत्रात्मना साम्यमैक्यमेव । 'क्षेत्रज्ञमि'त्येकवचनं च । तत्र समत्वमेकरूपत्वमैक्यमेव, न तु साम्यमात्रम् । जीवनानात्वपक्षे हि प्रतिनियतभेदवतां जीवानां किंनिबन्धनं साम्यम् ? यदि जीवत्वनिबन्धनम्, तर्हि बद्धानामपि तद्दर्शनमस्ति मुक्तात्मनां तु न तत् ॥

शुद्धप्रत्यगात्मनां साम्यं च किङ्कृतः । यदि स्वरूपज्ञानत्वेन, तर्हि तदपि सर्वसाधारणम् । यदि सर्वबन्धविनिर्मुक्तत्वेन, तर्हि सर्वेषां कथं तैनैक्यमेव ? यदि विशुद्धदिव्यमङ्गलभेदात् तेषां भेदः, कथं तर्हि साम्यम् ?

"सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः" इत्येकत्वस्यैवोपसंहारादैक्यमेवात्र साम्यं नाम । अत्रैक्यं परमात्मना नानेकत्वशङ्कावारणार्थम्, किन्तु सर्वोपाधिभेदप्रयुक्तभेदनिषेधार्थमेव ॥

साम्यं ह्यत्र—

"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"

इतिवचनैकवाक्यतयैक्यदर्शनमेव । तच्च ब्रह्मभाव एव । अत एव गीतायां—

"निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥"

इति ।

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥"

इति सर्वात्मनां ब्रह्मरूपेणानुसन्धानोपदेश उपपद्यते । न चायं सर्वशरीरकत्वोपदेशः; परस्परात्मत्वदर्शनविरोधात्, एकैकस्मादप्यात्मनोऽभिन्नत्वेन परमात्मनोपदेशः शरीरभेदमात्रेण भेदः, न स्वरूपतोऽपीत्यर्थपरतायामेव स्वरसः ॥

संविदतिरेकेण घटाद्यभाववत्, न घटाद्यतिरेकेण
संविदभावात् संवित्तादात्म्यम्

सर्वतादात्म्यं सर्वेषां तद्व्यतिरेकेणाभावः, तन्मात्रावशेषश्च निरुक्तः । किं बहुना ? घटादीनामपि 'सन् घटः' इत्यादिरूपेण सत्तादात्म्येन प्रतीयमानानां चैतन्यावच्छेदकत्वमज्ञानदशायां सत्तादात्म्यम्, तत एव बाधदशायां तद्व्यतिरेकेणाभावश्च । घटादीनां सत्तादात्म्यं संविदि घटा-

द्यध्यासेन, न तु घटादौ संवित्तादात्म्याध्यासेन, इति संविदतिरेकेण घटाभाव इव, इति न घटाद्यतिरेकेण संविदभावप्रसङ्गो भूषणोक्तरीत्या; अन्यथा सदात्मना घटज्ञानेन संविद्बाधापत्त्या किमविज्ञातमज्ञानदशायामपि स्यात्। अत एवाधिष्ठानाकारवृत्तिरेवाज्ञाननिवर्तिका शुक्तित्वेन शुक्तिज्ञानमिव रजताज्ञानस्य रजतादेश्च ॥

तत्र सोपाधिकानां संविदां संविन्मात्ररूपेणैव पक्षता, न तु विशिष्टरूपेण, इति नाजत्वादिति हेतोरसिद्धिः। 'चन्द्रातिरिक्ततरङ्गचन्द्रनिषेध'-नयेन संविदन्तरभेदनिषेधो न विषमो दृष्टान्त इत्युपपादनार्थमेव सिद्धान्तोपन्यासवैखरी, तेनार्थसिद्धोऽनुमानदूषणोद्धारः, श्रुत्यर्थे सिद्धेऽनुमानोपन्यासवैयर्थ्यशङ्काचर्वणं च चर्वितचर्वणम् ॥

संविन्मात्रात्मभेदनिषेध एवात्र

तत्र शुद्धसंविद एव भेदनिषेध उक्तानुमानस्य लक्ष्यम्। शुद्धं तु संविन्मात्रमखण्डाकारदशायां तथाऽवतिष्ठते, अज्ञातदशायां तु तत्तदुपाध्युपहिततया, इति शुद्धायाः संविद्रूपेणैकस्या एव सर्वत्राधिष्ठानात्मनाऽभेद इति निरूपणार्थम्, घटाद्यवच्छिन्नस्येव वृत्त्यवच्छिन्नस्यापि संविन्मात्रस्यैव भेदोऽत्र निषिध्यते, न लौकिकानुभवानां वृत्तिरूपाणामपि, इति न व्याघातः ॥

संविन्नानात्वनिषेधानुमानस्या-
परस्यापि न दुष्टत्वम्

एतेन—संवित्, न नाना, संवित्साजात्यरहितेत्यनुमानमपि—व्याख्यातम्, तेन संवित्साजात्यं संवित्त्वेन न संविदः, न वा तद्भिन्नस्य घटादेः, अविद्यादेर्वा, इति न घटादाविवाविद्यायामपि व्यभिचारः। यथाकथंचित्साजात्यमकिञ्चित्करम्। तद्भेदवादिनो हि संविदन्तरेऽपि संवित्त्वं वक्तुमर्हन्ति, परन्तु संवित्त्वावच्छिन्नप्रतियोगिकभेदवत्त्वं न संविदि संविदैक्यवादे, तथाप्युपहिते संविन्मात्रेऽपि संविद्भिन्नत्वे संवित्त्वधर्मो वर्तत एव, इति तस्य साजात्यघटकभेदप्रतियोगितावच्छेदकत्वं नासंभवि, इति तया विधयाऽपि न संवित्सजातीयेति न तत्र व्यभिचारः। अन्यत्तु सर्वमत्रानुपयुक्तम्, अविवदितं वा ॥

सत्यमत्र शुद्धचिदेकैवेति श्रुतिसिद्धम्, तथापि तस्यैव सिद्धस्यैक्यस्याकाशस्येवौपाधिकभेदवत्त्वस्याकिञ्चित्करत्वसूचनार्थमुक्तानुमानम् ॥

संविद्भेदस्यास्वाभाविकत्वादिचर्चा

यत्तु—यस्य भेदः सम्बन्धिमूलमवसेयः, तस्य स्वाभाविकभेदराहित्यमिति वक्तुं न शक्यते। यथा घट-पटसंयोगस्य, कुण्ड-कुसूलसंयोगस्य च भेदः सम्बन्धिभेदमादायैव निरूपणीयः, यथा वा सातिशय-निरतिशयसुखेच्छाया भेदः, न तावता तस्य भेदस्य तत्रास्वाभाविकत्वम्। एवमेव संविद्विषयेऽपि—इति॥

तत्र सम्बन्धिविशेषमपेक्ष्यैव भेदः नियमेन प्रतीयमानः संयोगादिषु। न च संविद्रूपं सर्वाधिष्ठानमपि सर्वबाधकज्ञानविषयः स्वस्थितौ, प्रतीतौ, स्वोत्पत्तौ वा सम्बन्ध्यान्तरमपेक्षते, यथाऽऽकाशः इति तस्योपाधिभेदप्रयुक्तो भेदोऽप्युक्तदृष्टान्तेन न स्वाभाविको भवितुमर्हति; अन्यथा घटाकाशादिभेदोऽपि स्वाभाविक आपद्येत। न चेच्छादिसाम्यमपि स्वप्रकाशात्मस्वभावायाः संविदः, लौकिकानुभवसाम्यं वेति व्यक्तमधस्तात्॥

लौकिकानुभवा हि सविषयाः, साश्रयाश्चैव, न तु स्वप्रकाशात्मस्वभावा शुद्धसंविदिव। सविषयकत्व-साश्रयकत्वनियमो हि जन्यलौकिकानुभवविषयः। अर्थोपलक्षितप्रकाशत्वस्य त्वनुभवस्य सविषयत्वं बाधितम्; उपलक्षणत्वादर्थानाम्। अयमेव न्यायो धर्मभूतज्ञानेऽपि। न चानुभूतिर्धर्मभूतज्ञानम्, लौकिकानुभवो वा, इति न संबन्धिविशेषापेक्षानिरूपणमनुभूतेः, पक्षस्येति वस्तुस्थितिः॥

दृश्यभेदेन दर्शनभेदोऽपि धर्मभूतज्ञानाभिप्रायः

एतेन—दृश्यभेदेन दर्शनभेदोऽपि स्वरूपज्ञानातिरिक्तधर्मभूतज्ञानलौकिकानुभवविषयः, न तु स्वरूपज्ञानात्मकस्वप्रकाशसंद्विषयोऽपि, यथा छेद्यभेदेन छेदनभेदः। प्रतिनियतसंबन्धिविशेषापेक्षाणां ज्ञानेच्छादीनां तत्तद्विषयभेदादिना भेदो नौपाधिकः, किन्तु स्वरूपत एव; स्वरूपस्यापि चक्षुरादितत्तन्नियतप्रमाणाऽऽपेक्षजनिमतो स्वाभाविक एव भेदः। तत एव विषयैक्येऽपि घटदर्शनानां तत्प्रमाणाऽऽपेक्षजनिमतां नैक्यम्; अन्यथा सकृदुत्पन्नेनैव घटज्ञानेन सर्वदा घटप्रकाशापत्तौ घटाज्ञानं तदैवास्तमियात्, न वा शब्द-बुद्धि-कर्मणां विरम्यव्यापाराभावात् प्रथमोत्पन्नज्ञानातिरेकेण ज्ञानान्तरोदयोऽपि स्यात्। सर्वथा तु जन्यज्ञानव्यपा-

श्रयां प्रक्रियामादाय नित्यानुभूतिस्वरूपस्यापि न विषयभेदेन भेद आपादयितुं शक्यते ॥

संविद्रूपं तु नित्यं चैतन्यमावृतं न प्रकाशते, अनावृतं प्रकाशते । तत्रघटाद्यवच्छिन्नचैतन्यमज्ञानविषयत्वांशमात्रनिवृत्तौ प्रकाशते । तत्तदवस्थाऽज्ञानानामेकैकज्ञानमात्रनिवृत्तावप्यन्येषामनादीनामज्ञानानां भीतभटवद् यावत्तदाकारवृत्ति ततोऽपसरेण, पटवत्संकोचनेन वाऽवस्थानात्, प्रकाशाप्रकाशादिव्यवस्थादिकं सर्वं सिद्धान्तलेशसंग्रहे व्यक्तम् । सति चैवं दृश्यभेदेन दर्शनभेदकथाविस्तरादिकं सर्वं प्रकृतानुपयुक्तम्, अकिंचित्करं च संविन्नानात्वभङ्गे । अतः संविदैक्यस्यैवौपनिषदत्वात्, औपाधिकतद्भेदस्यास्वाभाविकत्वात्, उपाधिबाधे स्वयं भेदस्यापि बाध्यत्वेन तस्य मिथ्यात्वाच्च संविन्नानात्वं मिथ्यैव, इत्यखण्डाकारवृत्त्यनन्तरमा'रम्भणाधिकरण'नयेन संविदन्तरसर्वविषयत्वबाधात् सविद्रूपमेकमेव सर्वोपाधिरहितं स्वयंज्योतिः प्रकाशत इति निष्कर्षः ॥

॥ इति संविदनानात्वोपपत्तिः ॥

# निर्विशेषत्वानुमानोपपत्तिः

संविन्निर्विशेषत्वानुमानेऽपि संविद्रूपमेव पक्षः,
न जन्यज्ञानम्

यथाप्राक्तनप्रकरणमत्रापि निर्विशेषसंविन्मात्रम् ; न तु लौकिकानुभवं नियतसाश्रय-सविषयकं पक्षीकृत्यानुमानम्—अनुभूतिः, निर्विषया, अनुभूतित्वात्—इति । सर्वाणीमानि प्रकरणानि केवलव्यतिरेकविधया, अर्थापत्तिविधयावाऽनुभूत्यवेद्यत्वानुत्पत्ति-निर्विकारत्वानानात्वनिर्विशेषत्वान्युपपादयन्ति । उपरितनमनुभूत्यात्मत्वप्रकरणमप्येवमेव ॥

तत्र स्वप्रकाशात्मस्वरूपं तादात्म्येन पक्षः, न त्वनुभूतित्वम्, येन तेन सविशेषत्वेन बाधः स्यात् । अतो रूपभेदात् पक्ष-साध्ययोर्न पक्षधर्मताज्ञानविरोधः । वस्तुतस्तु—नानुमानं शब्दमर्यादया बोधकम्, किन्तु यथायथं प्रत्यक्षादिविधया पक्षधर्मताज्ञानादिनाऽपि, इति नात्र घटो घट इत्यादिवदबोधकता । पृथिवी, इतरभिन्ना, पृथिवीत्वात्, इति पक्षतावच्छेदकस्यैव हेतुत्वेनाप्यनुमानं प्रसिद्धम् ॥

पक्षतावच्छेदकस्यैव हेतुत्वोपपत्तिः, अनुमान उद्देश्य-विधेयभावाभावात्, शब्देष्वपि तदनियमाच्च

अत एव—अनुभूतिः, निर्विशेषा इति प्रयोगकाल एवानुभूतित्वप्रयुक्तं निर्विशेषत्वमिति विज्ञानाद् उत्पतदेवेदमनुमानं न व्याहतम्; उद्देश्यविधेयभावविवक्षायाः शाब्दबोधविषयत्वादुक्तनियमस्य । न हि वाक्यसामान्यं उद्देश्य-विधेयभावसपेक्ष्यैव प्रवर्तत इति नियमः, 'कम्बुग्रीवादिमान् घटः' "वैश्वदेव्यामिक्षा" इत्याद्यभेदपरेषु वाक्येषु तदविवक्षणात् ॥

न चोद्देश्य-विधेयभावेऽप्युद्देश्यतावच्छेदकविधेययोः प्रयोज्य-प्रयोजकभावनियमः; 'ज्योतिष्टोमेन स्वर्गकामो यजेत" "दध्ना जुहोती" त्यादौ तददर्शनात्, मतुबन्तपदनिर्देश्यस्थल एव यदि नियमः, न तर्हीदमनुमानं तद्विषयः ॥

अनुभूतित्वस्य निर्विशेषसाधकत्वोपपत्तिः

वस्तुस्थितिकथनमात्रेऽपि विनाऽप्युद्देश्य-विधेयभावविवक्षानियमं "तत्त्वमसी"त्यादिवाक्यानां श्रीभाष्यं वाक्यप्रमाणेऽपि वारयति । अतो

नात्रोद्देश्य-विधेयभावविवक्षा, इति वस्तुस्थितिमात्रस्यानुभूयमानस्याभिप्रायमात्रं शब्देनेति मन्तव्यम्। अत एवात्र हेत्वन्तरस्य निर्देशः। सत्यपि कारणान्तरेण दुःखेऽपि धनवान् सुखीतिप्रयोगो दृश्यत एव। न चात्राप्रयोजकता; सविशेषत्वेऽनुभूतित्वबाधस्य विपक्षे बाधकतर्कस्य सत्त्वात्॥

तत्रानुभूतित्वम्=अनावृतसंविद्रूपत्वम्; तस्यैवात्र हेतुत्वम्। तच्चावरणनिवर्तकवृत्त्युपहितत्वरूपम्। तत्त्वं हि सर्वविशेषबाधकज्ञानोपहितत्वं प्रत्येकस्मिन्नपि विशेषे नोपपद्यते। अतोऽनुभूतित्वेन निर्विशेषत्वसाधनमव्याहतम्॥

अज्ञानोपहितस्य संविन्मात्रस्य पक्षत्वेऽपि न निर्विशेषत्व-
प्रतिज्ञाविरोधः

नापि प्रतिज्ञाविरोधः; अनुभूतिरित्यज्ञानोपहितमधिष्ठानमत्र विवक्ष्यते, तस्य सविशेषस्याविशेषत्वमनुमानेन साध्यते, यथाऽज्ञानोपहितेदंपदार्थतादात्म्येन सरजतमुद्दिश्यारजतत्वम्। अध्यारोपावस्थामादाय पक्षनिर्देशः, अपवाददशामाश्रित्य साध्यप्रयोगः। यत् पूर्वं रजतमभात्, तद् इदानीं शुक्तिरितिवत् यत् पूर्वं जगदभात्—"सर्वं खल्विदं ब्रह्मे"ति, तदिदं विज्ञानं संविन्मात्रम्; तत्र यथा दृष्टान्ते शुक्तिव्यतिरेकेण रजताभावात् सरजतमिदमिदानीमरजतम्; एवमत्रापीति कथं प्रतिज्ञाविरोधः?

सविशेषत्व-निर्विशेषत्वयोरविरोधः; अध्यारोपापवादन्यायश्च

अनुभूतिः, निर्विशेषा, विशेषबाधकवृत्त्युपहितत्वादिति तु निष्कर्षः। तत्र निर्विशेषत्वं स्वरूपेण सर्वविशेषराहित्यमिति मुख्यः पक्षः, पारमार्थिकत्वेन विशेषराहित्यमित्यपि कल्पभेदोऽद्वैतसिध्यादौ। न च पारमार्थिकत्वेन सर्वविशेषनिषेधे निर्विशेषपदायोगः। अत एव "नेह नानाऽस्ति किञ्चने"ति सप्रपञ्चं ब्रह्मानूद्य सर्वप्रपञ्चनिषेधः, "सदेवेदमि"त्युपक्रम्या"द्वितीयमि"ति द्वितीयसामान्यनिषेधश्च॥

न चाध्यारोपापवादस्थलेऽप्यध्यारोपितरूपं पूर्वसिद्धमुपदिष्टं वाऽनूद्य तन्निषेधो विरुध्यते, अन्यथा ततोऽन्यस्ततोऽन्य इति स्थूलारुन्धतीन्यायेनान्नमयादिपञ्चकोशातिरिक्तस्योपदेशो नोपपद्यते। तत्र कोशपञ्चकं वा, कोशचतुष्टयमेव वेति त्वन्यदेतत्। व्यक्तीकृतं च वक्तव्यं सर्वं पूर्वम्। अनुमानं चेदं व्यतिरेकि वा, अर्थापत्तिर्वा, इति न साध्याप्रसिद्धिः, आपादकासिद्धिर्वा॥

अध्यारोपापवाद आरोप्य-तन्निषेधयोरविरोधप्रकारः

तत्राध्यारोपापवादस्थल उभयवाक्याविरोधार्थमपवादो धर्मिसमसत्ता-कारोपिताभावपरतया नयनमर्हति, सामान्यात् , तदनुसारे तु अनुभूतिः, स्वसमानसत्ताकविशेषरहिता, अनुभूतित्वादित्यनुमानप्रयोगतात्पर्यम् । अनुभूतित्वमनुभूतिस्वरूपमात्रं स्वप्रकाशं सत्यम् , न त्वनुभूतित्वविशिष्टम् । न चानुभूतित्वस्यापि निषेधेऽननुभूतित्वापत्तिः । तत्राननुभूतित्वं यद्य-सत्कल्पत्वम् , तर्हि प्रकाशस्वरूपत्वाद् न संभवति; यदि घटादिवदनिर्व-चनीयत्वम् , तदपि तत एव निरस्तप्रायम् । संवित्स्वरूपमात्रपारमार्थि-कता ह्यद्वैतवादे ॥

अनुभूतिनिर्विशेषत्वानुमाने नान्योन्याश्रयः

सविशेषवाक्यान्यध्यारोपन्यायेन निर्विशेषवाक्यान्यपवादनयेन च प्रवृत्तानि, इति तन्न्यायमहिम्नैव निषेध्यानां धर्मिविषमसत्ता-कत्वं लोकत एवावगतम् , इति लोकसिद्धं न्यायमादायानुमानस्य प्रवृत्त-त्वान्नान्योन्याश्रयः, अनुमानावैयर्थ्यं च शुक्तिरजतादिवत्; व्यवहारकाल एव बाधाभावात् तच्छ्रुत्यर्थे संदिहानं प्रत्येव । एतदर्थं हि तदनन्यत्वाधि-करणादिकं सूत्रजालम् , स्मृति-पुराणेतिहासादि च, इति नानुमानवैयर्थ्यम् , अन्यथा श्रुतित एव सविशेषस्वरूपादिनिर्णये ब्रह्ममीमांसाशास्त्रमपि कथं न वितथम् ?

कल्पितेन धर्मेण सूक्ष्मतत्त्वोपदेशोपपत्तिः, अतोऽनुमानमत्र

तत्र शब्दस्याखण्डार्थबोधकत्वायोगादिशङ्कादिकं 'किमिव वचनं न कुर्याद् नास्ति वचनस्यातिभारः' इति न्यायविदां पुरतो नोत्तिष्ठत्यपि ; अन्यथा परलोक-वैकुण्ठलोक-परमपुरुषादिकथाप्रसंगेन शिष्यार्जनयात्रा विजययात्रा वा चार्वाकदृष्ट्या केवलं जीविकार्था बुद्धिपौरुषहीनस्य जीविकेयं बृहस्पतिरिति वचनानुसारेण, न तु तत्त्वबोधनमिति शङ्का दुःसमाधेया । वेदप्रामाण्यात् व्यवस्था त्वद्वैतसिद्धान्तेऽपि समाना, इति श्रवण-मननादि-विधिवैयर्थ्यं नाद्वैतसिद्धान्ते ॥

सूक्ष्मार्थोपदेशसरणिर्धर्म-धर्मिभावं कञ्चन कञ्चन कल्पयित्वैव स्थू-लारुन्धत्यादिस्थले दृष्टचरी, इति का वाऽनुपपत्तिर्निर्धर्मकब्रह्मस्वरूपबु-बोधयिषया तत्र धर्मकल्पनायां यावदपेक्षम् ? निर्धर्मकत्वेनावगते तु स्वरूपे

सर्वेषां धर्माणां बाध इति हि लोकसिद्धो न्यायः । अतः श्रौतस्यैवार्थस्यानुमानविधयाऽप्यनुसन्धानं न विरुध्यते ॥

### श्रौतस्य मननस्य निर्विशेषत्वावधारण उपयोगः, तस्य प्रत्यक्षादिबाधकत्वं च

तत्र मननमप्यनुमानापरपर्यायमुपपत्त्यपरपर्यायं वा निर्धर्मिकेऽपि कल्पितेन धर्मेणोपपद्यते । कल्पितेनापि धर्मेण हेतुना वाऽबाधितार्थज्ञानं प्रमात्मकं संभवतीति श्रुतिसम्प्रतिपन्नम् ॥

तत्रानुभूतिस्वरूपमात्रं पक्षः । एकव्यक्तावनुभूतौ प्रतिनियतरूपायां पक्षतावच्छेदकस्य कल्पितस्य धर्मत्वेऽपि पक्षत्वं न विरुध्यते । निर्विशेषत्वं तु विशेषसामान्याभावः पारमार्थिको व्यावहारिको वेत्यत्र न निर्भरः । व्यावहारिकत्वेऽपि विशेषसत्यतानुपपत्तिरुपपादिता; पारमार्थिकत्वेन विशेषाभावस्यैव सिसाधयिषितत्वात्, अपारमार्थिकविशेषवत्त्वस्यैवातथात्वाद् न पारमार्थिकाद्वैतासिद्धिः ॥

तथाच प्रयोगः—अनुभूतिः, अपारमार्थिकविशेषवती, स्वविषमसत्ताकविशेषवती वा, अनुभूतित्वादिति पारमार्थिकविशेषाभववती वेत्यनर्थान्तरम् । तत्रानुभूतित्वमपि मिथ्यैवेत्युक्तम् ॥

एतेन—अनुभूतिः, धर्मिसमसत्ताकधर्मवती, पदार्थत्वादिति प्रकरणसमः—परास्तः; अप्रयोजकत्वात्, धर्मिविषमसत्ताकधर्मवत्यां शुक्तौ रुप्याधिष्ठाने व्यभिचारात्, परिणामिकारणत्वेन सोपाधिकत्वाच्च । तस्य मृदादौ साध्यव्यापकत्वात्, शुद्धपदार्थे, शुक्तौ, पक्षे च साधनाव्यापकत्वाच्च ॥

श्रुतिर्हि सविशेषमपि बोधयति, निर्विशेषमपि, इत्युभयोरपि यथाश्रुतं प्रामाण्यम् । आद्येऽवान्तरतात्पर्यविषयतया, निर्विशेषवाक्यानां चापच्छेदन्यायेनापि प्रामाण्यं सूपपादम् । विशेषसमर्पकत्वं हि वाक्यानामुपास्यव्यावहारिकतायामपि निर्वहतीत्यादि पूर्वमुक्तम् ॥

तत्र श्रुत्यर्थनिर्णयावसरे तदुपपादकस्यानुमानस्य न दूषणं युक्तमिति न विसंवादास्पदम्, इति न तत्र प्रतिसाधनानुमानमुपपद्यते । श्रुतिद्वयानुसारिविरुद्धानुमानयोर्बलाबलनिर्णयो ह्युक्तश्रुतिद्वयबलाबलापेक्षः । तत्र च पूर्वोक्तविधया निर्विशेषश्रुतिरेवापवादविधया पर्यवसन्नाऽर्थविषयिणी प्रबला, इति संविन्निर्विशेषत्वानुमानं प्रमाणमेव ॥

तत्र संविन्निर्विशेषत्वानुमानमूलं श्रुतिः—"एकमेवाद्वितीयमि"ति। तत्राद्वितीयपदं ब्रह्मेतरसर्वनिषेधपरम्, द्वितीयाभावस्यापि ब्रह्मेतरत्वे तत्साधारणसर्वद्वितीयनिषेधाभिप्रायम्॥

प्रतियोगि-तदभावोभयनिषेध एकेनैवावच्छेदकेन निषेधः, निषेधस्य पारमार्थिकत्वं वा

अयमेव न्यायो निर्विशेषवादेऽपि। विशेषशब्देन ब्रह्मगतधर्ममात्रविवक्षायां विशेषाभावस्यापि धर्मत्वं निषेध्यतायामनुसन्धेयम्। द्वितीयाभावादेर्ब्रह्मरूपत्वे तु नाभावस्याप्युभयत्र निषेधः। न चैतावताऽप्यद्वैतासिद्धिः॥

तत्र द्वितीयाभावस्यापि द्वितीयत्वेन निषेधाद् एकेनैव निषेध्यतावच्छेदकेनोभयनिषेधाच्च नात्र द्वितीय-तद्भावोभयनिषेधार्थं तन्त्रावृत्त्यादिकल्पनाऽऽवश्यिका, न वा 'शब्द-बुद्धि-कर्मणां विरम्यव्यापाराभाव'न्यायावतारः, 'सकृत्प्रयुक्तः शब्दः सकृदेवार्थबोधकः' इति न्यायविरोधो वा, अनुगतेन प्रतियोगितावच्छेदकेन धर्मेण सर्वेषामपि धर्मिणां निषेधसंभवात्॥

उपपादितं हि पूर्वं ध्वंस-प्रागभावाधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत इति मते घटध्वंससमये घट-तदत्यन्ताभावोभयनिषेध एकेनैव प्रयत्नेन, विनैव विरम्य व्यापारम्। तत्राभावपदं यदा विशेषपरम्, तदा प्रतियोगिशब्दपुरःसरं प्रयुज्यते, सामान्यपरत्वे त्वेकेनैव सर्वाभावस्तत्र विवक्ष्यत इति न किञ्चिदप्यनुपपन्नम्॥

अतो नात्रान्योन्याश्रयः; द्वितीयपदेनैव ब्रह्मेतरत्वधर्मेण तदभावस्यापि ग्रहणात्, द्वितीयत्वेनैव द्वितीयाभावस्यापि निषेधाच्च नात्र प्रतियोगिज्ञानापेक्षा, द्वितीयाभावत्वेन द्वितीयाभावस्यानिषेधात्, इत्युक्तश्रुतिमूलमिदमनुमानं नाप्रमाणम्। द्वितीयाभावस्य पारमार्थिकतापक्षे तु नाभावस्य निषेधः; तस्य ब्रह्मेतरत्वाभावात्। एतावताऽपि नाद्वैतहानिः; अभावत्वोपलक्षितरूपेणैवाभावस्य ब्रह्मरूपत्वेन तत्राभावस्याधिकरणात्मनोऽबाधेनेत्यभावत्वस्य द्वितीयत्वेन निषेध इति वस्तुस्थितिः॥

तत्रानुभूतिपदेन संवित्स्वरूपमात्रं विवक्ष्यते, नानुभूतित्वोपहितम्, तद्विशिष्टं वा—यत्त्वनुभूतित्वोपलक्षितं शुद्धं स्वरूपमिति, तत्राज्ञानो-

पहितेऽधिष्ठाने वृत्त्युपधानप्रयुक्ताऽऽवरणसामान्यस्य, तत्प्रयुक्तस्य च साक्षात्, परम्परया वा निवृत्त्या कथं शुद्धनिर्विशेषतायाः असिद्धिः?

न चात्र कल्पितधर्मवत्त्वमनुमानसाध्यम्, किन्तु सर्वविशेषाभावः। स च बाधितः; सर्वविशेषमिथ्यात्वस्याबाधात्, इति न प्रामाण्यविघातः। मिथ्यात्वमिथ्यात्वमपि न मिथ्यात्वेन, किन्तु विशेषत्वेनेति पूर्वमुक्तम्, न चैतावताऽपि बाधितार्थविषयकत्वे प्रामाण्यस्यापि बाधः। अतो निर्विशेषवाक्यानि स्वरूपतो मिथ्यात्वेऽपि न विषयबाधप्रयुक्तमप्रामाण्यमावहन्ति ॥

असत्यादपि प्रमाणात् सत्यार्थप्रमा न विरुध्यते। सर्वथा तु स्वरूपातिरिक्तो वा धर्मो भवतु, स्वरूपमेव वा, उभयथाऽपि निर्विशेषसिद्धिरप्रत्यूहा। पक्षीकृताऽनुभूतिर्निर्विशेषचिन्मात्रमित्युक्तमसकृत्। स्वप्रकाशात्मस्वरूपं श्रुतिसिद्धमिति नासत्कल्पम्; अतो नाश्रयासिद्धिः। श्रुतिसिद्धस्याप्यनुमानेन साधनं 'द्विर्बद्धं सुबद्धं भवती'ति, नाप्रयोजनम्। अधिकं तु ब्रह्मसिद्धौ पूर्वोद्धृतायाम् ॥

### सविशेष-निर्विशेषवाक्ययोर्मुख्यं प्रामाण्यं निर्विशेषवाक्यस्यैव

स्वप्रकाशत्वं च परप्रकाश्यत्वाभावरूपमनतिप्रसक्तं निरुक्तं तत्र तत्र। स्वप्रकाशत्वं श्रुतिसिद्धं स्फुरणादिव्यवहारानुमेयम्। तत्र शास्त्रं यद्यपि सविशेषमपि ब्रह्म बोधयति; तथापि निर्विशेषमेव मुख्यार्थ इति व्यक्तमन्यत्र ॥

अनुभूतित्वादिति हेतुस्तु पूर्वोक्तरीत्याऽज्ञाननिवृत्तिप्रयोजकवृत्तिमात्रोपहितत्वम्, यत्तु सगुणब्रह्मव्यावृत्तम्, घटादिव्यावृत्तं च। तत्र सगुणवाक्यानामपि श्रुतित्वेऽपि तदर्थानामन्यशेषत्वेनातत्परत्वात्, निर्गुणवाक्यानां तत्परत्वाच्च निर्विशेषवाक्यप्राबल्यमेव युक्तम्। समानविषयकत्वे हि विरुद्धानां वाक्यानामुभयप्रामाण्यं भिन्नविषयकत्वेन। न च सगुण-निर्गुणवाक्ययोः समानविषयकत्वम्, आद्यस्योपास्यसमर्पकत्वात्, द्वितीयस्य ज्ञेयस्वरूपसमर्पकत्वात् ॥

न हि प्रतियोगिनिषेधबोधकत्वमात्रेण समानविषयकता, किन्त्वेकफलसाधनतयैकप्रधानशेषतया; अन्यथा "न हिंस्यात् सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेते"ति वैधहिंसानिषेधपरत्वमप्यहिंसावाक्यस्य स्यात्। अतः समानविषयकत्व एवैकस्यान्यानुगुणं नयनमविरोधार्थम्,

उभयप्रामाण्यं च विकल्पेन भवति; यथा "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ। अग्नीषोमीयहिंसा क्रतुशेषः, अहिंसावाक्यगता हिंसा पुरुषार्थः, इति विषयभेदान्नात्र समानविषयकत्वाभावाद् बाध्य-बाधकता ॥

अयमेव न्यायोऽत्रापि। सगुणवाक्यानां निर्गुणवाक्यानां चोपास्य-ज्ञेयस्वरूपसमर्पकाणां भिन्नविषयाणाम्, इति सगुणवाक्यानुरोधेन निर्गुणवाक्यस्य नयनं न युक्तम्। न च निर्गुणवाक्येन सगुणवाक्यस्य बाधलेशोऽपि; उपास्यस्वरूपस्यापि निर्गुणताया अनङ्गीकारात्। न चात्र सगुणवाक्येन सगुणपरतया नयनं संभवति; ज्ञेयस्य सविशेषत्वे प्रमाणाभावात्, ज्ञानप्रकरणे गुणानामनाम्नानाच्च, इत्युभयप्रामाण्यं विषयाबाधेन निर्गुणमात्रे ज्ञेयतायाम्, सगुणमात्रोपास्यतायां चेति व्यवस्था ॥

अधिकारि-विषयभेदात् कर्मोपासनाज्ञानपराणामेकतमेनान्यतरस्याबाधः

अयमेव न्यायः सगुण-निर्गुणजीवेश्वरस्वरूपपराणां सगुण-निर्गुणपराणां च। कर्मोपासनाधिकारी कर्ता, भोक्ता च जीवः सगुणः, ज्ञानप्रकरणावसेयस्तु निर्गुणः स्वयंज्योतिः सर्वोपाधिविरहितश्च। इदमत्रावधेयम्—कर्मानधिकार्येव निवृत्तकर्माधिकारो ज्ञेयः, शुद्धः प्रत्यगात्मा सत्युपाधिविलये; एवमीश्वरोऽपि, सर्वथा तु समानविषयकत्वाभावाद् नात्र सगुण-निर्गुणवाक्यानामन्यतरस्यान्यतरेण बाधः ॥

ब्रह्मणि सिद्धे विकल्पायोगात् यथाऽधिकारं सर्वप्रामाण्यम्

तथाप्युपास्यमेव वस्तुगत्या ज्ञेयमपि। उपाधिविवक्षाऽविवक्षामात्रं परं विशेष इति सूचनार्थमेव निर्विशेषवाक्यैर्विशेषांशमात्रस्य बाधः, न तु स्वरूपस्यापि। इदमेवाभिप्रेत्य निषेधवाक्यापेक्षितनिषेध्यसमर्पकानि सगुणवाक्यानि ज्ञेयब्रह्मप्रकरणगतान्यपि, न त्वत्र कर्मणीव ज्ञेये सिद्धे ब्रह्मणि विकल्पः संभवतीति समानविषयत्वेऽप्युभयप्रामाण्यं यथाश्रुतार्थग्रहणे संभवति। तत्र अन्यतरस्यैव तात्पर्ये वक्तव्ये निर्गुण एव तात्पर्यम्, इति तदविरोधेन जगत्कारणवाक्यानां नयनमेव युक्तम् ॥

निर्विशेषवाक्यानामपि प्रामाण्यप्रकारनिरूपणार्थमेव
निर्विशेषत्वानुमानानि

अत एव "सदेव सोम्येदमग्र आसीत्"इति कार्य-कारणभावेनोपक्रम्य वाक्यशेष एवाद्वितीयत्वावधारणमिति निर्विशेषतायामेव श्रुतेस्तात्पर्यम्, इति तदुपपादनार्थमुक्तानुमानमिति सुस्थम् ॥

यदा च मिथ्याज्ञानस्यापि यावद्बाधं मिथ्यात्वेनानिश्चीयमानार्थ-विषयकत्वेन प्रामाण्यम् , तदा कैव कथा निर्गुणवाक्यानामेव परम-तात्पर्येऽपि यावदनेन बाधः, तावत् सगुणवाक्यानामपि प्रामाण्ये ? सर्वज्ञानयाथार्थ्यवादे वक्तव्यं सर्वं पूर्वमुक्तम् ।।

### प्रत्यक्ष-शब्दादीनां सर्वेषां यथायथं प्रामाण्यम्

यावद्बाधमेव प्रमाणानां प्रामाण्यम् , न तु सर्वथाऽबाधितार्थ-बोधकत्वेनैव । प्रत्यक्षं हि वर्तमानमात्रावगाहि कथं कालान्तरभाविनम-बाधं ग्रहीष्यति ? शब्दस्तु यद्यपि कालत्रयाबाधितमर्थं बोधयितुं शक्नोति; तथापि तात्पर्यवशादेव स तथा बोधयितुं शक्नोति, इति यदि स एव तमर्थमन्यथापि वदति, तर्हि समानविषयत्वाभावे विषय-व्यवस्थया तत्प्रामाण्यव्यवस्था, इति तत्र पूर्वोक्तनीतिरेव कारणम् ।।

अत्र प्रामाण्याप्रामाण्ये अधिकृत्य निश्चितायामपि व्यवस्थायाम् , भूषणं बहु विस्तरेण ग्रन्थविस्तरं संरम्भेण प्रस्तौति ।।

प्रकृतस्तु विषयः—ब्रह्मसगुणत्वे न मुख्यं तात्पर्यम् , किन्त्ववा-न्तरं तत् , तन्निर्गुणत्व एव परं तात्पर्यम् , इति ब्रह्मनिर्गुणत्वानुमान-मूलश्रुत्यर्थोपपादनेनात्र सप्रयोजनत्वम् , अन्ततस्तत्र सन्दिहानान् प्रति । अत्र ब्रह्म निर्गुणं गुणाभावेनैव सगुणत्वादिति शङ्का तु बहुधा परीक्षिता, न पुनः परीक्ष्यते ग्रन्थविस्तरो मा भूदिति ।।

### भावाद्वैतादिप्रस्थानानामन्यतमेनान्यस्य निरासाऽयोगः

तत्र भावाद्वैतवाद इति प्रस्थानान्तरम् , यत्राभावोऽबाध्यः । अभावो-ऽपि बाध्य इति त्वपरं प्रस्थानम् । अतो नान्यतरत्र प्रद्वेषः, प्रेम वा; प्रस्थान भेदमात्रत्वात् , उभयस्याप्यद्वैताविरोधात् । सर्वप्रपञ्चनिवृत्तौ तदभावो ब्रह्मात्मना सन्नपि नार्थक्रियाकारी; तत्राभावस्याप्यज्ञानोपादेयत्वानुपादे-यत्वे एव प्रस्थानभेदप्रयोजके ।।

तत्राभावस्य स्वरूपतो ब्रह्मभिन्नस्यावस्थाने भावाद्वैतम् , तस्याप्यवि-द्योपादेयत्वे ब्रह्मात्मतापत्तस्तु सर्वाद्वैतवादः । लक्ष्यभेदस्तु तत्र न विशेषतः, फलभेदो वेत्यन्यदेतत् । प्रस्थानविशेषस्य प्रस्थानान्तरेण निरासो हि सर्वेषु सम्प्रदायेषु महते दोषाय। अतोऽत्रापि प्रकृतानुपयोगिनि न विस्तरार्थं यत्यते ।।

### निर्विशेषत्वेऽपि नित्यत्वाद्यविरोधः, सौगताद्यसाम्यं च

तत्र नित्यत्व-निर्विशेषत्वादेर्मिथ्यात्वेऽपि स्वप्रकाशं चैतन्यमेवाद्वैत-सिद्धान्ते तत्त्वं निर्धर्मकमिति नासत्कल्पत्वमपि चैतन्यस्य, न वा तत एव सद्रूपस्य न चतुष्कोट्यनिर्मुक्तस्य शून्यत्वम्, न वा क्षणिकत्वम्, तत्तद्वासनामात्रनिबन्धनं ज्ञानाकारत्वं वाऽर्थस्य मुक्तावस्थे चैतन्ये, इति कथं च सौगतमतेन नित्य-शुद्ध-बुद्ध-मुक्तस्वभावस्याद्वैततत्त्वस्य साम्यम्; इति न लेशतोऽप्यद्वैतसिद्धान्तस्य मतान्तरसिद्धान्ते प्रवेशः। न हि नित्यत्व-धर्मनिषेधमात्रेण, निर्विशेषत्वनिरासेन वाऽनित्यत्वादिस्वीकारः। अत एव "सत्यं ज्ञानमि"त्यादावनृत-जड-परिच्छिन्नव्यावृत्त्युपलक्षितं स्वरूपं तत्पदार्थ इति व्यवस्था॥

### निर्विशेषत्वे यदि नानुमानं प्रमाणम्, तर्हि तत्रार्थापत्तिः प्रमाणम्

साध्यादिधर्मानन्वयेनानुमानानुदयापत्तिस्तु यद्यखण्डाकारवृत्त्यनन्तरम्, तर्हीष्टापत्तिः। ततः पूर्वं तु कल्पितेन धर्म-धर्मिभावेन कथमनुमानानुदयः?

एतेन —निर्विशेषत्वम्, अनुभूतिसमसत्ताकविशेषरहितमित्यनुमानमपि—व्याख्यातम्; व्यतिरेकानुमानप्रामाण्यस्याद्वैतिभिरपि स्वीकारस्य, अर्थापत्तितस्तस्य विशेषाभावाभ्युपगमस्य च परिभाषाव्याख्यादौ सिद्धान्तितत्वाच्च, इति यदि तदप्रामाण्यपक्ष एव निर्भरः, तर्हि अर्थापत्तिरेव सर्वत्रोपपत्तिपदार्थः स्वीक्रियताम्, वस्तुसिद्धिस्त्वव्याहता॥

### अनुभूतिनिर्विशेषत्वानुमाने स्वशब्दादिप्रयोगे न दोषः

अनुभूतिः, समसत्ताकेति स्थाने स्वशब्दप्रयोगोऽपि न विरुद्धः स्वत्वानुगमकल्पे, भूषणं तु स्वत्वमनुगतमपि वदति, अनुगतमपि, इति विनापि स्वपदं धर्मिपदमात्रेऽनुमानं निर्वहतीति स्वपदप्रयोगाप्रयोगयोर्नात्याहितं किमपि। अपरं तु सर्वमत्र चर्वितचर्वणम्; सर्वज्ञानयाथार्थ्यवादस्यायोगात्, अनिर्वचनीयख्यातेरेव स्वीकाराच्च कथं न सत्तात्रैविध्यम्? तेन यदि व्यावहारिक-प्रातिभासिकयोरेव सिद्धिः, तर्हि तद्दृष्टान्तेन मिथ्यात्वसाधनावसरे तदधिष्ठानस्य ततोऽप्यधिकसत्ताकत्वं सिद्धप्रायम्। न हि 'सन् घटः' इत्यादौ सन्पदार्थो ब्रह्म न घटसमसत्ताकः, यो घटादिव्यावृत इति सत्तात्रैविध्यं नाप्रामाणिकम्॥

### घटादिपारमार्थिकत्वं न प्रत्यक्षावसेयम्

न च घटादीनां पारमार्थिकत्वम्, इति श्रुतिप्राबल्येन साधयिष्यते। साधितं च विकल्पाप्रामाण्यं पूर्वम्, इति कथं घटादीनां श्रुतिविरुद्धं पारमार्थिकत्वे प्रामाण्यम्? न च तदपारमार्थिकत्वेऽपि यावत्तत्सत्त्वं तस्य, तद्धर्मरूपादीनां वा प्रत्यक्षसिद्धानामपलापः, तत्पारमार्थिकत्वभानं वा निषिध्यते, न वाऽपलप्यते। न हि घटादिकमिव त्रिकालाबाध्यत्वमपि कालान्तरग्रहणाक्षमप्रत्यक्षग्राह्यम्। अखण्डाकारसाक्षात्कारानन्तरं तु न तस्य सत्त्वम्, कुतो वाऽपलापः? न हि घटो नष्टस्तदानीं 'नास्ती'ति प्रतीत्यविषयः नास्तीतिवादो वाऽपलापो नाम॥

### अनुभूतिसविशेषत्वानुमानस्य दुष्टत्वेनाप्रामाणिकत्वम्, निर्विशेषत्वानुमानस्य प्रामाण्यं च

अनुभूतिः, सविशेषा, भासमानत्वात्; घटादिवदिति प्रकरणसमस्तु कल्पितविशेषवत्त्वेन सिद्धसाधनम्, अप्रकाशस्वभावत्वेन सोपाधिकं च। न चैवं निर्विशेषत्वानुमानेऽपि समानम्; निर्विशेषत्वस्य विशेषाभावरूपस्य विशेषमिथ्यात्वरूपतया तस्यापि मिथ्यात्वपक्षे निर्विशेषत्वस्यापारमार्थिकस्य सिद्धत्वेऽप्यद्वैतिनामिष्टसाधनम्, परेषान्त्वनिष्टसाधनम्, उभयमिथ्यात्ववादित्वादद्वैतिनाम्। न चैतावता विशेषसत्यत्वापत्तिरिति तु गतम्। विरोधाभावस्य विशेषमिथ्यात्वस्य पारमार्थिकत्वे तु तस्य ब्रह्मरूपस्यापारमार्थ्यं बाधितम्, इति न तेनापि सिद्धसाधनम्॥

### अनुभूतिसविशेषत्वानुमानेन विशेषपारमार्थिकत्वसाधनायोगः

तत्र—अनुभूतिः, सविशेषा, भासमानत्वादित्यनुमानस्य पारमार्थिकविशेषसाधनत्वविवक्षायां तु पारमार्थिकसर्पाख्यविशेषशून्ये रज्ज्वादौ व्यभिचारः। तत्र रज्ज्वाविदमर्थे रज्जुत्वमिव सर्पोऽपि भासते, इति पारमार्थिकविशेषवदपारमार्थिकविशेषवत्त्वमपि वर्तते, इति कथं न तमादाय व्यभिचारः?

वस्तुतस्तु—निर्विशेषत्वानुमाने, सविशेषत्वानुमाने वा विशेष-शब्देन प्रकारस्यैव ग्रहणम्, न तु यस्य कस्यापि धर्मविशेषस्य विशेष्यतावच्छेदकस्य, इति पारमार्थिकप्रकारत्वसाधनमेव प्रकरणसम इति वक्तव्यम्। तच्च रज्जौ बाधितम्, इति कथमुक्तव्यभिचारपरिहारः?

तत्रानुभूतिशब्देन संविन्मात्रस्य, उपहितस्य वा विवक्षायां तत्र विशेषस्य तस्यां दशायां पारमार्थिकत्वं लौकिकपारमार्थ्यमेव, इति सिद्धसाधनम्। वृत्त्युपधानदशायां विशेषा बाध्या न पारमार्थिकतामर्हन्ति। तत्र तेषां बाधे प्रमाणं तु श्रुतिरेव। श्रुत्यर्थविचारस्तु तत्र तत्राद्वैतानुगुण एव स्वरस इति व्यक्तम्॥

लौकिकानुभवानां सविशेषत्वसाधनं तु तत्समसत्ताकविशेषवत्त्वेन सिद्धमेव। न च लौकिकानुभवानां वृत्तिरूपाणां निर्विशेषत्वसाधनमद्वैतसिद्धान्ते कुत्रापि, येन तानेव पक्षीकृत्य प्रकरणसमावतरणमुपपद्येत॥

सविकल्पकज्ञानत्वेन सोपाधिकत्वादपि सविशेषत्वानुमानमप्रमाणम्। निर्विकल्पज्ञानं तु साधितमेव, इति न तदप्रसिद्धः। विशेषशब्दं प्रकारपरं मत्वाऽत्र सविकल्पकज्ञानत्वमुपाधिरित्युक्तम्। धर्ममात्रपरत्वे तु सविकल्पकत्वमेवोपाधिरास्ताम्, येन साध्य-व्यापकत्वं सिध्येत्। अत एव निर्विशेषत्वानुमाने विपक्षे बाधकमस्ति, न तु सविशेषत्वानुमाने॥

### नित्यत्वादीनामनुभूतिधर्मत्वानुमाने हेत्वसिद्धिरपि

एतेन—नित्यत्वादयः, अनुभूतिधर्माः, अभ्युपगतानुभूतिस्वरूपतद्धर्मतया प्रमाणतः साध्यमानत्वादित्यनुमानमपि—व्याख्यातम्। इदमनुमानं यद्यद्वैतिनं प्रति परेषाम्, तर्हि अद्वैतमतेऽनित्यव्यावृत्तानुभूतिस्वरूपमात्रस्य स्वप्रकाशस्याभ्युपगमात्, नित्यत्वादिधर्माणां तद्धर्मतया प्रमाणतोऽसाध्यमानत्वाद् हेत्वसिद्धिः॥

### अद्वैतिनामनुभूतिनित्यत्वानुमानाशयनिष्कर्षः

अनुभूतिः, नित्या, मोक्षभागित्वादित्यद्वैतिनामनुमानप्रयोगो यदि कोऽपि, तर्हि स नित्यपदेनासत्यव्यावृत्त्युपलक्षिताभिप्राय एव, न तु नित्यत्वविशिष्टाभिप्रायः। अद्वैतिनं प्रति साधनेऽनुभूतिस्वरूपस्यानभ्युपगमपक्ष एव नास्तीत्यभ्युपगतपदं किमर्थम्, तेन स्वपदं नियोज्यतां वा मा वा; अभ्युपगमस्तु विवक्ष्यत एव, इति तद्विशेषणवैयर्थ्यम्। न च साम्प्रतं नैयायिकैः, अन्यैर्वाऽत्र वादः, येन तार्किकमतेऽनुभूतिस्वरूपमेव नास्तीति नित्यत्वादीनामनुभूतिधर्मत्वसाधनसंभवशङ्का स्यात्॥

तत्र यद्येकेनैव सकृद्वादो वादकथायां नियतः, स च साम्प्रतमद्वैतिना, तर्हि किमर्थमभ्युपगतविशेषणम्। अनुभूतिस्वरूपं प्रति तद्धर्मतया नित्यत्वादीनां साध्यमानत्वमप्यसिद्धमेव। अनुभूतिः, नित्या, मोक्षभागित्वादि-

त्यनुमानं तु न नित्यधर्मवत्त्वमनुभूतेः साधयतीति युक्तम् । सर्वथा तु नात्र हेत्वसिद्धितः, व्याप्यत्वासिद्धितो वा निस्तारः ॥

अनुभूतिनिर्विशेषत्वानुमानस्य सर्वदोषनिरासेनोपसंहारः

अनुभूतिः, निर्विशेषा, अनुभूतित्वादित्यनुमानं नाप्रयोजकत्वशङ्काकलङ्कितम्, सविशेषत्वे घटादिवदननुभूतिप्रसङ्गस्यात्र बाधकतर्कस्य सत्त्वात् । तत्र सविशेषत्वमस्तु, अननुभूतित्वं माऽस्त्विति शङ्का हि सविशेषत्वानुभूतित्वयोर्व्याप्तिग्रहे सति स्यात् । न च सविशेषत्वानुभूतित्वयोः साहचर्यं कुत्रापि । अनुभूतिशब्दार्थो ह्यत्र संविन्मात्रप्रधानः, न तु लौकि नुभवसाधारण इत्युक्तमेव, इति पक्षातिरिक्ताया अनुभूतेरभावात्, तस्याश्च सविशेषत्वस्य सन्दिग्धत्वाच्च कथमुक्तस्य विपक्षे बाधकतर्कस्य बाधः? व्याघातावधिर्हि शङ्कायाः, तर्कस्य च शङ्कावधित्वात्, इति विपक्षे बाधकराहित्याभावाद् नाप्रयोजकताशङ्कावसरः । अनुभूतेर्निर्विशेषत्वसाधनमिदमिदं श्रुतिमूलम्, निर्मूलं तत्सविशेषत्वानुमानं । श्रुतिविरोधोऽपि तत्र बाधकस्तर्कः ॥

श्रुतिमूलत्वे मोक्षः ज्ञानसाध्य इत्याद्यनुमानानामपि प्रामाण्यम्

एतेन—संध्योपासनम्, कर्तव्यम्, सन्ध्योपासनत्वात्, मोक्षः; ज्ञानसाध्यः, मोक्षत्वादित्यनुमानसाम्यमपि—व्याख्यातम् । श्रुतिमूलस्यास्यानुमानस्यापि श्रुतिविरोधापत्तिरूपबाधतर्कसाहित्येन प्रामाण्यं कथं न भवति ? का वाऽत्र श्रुतिसिद्धेऽनुमानापेक्षेति प्रश्नावृत्तौ प्राचीनोत्तरावृत्तिरेव मर्यादा, इति श्रुतिसिद्धमनुभूतिनिर्विशेषत्वमनुमानेनापि सिध्यतीति सुस्थम् ॥

॥ इति निर्विशेषत्वानुमानोपपत्तिः ॥

## अनुभूतिस्वप्रकाशत्वोपपत्तिः

अत्राद्वैतिनः—स्वप्रकाशमनुभूतिस्वरूपमात्मैव मुख्यं ज्ञानम्, लौकिकानुभवाश्च वृत्तिरूपा औपचारिकसंविद एवेति मन्यन्ते। परे तु—स्वरूपज्ञानं धर्मभूतज्ञानं चोभयमपि मुख्यं ज्ञानमिति ॥

तत्राद्वैतिनां संवित्पक्षकत्वानुमानमेव यद्यपि सर्वत्र; तथापि संविदात्मेति संवित्पक्षकत्वनिर्देशे सिद्धसाधनमापाद्यते परैरिति कृत्वाऽऽत्मपक्षकानुमाननिर्देश आदत्तः। दूषणयुक्तरीत्या सोऽपि प्रयोगो भूषणेनानूदितः, इति तदनुवादेन शतदूषणीनिरासार्थमेव शतभूषण्याः प्रयत्नः। अनन्तरं तु शतभूषणी संवित्पक्षकानुमानमपि निरस्यति, क्रमपरिवर्तनमात्रमत्र, न तु स्वयं कस्यापि परिवर्तनम्, इति संवित्पक्षकप्रक्रमो नात्रापि परित्यक्तः ॥

आत्मपक्षकोऽनुमानप्रयोगोऽयम्—संविद्रूपपदेन सद्रूपमात्रविवक्षणाद् येन येन संविद्रूपत्वमनुभाव्यत्वं च मन्यते, तस्य तस्य मतस्य निरासोऽभिप्रेयते। व्यतिरेकानुमानम्, अर्थापत्तिर्वोपपत्तिपदार्थः, अस्वप्रकाशत्वनियतस्यानुभाव्यत्वस्य निरास एव तात्पर्यम्; अन्यथा घटादिवज्जडत्वापत्तिरिति। अजडत्वं चात्र संवित्कर्मतामन्तरेणापरोक्षत्वम्; अन्यथा त्वनात्मत्वापत्तिरिति ब्रह्मसिद्धिः ॥

संवित्पदेन चात्र वृत्त्यवच्छिन्नम्, तदभिव्यक्तं वा चैतन्यं विवक्ष्यते, तेन च धर्मभूतज्ञानवेद्यत्वव्यावृत्तिः ॥

### अहमर्थातिरिक्तस्यैवाऽऽत्मनः स्वप्रकाशत्वसाधनार्थमनुमानम्

अहंपदार्थस्तु साक्षी नानावृतस्वभावो संशय-विपर्ययविषय इति त्वन्यदेतत्। न चैतावता शुद्धस्यात्मनो न स्वप्रकाशत्वम्। न च शुद्धं प्रत्यगात्मस्वरूपमहंपदार्थः। तत्र साक्षी अन्तःकरणोपहितं संविद्रूपं संवित्कर्मतामन्तरेणानुभाव्यम्, विशिष्टं तु न साक्षि, इति तत् साक्षितादात्म्येन साक्षिभास्यम्। अतः स्वप्रकाशोऽपि संवित्प्रकाश्य इति मतनिरासार्थमात्मपक्षकानुमानम्। न चात्र सिद्धसाधनम्; परेषां तत्रासंप्रतिपत्तेः ॥

### प्रकृतानुमाने पक्ष-साध्य-हेतुनिष्कर्षः, वृत्तेरपक्षत्वं च

अत्र साध्यं संविद्रूपत्वं स्वप्रकाशस्वभावत्वम्=अर्थोपलक्षितप्रकाशत्वमेव, इति न धर्मभूतज्ञानसाधारण्यं साध्यस्य, इत्यात्मपक्षकेऽनुमाने वृत्तौ

बाधोऽकिञ्चित्करः। दृष्टान्तस्त्वत्र व्यतिरेकविधया घटादिः, जडा वृत्तिः; न हेतु-साध्ययोस्तत्र वैकल्यम्, आत्मपक्षकमनुमानप्रयोगं द्वितीयमधिकृत्यैवेयं परीक्षेति कथमात्मपक्षकत्वाभावः, येन स्वस्मै प्रकाशमानत्वरूपस्याजडत्वस्य नासिद्धिः। संवित्पक्षकत्वे तु वृत्ति-धर्मभूतज्ञानव्यावृत्ताया एव संविदः पक्षत्वात्, तस्य च स्वप्रकाशत्वमात्रस्वभावत्वाद् न हेतुरयं तत्रासिद्धः॥

अव्यभिचरितप्रकाशत्वस्याजडत्वहेतोरदुष्टत्वम्, एवमेवाजडत्वस्य ज्ञानत्वरूपत्वेऽपि

एतेन— अव्यभिचरितप्रकाशसत्ताकत्वमजडत्वमपि— व्याख्यातम्; तद्धीतरानपेक्षाव्यभिचरितप्रकाशसत्ताकत्वं साक्षिभास्येषु नास्ति, इति सुखादौ साक्षिभास्यत्वे न व्यभिचारः; संवित्पदेन स्वरूपज्ञानस्य धर्मिरूपस्य निर्विशेषस्यैव विवक्षणात्, तदाकारवृत्तेरविद्यानिवृत्तिमात्रेणोपक्षयाच्च न वृत्त्यधीनप्रकाशत्वम्, अन्याधीनप्रकाशत्वं वेति न संदिग्धासिद्धिरपि॥

अजडत्वात्मत्वयोर्हेतु-साध्ययोरर्थोपलक्षितत्व-ज्ञानत्वोपलक्षितत्वयोरेव ग्रहणाददोषः

एतेन—अजडत्वं ज्ञानत्वमिति पक्षोऽपि—व्याख्यातः। तच्चार्थोपलक्षितप्रकाशत्वम्। न चात्माऽज्ञानदशायामर्थप्रकाशः; आवृतत्वात्, अनावृतावस्थायां तु नार्थः, इति नार्थप्रकाशः, इति स्वात्मनि कल्पितप्रपञ्चस्याप्यात्मनो नात्रोपलक्षितप्रकाशत्वम्, साक्षात्कारावस्थायां त्वर्थानां बाधादर्थोपलक्षितप्रकाशत्वम्, नार्थप्रकाशकत्वमिति न हेत्वसिद्धिः॥

साध्यमात्मत्वमपि ज्ञानत्वोपलक्षितं संविन्मात्रत्वमिति व्याख्यातम्। तत्र ज्ञातृत्वमनुभूयमानमहमर्थस्योपहितस्य, न तु शुद्धस्याऽनहमर्थस्य। तच्चान्तःकरणवृत्त्याश्रयस्यैव। वृत्तेरप्यध्यासमात्रेण ज्ञातृत्वमात्मनि; तस्य मुक्तिदशायां बाधाद् ज्ञातृत्वमप्युपपन्नम्; "सत्यं ज्ञानमि"ति श्रुत्या ज्ञानरूपतया सिद्धस्यात्मनो ज्ञातृत्वस्य बाधात्। तथा च श्रुतिः —"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं केन पश्येत्"—इति। न चात्र संविन्मात्रत्वं कल्पितज्ञानत्वविरहितसंविद्रूपत्वम्, इति न पक्ष-साध्ययोरैक्यम्, सिद्धसाधनत्वं वा॥

ज्ञानत्वाजडत्वयोरविरोधः स्वाभाविकत्वौपाधिकत्वाभ्याम्

"ज्ञोऽत एवे"ति सूत्रं स्वरूपपरमपीति संप्रतिपन्नम्। तच्चात्मनो न सन्दिग्धमिति न साधनीयम्। तस्य ज्ञानरूपस्य ज्ञातृत्वमपि न साधनीयम्; ज्ञातृत्वस्य लोकसिद्धत्वात्, इति ज्ञानत्वाजडत्वयोरविरोधसमर्थनार्थमिति वक्तव्यम्॥

अविरोधश्च "चराचरव्यपाश्रयस्तु"इति पूर्वाधिकरणादत्र आश्रयत्वानुषङ्गेण वा, उपरितनाधिकरणगतस्य, ज्ञाधिकरणगतस्य वा तद्गुणसारत्वस्यानुषङ्गेण वौपाधिकत्वेन, ज्ञानत्वस्य स्वाभाविकत्वेन चोपपादनपरमेव" "ज्ञोऽत एव"—इति सूत्रमिति वक्तव्यम्, इति ज्ञातृत्वसोपाधिकत्वं चोदक्षमम्; अन्यथा सूत्रवैयर्थ्यात्। ज्ञानत्व-तदाश्रयत्वोभयसाधनं हि वितथम्॥

ज्ञातृत्वौपाधिकत्व एव ज्ञाधिकरणसार्थक्यम्

इदमत्र विविच्यताम्—ज्ञानत्वमात्रमुक्तसूत्रसिसाधयिषितम्, किं ज्ञानमात्रम्, उतज्ञातृत्वमात्रम्, उतोभयम्। अन्त्ये नैकस्य ज्ञपदस्य व्युत्पत्तिभेदेनार्थद्वयपरत्वं युक्तम्। तत्र द्वितीये ज्ञानत्वासिद्धिः; प्रत्यक्षसिद्धत्वात् तत्साधनवैयर्थ्यं च। आद्ये तु ज्ञपदस्य भावव्युत्पत्तिनिष्पन्नत्वं वर्णनीयम्, इति ज्ञानस्वरूपत्वमात्रसाधनेन, जडत्वानुभवविरोधपरिहारः। ज्ञानत्वं ज्ञातृत्वं चाविरुद्धम्; ज्ञातृत्वस्यौपाधिकत्वमात्रत्वादित्येवोक्तसूत्राशयात्॥

श्रुत्यर्थनिर्णयार्थत्वात्, ज्ञानत्वाजडत्वयोरुभयोरपि श्रुतिसिद्धत्वाच्चोभयसप्रतिपत्तिरुभयत्र समाना। विरोधपरिहारमात्रं सूत्रलक्ष्यम्। तच्चाद्वैतसिद्धान्तदृष्ट्या सूत्रयोजनायामेव स्वरसम्॥

ज्ञानत्वमिव ज्ञातृत्वमपि यदि स्वाभाविकम्, तर्हि यावदात्मभावित्वं ज्ञातृत्वस्यापि, इति कथं "यावदात्मभावित्वाच्चे"ति सूत्रे ज्ञानस्वरूपमात्रस्य लाभः? इति तेनैव सूत्रेण गतार्थत्वात् तस्य पराभिमतार्थपरत्वे किमर्थं वा "ज्ञोऽत एवे"ति सूत्रम्?

भूषणी ज्ञानपक्षकम्, आत्मपक्षकं चा-
नुमानमभिप्रेति, नात्मपक्षकमात्रम्

वस्तुतो ज्ञानाश्रयत्वे चात्मनो विनापि ज्ञानरूपत्वं जडत्वव्यावृत्त्या किमर्थं ज्ञानस्वरूपत्वाश्रयणम्? भूषण्यामत्राचेतनत्वापत्तिपदं जडत्वापत्तिपरम्, न तु ज्ञानाश्रयत्वरूपचेतनत्वनिरासपरम्। ज्ञानपक्षकानु-

मानमिष्टसिद्ध्यादिमतमप्यत्र समर्थ्यते, आत्मपक्षकं चेति दूषणीनिरास-निर्भरा भूषणी क्रममात्रं दूषण्याः परिवर्तयति, संवित्पक्षकत्व एकान्तेन नोदास्ते, इति भूषण्यामेव व्यक्तम् , इत्थात्मपक्षकानुमानमात्रत्वं न शत-भूषणी मन्यते; उभयस्यापि परीक्षणादिति भूषणीदर्शने विशदी-भविष्यति ॥

### भूषणाभिमतात्मस्वप्रकाशत्वानुमानं न युक्तम्

तत्रात्मत्वं प्रत्येतुः प्रत्येतव्यादतिरिक्तत्वं ज्ञातृ-ज्ञेयैकत्वम् , आश्रयत्व-विषयत्वोभयसम्बन्धेन विज्ञानविशिष्टत्वम् । तत्राऽऽत्मनः स्वेनैव ज्ञाने प्रत्य-क्त्वमिति भूषणं लिखति । तत्र स्वयमात्मा प्रकाशस्वभावो न प्रका-श्योऽपीति; अन्यथाऽनात्मत्वप्रसंगादिति ब्रह्मसिद्धिरात्मनः प्रकाशात्मत्व-मेव प्रत्यक्त्वं वदति, इति भूषणाभिमतमात्मत्वं नात्र पक्षः, साध्यं वा, ज्ञानमात्रस्वरूपत्वात्तस्य, इति न संविदतिरिक्तत्वसिद्धिः । तत्र ज्ञानाश्रयत्वं ज्ञानमात्रस्य बाधितम् ; स्वस्यैव स्वाश्रयत्वासंभवात् । ज्ञानाश्रयत्वं तूपाधि-धर्मेणापि तस्य निर्वहति, साक्षात् स्वधर्मेणापि । आद्यमद्वैतसिद्धान्ते, द्वितीयं भूषणमते । ज्ञानान्तरं धर्मो यदि 'जानामि'पदार्थः, तस्य द्रव्यत्वे वा गुण-त्वे वा साध्यत्व एवोपपद्यते, न तु नित्यत्वे । उत्पत्तिश्चात्र मिथ्यार्थस्यावि-र्भावमात्रम् , न विकासमात्रेण । न हि नित्यविकसितमैश्वरं धर्मभूतज्ञान-मुत्पाद्यं नाम । 'ज्ञानमुत्पन्नं नष्टमि'तिव्यपदेशश्च विकासातिरिक्तमेव स्व-रूपमुत्पत्तेरभिप्रैति । नित्यमुत्पन्नमिति च व्याहतम् । प्रथमो हि भावविकार उत्पत्तिर्नाम, न तु विकारसामान्यमिति जन्यधर्माश्रयत्वं नित्यस्य जन्यो-पाधिकस्यैवेति युक्तम् । लोकानुभवोऽप्यत्र नाननुगुणः ॥

### श्रीभाष्याभिमतेन धर्मभूतज्ञानेन न ज्ञातृत्वम्, किन्त्वन्तः-करणधर्मे वृत्त्यैव, वृत्तेरन्तःकरणधर्मप्रमाणं च

नित्यस्य ज्ञानस्य नित्यो धर्मो न कुत्रापि दृष्टचरः । अदृष्टचरस्याप्रा-माणिकस्य कस्यचन कुत्रचन स्वीकारे जडस्य घटादेरेव स स्वीक्रियताम् । प्रमाणानुसारेणार्थव्यवस्थायां तु "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे"ति श्रुत्या, मनोविलये सुषुप्त्यादौ, असंप्रज्ञातसमाधौ च योगिमते कस्यापि विषयस्याप्रकाशात् , मनःसत्त्व एव विषयाणां तत्परिणामेनैव प्रकाशदर्शनाच्च वृत्तिरेव जन्या-धर्मभूतं ज्ञानमात्मनोऽपि तदाश्रयोपाधिकत्वेनेत्येव युक्तम् ॥

मुख्य आत्मा तु निर्गलिताहङ्कारचिन्मात्रमेव श्रुतिसिद्धः। तस्य च ज्ञानत्वम्, ज्ञातृत्वं तु चिदचिद्ग्रन्थरूपस्यौपाधिकस्यैव। स च स्वरूपतश्चिद्रूपः, औपाधिकत्वेन रूपेणाचिच्च। न च स चिदेव, न वा केवलाऽचित्। व्यक्तं चैतत् "यथा च तक्षोभयथे"ति सूत्रभाष्ये, इति मुख्यस्य ज्ञातुरनात्मत्वे तस्य जडत्वापत्तिरिति परास्तम्; केवलायाश्चितो ज्ञातृत्वनिषेधो नाचिदात्मकत्वं ज्ञातुर्व्यवस्थापयति, न वा सन्मात्रत्वम्, इति तत्सूत्राशयः। आत्मनः स्वप्रकाशसंविद्रूपत्वानुमानप्रयोजनं तु सुषुप्तौ मनोनाशेऽपि मानसजन्यवृत्त्यभावेऽपि स्वप्रकाशात्मसिद्धिः। तत्र सुषुप्तौ धर्मभूतज्ञानाभावः, न तु स्वरूपज्ञानाभावः। अतो वृत्त्यभावेऽपि तत्र न संवित्स्वरूपाभावः॥

### संविन्मात्रमेवात्मा, नाहमर्थः

अत एव जागरेऽप्यात्मनोऽनुभव एव, न स्मरणमिति वार्तिकम्। आत्मनोऽपि मुख्याहमर्थत्वे सुषुप्तौ तस्य तेन रूपेण कस्याप्यननुभवो विरुध्यते। न हि कोऽप्यात्मानं तदाऽहमित्यनुभवति। "अथातोऽहङ्कारादेशः "अथात आत्मादेश" इत्युपदेशद्वयमहमर्थानात्मतावाद एवेत्यनन्तरे प्रकरणे विशदीभविष्यति॥

### संविदो न सविषयत्वम्, किन्तु वृत्तेरेव साक्षात्

तत्र स्वरूपचैतन्यं न विषयोल्लेखितया भासते, विषयोल्लेखस्तु चैतन्यस्य तत्तदाकारवृत्तिदशायामेव। तदपि विषयसत्ताकाल एव। तत्र विषयोल्लेखित्वं साक्षात् जन्यवृत्तिज्ञानस्य, परम्परया तु संविन्मात्रस्याधिष्ठानस्यापि, यदाऽनावृतप्रकाशाधीन एव विषयाणां प्रकाशः। अखण्डाकारवृत्तौ तु न प्रकाशः। संविन्मात्रे को वा तदा विषयतया भासते? तदतिरिक्तस्य तदा कस्याप्यभावात्। "उपलब्धिवदनियमः" इति सूत्रभाष्यभामत्यादिकमपि "नित्यचैतन्यरूपायां विषयोपलब्धौ तावन्नेन्द्रियापेक्षा, नापि तदपेक्षितजन्योपलब्ध्यन्तरे; उपलब्धेरुपलब्ध्यन्तरानपेक्षत्वात्, किन्तु नित्यचैतन्य एव विषयोपरक्ततायाम्, इति स्वरूपज्ञानस्य न विषयोल्लेखित्वम्, किन्त्विन्द्रियजन्यवृत्त्यवच्छिन्नचैतन्यतायामि"ति बोधयत् स्वरूपज्ञानस्य विषयोल्लेखित्वनियमं वारयति॥

अत एव "अविज्ञातं विजानतां विज्ञातमविजानताम्" "प्रतिबोधविदितं मतममृतत्वाय कल्पते" इत्यादिश्रुतिवशात् विषयानुल्लेखिस्वरूप-

ज्ञानस्य वृत्त्युपधानमात्रप्रयुक्तावरणनिवृत्तिमात्रेण स्वयंप्रकाश इति विज्ञायते, इति श्रुतिशरणानां संविद्रूपस्यात्मनो नित्यचैतन्यस्वभावस्य विषयानुल्लेखनियमपक्ष एव समुचितः ॥

तत्र चैतन्यातिरिक्तस्य न विषयभासकत्वम्, तत्रापि वृत्त्युपरक्तचैतन्यस्यैव विषयावभासकत्वम्, वृत्तिमात्रस्य तु चैतन्योपरागमात्रेणाऽऽवरणनिवृत्तिमात्रेणोपक्षीणस्य न भासकत्वं कुत्रापि। तत्राप्यखण्डाकारवृत्तौ संविन्मात्रस्य स्वत एव प्रकाशः, न तु विषयाणामिव चैतन्यभास्यत्वमपि ॥

आत्मनो विज्ञातृत्वं न स्वभावः; श्रुतिविरुद्धत्वात्

तत्र "विज्ञातारमरे केन विजानीयात्" इति श्रुतिः "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इति श्रुत्येकवाक्यतया न विज्ञातृ, न वा विज्ञानम्, तत्करणं मुक्तात्मतावस्थायामिति बोधयन्ती निर्विषयनिराश्रयस्वभावत्वमात्मन उपपादयति। तत्र विज्ञातृत्वं करणजन्यविज्ञानाश्रयत्वेन व्यवहारदशायाम्, मुक्तौ तु साक्षात्करणनिषेधेन विज्ञानस्य, तदाश्रयस्य च निषेधोऽप्यर्थसिद्धः; अन्यथा धर्मभूतज्ञानाभावे कथं विज्ञातृत्वमात्मनः? अन्तःकरणनिषेधः, "यत्र त्वस्ये"त्यत्र कर्मकरणनिषेधः? एवमात्मस्वरूपमात्रावस्था च बोध्यते, इति कथं विज्ञातृत्वमात्मनः स्वभावः ॥

"अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा" इत्यस्याद्वैतमत एव स्वारस्यमिति पूर्वमुपपादिम्—धर्मभूतज्ञानपरीक्षावसरे "न विज्ञातुर्विज्ञातेरि"ति शास्त्रार्थविचारप्रसङ्गे ॥

तत्र श्रोतृत्वम्, मन्तृत्वम्, निदिध्यासितृत्वं चाहमर्थस्य विशिष्टचैतन्यस्यैव यावदज्ञाननिवृत्ति, यावत्संस्कारनिवृत्ति चाहमर्थस्यात्यन्तिकबाधायोगात्। अयमेव न्याय उपदेष्टर्यपि, इति नोपदेशानुपपत्त्यादि ॥

एतेन—'अहं मुक्तः स्यामि'तीच्छोपपत्तिरपि—व्याख्याता। व्यक्तीभविष्यते चेदमुपरिष्टात्। मोक्षभागित्वं हि ज्ञानिनोऽनावृतस्वयंप्रकाशसंविन्मात्रता तत्स्वरूपलाभार्थमहंकाराद्यचिद्ग्रन्थिनिवृत्तिमेवापेक्षते, न तु तदनुवृत्तिम्; तस्यास्तत्प्रतिबन्धित्वात्। चिन्मात्रावस्था हि मुक्तिर्नाम। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥"

इति ॥

### अहमर्थानात्मतायामेव बन्ध-मोक्षोपपत्तिः

बद्ध आत्मा बन्धादहंकारादिरूपात् विमुक्तो तद्बन्धनिवृत्तिमात्रेण विमुच्यत इति व्यपदेशमात्रम्। तदुक्तम्—"विमुक्तश्च विमुच्यते" इति। न चान्यस्य बन्धोऽन्यस्य मुक्तिः, इति न बद्ध-मुक्तस्वरूपयोरैक्यम्। भेदस्तु मुक्ताद् बद्धस्य बन्धोपाधिसम्बन्धमात्रेण संविन्मात्रे कल्पितेन, इति नान्यस्य बन्धः, न चान्यस्य मुक्तिः, इति नान्यमुक्त्यर्थमन्यस्य श्रवणादिकं संविन्मात्रात्मतायामपि ॥

अहमर्थात्मतायां तु स कदाचित् शरीरतया, कदाचिदिन्द्रियतया, कदाचिन्मनोबुद्ध्यादिरूपतया, कदाचित् सर्वविशिष्टतया च प्रतीयते। न च तस्य मुक्तावपि तदात्मनाऽनुवृत्तिः ॥

तत्र यदि शुद्धप्रत्यगात्मन एव मुक्त्यनुवृत्तिः, तर्हि किं तत्राशुद्धः श्रोता, मन्ता, निदिध्यासिता, ज्ञाता, उपासिता, उपदेष्टा वा, उत शुद्धः। आद्ये न तस्य मुक्तावन्वयः, अन्त्ये नायं श्रोता, मन्ता वा, निदिध्यासिता वा, न वोपासितोपदेष्टा वा, इति कथमन्यस्य साधनम्, अन्यस्य फलमिति भूषणस्यापि नेदं दूषणम्?

शुद्धश्च प्रत्यगात्माऽहमर्थ एव, न ततो व्यतिरिक्त इति कुतोऽवगतम्? शास्त्रं तु "तत्त्वमसी"त्यादि निर्गलिताहंकारादिसम्बन्धं संविन्मात्रं शुद्धं प्रत्यगात्मानमनुशास्ति। अत एव—"अथातोऽहङ्कारादेशः" "अथात आत्मादेशः" इत्यादिः। सर्वथा संविदात्मतावादे बन्धनिवृत्तिमात्रेण मुक्तिपदं यथार्थम्। श्रीभाष्यमते तु रूपान्तरावाप्तिर्मुक्तिर्नाम, इति मुक्तपदमेवानन्वयि, इति न कोऽपि क्षुद्रोपप्लवः संविन्मात्रात्मतायाम्, इति संविदेवात्मा, न त्वहमर्थः ॥

॥ इति संविदात्मतोपपत्तिः ॥

## अथाहमर्थात्मतानुपपत्तिः

**औपाधिकं संविद्रूमेवाहमर्थो मिथ्यात्मा, अनुपहिता तु संविन्मुख्यात्मा। अयमेव न्याय ईश्वरेऽपि**

संविदात्मेति परमसिद्धान्तेऽपि तस्यास्तत्तदुपाध्युपधानादुपहितानि बहूनि रूपाणि भवन्ति—घटाद्युपाधिसम्बन्धाद् घटाकाशादिरूपाणीव महाकाशस्य। तत्रातीन्द्रियादिसम्बन्धात् तस्याहमर्थत्वम्, अहमर्थस्यैव तस्यौपाधिकमात्मत्वमपि। तत्राधिष्ठान एव सूक्ष्मशरीरादिसम्बन्धात् तत्तदुपाध्युपहितोऽपि कथञ्चनाहंप्रतीतिविषयो मिथ्यात्मा, गौणात्मा च व्यपदिश्यते। सर्वमिदमहमर्थत्वं बुद्ध्यादिसम्बन्धापेक्षं स्थूलरूपेण, सूक्ष्मरूपेण वा यावदहमुपाधिसत्त्वमेव संविदात्मता, तन्निवृत्तौ शुद्धसंविदात्मतैव जीवात्मनः, एवमेवेश्वरस्यापि यावन्मायासम्बन्धमुपहितरूपेणेश्वरत्वम्, तन्निवृत्तौ तु संविदात्मत्वम्। तामेवावस्थामाश्रित्य जीवेश्वरस्वरूपैक्यं तत्त्वमसिवाक्यार्थः, न तु जीवत्वेश्वरत्वयोरौपाधिकयोरनुवृत्तिदशायामिति वेदान्तमर्यादा॥

**अहमर्थश्चिदचिद्ग्रन्थिरूपः सुषुप्तौ, प्रलये वाऽहंप्रतीत्यभावात्**

तत्राहमर्थश्चिदचिद्ग्रन्थिरूपोऽऽहङ्कारं चैतन्यमिति द्वयमवगाहते। तत्र संवित्स्वरूपं बुद्धीन्द्रियादिसम्बद्धमहंरूपेण प्रतीयते, न तु तत्र तत्र बुद्धीन्द्रियाद्यतिरिक्तोऽहङ्कारो नाम कश्चनोपाधिः। तदुक्तं भामत्याम्—"न त्वहङ्कारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्योऽन्योऽपि भिन्नोऽनुभूयते "इति"॥

तथाच देहाद्युपाधिकसंविदेवाहमर्थः, न त्वहङ्कारोपहितः। सत्यप्येवं "जीव ईशो विशुद्धा चिदि"ति तस्यानादित्वं तु सौषुप्तं स्वरूपमाश्रित्य, न तु स्वाप्नसूक्ष्मशरीरसम्बन्धम्, स्थूलशरीरसम्बन्धमपेक्ष्य वा॥

अहमर्थता त्वहंप्रतीतिविषयता। सा च जाग्रत्स्वप्नदशयोरेव। सुषुप्तौ जीवः कारणशरीरकोऽज्ञानोपहित एव भासते चेदपि सूक्ष्मस्थूलशरीरयोरज्ञानकार्ययोस्तदाऽज्ञानात्मनाऽवस्थानात् जीवस्वरूपभानेऽपि नाहंरूपेण तस्य भानम्, तदा शरीरादीनां स्थूलरूपाणात्मन्यनाध्यासात्। अत एव सुषुप्तावहङ्कारांशेऽनुभवः, जीवांशे तु स्मरणम्, तस्याज्ञानोपहितात्मना भानात्॥

### प्रकृतिपरिणामोऽहंकारो नाहंप्रतीतिविषयः, किन्तु बुध्याद्युपहित एव

तस्य सौषुप्तस्य प्राज्ञेनात्मना परिच्छिन्नस्यानन्दात्मनाऽपि कल्पितेन भानात्, 'सुखमहमस्वाप्सम्'इति स्मरणमप्यहङ्कारांशे नोपपद्यते, एवं 'न किञ्चिदवेदिषम'ति च। तथाचाहंरूपेण भानं जाग्रत्स्वप्नयोरिति स्थितावहमर्थविचारं प्रक्रम्य अहमर्थो नात्मेति वदद्भिश्चिदचिद्ग्रन्थिरहमर्थ इति विवक्षितम्। प्रकृतिपरिणामविशेषोऽहङ्कारस्तु नाहमर्थ इति दूषणं न प्रकृतेन विषयेण सङ्गतम्, देहेन्द्रियाद्यध्यस्ततादात्म्यापन्नसंविदात्मन एवाहमर्थत्वात्॥

तत्र तत्राचिदंशान्तःकरणाद्यपरपर्यायस्याहङ्कारत्वोपन्यासस्त्वहंप्रतीतिप्रयोजकोपाधित्वमात्रेण, न त्वहङ्कारस्यैवाहमर्थोपाधित्वेन; बुद्धीन्द्रियादीनामेव तदुपाधित्वात्, इति नात्र प्रकृतिपरिणामाऽहङ्कारस्योपाधित्वम्॥

अतोऽहङ्कारमात्रं नाहमर्थः; तस्यानात्मत्वात्, अहङ्कार इति तु प्रकृतिपरिणामोऽन्य एव, न सोऽहमर्थः; न वाऽहमर्थस्योपाधिः; अन्यथा किं तदुपाधिकमहमर्थस्वरूपं भूषणमते? तत्र "अथातोऽहङ्कारादेशः"इत्यादौ अहङ्कारशब्देन शरीराद्युपहितसंविद उपदेशोऽप्यहमर्थाभिप्रायः; "अहमेवाधस्तादि"ति विना कारप्रत्ययं वाक्यशेषस्य प्रवृत्तत्वात्॥

तत्राहमः सार्वत्रिकत्वनिर्देशस्तु शरीराद्युपहितमेव वस्तुगत्या सर्वोपहितम्, उपाधिभेदमात्रत्वं सर्वत्र। स्वरूपं त्वेकमेवेति मत्वा। अत एव "अथात आत्मादेशः"इति सर्वोपाधिविवेकेन निरुपाधिकसंविन्मात्रोपदेश इति सर्वं सुस्थम्। अहङ्कारद्रव्यमन्यत्, अहंबुद्धिविषयबुद्धीन्द्रियादिकमन्यत्, यत्सम्बन्धात् संविन्मात्रस्याहंबुद्धिगोचरता॥

एतेन—अहम्बुद्धिजनकत्वमहङ्कारलक्षणमिति—परास्तम्, देहेन्द्रियबुद्ध्यादीनामध्यस्तानामेवाहंप्रतीतिविषयोपाधित्वेन, तत्प्रतीतिप्रयोजकत्वेन चाहङ्कारद्रव्यस्य तदप्रयोजकत्वात्॥

### उपहितचैतन्यस्यैवाहमर्थत्वेऽपि न घटाद्यवच्छिन्नं प्रकृतिपरिणामाहाङ्कारावच्छिन्नचैतन्यं वाऽहमर्थः

एतेन—घट-पटादिप्रतीतिवैलक्षण्यमपि—व्याख्यातम्। तत्रापि घटाद्यवच्छिन्नचैतन्यस्यैव भानेऽपि घट-पटादीनां साक्षितानियामकत्वाभावात्, बुद्ध्याद्यध्यासस्यैव तन्नियामकत्वाच्च न तेषां नियमेन

यात्सत्त्वं शरीरेन्द्रियादीनामिवाहमर्थगतया भानम्, न वा साक्षि-सम्बन्धेन विना भानमपि। आत्मानात्मनोः परस्परतादात्म्याध्यास-मात्रेण नाहंप्रतीतिः, न वाऽहङ्काराध्यासेन, किन्तु देहेन्द्रिय-बुद्ध्याद्यध्यासेनैव, इति नाहमर्थेऽहंबुद्धिरूपविपर्ययहेतुरहङ्कारोऽत्राहं पदार्थः; अनात्मनि देहादावात्मबुद्धिरहंप्रतीतिरिति तु निष्कर्षः ॥

विष्णुपुराणम्, तीर्थकराश्च शरीरेऽनात्मन्यात्मबुद्धिरेवाहंबुद्धिरिति प्रतिपादयन्ति। अतो नाहंतत्त्वमहंशब्दार्थः, तदुपाधिर्वा, देहेन्द्रियादिष्वहंप्रतीतिरेवाहंप्रतीतिरिति निष्कर्षात्—देहेन्द्रियाद्यचिच्चिद्ग्रन्थिरेवाहंपदार्थः, न तु ततोऽतिरिक्तो मुख्योऽपरोऽहंपदार्थ आत्मा नाम संविदतिरिक्तो वर्तते ॥

### दर्शनान्तरसंमताहमर्थवादस्तु न मुक्तात्मनि प्रमाणम्

भामत्यादिरपि शरीरादावात्मबुद्धिमेवाहंबुद्धिं प्रतिपादयति, न त्वहङ्कारतत्त्वमहमर्थम्, तदेकदेशं वा। अहमर्थ एवात्मेति कणादादिसिद्धान्तस्तु 'अहमात्मनि प्रत्यगात्मनि भावादि'ति निरूपयन् जाग्रदाद्यवस्थं साक्षिरूपमेवाभिप्रैति, न तु सुषुप्तम्, मुक्तं वा स्वप्रकाशमात्मतत्त्वम् ॥

### अहमर्थो देहाद्युपाधिकः इत्येकं प्रस्थानम्, अविद्योपहितमित्यपरं प्रस्थानम्। तत्रोभयस्वरूपजाग्रदाद्यवस्थस्य सुषुप्तस्य च नैक्यमिति व्यवस्था

अतो नात्राहङ्कारशब्दार्थविचारोऽनुपयुक्तः, अकिञ्चित्करश्च। अहमर्थस्वरूपमात्मानात्मशबलितं रूपमिति हि प्रस्तुतम्। न च तत्राहङ्कारः साङ्ख्याभिमत एव घटकः इत्यद्वैतिनोऽपि मन्यन्त इति भामत्यनुसारेण निरूपितम् ॥

तत्र कार्योपाधिरहमर्थो जागरादिः, कारणोपाधिस्तु सौषुप्तो जीव इति व्यवस्था। तत्रोपाधिकार्यत्वेनाहमर्थोऽपि कार्यतया तत्र तत्र विवक्ष्यते। ततश्चाहमर्थो देहादिकार्योपाधिक आत्मा, नाचेतन एकान्तेन, न वा चेतन एकान्तेन; तथापि तस्य मुख्यमात्मत्वं नास्तीत्यभिप्रेत्यैवाहमर्थस्यानात्मत्वमद्वैतनिबन्धेषु—अहमर्थो हि मिथ्यात्मा, न तु मुख्यात्मेति। अत एवातिरिक्तोऽहंव्यवहारस्तत्र तत्र ॥

तत्र देहेन्द्रियान्तःकरणादिकमेवाध्यस्यमानं यद्यपि संविदोऽहमर्थत्वम्, अहंप्रतीतिविषयत्वं वा घटयति; तथापि न तदहंकारशब्दार्थः,

किन्तु तदुपाधिरेव। तच्च पञ्चभूतजन्यतत्त्वविशेष इति परिभाषा। आमुक्ति प्रतिजीवं भिन्नमेव, इति जाग्रत्स्वप्नयोरहंप्रतीतिस्तत्तत्तादशायाम्। कारण-शरीरात्मना सर्वस्य सूक्ष्मशरीरस्याप्यनवस्थाने तु प्राकृते लय इव न तस्य तेन रूपेणोपाधित्वं सुषुप्तावपि, इति न तदाऽहंप्रतीतिः ॥

न चात्र प्रतिदिनं प्रतिक्षणं वाऽन्तःकरणादिकमनेकं कल्प्यते, येनान-वस्था स्यात्, अव्यवस्था वा, इति नाहमर्थमुख्यात्मतोपपद्यते। संविद्रू-पमहंप्रतीतिप्रयोजकोपाधिसंवलितमहंपदार्थः; अन्यथा तु संविन्मात्रम्। तत्रेश्वरकार्यपञ्चभूतजन्यमन्तःकरणादिकं तूलाविद्यावत् तज्जीवमात्राश्रित-कारणशरीरभूताज्ञानकार्यत्वाद् यावत्तत्तज्जीवभावमेकमेव, न तु नाना। अत एव 'तदन्तरप्रतिपत्त्य'धिकरणे भूतसूक्ष्मोपष्टब्धानामेवे-न्द्रियाणामुत्क्रमणं प्रतिपाद्यमानमुपपद्यते, इत्यन्तःकरणाद्युपाधिकैव संविदहमर्थं इति सुस्थम् ॥

केचित्तु—अखण्डस्य ब्रह्मणः सच्चिदादिभेदा इवाविद्यावस्थाविशेष-सम्बन्धादहंरूपताऽप्यनादिः, येन जीवो नामानादिः षट्सु पदार्थेष्व-न्यतमः। तत्र सदात्मना मूलाविद्योपहितस्योपादनत्वमेवेश्वरस्य। तदुपादे-यानां च त्वम्पदादिपदबोध्यत्वं पराक्त्वं च। अहमात्मना तूपादानत्वं सूक्ष्म-शरीरावयवानां सप्तदशानाम्, तेन च तेषां नियमेनाहंप्रतीतिविषयत्वम्। अत एव—"युष्मदस्मत्प्रत्ययगोचरयोरि"ति द्वेधैव विभागः। सुषुप्त्यादा-वप्यविद्योपहितोऽनादिरहंपदार्थोऽनुवर्तते, परन्त्वीश्वरस्यैव चैतन्यात्मना-विवर्तोपादानत्वम्, उपाधिकारणशरीरात्मना सूक्ष्मशरीरपरिणामत्वम्। सूक्ष्मशरीरविशिष्टे स्थूलशरीराध्यासात् "अहमि"तिशरीराध्यासोऽपि। अत एवाज्ञानस्य सुषुप्तोपाधिकारणशरीरमिति नामान्तरमिति—मन्यन्ते ॥

एतद्दृष्ट्या सुसुप्तावनाद्यज्ञानोपहितस्य, मुख्याहमर्थस्य भानात् 'सुखमहमस्वाप्समि'ति प्रतीतेर्नानुपपत्तिलेशोऽपि। मुक्तौ त्वनाद्यहंभावनि-यामकानादिकारणशरीराख्योपाधिनिवृत्त्या निर्विशेषानावृतचित्मात्रता ॥

अयमेव न्याय ईश्वरेऽपि; उपाधीनां व्यष्टि-समष्टिभेदेन भेदमात्रं वदन्ति, तत्त्वमसिवाक्यार्थस्तु सर्वोपाधिरहितं स्वप्रकाशमेकं सविन्मात्र-मिति व्यवस्था। अत एवेश्वरेऽपि "बहु स्यां प्रजायेयो"त्यहंपदप्रयोग इति प्रस्थानभेदमात्रमत्र केषाञ्चन ॥

मुक्तावहमर्थानुभववादः काणादसूत्रविरुद्धः

तत्र प्रथमे प्रस्थानेऽन्तःकरणादिवत्त्वेनैवाहमिति व्यवहारः, द्वितीये कारणशरीराज्ञानोपधानेनाप्यहंव्यवहार इति विभागः। "अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः" इति काणादसूत्रमपि बद्धजीवात्ममात्रपरं प्रस्थानद्वयेऽप्यद्वैततत्त्वेऽप्यव्याहतम् , मुक्तौ तु नाहम्भाव इति। अद्वैतमतस्य तु नात्रापि विशेषः। श्रीभाष्यमते तु मुक्तावप्य"अहम्भावानुवृत्तिरि"ति सिद्धान्त उक्तसूत्रविरुद्धोऽपि। श्रुतिविरोधस्तु दुष्परिहरः। गौणमुक्तौ, जीवन्मुक्तौ चाहंभावानुवृत्तिरप्यत्र न विरुद्धेत्यवधेयम्। अतोऽस्वात्समिति प्रतीतस्यातीतकालस्य जागरे भानं तंदशेऽनुमानत्वेऽप्यविरुद्धम् ॥

तत्र सुषुप्तावहम्भानं प्रथमे प्रस्थाने, द्वितीये तु तस्याभानमेव। किं बहुना ? प्रलयेऽपि अव्यभिचरितप्रकाशसत्ताकत्वमहमर्थस्य; साक्षित्वात् , तद्भास्यत्वाच्च सुखाज्ञानादेः। अहंभानाभाने तु प्रस्थानभेदेनोपपद्येते ॥

मतद्वयेऽपि सूक्ष्मरूपेण वा, स्वरूपेणैव वाऽवस्थानेऽप्यहमनुवृत्तिरबाधा , इति न 'सुखमहमस्वाप्समि'ति प्रतीत्यनुपपत्तिः। साक्षित्वादेव तु स्वयंप्रकाशत्वमपि सुषुप्तौ संविदात्मनः साक्षिरूपस्याहमर्थस्य। अहंकारमात्रं तु नाहमर्थः, प्रकृतिपरिणामत्वेऽप्यन्तःकरणादिमात्रत्वेऽपि वा तस्याऽऽत्मत्वायोगात् , ज्ञातृत्वायोगाच्च। अयमेव न्यायः—संविन्मात्रेऽपि; तस्य ज्ञानरूपस्य ज्ञातृत्व-कर्तृत्वाद्यनुपपत्तेः। अतश्चिदचिद्ग्रन्थिरहमर्थ एव कर्ता, भोक्ता, ज्ञाता चेत्यादि व्यक्तं "यथा च तक्षोभयथे"त्यत्र ॥

उपहितस्य संविन्मात्रस्याज्ञातृत्वम्, उपहितस्यैव कर्तृत्वम्,
अयमेव न्यायः ईश्वरेऽपि, ऐक्यं तु भेदनिवृत्तिमात्रम्,
न द्वयोरभेदः, मुक्तौ तु संविन्मात्रानुवृत्तिः, नाहमर्थानुवृत्तिरिति व्यवस्था

तत्र हि परस्पराध्यासात् , परस्परधर्माध्यासाच्च कर्तृत्व-भोक्तृत्व-ज्ञातृत्वादिकं सूपपादम् ॥

न चाहंकारमात्रस्य कर्तृत्वं श्रीभाष्यमतेऽपि। "अहं ब्रह्मास्मी"ति सामानाधिकरण्यं कारणशरीरमूलाज्ञानानुपहित-स्वप्रकाशसंविन्मात्रैक्याभिप्रायम्। ऐक्यं च नात्र द्वयोः; बाधात् , किं त्वेकस्यैव सतो भेदप्रयोजकोपाधिभेदनिवृत्तिमात्रम्। तदुक्तम्—

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षिता: ।।"

इति । न चायं न्याय: "सर्वं खल्विदं ब्रह्म"त्यत्र । तत्र परिणममानात्मनाऽभेदेऽपि कार्यात्मनाऽऽरोपितेन भेदाद् न तयोरैक्यम्, किन्त्वधिष्ठानव्यतिरेकेणाभावमात्रेण । तत्र पूर्वत्रोपाधिनिवृत्तिरैक्यम् , द्वितीय अरोपितस्य स्वरूपतो निवृत्तिरिति तु विशेष: । अत एवोत्तरत्र बाधायां सामानाधिकरण्यम् , पूर्वत्राभेदे ।।

निष्कर्षस्तु—अभेदे सामानाधिकरण्यं वाक्यार्थतादशायामुपाधेरविवक्षया, स्वरूपस्यानुवृत्त्या च । बाधायां तु बाध्यस्यार्थस्य तद्व्यतिरेकेणाभावरूपतया वाक्यार्थे प्रतीति: । अत एव मुक्तौ नाहमर्थस्य नाश:, न वा बाध: "सर्वं खल्विदं ब्रह्मे"त्यत्रेव । अत एव मुक्तौ न संविन्मात्रबाध:, बद्धावस्थायामिव स्वरूपस्य तत्राप्यनुवृत्ति: । अतो ब्रह्मात्मन एव स्वरूपतोऽनुवृत्तिर्मुक्तावपीत्यादि व्यक्तमधस्तात् , पुरस्ताच्च ।।

तत्राहमर्थस्याचिद्रूपमात्रत्वम् , चिद्रूपमात्रत्वं वा संसारदशायां न संभवति; कर्तृत्वाद्यनिर्वाहात् , मुक्तौ तु चिन्मात्रत्वमविरुद्धम् । आत्मत्वमपि मुख्यं तस्यैव । कर्ता तु मिथ्यात्मा, गौणात्मा वा । न चैवं सति जागराद्यवस्था, मुक्तिर्वा विहन्यते । अवस्थाद्वये, अवस्थात्रयमात्रे वा प्रस्थानभेदेनाहंभावानुवृत्ति:, यत्र कर्तृत्वादिकं न विरुध्यतेऽज्ञानोपधानेन । मुक्तौ तु न तस्यानुवृत्ति:; बाधितत्वात् ।।

सुषुप्तावविद्योपहितस्यैव भानम्, इति ना'हमि'ति विशदाभास:
तच्च भानमविद्यावृत्त्या, उपहितचैतन्यमात्रेण वा,
उत्थितस्याहमज्ञासिषमिति प्रतीति-
स्त्वहंकारांशे स्मरणमेव

सत्कार्यवादो हि कारणात्मना कार्यस्यावस्थानेनैव । अत: कार्यस्यापि कारणात्मना तद्विलयदशायामपि सत्त्वव्यपदेशो न व्याहन्यते । अत एव—"सदेव सोम्येदमग्र आसीत्" इत्यादौ सर्वस्य प्रलयेऽपि सदात्मना सत्त्वव्यपदेश: । प्रलयेऽपि घटादय: सन्तीति व्यवहारो यदि घटादिकार्यात्मना, तर्हि बाध:, यदि कारणात्मना न बाध: ।।

अयमेव न्यायोऽहमर्थेऽपि । व्यवस्था तु तत्र प्रस्थानभेदेनोपपादितचरा । किं बहुना ? 'सद्भावेन अजं सर्वमि'ति कार्याणां कारणात्मनाऽजत्वमपीत्यजातवादोऽप्यद्वैतसिद्धान्ते प्रसिद्ध एव । अत एव कार्य-

कारणयोरैक्येऽपि कार्यस्य कारणात्मनाऽजातत्ववत् कार्यात्मना कारणस्य न जातत्वव्यपदेशः ॥

तत्र कारणशरीरोपहितेऽध्यासात् देहेन्द्रियादावहंव्यवहारः। घटादीनां तु मूलाविद्योपहिततत्पदार्थेऽध्यासात् नाहंपदेन कटक-कुण्डलादीनां हिरण्यव्यवहारवदहंपदार्थोपाधिता अहमर्थत्वावच्छेदकत्वं वा। सति त्वहमर्थघटचैतन्ययोरेकदेशस्थत्वे तस्याहंपदार्थतादात्म्यमबाधम्। अत एवोक्तम्—"प्रमात्रभिन्नत्वं विषयप्रत्यक्षलक्षणमि"ति ॥

तत्र तत्तत्कारणशरीरोपहितचैतन्य एव तत्तदन्तःकरणाध्यासात् तत्तदुपहितानामहमर्थानां भेदाद् न सर्वेषामहमर्थानामप्यैक्यम्, इति न जीवैक्यमहमर्थतायां तेषाम्। अनुपहितानां तु तेषामुपाधिमात्रनिवृत्त्यैक्यम्, इति नान्याहमर्थस्यान्यानुसंहितार्थानुसन्धानापत्तिः, इति जागराद्यवस्थाभेदोपपत्त्यर्थमन्तःकरणाद्यध्यासेन प्रस्थानभेदेनाहमर्थत्वमबाधम्। तत्राविद्यान्तःकरणयोरुपादानोपादेयभावेऽपि तत्तत्कारणशरीरान्तःकरणयोः समसत्ताकत्वात्, तत्तन्मात्रोपधाननिमित्तत्वाच्च जागरादीनां न सुप्त-जागरादिसाङ्कर्यम् ॥

तत्र परिणाम्युपादानोपादेययोः, विवर्तोपादानोपादेययोर्वा भेद एव काल्पनिकः, नाभेदः इति भेदमादाय संकरपरिहारो नानुपपन्नः। शास्त्रजन्यतत्त्वसाक्षात्कारेऽप्यभेदस्य तत्प्रयोजकोपाधेश्च निवृत्तिमात्रं ह्यैक्यम्, न त्वेकत्वम्। अत एव तत्त्वमस्यादिवाक्येष्वभेदे सामानाधिकरण्यमिति गतम्, इति नात्र भेद एवाबाध्यः, ऐक्यं तु बाधितमिति विपरीतापातः ॥

तत्र सुषुप्तौ सुखप्रकाशे न विप्रतिपत्तिः, तथा चैतन्यप्रकाशे, अविद्याप्रकाशे च। तत्राज्ञानस्वरूपे परं काममास्तां सा। तस्या अनिर्वचनीयत्वस्वीकारात्। तत्रापि भावरूपत्वे न विप्रतिपत्तिः। अनिर्वचनीयत्वं सुषुप्त्याद्यवस्थायां मा नामाध्यवसायि। न चाद्वैतिनोऽपि तदाऽनिर्वचनीयत्वं निर्दिधारयिषन्ति। सुखमेव तदा चैतन्यमित्यादि यद्यपि न विप्रतिपन्नम्; तथाऽपि तत्प्रकाशेऽविद्यावृत्तिरूपेऽस्त्येव विप्रतिपत्तिः। सुखं तु नाहमर्थः; तस्य चिदचिद्ग्रन्थिरूपस्याहमर्थत्वाभावात्। न च प्रकृतिपरिणामोऽहङ्कारोऽचेतनोऽहमर्थः, येन जागराद्यवस्थायामहमर्थाप्रकाशः स्यात्। अहमिति भानं चिदचित्तादात्म्यापेक्षं बद्धस्य, ईश्वरस्य

च साधारणम् , न तु मुक्तस्यापि साधारणमिति युक्तम् । न च तदाऽहमर्थानां सर्वेषामैक्यं वा, इति न बन्ध-मोक्षाविवेकः । न वाऽहमस्वाप्समित्यस्यानुभवस्य मैत्रानुभवविषयकत्वापत्तिः । यथाच सुषुप्तावहंत्वस्याप्रकाशेऽपि 'सुखमहमस्वाप्समि'त्यस्याहंत्वांशे न स्मरणम् , किन्त्वनुभव एव, प्रस्थानान्तरे तदविरोधश्च, तथोपपादितम् ।।

सर्वथाऽहमर्थश्चिदचिद्ग्रन्थिरूपः—चिच्च; अचिच्च, मुक्तौ तु कस्यापि नाचिदंशस्य भानमिति सुस्थम् ।।

एतेन—सुषुप्तिरविद्यावृत्तिरिति पक्षोऽपि—व्याख्यातः । सा हि तदा नान्तःकरणवृत्तिः । न ह्यविद्यावृत्तिरन्तःकरणवृत्तिश्चैका, स्थूलावस्थान्तःकरणवृत्तेरेव जन्यायाः अन्यस्या वा अन्तःकरणवृत्तित्वात् । अविद्यानिवृत्तेरप्यन्तःकरणस्याविद्याकार्यत्वेनाविद्यावृत्तित्वे तस्या ज्ञानविरोधित्वापत्त्या सुप्तिरेव मुक्तिरिति स्यात् । सर्वथा तु न स्थूल-सूक्ष्मसाधारणस्याहंत्वस्य सुषुप्तौ भानमविद्यावृत्त्येति केचित् । परे त्वविद्यावृत्त्या सुषुप्तावप्यहंभावभानमुक्तविधया मन्यन्ते । न च तावताऽपि तद्भानम् , यत्र नाविद्यावृत्तिः, अन्तःकरणवृत्तिर्वेति; तस्यात्मस्वरूपान्तर्गतत्वं न विकल्पसहम् ।।

सुखं हि सुषुप्तावनाद्यविद्याकल्पितभेदानन्दभेदरूपमेव, नाखण्डं ब्रह्मेति न सुषुप्तौ मुक्तिः ; अविद्यानिवृत्तिरूपत्वात् तस्याः । प्रमाणजन्यान्तःकरणवृत्तित्वाभावेन नात्र तन्निवर्तकत्वम् , इति न सुषुप्तिरेव मुक्तिः ।।

सुखमात्रात्माऽज्ञात एव सुषुप्तावविद्यावृत्त्या प्रकाशते, न तु सोऽहमि' इति खल्वहम्भानाभाववादिनां प्रक्रिया, इति स्थूलरूपेणाहम्भानं सुषुप्तौ नास्ति ।।

तत्राहंत्वविशिष्टस्यैवात्मत्वाभावात् स स्वापकाले देहेन्द्रियादिविशिष्टतयाऽऽत्मभानाभावेऽपि कारणशरीरवत्तत्तज्जीवमात्रोपाध्यज्ञानोपहिततयाऽऽत्मभानात् नात्मनोऽप्यभानम् , येनाहंत्वस्येवात्मनोऽपि ततोऽतिरिक्तस्याभानम् 'नाहमभूवमि'त्याकारकमपि स्यात् । तादात्विकाज्ञानोपहितस्याहमर्थत्वमिति तु प्रस्थानान्तरम् ।।

तत्र बद्धस्य मुमुक्षोर्मोक्षार्थप्रयत्नो न केवलस्यान्तःकरणस्य, चैतन्यमात्रस्य वा, किन्त्वन्तःकरणोपहितस्य । तत्रान्तःकरणोपहितत्वमन्तःकरणतादात्म्याध्यासनिबन्धनं यद्यप्यध्यासरूपां वृत्तिमपेक्षते; तथापि

नैसर्गिकोऽयमध्यासः 'अहमिदम्' 'ममेदमि'ति तदुपहितस्यैव; नैसर्गिकत्वादस्याध्यासस्य ॥

तत्र चैतन्यस्यान्तःकरणोपधानमेव बन्धः; इति बद्धस्य बन्धनिरासार्थमिव मुक्त्यर्थं प्रयत्नोऽप्रत्यूहः। अन्यत्तु सर्वं तत्र तत्र चर्वितचर्वणं ग्रन्थविस्तरमात्रम्, चिदचिद्ग्रन्थिरहमर्थ इति निष्कर्षः ॥

ग्रन्थित्वं चाहमर्थस्याचिदुपहितत्वम्, तद्विशिष्टत्वं वा यथायथमवस्थाभेदेन, स्वरूपभेदेन वा। न तत्रार्थस्यापि स्वातन्त्र्येण भानम्, किन्तूपाधेरप्राधान्येन, चैतन्यस्य विशेष्यतया प्राधान्येन। उपाध्युपहितयोर्विशेष्य-विशेषणभावो ग्रन्थित्वप्रयोजकः ॥

सम्बन्धश्च तत्राध्यासिको नैसर्गिकश्च तादात्म्यसम्बन्ध एवाध्यासान्तरस्थल इव, न केनाप्यात्यन्तिकेन भेदसम्बन्धेन ॥

स चाध्यासकालिक एव। ततः पूर्वं त्वनिर्वचनीयत्वादध्यस्यमानाम् तेषामधिष्ठानेन भेदाग्रह एवेति नाध्यासानुपपत्तिः ॥

तत्र जीवब्रह्माभेदवादो निरुपाधिकयोर्जीवेश्वरयोः। स चोभयोपाधिनिवृत्तिमात्रेणैव। निरुपाधिकस्वयंज्योतिःस्वभावात्मस्वरूप एव मुक्तात्मा। "ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतिरपि तत्त्वमसिवाक्यार्थमेव फलरूपमुपदिशति। उपाधिद्वयनिवृत्तौ न द्वे वस्तुनी, किन्त्वेकमेवावतिष्ठते, इति कस्य केन साधर्म्यम्, येन ब्रह्मसाधर्म्यमेव मुक्तिः स्यात्, अधिकं प्रकृतानुपयोगि तत्तदवसरे विशदीकरिष्यते ॥

आत्मानात्मनोः परस्पराध्यासस्तु प्रसक्ततत्तत्सर्वाक्षेपपरिहारपूर्वकमध्यासभाष्य-भामती-वार्तिकादौ, प्रश्नोत्तरसाहस्र्यादौ च समर्थितः, इति नात्र किमप्यपूर्वं वक्तव्यमस्ति ॥

तत्र साक्षी कारणशरीरोपहितमात्मस्वरूपम्, तत्तादात्म्यादन्तःकरणोपहितचैतन्यं च यथायथम्। तत्र प्रथमं नाहंप्रतीतिगोचरः, द्वितीयं तूपहितरूपेणाहमर्थत्वादहंप्रतीतिविषयः। शुद्धचैतन्यमपि नाहंप्रतीतिविषयः ॥

### प्रत्यक्त्वरूपनिष्कर्षः

प्रत्यक्त्वं यद्यनावृतस्वभावं यावत्सत्त्वं स्वसम्बद्धसर्वावभासकत्वप्रयुक्तम्, तर्हि सक्षिण एव मुख्यम्। शुद्धं चैतन्यमज्ञानेनाऽऽवृतम्, विना प्रमाणजन्यवृत्तिप्रयुक्तावरणनिवृत्तिम्, यावत्स्वसत्त्वं साक्षीव न सर्वावभासकम्। ततः स्वप्रकाशमपि तद् न साक्षीव प्रत्यक्। मुक्तौ तु यद्यपि तदनावृतम्, तथापि भास्याभावात् साक्षीव न भासकम्। अत एव शुद्ध-

चैतन्यं न साक्षि, अहमर्थत्वं तु न साक्षिमात्रस्य न वा व्यवहारदशायाम् , मुक्तिदशायां वा संविन्मात्रस्य स्वप्रकाशस्वभावस्यात्मन इति तु निष्कर्षः ॥

एतेन—"कश्चिद् धीरः प्रत्यगात्मानमैक्षत्" इति श्रुतिरपि—व्याख्याता; निगृहीतबाह्येन्द्रियमनोबुद्धिर्हि कश्चन धीरो जाग्रदवस्थायामेव सौषुप्तमज्ञानोपहितं प्रत्यक्स्वरूपं द्रष्टुमीष्ट इति श्रुतेरर्थः, इति स्थितप्रज्ञावस्थायाः सप्तमभूमिकापर्यन्तं प्रत्यक्स्वरूपस्यानहमर्थस्य ज्ञानयोग्यता, मुक्तौ तु संविदात्मना स्थितिमात्रम् ॥

आत्मत्वं तु मुख्यमनावृतशुद्धसंविदः, ततोऽज्ञानोपहितस्य मुख्यसाक्षिणः, योऽपि सुखैकस्वभावत्वाद् मुख्यात्मकल्पः, ततोऽवरमहमर्थस्य सूक्ष्मशरीरोपहितस्वप्नावस्थस्य मिथ्यात्मनः, ततोऽप्यवरं जाग्रदवस्थस्य मिथ्यात्मनः, ततोऽवरं तु पुत्रादेर्गौणात्मनः, इत्यहमर्थस्य जीवेश्वरादेरिवात्मत्वे न विवादः, मुक्तिपर्यन्तस्थायित्वं तु मुख्यात्मन एव ॥

निष्कर्षस्तु—प्रत्यक्पदम् , अहंपदं च स्वात्मवाचि, आत्मपदं तु सर्वोपाधिरहितसर्वात्मपर्यन्तवाचि, न चाहमर्थः ॥

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।"

इति सर्वक्षेत्रानुगतैकात्मस्वरूपवाचि, इति नाहमर्थो मुख्यात्मा ॥

एतेन "अहमि"ति प्रत्यगात्मनि भावादि"त्यपि नाद्वैतसिद्धान्तविरुद्धमिति फलति । मोक्षसाधनज्ञानविषयस्त्वात्माऽखण्डोऽखण्डाकारवृत्तिमात्रोपहितो नाहमर्थो जीवः, ईश्वरो वा, किन्तु सर्वोपाधिविवर्जितस्वरूपचैतन्यमात्रम् ॥

'अहं ब्रह्मास्मी'ति ज्ञानविषयोऽज्ञानादिसर्वोपाधिशून्यस्वयंप्रकाशैकस्वभावमात्मस्वरूपमेव, नाहमर्थस्तेन रूपेण कयापि विधया प्रकाशते । अधिकमधस्तात् । अद्वितीयं ब्रह्मापि सर्वोपाधिशून्यमेव ॥

इयान् विशेषः—"सदेवे"ति वाक्यप्रस्तुतं स्वीयसर्वोपाधिवर्जितस्तत्पदलक्ष्यार्थः, ज्योतिर्ब्राह्मणविषयस्तु स्वीयसर्वोपाधिविरहितस्त्वंपदलक्ष्यार्थः । 'अहं ब्रह्म स्याम्' इत्यत्र सर्वोपाधिविवर्जितैकात्मस्वरूपमात्रमिति विभागः ॥

### लक्षणया 'चैत्रो ब्रह्म' इत्यादिवाक्यजन्यज्ञानस्य न मोक्षसाधनत्वम्

एतेन—'चैत्रो ब्रह्मे'ति वाक्यस्य 'अहं ब्रह्मास्मी'ति वाक्यवैलक्षण्यमपि—व्याख्यातम् । चैत्रपदबोध्यं ह्यात्मस्वरूपं बाह्यशरीरोपहितमात्रम् , न तु

मनोबुद्धीन्द्रियरहितमपि लक्षणयाऽपि, इति न तत्रोपाध्यन्तरोपहितेनैक्य-तात्पर्यविषयोऽप्यबाधितः । अत एव "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिवाक्यानि महावाक्यानि ॥

अत एव 'अहंत्वोपस्थितिपूर्वकनिरुपाधिजीवस्वरूपाभेदो हि विवक्षितः, नाहंपदसजातीयपदसामानाधिकरण्यं विना निर्वहतीति लघुचन्द्रिका ॥

अयमेव न्यायः—'इदं रजतम्' 'अयं घटः' इत्यादिवाक्यजन्य-ज्ञानेष्वप्यनुसन्धेयः । तत्र घटादिप्रत्यक्षस्यापि प्रमातृचैतन्याभेदेऽपि तत्तदाकारवृत्तेरुपहितान्यविषयकत्वेनासमानविषयकत्वेन च नाज्ञाननिवर्त-कत्वमित्यतिस्थवीयः । अहमर्थमुख्यात्मतानिरास एवास्य प्रकरणस्य तात्प-र्यम्, न तु तस्यानात्मत्वसमर्थन इत्युक्तम् ॥

अध्यासभाष्यपूर्वपक्षोऽद्वैतसिद्धान्तमविद्यमानं मत्वा

तत्र 'युष्मदस्मत्प्रत्ययगोचरयोरि'त्यादिपूर्वपक्षोऽपि अद्वैतमते सिद्धा-न्ताभिमताहम्प्रत्ययत्वं भ्रान्तिकालीनं संविन्मात्रस्य तस्य भ्रान्तित्वे न संभवति । न च सा भ्रान्तिर्भवितुमर्हति, इति सिद्धान्ताभिमतप्रमेयपरि-स्थितिदौस्थ्यमवष्टभ्य विवेचितमेव ॥

॥ इत्यहमर्थात्मत्वानुपपत्तिः ॥

## ज्ञातृत्वाध्यासोपपत्तिः

### आत्मनो ज्ञातृत्वमनित्यज्ञानवत्त्वेनैवौपाधिकेन, न तु नित्य-ज्ञानवत्त्वेन, स्वभावतो वा

अहमर्थश्चिदचिद्ग्रन्थिरूप एवाऽऽत्मा, न तु संविन्मात्रमिति सिद्धान्तितम्, अतो नास्य प्रकरणस्योत्थितिरपि। "ज्ञोऽत एवे"ति सूत्रं विस्तरेण संविदात्मत्वप्रकरणादावद्वैतानुगुणमिति सम्यक् परिशील्य निर्णीतम्॥

तत्र ज्ञपदमौपाधिकं ज्ञानत्वमाचष्टे। अत आत्मनः स्वतश्चिद्रूपत्वमेवात्र सूत्रार्थः। अत एव भाष्यं नित्यचैतन्य इति। न तस्य तत्र बहुव्रीहि-समाससम्पन्नस्यापि नित्यधर्मभूतज्ञानवत्त्वम्, वृत्त्यात्मकज्ञानवत्त्वं वा स्वभाव इति भाष्यते। कर्तरि कप्रत्ययेऽपि न ज्ञानकर्तृत्वं श्रीभाष्यमते; धर्मभूतज्ञानस्य नित्यत्वात्। तस्य प्रत्यक्षादिप्रमाणप्रसरोपरमनिमित्तसंकोचविकासवत आत्मकर्तृकत्वमौपचारिकमेव। अतोऽहमर्थस्यात्मनश्चैतन्यांशे सर्वदा नित्यत्वादनित्यौपाधिकज्ञानवत्त्वेनैवारोपितेन ज्ञातृत्वमित्येव मूलाशयो वर्णनीयः॥

### "ज्ञोऽत एवे"त्यत्र संविद्रूपस्यैकत्वमेव, न ज्ञातृत्वं सत्यज्ञाना-दिवाक्यैकवाक्यतयाऽऽत्मनः

अत्र भाष्ये आत्मनो ज्ञानरूपत्वे प्रमाणतया—"विज्ञानमानन्दं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" "अनन्तरोऽबाह्यः; कृत्स्नो विज्ञानघनः" "अत्रायं पुरुषः स्वयंज्योतिः" इति ज्ञानपदघटितवाक्यानामुदाहरणात् ज्ञानस्वरूपत्वमभिप्रेतम्। तदनुगुणं च सूत्रयोजनं तु ज्ञपदस्य कर्तृत्वपरत्वे नोपपद्यते। अतो नात्र कर्तरि कप्रत्ययो भाष्याभिमतः, किन्तु भाव एव कथञ्चन॥

तत्र संविन्मात्रमात्मा, न तु ज्ञाता, किन्त्वहमर्थ एव आत्मा ज्ञातेति सम्प्रतिपन्नम्। विप्रतिपत्तिस्त्वहमर्थातिरिक्तस्य निर्विशेषसंवित्स्वरूपमात्रे। तत्र तु वक्तव्यं पूर्वाधिकरण एव विशदीकृतम्। "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति श्रुतिरप्यात्मनो विज्ञातृत्वे नित्यधर्मभूतज्ञानाश्रयत्वे वा न प्रमाणमिति निरूपितं विस्तरेणाधस्तात्। तत्र "न प्रेत्य संज्ञाऽस्ती"ति ज्ञानस्वरूपमात्राभिप्रायमेवेत्यपि तत्रैव व्यक्तम्॥

### विज्ञानरूपत्वे मुख्यम्, विज्ञातृत्वं त्वौपाधिकमपि बृहत्यादिरपि

वस्तुस्तु—"सत्यं ज्ञानमि"त्यादौ ज्ञानपदम् "ज्ञोऽत एवे"त्यत्र ज्ञपदं वा मुख्यं न ज्ञाधातुनिष्पन्नम्; स्वरूपज्ञानस्य, चैतन्यस्य वा धात्वर्थास-

म्बन्धात्। अत एव नित्यचैतन्यपरं तत्। अत एव "न विज्ञातुर्विज्ञाते- रि"त्यत्र विज्ञानरूपस्य विज्ञातुर्विवक्षायां विज्ञानपदमप्यव्युत्पन्नमेव। विज्ञातृस्वरूपमेवात्र विज्ञानं विवक्षितम्। अत एव हि—विज्ञानरूपता वि- ज्ञातुरनाशङ्कनीया; अनाशङ्कितत्वात्, युक्तं चानाशङ्कितम्; कर्मप्रवण- त्वात्। तदुक्तं भगवता—

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्॥"

इति वदन्ती बृहती ज्ञापयति—धर्मभूतज्ञानं श्रीभाष्याभिमतमपि न नित्यं ज्ञानपदमुख्यार्थः—इति। षष्ठीविभक्तिर्ह्यभेदेऽपि दृष्टचरी। अनश्वरं च ज्ञानं संकुचितावस्थायोग्यं न धर्मभूतज्ञानमपि। अधिकं पूर्वत्र॥

"न प्रेत्य संज्ञाऽस्ती"त्यादिवाक्यस्याप्युपाधिप्रयुक्तत्वाद् ज्ञानसंज्ञायाः सर्वोपाधिनिवृत्तौ संज्ञाऽपि तस्य नास्ति, यतो वाचो निवर्तन्ते इत्येवार्थः। य एव "अलं वा अरे विज्ञाये"त्यतोऽपि प्रतिपाद्यते। यतः सर्वोपाधि- निवृत्तौ न तस्य ज्ञानमपि सुशकम्। संज्ञा तद्बोधकं नाम वा यत्र वाच्य- वाचकयोर्भेददर्शनम्, तत्रैव॥

न च निर्विशेषवाक्यं सर्वोपाधिनिवृत्तौ; वाचकशब्दस्यापि निवृत्तेः। न च संज्ञापदमेकीकृत्य ज्ञानपरं कुत्रापि दृष्टम्। न चाविद्यानाशेऽहंभाव- स्यापि नाशादहङ्कारेणैकीकृत्याज्ञानस्य प्रसक्तिः; तथार्थत्वेऽप्रसक्तप्रतिषेधः। न च संज्ञापदं धर्मभूतज्ञानपरम्। कथं वा विज्ञानघनस्यापि मुक्तौ धर्म- भूतज्ञानाभावः। "अलं विज्ञानाये"त्यस्य न विज्ञानयोग्यता तस्येत्येवार्थः, न तु ज्ञानत्वं नास्ती"ति॥

### संविन्मात्राकर्तृत्वादिव्यवस्था ब्रह्मसूत्रानुसारेणापि

सर्वथा तु विज्ञातुर्विज्ञानधर्माविनाभावो यदि "न विज्ञातुर्विज्ञाते- रि"ति वाक्यार्थः, तर्हि निरुच्यताम्—को वाऽयं विज्ञाता? यद्यहमर्था- दप्यतिरिक्तः, तर्हि न तस्य विज्ञानं धर्मः। अहमर्थातिरिक्तसंविदात्म- समर्थनम्, संविदतिरिक्ताहमर्थसमर्थनं च पूर्वेण गतम्॥

धर्मभूतज्ञानस्यात्माप्रृथक्सिद्धत्वमुभयोरपि नित्यत्वाद् नोपपद्यते, नित्यं धर्मभूतं ज्ञानं नात्मनः शरीरमपि; विनाऽप्युपादानोपोदय्यभावम्, शरीर-शरीरिभावं च कुत्र वाऽपृथक्सिद्धिरित्यनुल्लिख्य भाष्येऽन्यदपि तत्प्रयोजकमित्युक्तमकिञ्चित्करम्। धर्मभूतज्ञाने वक्तव्यं सर्वं पूर्वमुक्तम्॥

"कर्ता शास्त्रार्थवत्त्वात्" इत्यहमर्थपरम्, न संविन्मात्रपरम्। "नात्माऽश्रुतेरि"ति संविन्मात्रस्यानुत्पत्तिरुक्ता। यत्र तूत्पत्तिश्रवणम्, तत्रौपाधिकमिति तदनन्तरसूत्रे वर्णितम्॥

ज्ञातृत्वाणुत्व-कर्तृत्वोत्पन्नत्वादीनामौपाधिकत्वम्, ज्ञानत्व-
विभुत्व-नित्यत्वादिकं तु स्वरूपतः

अयमेव न्यायः—"ज्ञोऽत एव"इत्यत्रापीत्यादि पूर्वं विवेचितम्। तथाणुत्वमपि। अत्र सर्वत्राप्यौपाधिकं ज्ञातृत्वादिकमौपाधिकात्माभिप्रायमेव। तस्यैव हि शरीरतादात्म्यापन्नस्य जातो मृत इत्यादिलौकिकानुभवः, ज्ञातृत्वानुसन्धानम्, अणुत्वादिकं च। स्वरूपतस्तु नोत्पत्तिः, न ज्ञातृत्वम्, अणुत्वं वा, किन्तु नित्यत्वम्, ज्ञानस्वरूपमात्रत्वम्, विभुत्वं चेति श्रुतिविरोधपरिहारक्रमोऽत्र सङ्गच्छते॥

न चात्र जीवात्मनोऽहमर्थमात्रस्य ज्ञातृत्वं विप्रतिपन्नम्, इति किं वा ज्ञत्वव्यवस्थाप्रयोजनं सूत्रकारस्य? इति नात्राकस्मादहमर्थज्ञातृत्वादिव्यवस्था युज्यते॥

न चाद्वैतमतेऽहङ्कारः बुद्धिरन्यद्वोपाधिमात्रं ज्ञातृ, अण्विति। प्रकृतं वक्तव्यमुच्यते, किन्तूपहितमेव, तदपि विज्ञान-विज्ञात्रादिश्रुतिविरोधः परिहर्तव्य इति। अतः संविन्मात्रस्याहमर्थव्यतिरिक्तस्य न ज्ञातृत्वम्॥

"आत्मा वा अरे द्रष्टव्यः"इत्यादिदर्शनोपायोपदेशोऽप्यहमर्थातिरिक्तं वेदान्तमात्रसमधिगम्यं संविन्मात्रमेवात्मतत्त्वं गमयति;—अन्यथा भामत्यामध्यासभाष्योक्तरीत्याऽऽत्मा न सन्दिग्धः, इति तद्विचारो न संशयनिरासार्थः, इति विचारनिर्णीतस्यात्मतत्त्वस्य शरीरादिव्यतिरिक्ततयाऽलोकत एवावगतत्वात्, तज्ज्ञाने सत्यपि मोक्षाभावेन तज्ज्ञानस्याप्रयोजनत्वाच्चाऽऽत्मतत्त्वविचार एव निष्प्रयोजनः स्यात्। अतो नाहमर्थ एव मुख्यात्मा, किन्तु ततोऽन्य एव॥

अहमर्थकर्तृत्वस्यौपाधिकस्याप्युपहितधर्मत्वम्, एवं तस्यै-
व भोक्तृत्वमपीति सूत्रव्यवस्था साङ्ख्य-
मतनिरासं लक्ष्यीकृत्य

एतेन—आत्मनः कर्तृत्वमपि—व्याख्यातम्; तदप्यहमर्थस्यैवेति सम्प्रतिपन्नम्। तथापि तत्किमन्तःकरणस्यैव, तत्तादात्म्यवशादौपाधिकमेवात्मनः, न त्वहमर्थस्यैव स्वाभाविकमिति शङ्कावारणार्थं—"यथा च

तक्षोभयथे''त्यधिकरणम्। तेन च विशिष्टस्याहमर्थस्यैव कर्तृत्वमद्वैतमते। इदं चाहमर्थस्य चिदचिद्ग्रन्थिरूपत्वाभावे तत्कर्तृत्वस्वाभाविकत्वे संशयस्यैवाभावात् वितथं स्यात्, इति प्रकृते विषये भूषणेन भगवत्पादानामपि भाष्यरचनाशिक्षणमस्थाने॥

इदं त्वधिकरणं साङ्ख्यमतनिरासार्थमिति भामती, अद्वैतसिद्धिश्च। भूषणं तु लिखति—अत्राद्वैतिनां साम्यमिति। इदमत्रावधेयम्—

साङ्ख्यानामिवाहमर्थो नात्मा, योऽकर्ताऽभोक्ता च। अतोऽहमर्थस्य कर्तृत्वं साधयितुमिदमधिकरणमिति युक्तम्। इदमेव भूषणेनाप्यनुमन्तव्यम्; अन्यथा कस्य वा मतस्य निराकरणेनात्मनः कर्तृत्वं साधयितुमिदमधिकरणम्? न चाद्वैतमतनिराकरणार्थम्; तन्मतेऽहमर्थस्याकर्तृत्वानङ्गीकारात्। अतः साङ्ख्यमतनिराकरणार्थमेवोक्तसूत्रमित्यकामेनापि तेन स्वीकर्तव्यम्। अत एव कर्तृत्व-भोक्तृत्वयोरुभयोरपि समर्थनार्थमिदमधिकरणम्। अहमर्थो हि कर्ता, भोक्ता च, इति भोक्तृत्वस्य सम्प्रतिपन्नतया कर्तृत्वमात्रसमर्थनमेवात्र विषयः। न चाहमर्थोऽकर्ता, अभोक्ता वा, इति कथं भोक्तृत्वनिषेध एवाद्वैतिनां कर्तव्य इति भूषणस्यापादनमुपपद्यते?

सर्वथा तु ज्ञातृत्व-कर्तृत्वादिकमहमर्थधर्म एव, न संविन्मात्रात्मधर्म इति निर्णय एवास्याधिकरणस्य पर्यवसानम्; अन्यथा तस्यैवात्मत्वे तत्र साङ्ख्यविप्रतिपत्त्यभावाद् भोक्तृत्वनयेनैव कर्तृत्वस्यापि साधनस्यापेक्षितत्वात् तन्मतनिरसनाभिप्रायत्वमेवोक्ताधिकरणस्य लक्ष्यम्; अद्वैतिनामहमर्थकर्तृत्वेऽविप्रतिपत्तेः॥

### संविन्मात्रस्य स्वभाविकर्तृत्व एव न सूत्राणां तात्पर्यम्; तस्यौपाधिकाहमर्थधर्मत्वम्

तत्राद्वैतमते कर्तृत्वाधिकं न मुख्यात्मधर्मः। अत एवाकर्त्रात्मभावो मुक्तिः; अन्यथा तस्याप्यात्मधर्मत्वे तस्यात्माविनाभूतस्याऽऽत्मनाशं विना नाशायोगादकर्त्रात्मस्वभावाऽस्य मुक्तिरेव न स्यात्। कर्त्रादिस्वरूपाहमर्थताया एवात्ममुख्यस्वभावत्वे तु तस्य संसारदशायामपि सिद्धत्वात् किमर्थं वा मोक्षार्था प्रवृत्तिरात्मनो मुख्यस्यैव॥

तदुक्तम्—

"आत्मा कर्त्रादिरूपश्चेद् मा काङ्क्षीस्तर्हि मुक्तताम्।
न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥"

इति स्वाभाविको धर्मो धर्मिनाशं विना न नश्यति, यथौष्ण्यं रवेरपि नाशं विना न नश्यति, घटादीनां कार्ष्ण्यं तु न स्वाभाविको धर्मः; नैयायिकमते घटस्योत्पत्तिदशायामेव रूपवत्त्वाभावात्। अयमेव न्यायश्चैत्रगन्तृत्वेऽपि। अत आत्मनो नित्यस्य कर्तृत्वस्य तदविनाभूतस्वाभाविकधर्मत्व आत्मनाशं विना तत्कर्तृत्वनाशो न स्यात्, इति न स्वाभाविकं कर्तृत्वमहमर्थस्यौपाधिकस्योपाधिनाशप्रयुक्तनाशयोग्यस्यैव, न शुद्धस्य संविदात्मनः ॥

ज्ञातृत्वेऽपि कर्तृत्वन्याय एव, ज्ञानस्याप्यात्मस्वाभाविकधर्मत्वाभावात्

एतेन—ज्ञातृत्वमपि—व्याख्यातम्; तस्यापि स्वाभाविकधर्मत्वे न धर्मिनाशं विना नाशः स्यात्, इति सकृदुत्पन्नस्यैकस्यैव ज्ञानस्य सर्वदाऽवस्थानापत्त्या नैकस्याप्यनेकविज्ञानम्, अज्ञाननिवर्तकज्ञानार्थप्रवृत्त्यादिकं च स्यात्। न च धर्मभूतज्ञानमपि नित्यं द्रव्यम्; नित्यस्य द्रव्यस्य स्वभाविको धर्मो भवितुमर्हतीति पूर्वमेवोक्तम्। तस्य द्रव्यस्यात्मापृथक्सिद्धत्वे कथं न सामानाधिकरण्यम्? द्रव्यं हि द्रव्यन्तरापृथक्सिद्धं सामानाधिकरण्येनैव प्रतीयते। यथा 'मृद् घटः' 'अहं गौरः' इत्यादिः ॥

कथं वाऽऽत्मनो ज्ञानेन सामानाधिकरण्यं तस्य द्रव्यत्वे बाधितम्? वैशिष्ट्यविवक्षया सामानाधिकरण्यं तु गुण-गुणिभावस्थले, यथा 'शुक्लो घटः' इत्यादौ। अत एव "सत्यं ज्ञानमि"ति द्रव्येण ज्ञानेन ब्रह्मणः सामानाधिकरण्यम्; तयोः स्वरूपैक्यात्। धात्वर्थस्तु ज्ञानं जन्यमेवात्मधर्म एव साक्षात् परम्परया वेत्यन्यदेतत्। न वा नित्यधर्मभूतज्ञानं धात्वर्थतामर्हति। न हि सङ्कुचितम्, विकसितं वा द्रव्यं कुत्रापि धात्वर्थो नाम, इति 'अहं जानामी'त्यादौ धात्वर्थतया प्रतीयमानं ज्ञानं न नित्यं सङ्कोच-विकासभाववस्थं वा धर्मभूतज्ञानं भवितुमर्हति। अद्वैतमते तु मनःपरिणामो वृत्तिर्जन्या नात्मधर्मतामर्हति। न च सऽऽत्माऽपृथक्सिद्धा, इत्यादि व्यक्तमन्यत्र ॥

### अहमर्थस्यौपाधिकस्यैवौपाधिकमेवाध्यस्तज्ञानवत्त्वम् , तत्र 'अहमि'तिज्ञानस्य सर्वभ्रमसाधारण-द्व्यंशत्वाविशेषश्च

किं बहुना ? ज्ञातृत्वादिकमहमर्थात्मधर्म इत्येव श्रीभाष्यमते सिद्धान्तेऽपि स्वीकारात् , धर्मभूतज्ञानादीनामात्मधर्मत्वे विवादात् , अहमर्थस्य चिदचिद्ग्रन्थिरूपस्याध्यस्तस्वरूपताया एव युक्तत्वात् , अध्यस्ताहमर्थ-स्वाभाविकज्ञानत्वादिकमध्यस्तमेव स्वीकर्तव्यम् । अहमर्थानध्यस्तस्वरूपत्वं तु पूर्वस्मिन् प्रकरणे निरस्तम् । संविन्मात्रस्वाभाविकधर्मत्वनिरास एवात्र तात्पर्यात् , अन्यत्रानाश्वासात् ।।

तत्र ज्ञातृत्वादेरात्मन्यध्यासो न धर्मिणोरिव धर्माणामपि परस्परं विनिमयेन, किन्तु विक्रियात्मकस्यान्तःकरणस्य तत्र रजतत्वविशिष्टस्य रजतस्येव शुक्त्यामध्यासेन। विक्रिया तु नात्मनो धर्मः, किन्त्वन्तः-करणस्य ।।

कुत्रेदं दृष्टमिति प्रश्नस्तु यदि पूर्वदृष्टानुभवापेक्षया, तर्हि समाहित-मध्यासभाष्येण नैसर्गिको लोकव्यवहारः—इति ।।

न हि विना ज्ञातृत्वादिकमात्मनो व्यवहारो विवेकिनामपीत्यध्यास-भाष्ये—"पश्वादिभिश्चाविशेषादित्यत्रोपपादितम् । तदिदं सिद्धम्—

तत्राहमर्थो ज्ञातृत्वादिविशिष्टोऽज्ञातायां संविद्यध्यस्यते, न तु ज्ञातृत्वं संविदि । अतो'ऽहं जानामि' इति प्रतीत्युपपत्तिः । तत्राहमध्यासे संविदंशस्याधिष्ठानस्यारोप्यस्य चोभयस्य भानम् , इति भ्रमज्ञान-साधारणद्व्याकारत्वमहमध्यासेऽपि वर्तत इति सूचनार्थमेवाध्यासभाष्ये "अहमिदमि"ति वस्तुतत्त्वाभिप्रायणेदंपदप्रयोग इति भामत्यादौ व्यक्तम् , इति संविदधिष्ठानकज्ञानत्वविशिष्टाहमर्थाध्यासवादे'अहं जाना-मी'ति प्रतीतिर्न नोपपद्यते ।।

### अहंभानस्यावस्थाभेदेन भेदः, स न महतः परिणामः, किन्तु बुद्धीन्द्रियादिरेव । अत एवाहमर्थैकदेशस्यान्तः-करणपदेन व्यपदेशः

तत्रात्मनः प्रत्यक्स्वरूपस्याज्ञानोपहितस्य तेनैव रूपेण भानम् , सुषुप्तौ, स्वप्नादौ च साक्षितया'ऽहमि'ति । मुक्तौ त्वनावृतचैतन्यात्मतया प्रकाशमानत्वम् । तत्र सुषुप्ति-स्वप्नादौ तदाकारवृत्त्युपधानेन, वृत्तिस्त्वा-

विद्यकी, मानसी वेत्यन्यदेतत्। मुक्तौ तु प्रकाशस्वरूपतामात्रं न प्रकाशमानत्वम्। ततोऽहङ्कारो महत्परिणामोऽन्यः, मनोऽवस्थाविशेषोऽन्यः, तत्रावस्थाविशेषस्यापि मनो-बुद्ध्यहङ्कार-चित्तानां तत्र तत्रान्तःकरणपदवत् सामान्यपरत्वमपि। इदमेवाभिप्रेत्याहङ्कारपदमन्तःकरणपरं तत्र तत्राऽऽख्यायते यथा 'मम मनः' इति मनःपदेनाहमर्थैकदेशस्य निष्कृष्य प्रयोगः ॥

निष्कृष्य प्रयोगो भेदको विशिष्टस्येति श्रीभाष्यानुयायिनोऽपि, यथा "यस्य पृथिवी शरीरमि"ति। अतो न तावन्मात्रेणान्तःकरणस्याहमर्थबहिर्भावः ॥

तत्राहंत्वं विशिष्टनिष्ठं न विशेषणमात्रनिष्ठम्, विशेष्यमात्रनिष्ठं वा। अत एवाहं स्फुरामीति व्यपदेशः ॥

तत्र स्फुरणं प्रकाशनमात्रत्वं न तु स्फुरणत्वम्; अहमर्थस्यात्मत्ववत् स्फुरणत्वस्याप्यसंभवात्। अतो नाहं स्फुरणमिति प्रतीत्यापत्तिः, अहमात्मेति प्रतीतिस्त्वात्मना तादात्म्यादहमर्थस्य मिथ्यात्मनः ॥

### इदं रजतमितिवदहंज्ञानेऽपि द्व्याकारता

अत एव—

अनात्मन्यात्मबुद्धिर्भ्रान्तिरिति स्मृतिः, इति मिथ्यात्मनोऽहमिति प्रतीतिरबाधा। तत्राहंज्ञानस्य द्व्याकारता, तत्राप्युभयांशतेदंरजतादिज्ञानादिनाऽविशिष्टेति 'अहमिदमि'ति नैसर्गिक इति भाष्ये 'इदमि'ति सामान्यरूपस्य पृथक्तया ग्रहणं भाष्यमेव विशदयति। अतो नाहंज्ञानस्य भ्रमत्वानुपपत्तिः। तत्राहमर्थस्यैव तत्रोपाधितो निष्कृष्टः संविन्मात्र आत्मा। तत्र व्यवहारदशायामुपाधेः स्फुरणमधिकं यावद्विदेहकैवल्यमात्मनः इति निष्कर्षः ॥

### अहंप्रतीतावधिष्ठानारोप्याविवेकः, ज्ञातृत्वस्याध्यस्तस्यैव भानम् अधिष्ठानत्वमात्रं संविदः

अत्राहमर्थो मिथ्यात्माऽप्यज्ञातशुद्धचिदधिष्ठानक एव; यतः स्पष्टतया भानम्, इति "अहमिदमि'ति नैसर्गिकोऽयं लोकव्यवहारः" इति भाष्यं सूचयति। अतो 'घटः सन्' 'घटोऽयमि'तिवदहमयमिति प्रतीतिः। अहमित्येव प्रतीतावधिष्ठानप्रतीतिरपि नीलो घट इत्यादाविवानुसन्धेयः। न चाधिष्ठानं ज्ञानरूपेणैव, किन्तु सद्रूपेणापि ॥

तत्र संविद्रूपस्यैवाधिष्ठानत्वम् ; प्रतीतिकाले तस्यैव ग्रहणात् , इति ना'हं ज्ञानमि'ति प्रतीत्यापत्तिः, किन्तु जानामीत्येव। तत्र ज्ञानं धर्मभूतं ज्ञानमेव, न स्वरूपज्ञानम् । तच्चाहमर्थधर्म एव, न तु संविन्मात्रात्मधर्मः । अत-एवोच्यते—ज्ञातृत्वमहमर्थस्यैव, न निर्विशेषसंविन्मात्रस्येति ॥

तत्र—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इत्यनेनाधिष्ठानगतं सदादिरूपत्रयम् , स्वगतं तु रूपद्वयम् । तत्र स्वगतस्याविद्यापरिणामस्यैवाध्यस्तस्येदंरजतमित्यत्र रजतत्वस्येव सर्वत्र भानम् , तत्र सदंशस्याधिष्ठानस्यास्पष्टतया भानम् , चैतन्यांशस्य च अत एव 'सन् घटः', घटो भातीति प्रतीतिः आनन्दांशस्त्वावृत एव । 'जानामी'तिप्रतीतीतिर्वृत्तिज्ञानाध्यासेन । स चाहङ्कारोपहिते, इति न 'घटो जानातीति-प्रतीत्यापत्तिः । ज्ञाधात्वर्थो न संविन्मात्रम् ॥

अतो'ऽहं जानामी'त्यत्र धात्वर्थो ज्ञानं नाधिष्ठानम् , किन्तु वृत्त्यवच्छिन्नचैतन्यं घटादेर्भासकम् , न त्वावृतमधिष्ठानचैतन्यम् । अतोऽहं ज्ञानमिति न प्रतीतिः, किन्तु 'जानामी'ति परम्परया जन्यवृत्तिज्ञाना-श्रयत्वेन। अधिष्ठानं तु चैतन्यं नित्यं विशेष्यमेव, न कदाऽपि विशेषणम् ; आरोप्यस्य संसर्गातिरिक्तस्य प्रकारत्वनियमात् । अत एव विकल्पाप्रामाण्यवादः, सन्मात्रप्रत्यक्षप्रामाण्यवादो वा । सर्वं ज्ञानं धर्म्यंश एव प्रमेति नियमोऽप्येतदाशय एव ॥

अतो 'जानामी'ति विषयोऽहमर्थविशेषणतया प्रतीयमानं धर्मभूतं ज्ञानमपि शुक्तौ रजतत्ववदध्यस्तमेव । अत एवोच्यते—ज्ञातृत्वम् , कर्तृत्वा-दिकं वाऽहमर्थस्यारोप्यस्यैवारोपित एव धर्मः, न तु संविदः साक्षात् धर्म इति ॥

भूषणं हि ज्ञानस्वरूपमद्वैताभिमतम् , अहमर्थं चान्यथा गृहीत्वा बहु संभ्रमति ॥

तत्रे'दं रजतमि'त्यत्रे'दमि'ति रजतमध्यस्यमानमभेदेनैवाध्यस्यते, न तु प्रथमं रजतस्य, अनन्तरं रजताभेदस्याध्यासः; इतरेतरभावविषयत्वाद-ध्यासस्य ॥

परस्पराध्यासे सर्वत्र विशेष्यांशोऽधिष्ठानम्, प्रकारांशस्त्वारोप्यः। तत्र व्यावहारिकाध्यासे स्वतो भानमेवाधिष्ठानस्य, प्रातिभासिके तु त्वधिष्ठानज्ञानं वृत्तिरूपमेव कारणम्

अयमेव न्यायः—संविदि स्वयंप्रकाशमानायामन्तःकरणाध्यासेऽपि, इतीतरेतरभावतयाऽधिष्ठानारोप्यस्वरूपनिष्पन्नमेवाहमर्थो नाम। न चैतन्येन भास्यमानमात्रेऽहमर्थोऽभेदाध्यासो नाम। यथा घटाद्यध्यासे यद् घटावच्छिन्नं चैतन्यमध्यस्तरूपं विशिष्टम्, तत्र विशेष्यांशमात्रमधिष्ठानरूपेण गृहीत्वा चैतन्याधिष्ठानता॥

अत एवाधिष्ठानज्ञानं वृत्तिरूपमन्तःकरणाद्यध्यासे न कारणम्, शुक्तिरजतादिज्ञान एवाधिष्ठानज्ञानं कारणमिति व्यवस्था। तत्रापि तु नाधिष्ठानज्ञानं कारणमिति कवितार्किकचक्रवर्तिभट्टोपाध्याया मन्यन्त इति त्वन्यदेतत्। साक्षित्वमपि तत्राहमर्थस्यैवाज्ञातांशमात्रमभिप्रेत्य॥

अत एव नियमः—"सर्वं वस्तु ज्ञाततया, अज्ञाततया वा साक्षिभास्यमि"ति। साक्षिचैतन्यमप्यज्ञानोपहितमुपाधिमिथ्यात्वात् साक्षित्वेन मिथ्यैव; अज्ञानस्योपाधेर्बाधे साक्षित्वस्यापि बाधात्। अत एव परिभाषायामज्ञानस्यापि विशेषणत्वोपाधित्वाभ्यामीश्वरत्व-साक्षित्वयोरेव भेदः, न त्वीश्वर-साक्षिणोरिति॥

तत्राहमर्थः साक्षी स्वत एव भासते; उपाध्युत्पत्तिकाले निवृत्तावरणतयैव सिद्धत्वादित्येकं मतम्। तदाकारवृत्त्यैव सोऽपि भासत इति तु प्रस्थानान्तरम्। उभयत्राप्युपाधेः साक्षिणा भानमहमर्थविशेषणस्य तदुपाधेरिव सूपपादम्॥

अयमेव न्यायः सुखाद्यान्तरवस्तुभानेऽपि। तत्र सुखादिकमहमर्थधर्मतयोत्पद्यते, ज्ञायते च, इति तस्याहमर्थेन भेद एव। सुखादिकं ह्यन्तःकरणे, तत्परिणामवृत्तौ वा प्रतिबिम्बितानन्दांशमात्रम्, नानन्दांशो ब्रह्मणः, सुषुप्तौ तु चैतन्यांशस्यैवानन्दस्यानुभव इति परं विशेषः॥

निर्धर्मकसंविन्मात्रप्रकाशस्तु स्वतो मुक्तिदशायामेव, यदा नाहमर्थो ज्ञाता, जन्यधर्मरूपं ज्ञानं तत्करणं वेति व्यक्तमन्यत्र॥

साक्षी स्वयं भानेऽपि नानावृतसंविन्मात्रमित्यदि

तत्र सविन्मात्रस्यावृतस्याधिष्ठानस्याव्यक्तरूपेणाहंप्रतीतिदशायां भानादहमर्थः साक्ष्यपि; साक्षित्वेन रूपेण कल्पितत्वात्, न शुद्धसंविदात्मा,

इति ना'हं ज्ञानमि'ति विशदप्रतीतिप्रसङ्गः। ज्ञातृत्वं तस्य कल्पितमिति तस्यैव ज्ञातृत्वस्यापि विशदप्रतीतिः, परन्तु तद् ज्ञानं स्वरूपज्ञानमिति न विस्मर्तव्यम् ।।

अद्वैतिनामात्मनो ज्ञातृरूपत्वमेव, न तु ज्ञानत्वमिति तु निर्विशेषमुख्यात्माभिप्रायमेव। अहमर्थज्ञातृतायाम्, तत्कर्तृतायाम्, तद्भोक्तृतायां वा न विसंवादः ।।

तत्र वृत्तेरन्तःकरणस्य वा, व्यञ्जकत्वं यावत्तत्सत्त्वमज्ञानगतावरणशक्तिप्रतिबन्धकत्वमेव, यत्रोपहितस्य प्रकाशः। अविद्यानुपहितस्य वृत्त्या सर्वात्मनाऽज्ञानस्वरूपस्यैव निवर्तनात् तद्विनाशानन्तरमपि नावरणप्रसङ्ग उपहितभान इवेति विशेषः। तत्र चैतन्यव्यञ्जकत्वं चैतन्यगतावरणशक्तिप्रतिबन्धकत्वमात्रम्, प्रकाशस्तु चैतन्यस्य स्वतः, अवच्छेदकानां तु तद्द्वारा। इदमेवाभिप्रेत्योक्तम्—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते ।।"

इति। चैतन्यस्य स्वप्रकाशत्वं तु परापेक्षप्रकाशत्वविरह एव। अखण्डाकारवृत्तिः, वृत्त्यन्तरं वा सर्वत्र तद्गतावरणनिवृत्त्यैवोपष्टिणोति ।।

तत्राहंकारो यद्यन्तःकरणम्, तर्हि तेन, तदाकारवृत्त्यैव वाऽऽवरणं निवर्त्यते। अन्य एवाहङ्कारोऽहमर्थकारितः। अविद्ययाऽवरणं हि चैतन्यस्यान्यस्मै तदप्रकाशमात्रम्, न स्वतोऽपि ।।

तत्रान्तःकरणं यद्यहङ्कारः, तर्हि सोऽग्निः, नाङ्गारः, इति तेन, तद्वृत्त्या वाऽज्ञाननिवृत्तिर्न दोषः ।।

एतेन—

"शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ।।

इति वचनम्—परास्तम्; सर्वथा तु संविन्मात्रस्याहमर्थत्वम्, तदध्यासाधिष्ठानत्वेन तदीयेनैव ज्ञातृत्वेन ज्ञातृत्वम्; स्वरूपत इव, ज्ञानविशिष्टरूपेणापि तस्य तत्राध्यस्तत्वात्, इत्यहमर्थत्वेनैव ज्ञातृत्वमात्मनः, न वस्तुतो ज्ञातृत्वम् ।।

॥ ज्ञातृत्वाध्यासोपपत्तिः ॥

## साक्षित्वोपपत्तिः

अन्तःकरणाविद्यान्यतरोपधानेनैव साक्षित्वम् । अतो ज्ञातुरिव न फलभागित्वं साक्षिणः

तत्र "साक्षाद् द्रष्टरि संज्ञायामि"ति पाणिनिः साक्षाद् द्रष्टारं साक्षिणं स्मरति । साक्षाद् द्रष्टा च घटादीनां प्रमातैव, योऽन्तःकरणावच्छिन्नं चैतन्यं नाम । तत्र द्रष्टृत्वं घटादौ मानसवृत्तेर्घटादिसम्बन्धमात्रेण, इति तस्या घटाद्यवच्छिन्नचैतन्यावरणनिवृत्तावेवोपयोगः । प्रकाशस्तु प्रकाशस्वभावस्य चैतन्यस्यैव । तत्रापि कथञ्चन प्रकाशविषयत्वमज्ञानविषयघटाद्यवच्छिन्नचैतन्यस्यैव, तदाश्रयत्वं तु प्रमातुरेव घटेन सह'अहं घटं जानामी'ति प्रकाशमानस्य । तत्र प्रकाशाश्रयत्वेऽन्तःकरणस्योपाधित्वेन सत्तामात्रेणान्वयः, न तु कार्यान्वितत्तयाऽपि । तत एव द्रष्टृत्वेऽप्यन्तःकरणविशिष्टस्येव न साक्षिणः फलभागित्वम् । अतः साक्षाद् द्रष्टृत्वमात्रमन्तःकरणोपहितचैतन्यस्य, अविद्योपहितचैतन्यस्य वा । अत एव साक्षिणोऽत्र द्रष्टुरपि प्रकृतकार्यानन्वयित्वम् , इति न साक्षिपदप्रवृत्तिनिमित्तस्य काऽपि क्षतिः ॥

विशेषणत्वोपाधित्वनिबन्धनो ज्ञातृ-साक्षिणोः स्वरूपविवेकः

तत्रोपाधिभेदेन चैतन्यमात्रभेदवादः, उपाधिनिवृत्तौ तु सर्वैक्यमिति परमसिद्धान्तोऽद्वैतिनामप्रकम्प्यः । अतोऽहमर्थत्वेन ज्ञातृत्वम् , साक्षित्वेन द्रष्टृत्वं स्वसम्बद्धभासकत्वम् । एवं मायोपहितत्वेनेश्वरसाक्षित्वम् , तद्विशिष्टरूपेणेश्वरत्वम् । तत्रापि मायाया एव गुणाधिक्यमात्रेण तदुपहितानां ब्रह्म-विष्णु-रुद्रत्वादिभेदादयः । परमसिद्धान्तस्तु निर्विशेषं चैतन्यमिति व्यवस्था ॥

तत्र वादि-प्रतिवादिनोर्मध्यस्थ इव सर्वभासकोऽपि न तद्भानप्रयुक्तं प्रयोजनं किमप्यस्तीति लभ्यते । अत एव लोकसिद्धार्थस्याप्यबाधः ॥

तत्रोपाधिभेद-तदभावप्रयुक्तत्वमहमर्थसंविन्मात्रभेदस्य, विशेषणत्वोपाधित्वभेदकृतजीवत्वसाक्षित्वादिभेदस्य च । यावदुपाधिसत्त्वमेव सर्वोऽपि भेदव्यवहारः । तत्रेश्वर एकः; तदुपाधेरेकत्वात् , जीवास्तु बहवः; तदुपाधीनां बहुत्वात् । तथा जीवत्व-जीवसाक्षित्वयोः, ईश्वरत्व-तत्साक्षि-

त्वयोरपि भेदः, इति तत्तदवच्छेदकानां विशेषणत्वोपाधित्वमित्यादिप्रक्रिया-विशेषः ॥

"एको देवः" इत्यस्येश्वरसाक्षिपरत्वम्

तत्र "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" इतीश्वर-परम्। स चान्तर्यामी वा भवतु, जगत्कर्ता वा, उभयरूपो वा। उभय-थाऽपि तस्य तत्तत्कार्यानन्वयस्तु समानः ॥

जीवत्वेश्वरत्व-साक्षित्वप्रयोजकम्

भासकत्वांशमादाय साक्षित्वम्, कर्तृत्वांशमादायेश्वरत्वम् मायाया विशेषणत्वेऽपि तस्याः संविद इव विवर्तोपादानत्वाभावात्। तदुपाधित्वेऽपि दर्शनक्रियासम्बन्धाभावेनैव साक्षित्वम्, न त्वन्यसम्बन्धेन ॥

जीवेश्वरविभागस्तु तयोरुपाधिभेदप्रयुक्त एव, न स्वरूपतो भेद-प्रयुक्तः, इति तत्र जीवोपाधीनां भेदादर्थसिद्धं तदनेकत्वम्, तद-वच्छेदकस्य विशेषणत्वोपाधित्वाभ्यां जीवत्वेश्वरत्वभेदश्च। शरीरभेदमात्रं जीवानाम्, न स्वरूपभेद इत्यादिकथनमधस्तात् ॥

तत्र जीवसाक्षीश्वरसाक्षिभेदप्रयोजकं सर्वमत्राप्रकृतम्, इति साक्षि-स्वरूपमात्रं प्रकृतमेव परीक्ष्यते ॥

तथापि संग्रहेण किञ्चित्तत्र विविच्यते—तत्रेश्वरत्वेन स्रष्टृत्वम्, तत्साक्षित्वेन सर्वज्ञत्वमिति वस्तुस्थितिः। उभयत्रापि—

"चातुर्वर्ण्यं मया सृष्टं गुण-कर्मविभागशः।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥"

इत्युक्तरीत्यौपाधिकधर्माभाक्त्वेन साक्षित्वमपीश्वरस्याबाधम्। अवि-द्योपधानेन सुषुप्तौ जीवस्येव। प्राकृते प्रलय ईश्वरस्य सर्वक्रियावर्जितस्य साक्षित्वं स्वतो भानमात्रमिति तु तत्त्वम् ॥

जीवेश्वरसाक्षित्वनियामकम्

तत्राज्ञानोपहितं चैतन्यं साक्षीत्युभयसाधारणं साक्षित्वम्, येन स्वस्य भानमात्रमेव, नान्यभासकत्वम्। अत ईश्वरस्य सर्वज्ञत्वम्, जीवस्य बाह्यपदार्थप्रकाशकत्वं च साक्षित्वप्रयुक्तम्। अतो जीवसाक्षित्वं बाह्यार्थ-प्रकाशमुपलब्ध्यान्तःकरणोपधानमपेक्षते, न तथा ईश्वरसाक्षीति विवेकः ॥

### ईश्वर-जीवसाक्षिणोर्विशेषः

न चेश्वरस्येव व्यापकस्यान्तःकरणोपहितस्य तदुपधानप्रयुक्तमध्यमपरिमाणवतो जीवस्यान्तःकरणोपधानं विना बहिर्निर्गतस्वोपाध्यन्तःकरणपरिणामवृत्तिद्वारकस्वसम्बन्धं विना वा विषयप्रकाशकत्वं सम्भवति, इत्यन्तःकरणोपहितमेव चैतन्यं मुख्यः साक्षी, स्वभानं तु स्वत एव, इति न तत्र साक्ष्यपेक्षा। आन्तरसुखादीनामपि प्रतिबिम्बानामानन्दानामन्तःकरणपरिणामवृत्तेरेव तत्प्रतिबिम्बोपाधित्वात्, विनाऽन्तःकरणोपधाननिबन्धनं साक्षित्वं न भानं सूपपादम्। सर्वमिदं प्रासङ्गिकमपि यक्षानुरूपबलिन्यायेन सिद्धान्ततत्त्वोपपिपादयिषया च संगृहीतम्॥

### जीवसाक्षिस्वरूपविवेको मतद्वयेऽपि, "एको देवः" इत्यस्येश्वरसाक्षिपरत्वम्

प्रकृतस्तु विषयः को नाम साक्षीति? तत्र प्राधान्यं जीवसाक्षिणः परीक्षाया एव। तत्र साक्षित्वं ज्ञातृत्वसिध्यधीनमिति संप्रतिपन्नम्। तेन यो ज्ञाता, स एव साक्षीति फलति। ज्ञाता चाहमर्थ एव प्रमाता। ततः स एव साक्षीति निर्णीतप्रायम्। तत्र ज्ञातैव हि लोक-वेदयोः साक्षी नामेति श्रीभाष्यसिद्धान्त इवाद्वैतसिद्धान्तोऽपि। तत्र ज्ञातृत्वम्, साक्षित्वं वा निरुपाधिकस्य संविन्मात्रस्य नाद्वैतसिद्धान्तेऽपि। "एको देवः" इति वाक्यमन्तर्यामिविषयम्, ईश्वरविषयं वा न जीवसाक्षिपरीक्षायामपेक्ष्यते॥

### मतद्वयेऽपि ब्रह्मप्रकाशोपपत्त्यर्थं धर्मभूतज्ञानापेक्षा समाना

तत्र चैतन्यं निरुपाधिकं स्वप्रकाशम्, तदेवान्तःकरणोपहितं सत् साक्षिभावमापन्नं बाह्यानि स्वव्यतिरिक्तानि तत्तदाकारवृत्तिद्वारा सम्बद्ध्यैव भासयति, नासम्बध्य, इति बाह्यप्रकाशोपपत्त्यर्थं धर्मभूतज्ञानं तत्तत्प्रक्रियासिद्धमपेक्षते। निष्कर्षस्तु—स्वप्रकाशमपि साक्षि वृत्तिज्ञानाश्रयं सदेव विषयप्रकाशकम्॥

### साक्षिणो बाह्यप्रकाशकत्वे, आन्तरसुखादिप्रकाशकत्वे च प्रकारविशेषः

तच्च वृत्तिज्ञानं स्वोपाध्यन्तःकरणधर्मोऽहमर्थस्य तदुपहितस्यैव, न संविन्मात्रस्य, इति प्रमातृचैतन्यनिष्ठमेव ज्ञातृत्वम्, साक्षित्वं च। अतोऽद्वैतसिद्धान्ताभिमतं साक्षिस्वरूपं प्रमातृचैतन्यमेव॥

तत्र साक्षिणो भानमपरोक्षतयैव, इति घटादिप्रत्यक्षार्थं घटादीनां बाह्यानां प्रमातृचैतन्याभेदं वृत्तिनिर्गमद्वारा संपाद्य प्रमात्रभेदेन विषयावच्छिन्नं चैतन्यमपि साक्षिचैतन्यत्वात् घटादिभासकम्। कुत्रचन प्रमातृचैतन्यमात्रस्य सुखादीनां भासकत्वात् स्वयं साक्षिरूपं भवति। घटादिस्थले तु विषयावच्छिन्नमेव चैतन्यं प्रमातृचैतन्याभेदेन साक्षिस्वरूपं सदेव भासयतीति विवेकः। तत्र प्रमातृचैतन्याभिन्नविषयचैतन्यम्, विषयचैतन्याभिन्नप्रमातृचैतन्यं वा साक्षिस्वरूपं विना न घटादिप्रत्यक्षतानिर्वाह इति तु निष्कर्षः ॥

जाग्रत्सुप्तजीव-तत्साक्षिस्वरूपनिष्कर्षः

साक्षिशब्दार्थस्त्वन्तःकरणोपहितचैतन्यं तत्परिणामान्तःकारणवृत्त्युपहितं चैतन्यमात्रम्। तत्राद्यं विषयप्रत्यक्षत्वमपेक्ष्य, द्वितीयं ज्ञानप्रत्यक्षत्वमपेक्ष्य। सौषुप्तमपि कारणशरीराज्ञानोपहितं चैतन्यमन्तःकरणसूक्ष्मावस्थत्वात् कारणशरीरस्य प्रमातृचैतन्यमेव। विशेषस्तु सूक्ष्मरूपेण तदा भानम्, जागरादौ तु स्थूलरूपेणेति प्रमातृचैतन्यमेवाऽहमर्थोऽज्ञानाऽन्तःकरणविशिष्टतयोपाधिदोषभाक्त्वेन जीवः। तदुपहितस्तु तदुपाधिदोषाभागी जीवसाक्षीति। संविन्मात्रं तु न साक्षीति न ज्ञातृ-ज्ञेय-परोक्षापरोक्षज्ञानाविवेकः। जीवत्व-तत्साक्षित्वेश्वरत्व-तत्साक्षित्वोपलक्षितसंविन्मात्रैक्यरूपाद्वैतसिद्धिरेव साक्षिस्वरूपनिष्कर्षेऽपीति सर्वं सुस्थम् ॥

॥ इति साक्षित्वोपपत्तिः ॥

## शास्त्रप्राबल्योपपत्तिः

### प्रमाणबलाबलपरीक्षाप्रकारव्यवस्था

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।"

इति जात्यैव शास्त्रस्य प्राबल्यमुक्तम् । तच्च प्रत्यक्षाद्यनवगतार्थबोधकत्वेन । सति विरोधे प्रत्यक्षमन्यर्थम्, अप्रमाणं वा, इति शास्त्रानुसारेण व्यवस्था कर्तव्या । क्वचित्तु प्रत्यक्षस्य परीक्षितत्वे श्रुतेः प्रत्यक्षाविरुद्धार्थतात्पर्याभावे तु श्रुतिरपि प्रत्यक्षाविरोधार्थमन्यथा नीयते ॥

यथा "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती"ति प्रत्यक्षानवगतशरीरातिरिक्तावगाहनेन प्रमाणम्, चन्द्राधिकपरिमाणपरं शास्त्रं चन्द्रप्रादेशिकत्वप्रत्यक्षमप्रमाणीकृत्य प्रमाणम्, "आदित्यो यूपः" इति तु प्रत्यक्षाविरोधाय शास्त्रमन्यथयित्वा प्रमाणम् । तत्र शास्त्रस्यान्यथाकरणमुभयोरपि व्यावहारिकत्वेन प्रामाण्ये। तत्रापि शास्त्रस्य प्रत्यक्षविरुद्धार्थे तात्पर्याभावः । 'न विधौ परः शब्दार्थः' इति न्यायस्तु तात्पर्यविशेषवद्विषयस्य ॥

शास्त्रयोरेव विरोधे तु सावकाश-निरवकाशन्यायेन, उत्सर्गापवादविधया, वोभयोरपि भिन्नविषयकतया वा ॥

तत्रापि क्रियापराणां शास्त्राणां समानविषयकत्वे तूभयोरपि समप्राधान्येन विकल्पविधया प्रामाण्यम् । यथा—"अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाती"ति । वस्तुपराणां तु वस्तुनि विकल्पायोगाद् विषयभेदेन तत्तन्मात्रपरतयोभयोरपि प्रामाण्यम्, परन्त्वन्यशेषस्य वाक्यस्यान्यन्यशेषवाक्यान्तरस्य चोभयोरपि प्रामाण्यम्, यद्येकस्यैव प्रामाण्येनैव निर्वहणीयम्; अन्यशेषवाक्यान्तरबाधकत्वायोगात्, तदविरोधेन यथाकथंचित् तात्पर्यं वर्णनीयमिति बलाबलपरीक्षापरिस्थितिः ॥

#### एतत्प्रकरणविषयबलाबलपरीक्षाविषयनिष्कर्षः

सति चैवं 'सन् घटः' इत्यादिप्रत्यक्षस्य, "अतोऽन्यदार्तम्" "नासदासीत् नो सदासीत्" "एकमेवाद्वितीयम्" "नेह नानाऽस्ति किञ्चन" इत्यादिश्रुतीनां च प्रपञ्चसत्यत्व-मिथ्यात्वपराणां परस्परविरुद्धानां कस्यानुसारेण कस्य प्रामाण्यम्, किमन्यथानयनमेकस्य, उतोभयप्रामाण्यम्,

तथा ब्रह्मसविशेषणत्वपराणां तन्निर्विशेषपराणां च विषये कस्य प्राधान्यमिति शङ्कायां तत्र प्रत्यक्षागमविरोधे कस्य प्राबल्यमिति, प्रत्यक्षागमबलाबल-परीक्षार्थमिदं प्रकरणम् । सविशेष-निर्विशेषवाक्यबलाबलपरीक्षा तु पश्चात् प्रकरणान्तरस्य विषयः ॥

एतत्प्रकरणविषयपरीक्षालक्ष्यम्

तत्र प्रपञ्चसत्यत्वपरत्वं प्रत्यक्षस्य यदि वर्तते, तर्हि तदसत्यत्वपरशास्त्रेण विरोधात् कथं तत्र व्यवस्थेति समस्या प्रथमा, द्वितीया तु प्रत्यक्षागमयोर्भिन्नविषयत्वादविरोधात्, भिन्नविषयकत्वाद्वा बलाबलपरीक्षैव नावसरतीति । तत्र द्वितीया परीक्षा विरोधं सिद्धवत्कृत्य शास्त्रप्रामाण्यपरा, तेन चार्थात् प्रत्यक्षाप्रामाण्यं फलम्, अथवा प्रत्यक्षप्रामाण्यं सिद्धवत्कृत्यैव शास्त्रानुसारिव्यवस्थामात्रपर्यवसानम् ॥

तत्र द्वितीया परीक्षा प्रत्यक्षविरोधमविगणय्य, प्रथमा तु तद्विरोधमङ्गीकृत्येति विवेकः । ततश्च शास्त्र-प्रत्यक्षयोर्विरोधस्थापनम्, तत्परिहारक्रमश्च प्रथमपरीक्षाविषयः, इति परीक्षाद्वयविषयभेदनिबन्धनमादायैवोक्तं प्रकरणमनुक्रम्यते, इति न किमप्यत्र विपरीतवर्णनम् ॥

प्रत्यक्षागमयोर्विरोधाविरोधचिन्ता

तत्राविरोधवर्णनं यद्यपि वादिप्रतिवादिनोरुभयोरपि लक्ष्यम्, तथापि प्रपञ्चमिथ्यात्वं सिद्धवत्कृत्याद्वैतिनामविरोधवर्णनम्, श्रीभाष्यानुयायिनां तु तत्सत्यत्वं सिद्धवत्कृत्येति विवेकः ॥

श्रीभाष्याद्वैतसिद्धान्तयोर्भेदप्रत्यक्षाभेदागमयोर्विरोधा-
विरोधप्रकारोपक्षेपः

तत्र प्रथमं जीवेश्वरभेदप्रत्यक्ष-तदभेदपरशास्त्रयोरविरोधोऽद्वैत सिद्धान्ते जीवत्वेश्वरत्वोभयोपलक्षिताभेदपरत्वं शास्त्रस्य, प्रत्यक्षस्य तु तद्विशिष्टभेदपरत्वमिति विषयभेदात्, श्रीभाष्यमते तु जीवेश्वरयोः शरीर-शरीरिभावनिबन्धनतादात्म्यविषयकतया सामानाधिकरण्यनिर्वाहाद् न विरोधः प्रत्यक्षागमयोरिति विरोधशमनप्रकारः सर्वविदितः । किं तत्र 'नाहमीश्वरः' इति प्रत्यक्षसिद्धभेदे विरोधमविगणय्य विरोधसमर्थनम्, उत तयोर्भिन्नविषयकत्वमाश्रित्येति विवेचनीयम् ॥

"तत्त्वमसी"तिवाक्ये प्रत्यक्षादिविरोध-तत्परिहार-
प्रकाराणामुपक्षेपः

तत्र यदि विषयभेदमादायाविरोधवर्णनम्, अथवा तत्र विरोध एव नास्ति इति, तर्ह्यद्वैतसिद्धान्तेऽपि जीवानाम्, जीवेश्वरयोश्च भेदस्य प्रत्यक्षसिद्धस्य, शास्त्रसिद्धस्य बद्धजीव-सविशेषेश्वरभेदविषयकस्य निर्विशेषजीवेश्वराभेदपरवाक्येनाविरोधेन तयोर्भेदाबाधेनैवाद्वैतपरत्वं मन्यते, इति को वा विशेषः श्रीभाष्यसिद्धान्तस्याद्वैतसिद्धान्तात्? न हि श्रीभाष्यमतमपि पुरतो दृश्यमानबद्धश्वेतुकेतुशरीरित्वं साक्षात् परमात्मन उक्तवाक्यावसेयम्, न वा तत् तस्य सिद्धान्तोऽपि ॥

वस्तुतस्तु—सूक्ष्मचिदचिच्छरीरकपरमात्मस्वरूपमेव तत्त्वमिति सिद्धान्तस्य, अस्य, वाक्यस्य केवलेन पुरतो दृश्यमानेन श्वेतकेतुनाऽज्ञेन शरीरशरीरिभावेन सामानाधिकरण्यपरस्य च को वा सम्बन्धः?

कथं वा तत्र "सदेवे"त्यत्राचिच्छरीरकस्योपक्रमः, चिद्विशेषशरीरस्योपसंहारश्चोपपद्यते? इति विरोधोऽपि परिहर्तव्यः श्रीभाष्यमते। लक्षणया परिहारस्तूभयत्र समानः। कथं वा कुत्र वा तत्र लक्षणेत्यत्रैव विप्रतिपत्तिः। सर्वं चेदमखण्डार्थप्रस्तावे विशदीभविष्यति ॥

अद्वैतदृष्ट्या "तत्त्वमसी"त्यादौ विशेषणाविवक्षयैक्यपरत्वमेव
जहदजहल्लक्षणया युक्तमिति भेदप्रत्यक्षावि-
रोधात् परिहारः

तत्राद्वैतमते विरोधो लोकतो जीवेश्वरयोर्भेदप्रतीत्या, तदभेदश्रुतेर्विशद एव। इदमेवात्र विविच्यते—लोके जीवेश्वरयोर्भेदप्रतीतिः कुतः? यदि जीवत्वेश्वरत्वयोर्धर्मयोर्विरुद्धयोर्विशेषणयोर्वा भेदेन, तर्हि तावतैव सिद्धो विरोधः, इति विरोधपरिहारार्थं यतनीयमेवोभाभ्यामपि। विशेषणभेदमात्रेण विशेष्यभेदो यद्यपि धर्मिण्येकस्मिन् अनेकधर्मवैशिष्ट्यबोधेन संभवति, यथा 'नीलो दण्डी कुण्डली देवदत्तः' इत्यादौ, 'अग्निर्माणवकः' इत्यादौ तु विशेषणभेदात् विशिष्टभेदो दुरपह्नवः, तत्र गौण्या विरोधपरिहारः। अत्र विशेषणधर्माविवक्षया स्वरूपाभेदेन विरोधपरिहार इति। लक्षणा तूभयत्र समाना। गौण्यपि हि लक्षणैव। धर्मद्वयाभावे साक्षाल्लक्षणा, गौण्यां परम्परालक्षणा। तथा गौण्यां श्रौतस्य धर्मस्य त्यागः, अश्रुतस्य धर्मान्तरस्य कल्पनम्, जहदजहल्लक्ष-

णायां तु श्रुतधर्मत्यागमात्रम्। साऽपि व्यक्त्योः पदद्वयावगतयोर्विरुद्ध-धर्मयोरभेदस्यासम्भव एव, अत्र तु स्वरूपैक्यात् धर्माविवक्षामात्रम्, तदप्ये'कमेवाद्वितीय'मि'त्यद्वितीयत्वेनोपक्रमवशात्॥

तत्र यद्यपि तत्पदार्थस्यैवाद्वितीयत्वं प्रस्तुतम्; तथापि तत् त्वम्पदार्थ-स्याप्युपलक्षणम्। अत एव हि—"अनेन जीवेनात्मने"ति जीवस्य तत्प-दार्थस्वरूपत्वपरामर्शः, इत्युपक्रम-परामर्शोपसंहाराणामैक्यं प्रत्यक्षाद्यव-गतजीवेश्वरातिरिक्तोभयानुगतस्वरूपैक्यमेवात्र वाक्यार्थ इत्यत्रैव स्वार-स्यम्। श्वेतकेतोः संबोध्यस्य पुरतो दृश्यमानरूपेण परमात्मनैक्यं बाधितमिति तु सम्प्रतिपन्नम्, इत्यभेदयोग्यमेव तत्स्वरूपं तत्पदार्थ इति वक्तव्यम्। तच्च तदीयोपाधि-तद्धर्माविवक्षामात्रेणोपपद्यते, इति प्रतीयमान-विशेषपरिहारक्रमोऽद्वैतिनामेव स्वरसः, न तु श्रीभाष्यनुयायिनाम्॥

### मतद्वयेऽप्यभेदपरत्वे स्वरूपैक्यपरत्वमेव, न तु शरीर-शरीरिभावेन

अतो नात्र व्यक्तिभेदमादाय परिहारो युक्तः; व्यक्तिभेदे प्रमाणाभा-वात्, स्वरूपैक्येऽपि जीवेश्वरभावस्योपाधिभेदमात्रेणापि निर्वाहात्, विशिष्टस्येश्वरस्य, जीवस्य च व्यक्तिभेदेन 'नाहमीश्वरः' इति प्रत्यक्ष-सिद्धे भेदे सति, घट-पटयोरिवाभेदवर्णनासम्भवात्, उभयोरपि जीवे-श्वरयोस्तत्तदुपाधिमात्रेणैव तत्तच्छरीरित्वाविशेषे शरीरिणोः, औपा-धिकयोर्वा शरीरांशत्यागमात्रेणैकव्यक्त्युपपत्तौ व्यक्तिभेदकल्पनायां शरीरिणोर्द्वयोः शरीर-शरीरिभावकल्पनायाश्चाप्रामाणिकत्वाच्च। औपाधिकत्वं शरीरित्वञ्चेत्यनर्थान्तरमिति तु विशिष्टाद्वैतभञ्जनम्॥

### जीवत्वेश्वरत्वशिष्टयोर्नैक्यम्, अभेदो वा, विशेषणानां त्यागं विना संभवति

अतो जीवेश्वरव्यक्तिभेदमादाय नात्राभेदनिर्वाहः संभवति। यद्यपीश्वरः सर्वेश्वर एव, सर्वशक्तश्चायम्, तथा जीवोऽपि जीव एव, यथा घटो घट एव, पटः पट एव, परन्तु यावदीश्वरभावः, जीवभावः, घटत्वम्, पटत्वञ्चानुवर्तते, तावत् स भावो जीवस्येश्वरस्य चौपाधिक एव, इति कथमुपाधिनिवृत्तौ तस्यानुवृत्तिः? घटत्वं पटत्वमपि प्रकृत्य-वस्थाविशेषौ, घटात्मना, यावद्प्रकृत्यनुवर्तते, अन्यथा तु निवर्तते। कारणत्वमपि तस्य प्रकृतिविशिष्टस्य यावत्प्रकृतिसत्त्वमेव। प्रकृतिरपि

नश्यति, न वेति तु विचारान्तरम् , यस्योपरि स्वतन्त्रं प्रकरणम् । अतो विशिष्टैक्यपरतयाऽवगतस्योपक्रम-परामर्शोपसंहारस्वारस्यादिना विशेषणांशमात्रत्यागेन स्वरूपैक्यपरतयैवास्य योजनं युक्तम् ॥

### प्रवृत्तिनिमित्तयोरपि जीवत्वेश्वरत्वयोर्वाक्यार्थे भानं न संभवत्यसति तात्पर्ये

इदमेवाभिप्रेत्योक्तम्—तत्त्वमस्यादिवाक्यानि, जीवत्वेश्वरत्वोपलक्षितस्वरूपैक्यमात्रपराणीति । तत्रोपलक्षणविधया जीवत्वस्येश्वरत्वस्य च विवक्षणात् , शक्यतावच्छेदकभेदोऽप्यौपाधिको वाक्यमर्यादायां प्रथमं प्रतीक्ष्यते, इति भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वनिबन्धनं सामानाधिकरण्यसप्यबाधम् ; प्रवृत्तिनिमित्तस्य तस्य वाक्यार्थेऽसत्यपि तात्पर्ये भानं तु विरुद्धमेव; अन्यथा लक्ष्यार्थमात्रबोधस्याप्रतीत्यापत्तेः । न चात्रान्यादृशमेकविषयकत्वं संभवतीत्यनुपदमेव विशदीकृतम् ॥

### "तत्त्वमसी"त्यस्य जीवेश्वरसाम्यपरत्वायोगः

न च जीवेश्वरसाम्यमत्र वाक्यार्थः । तद्धि किं जीवस्येश्वरसाम्यम् , उतेश्वरस्य जीवसाम्यम् । तत्रान्त्ये "संभोगप्राप्तिरिति चेन्न वैशेष्यात्" "अधिकं तु भेदनिर्देशादि'तिसूत्रविरोधः; श्रीभाष्यदृष्ट्यापि प्रथमेऽपि किं सर्वात्मना, उत यत्किञ्चिद्धर्मसाम्यमात्रेण, तत्रापि बद्धावस्थायाम् , उत मुक्तावस्थायाम । तत्र बद्धावस्थायां जीवस्येश्वरसाम्यं बाधितम् । मुक्तावस्थायामपि जगद्व्यापारवर्जमेव भोगमात्रसाम्येन । यदि मुक्त्यवस्थानिरूपणपरमिदं वाक्यम् , तर्हि 'त्वमीश्वरसमोऽसी'ति स्यात् । तच्च प्रत्यक्षस्य श्वेतकेतोः पुरतो विद्यमानस्य भाव्यवस्थास्वरूपमप्रत्यक्षमेव, इति तत्र त्वं तदसीति वर्तमानवन्निर्देशानुपपत्तिः ॥

वस्तुतस्तूपदेशोऽयं स्वरूपस्यानुसन्धेयस्यैवेति सम्प्रतिपन्नम् । तत्र फलमात्रस्यात्र निर्देशः, इति ज्ञेयस्वरूपस्यानेन कथमुपदेशः स्यात् ? यदि जीवेश्वरसाम्यमात्रोपदेशान्तफलोपदेशस्यैव ज्ञेयोपलक्षणत्वमपि, तर्हीदं विविच्यताम्—"सदेवे"त्यादिवाक्यप्रस्तुततत्पदार्थसाम्यमेवात्र विवक्षितम् , उतान्यत् । आद्ये "जगद्व्यापारवर्जमि"तिसूत्रविरोधः, अन्त्ये 'सदेवे'त्यादिवाक्येन जगत्कारणोपक्रमविरोधः; अनपेक्षितत्वात् , अन्यस्यानुसन्धेयत्वम् , फलं च यद्यन्यत् , तर्हि साम्यनिरूपणमत्रानर्थकम् । शरीर-शरीरिभावेन सामानाधिकरण्यकथा त्वस्तं-

गता। यथाच, शरीर-शरीरिभावेन सामानाधिकरण्येऽसिपदानुपपत्त्यादयो दोषाः, तथोत्तरत्र व्यक्तम् ॥

सर्वथा तत्रापि प्रत्यक्षविरोधः परिहर्तव्य एव। स च श्रुतिप्राबल्यवशादेव, इति शास्त्रप्राबल्य एव प्रभातम् ॥

तत्र देहात्मनोर्भेदो यदि प्रत्यक्षसिद्धः, विष्णुपुराणादिसंमतश्च, तर्हि लोकदृष्टशरीर-शरीरिभावेन सामानाधिकरण्यमात्मानं प्रेक्षते ॥

आत्मस्वरूपस्याप्रत्यक्षत्वात् तद्भेदोऽप्यप्रत्यक्षः इति न
जीवैक्यवादे तत्प्रत्यक्षमपि विरोधि

एतेन—जीवभेदप्रत्यक्षवादोऽपि—परास्तः, किं तत्र देहात्मनोर्भेदाद् आत्मनामपि भेदः प्रत्यक्ष इति विवक्षितम्, उतात्मनामेव स्वरूपतो भेदः प्रत्यक्ष इति। आद्ये शरीरभेदमात्रं सिध्येत्, नात्मनामपि। द्वितीये परात्मनः परस्याप्रत्यक्षत्वात् सर्वात्मस्वरूपस्य शुद्धस्य तत्तच्छरीराच्छुरितस्य शास्त्रैकसमधिगम्यत्वात्, प्रत्यगात्मनः स्वरूपम्, तद्भेदो वाऽऽत्मभेदे कथं प्रत्यक्षतामर्हति ?

असंभाव्यमानदोषत्वात् संभाव्यदोषप्रत्यक्ष-
स्याप्राबल्यम्

सर्वथा त्वबाधितं प्रामाण्यं शास्त्रस्यैव, न तु प्रत्यक्षादेः संभाव्यमानपुरुषदोषस्येति शास्त्रप्राबल्यमेव युक्तम्। वेदस्यापि ह्यविद्यापरिणामस्याविद्यारूपदोषजन्यत्वादप्रामाण्यं त्वविद्यायाः पुरुषदोषत्वाभावाद् न संभवति। अधिकं तु सद्विविक्तत्वविचारावसरे व्यक्तम् ॥

विशेषाणामाविद्यकत्वात्, ब्रह्मणस्तद्विपरीतत्वात् सविशेष-
वाक्यापेक्षया निर्विशेषवाक्यप्राबल्यम्

तत्र सविशेषवाक्यानामपि वेदत्वेऽपि तदर्थस्याविद्यापरिणामत्वेन न तत्र प्रामाण्यम्; तत्र विषयेऽप्यविद्याया दोषविधया कारणत्वात्, तत्तद्विषयाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य बाधितार्थविषयकत्वेनाप्रामाण्यं संभवति। ब्रह्मपराणां तु विषयांशेऽविद्याया दोषविधया कारणत्वाभावात् वेदान्तानामभेदपराणां भेदपरवाक्यापेक्षया प्रामाण्यमधिकम् ॥

तत्रैवाविद्याया दोषविधया कारणत्वम्, यत्राविद्या विषयात्मना परिणमते; यथा शुक्तिरूप्यादिज्ञाने। अयमेव न्यायो व्यावहारिकप्रत्यक्षादौ, सवि-

शेषवाक्ये च । न चायं न्यायो वेदान्तेषु, इत्यविद्यापरिणामत्वेऽपि प्रमाणानां विषयांशे तस्यापरिणामित्वाद् नाप्रामाण्यमिति तु निष्कर्षः ॥

### शरीर-शरीरिभावपरत्वेऽपि प्रामाण्यायोगः

न चैवं सति शरीर-शरीरिभावेन तत्त्वमस्यादिवाक्यप्रामाण्यम् ; अनाद्याविद्यकशरीरे प्रमाणाभावात्, "यस्य पृथिवी शरीरम्" इत्यादौ सर्वत्राऽऽविद्यकानामेव शरीरत्वेनाम्नानेन तस्योपाधिपरतायामेव तात्पर्यात् । तत्र "यस्याऽऽत्मा शरीरमि"ति त्वहमर्थाद्युपहितात्मनोऽपि शरीरपरत्वं परमात्माधिष्टानकत्वमभिप्रेत्य । अतो न तत्परतायां वेदान्तानां प्रामाण्यं प्रत्यक्षादीनामिव ॥

### शाब्दापरोक्षवादेऽभेदज्ञानमपि प्रत्यक्षमेव, ततः श्रुतिमूलं प्रत्यक्षं प्रबलम्

वस्तुतस्तु—"तत्त्वमसी"त्यादिवाक्यजन्यं ज्ञानमपि प्रत्यक्षमेव, न तु परोक्षम्, इति न प्रत्यक्षेण प्रत्यक्षबाधोऽन्यतरस्य बाधकत्वमन्तरा संभवति । तत्र च भेदनिषेधपराणां बाधकत्वम्, भेदपराणां तु बाध्यत्वं 'इदं रजतमि'ति ज्ञानस्य, 'नेदं रजतमिति' ज्ञानबाधकत्वमिव युक्तम् ॥

### तत्र श्रुतिमूलमेव प्रत्यक्षं प्रबलम्

सर्वथा तु प्रत्यक्षत्वमात्रेण भेदज्ञानस्य बाधकत्वं न युक्तम् । शास्त्रबाधस्तु तस्यापौरुषेयत्वाद् युक्तः । निर्विशेषवाक्यप्रामाण्यवादेऽपि शाब्दापरोक्षवादस्तु समर्थितः । तत्र लौकिकप्रत्यक्षमात्रं नाबाधितविषयमेवेति नियमः, तद्धि बाधितविषयमपि, अबाधितविषयमपि । शास्त्रीयप्रत्यक्षं त्वबाधितब्रह्मविषयमेव । अतो लौकिकाद् भेदप्रत्यक्षादलौकिकं शास्त्रजन्यं प्रत्यक्षमेव प्रबलम् । शब्दजन्यम्, प्रत्यक्षादिप्रमाणजन्यं वा ज्ञानं स्वतः प्रमा, बाधवशादप्रमेति निर्णीयते ॥

### सविशेषवाक्यानां निर्विशेषवाक्येन बाधः; तेषामन्यपरत्वात् निर्विशेषवाक्यानां तत्परत्वाच्च

तत्र च तात्पर्यानुसारिणी श्रुतिस्तात्पर्यविरोध एवाप्रमाणं भवति, न तु तदनुग्रहे । तत्त्वमस्यादिवाक्यानां च भेद एव तात्पर्यम् । तद्धि पौर्वापर्यपरामृष्टं जीवत्वेश्वरत्वोपलक्षितस्वरूपचैतन्यैक्यमेव बोधयति, इति तत्रैव प्रामाण्यम् ॥

तत्राबाधेनोपपत्तौ बाधो न न्याय्य इति सार्वभौमो न्यायः। अतो भेदः शास्त्रबोधितोऽपि बाधमर्हति। सत्यबाधे स्वरूपमात्रैक्यपरत्वे न कस्यापि प्रमाणस्य बाधः। सविशेषवाक्यान्युपासनाशेषतया तत्तद्विशेषपराणि यावदुपासनं व्यावहारिकम्, आहार्यं वा धर्ममादायाप्युपपद्यन्ते; अन्यथा "वाचं धेनुमुपासीते"त्यादौ वागादौ धेनुत्वादिकमप्युपास्यं पारमार्थिकं स्यात्। अत एव भिन्नविषयत्वात् सविशेष-निर्विशेषवाक्ययोर्न विरोधः; ज्ञेयब्रह्मपरत्वाच्च निषेधश्रुतीनाम्, अभेदश्रुतीनां च ॥

'सामान्य-विशेष'न्यायो न सविशेष-निर्विशेषवाक्ययोः,
येन सगुणवाक्यानुसारेण योजनं स्यात्

'यदाहवनीय'न्यायोऽप्यत एव—व्याख्यातः। तत्र होमसामान्येऽधिकरणतयाऽऽहवनीयस्य विधानम्, होमविशेषे तु पदस्य। तत्र विशेषशास्त्राविरोधेनोत्सर्गस्य नयनम्। अयमेव न्यायः—'प्रकल्प्य चापवादविधिमुत्सर्गोऽभिनिविशते' इति वैयाकरणानाम्। तत्र विशेषत्वं प्रकरणाद्यवसेयम्। सर्वथा तु सामान्य-विशेषयोरत्रैकशेषत्वाभावाद् भिन्नविषयत्वेनाविरोधः ॥

तत्र यदि सगुणवाक्यम्, निर्गुणवाक्यं चोभयमपि सगुणप्रकरणगतम्, तर्हि समानविषयत्वात् 'यदाहवनीय'न्यायस्य नावसरः; भिन्नविषयत्वात्तस्य न्यायस्य। यदि तु भिन्नप्रकरणमुभयमपि, तर्हि न सामान्य-विशेषभावः। न च भिन्नप्रकरणस्थयोरेकत्वं संभवति। आहवनीयविधिरप्रकरणस्थः, पदहोमस्तु प्रकरणविशेषस्थः, इत्यप्रकरणस्थस्य श्रुतिमात्रेण सामान्यविषयकत्वम्, इति 'सामान्य-विशेष'न्यायो युक्तः। न चायं न्यायोऽत्र; निर्विशेषवाक्यं ज्ञानप्रकरणस्थम्, अपरन्तूपासनाप्रकरणस्थम्। भिन्नप्रकरणस्थयोश्चोभयोरपि विशेषपरत्वात्, भिन्नविषयत्वाच्च कथं सामान्य-विशेषभावः ? अतोऽनन्तगुणवत्त्वमुपास्यस्यैव, निर्गुणत्वं तु ज्ञेयस्यैवेति नियमाद् नानेन न्यायेन निर्गुणवाक्यगतगुणशब्दस्य विशेषपरत्वं संभवति ? उभयोरप्येकप्रकरणस्थे तु कथंचन स न्यायः प्रसरमर्हति ॥

सगुण-निर्गुणवाक्ययोर्भिन्नप्रकरणस्थत्वाद् न विरोधोऽपि

वस्तुतस्तु—'सामान्य-विशेष'न्यायोऽयं श्रुति-प्रकरणयोर्विरोधे प्रकरणानुसारेण श्रुतेरन्यथानयनपरः। न चात्र श्रुति-प्रकरणविरोधः, किन्तु श्रुत्यो-

रेव विरोधः, न वाऽत्र सामान्य-विशेषभावोऽपि; "नान्तं गुणानामि"त्यनन्तगुणशब्दार्थः कल्याणगुणाः ॥

"त्रिभिर्गुणमयैरेभिः व्याप्तं सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेकं परमव्ययम् ॥"

इत्यत्र गुणपदार्थः सत्त्वादिगुणविशेषः । न च सत्त्वादिगुणराहित्यस्यानन्तकल्याणगुणाकरत्वस्य च विरोधोऽपि । अतो नात्र संकोचकथा ॥

विरोधस्तु सामान्यतो निर्गुणवाक्यस्य, सगुणवाक्यस्य चैकप्रकरणस्थत्वे भवति । न चैवं कुत्रापि; भिन्नप्रकरणस्थत्वात् सत्त्वादिगुणानाम्, विशेषत्वम्, निर्गुणमित्यादिवाक्यगतानां गुणानां सामान्यत्वमपि न संभवति । तेऽपि केचन गुणाः, अन्ये च केचन गुणाः । गुणशब्दो ह्यत्र धर्ममात्रपरो निषेधवाक्येषु गुणत्रयातीतवाक्ये सत्त्वादिपारिभाषिकगुणपरः । तेन च सत्त्वादिपारिभाषिकगुणरहितः, तदतिरिक्तसर्वधर्मशून्योऽपि, इति विवक्षायां विरोधाभावाद् ज्ञानप्रकरण एव निर्गुणपदस्य सत्त्वादिविशेषगुणनिषेधस्य श्रवणेऽप्यविरोधेन नयनं संभवत्येव । अनन्तकल्याणगुणा अपि सात्त्विका एव, इति सत्त्वादिगुणनिषेध एव कल्याणगुणनिषेधोऽपि ॥

निर्गुणत्वमविद्याकल्पितत्वाद् उपास्यगुणानां निर्विशेषताप्रामाण्य एव पर्यवस्यति

परमार्थतस्तु—"नान्तं गुणानामिच्छन्ति" इत्यसङ्ख्येयत्वं गुणानां वदति, इति तस्य सत्त्वादिगुणत्रयराहित्यस्य को वा विरोधः, प्रत्युताऽऽनुकूल्यमेव च । सामान्यतो निर्गुण-सगुणवाक्ययोरनेन न्यायेनान्यथानयनं तु न युक्तम् ॥

तत्र यदि सर्वे धर्माः सत्त्वादिगुणविकारा एव, इति सत्त्वादिगुणपदं गुणसामान्यपरम्, अपरे चान्ये केऽपि न सन्ति, विद्यमाना अपि केचित् सात्त्विकाः राजसाः, तामसा एव वा, तदा कथंचन राजसतामसादिगुणविशेषमात्रपरतया नयनं न संभवति, तदा तु ब्रह्मणः सत्त्वाद्येकतमगुणत्वं वक्तुं शक्येत । न च तथा श्रीभाष्यसिद्धान्तोऽपि—सत्त्वादिगुणत्रय एकोऽपि गुणो नास्ति, अन्ये तु तदविकारा असंख्येया गुणा वर्तन्त एव इति । अत उभयोरपि निर्विशेषपरत्वेऽप्यविरोधः । तत्त्वतस्तु—

"ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥"

इति सत्त्वादिगुणवत्त्वमपि स्वयं भगवान् स्वस्य भजनीयस्य गायति, परं तु विद्यमाना अपि ते मदधीना मत्तादात्म्यापन्नाः, मदधिष्ठानका वा, न तु त्वहं तदधीनः तदधिष्ठानको वेत्येव बोधयति, इति कथं भजनीयस्य भगवतः सत्त्वादिगुणराहित्यमपि? सर्वथा तु सत्त्वादिगुणशून्यत्वमपि, निर्गुणत्वे सर्वगुणराहित्यम्, अथवा सत्त्वादिगुणवश्यत्वाभावमात्रेण सत्त्वादिगुणराहित्यम्, अनन्तकल्याणगुणवत्त्वं स्वेच्छामात्रनिबन्धनासङ्ख्येयकल्याणगुणवत्त्वं चेति व्यवस्था, अद्वैतसिद्धान्ते तु सगुणस्य सर्वे गुणा कल्याणा एव, सात्त्विका राजसास्तामसाश्च भगवदिच्छाकल्पिताः, भक्तकल्पिता वा; उपास्यतायां सर्वेषां फलावहत्वात्, ज्ञेयत्वं तु सर्वेषामेव तेषामविद्याप्रयुक्तत्वात् सर्वधर्मशून्यस्यैव, इति हेयगुणातिरिक्तोपादेयगुणवत्त्वलेशोऽपि नास्ति। निरस्तसमस्तदोषत्वं तु भगवतः सात्त्विकादिगुणवश्यत्वाभावमात्रेण। सर्वथा तु नात्र 'सामान्य-विशेष'न्यायः॥

### 'सामान्य-विशेष'न्यायो विधिद्वयविषयः, न तु विधि-निषेधविषयः

वस्तुतस्तु—सामान्य-विशेषन्यायोऽयं विधिद्वयविषयः, न तु निषेधद्वयविषयः, "वार्ताकं न भक्षयेत्" "श्वेतवार्ताकं न भक्षयेत्" इति निषेधद्वयेऽपि न सामान्य-विशेषन्यायः प्रवर्तते। तदिदं सामान्यस्य विशेष उपसंहारपरम्, नात्र सामान्य-विशेषन्यायः। सोऽपि भिन्नशाखागतत्व एकप्रकरणगतत्वे वा, अन्यथा तु न "हिंस्यात् सर्वा भूतानि" "न ब्राह्मणं हन्यात्" "नात्रेयं हन्यादि"ति निषेधवाक्यानामपि सामान्य-विशेषपराणामुपसंहार आपद्येत॥

एतेन—"न हिंस्यादि"ति वाक्यस्याऽग्नीषोमीयहिंसाव्यतिरिक्तविषयकत्ववद् मानान्तरावगतभेदनिषेधपरत्वमेव श्रुतीनामिति—परास्तम्। सत्यमत्र हिंसाविधि-निषेधशास्त्रयोः क्रत्वर्थपुरुषार्थविषयत्वेन भिन्नविषयत्वात् 'सामान्य-विशेषन्यायः'। तत्र ह्युभयोरपि शास्त्रत्वाद् विधि-निषेधयोरुक्तन्यायविषयता, प्रकृते तु मानान्तरं प्रत्यक्षादिकं न शास्त्रम्, न वा समप्रधानम्। मानान्तरं च यदि निषेधप्रकरणातिरिक्तसर्वप्रमाणपरम्, तर्हि को वा भेदोऽबाधितः, केन वा प्रमाणेन साध्यते, येन सगुणत्वं स्यात्, सर्वभेदनिषेधे च कथं वा न 'सामान्य-विशेषन्यायः'?

भेदाभेदशास्त्रयोर्भिन्नविषयत्वाद् न 'सावकाश-निर-
वकाश'न्यायविषयता

मानान्तरप्राप्तश्च जीवेश्वरभेदः, जीव-जडभेदः, जड-परस्परभेदः, शुद्धब्रह्माविद्याभेदादिश्चेति निर्विशेषब्रह्मव्यतिरिक्तसर्वनिषेध एव यदि निर्विशेषवाक्यप्रामाण्यम्, तर्हि स्वागतम्। शास्त्रप्राप्तोऽपि भेदो मानान्तराप्राप्त एवेति को वा वदति ? मानन्तराप्राप्तः शास्त्रमात्रमुख्यतात्पर्यविषयश्चाभेदोऽबाध्योऽत्र विवाक्ष्यते ? शास्त्रं भेदाभेदविषयं भिन्नविषयम्, अविरुद्धञ्च; निषेधपरत्वाद् निषेधवाक्यानाम्। न चात्र शास्त्रप्राप्तस्य निषेधेऽपि कस्यापि निरवकाशत्वम्; उपासनापरत्वाद् भेदवाक्यानाम्, ज्ञानपरत्वाच्च निषेधशास्त्राणाम्, उभयस्यापि स्यतन्त्रभिन्नप्रकरणत्वाच्च, इति नात्र विकल्पापत्तिः, क्रियामात्रपरत्वाद् विकल्पन्यायस्य ॥

"सर्वं खल्विदं" ब्रह्म"इत्यादौ बाधायां सामानाधिकरण्यम्,
तेन च भेदमिथ्यात्वावगमाद् भेदपराणामेवा-
प्रामाण्यं सिद्ध्यति

वस्तुतस्तु—प्रत्यक्षागमयोरपि बलाबलविचारः प्रकृतः। तत्र प्रत्यक्षस्य दुर्बलस्य प्रबलशास्त्रबाधकत्वं न युक्तम्। न च विषयबलाबलयोरेकत्र प्रामाण्यसंदेहदशायां 'सामान्य-विशेषन्या'याद्यवतारणं संभवति ॥

तत्र सर्वं ब्रह्मव्यतिरिक्तमिदंपदेन गृहीत्वा "सर्वं खल्विदं ब्रह्मे"ति सामानाधिकरण्यभानं ब्रह्मव्यतिरिक्तस्य बाध्यत्वं गमयत् कथं वा जगत्सत्यत्व उपपद्यते ? कथं च तत्सामानाधिकरण्योपपत्तिः ? किं वा ब्रह्मकार्यत्वे तदभेदव्यवहारप्रयोजकम् ? ब्रह्मोपादानताप्रकरणस्यायं विषयः, तत्रैव व्यक्तीभविष्यति, बाधायां सामानाधिकरण्यवादे च ॥

तत्र ब्रह्मणि जगतोऽध्यासात् "सर्वं खल्विदमि" ति सामानाधिकरण्यं विवर्तोपादानोपादेयभावप्रयुक्तमेव स्वीकर्तव्यम्। न चेयं ब्रह्मणि जगद्दृष्टिः, तदा ह्याहार्यारोप इति स्यात्। स च "मनो ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मे त्युपासीत" "वाचं धेनुमुपासीते" त्यादाविव विधिश्रवणे स्यात्। न चात्र तद्विधिः; "शान्त उपासीते" ति तु प्रकरिष्यमाणोपासनागुणविधिः ॥

ज्योतिर्ब्राह्मणमपि भेदपराणां प्रमाणानां दौर्बल्ये प्रामाणम्

अत्रैवोपासनाविध्यन्तरमिति कल्पनायां तु वाक्यभेदः, "सदेव सोम्येदमग्र आसी"दिति वाक्यं बाधायां सामानाधिकरण्यस्य लक्ष्यम्। न च

तत्रापि विधिः । सर्वेषां वेदवाक्यानां सूत्रकारैरविचारितानां लोकसिद्धन्या-मुल्लङ्घ्य प्रतीयमानार्थाविरोधेन यथेच्छं व्याख्यानं त्वप्रामाणिकम्, अनादरणीयं च ॥

एतेन—"अत्रायं पुरुषः स्वयंज्योतिरि"ति वाक्यमपि—व्याख्यातम्। तत्र जागर-स्वप्नाद्यवस्थाविवेचनपूर्वकं स्वयंप्रकाशस्य, प्रत्यगात्मनो निरूपणमित्यद्वैतसम्प्रदायः, न तु तदेव निर्विशेषब्रह्मपरमपीति; 'तत्त्वमस्या'दिवाक्यज्ञानानामेव तत्परत्वात्, इति प्रत्यक्षविषयस्थूलशरीरातिरिक्तात्मस्वरूपनिरूपणपरमिदं वाक्यं प्रत्यक्षसिद्धदेहात्मवादनिरसनपरमित्यवश्यमुरीकर्तव्यमिति प्रत्यक्षापेक्षयाऽऽगमप्रामाण्ये ज्योतिर्ब्राह्मणमपि प्रमाणम् ॥

### गीताऽपि भेदप्रत्यक्षापेक्षया शास्त्रप्राबल्यमभिप्रैति

न केवलमिदम्, किन्तु—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।"

इति गीताऽपि क्षेत्रातिरिक्तमात्मानमेकं बोधयन्ती देह-तद्भेदोभयप्रत्यक्षापेक्षया, शास्त्रप्राबल्येनैवाऽऽत्मानं विविनक्ति। न चात्र भगवान् स्वस्य क्षेत्रतादात्म्यमपि बोधयति। कृत्वाचिन्तयाऽपि बाधायां सामानाधिकरण्येन क्षेत्रतादात्म्यबोधनमपि न विरुध्यते। क्षेत्रज्ञतादात्म्यमेवात्राक्षरार्थोऽभेदसामानाधिकरण्येन। इदं तु प्रत्यक्षविरुद्धमेव, इति प्रत्यक्षप्राबल्य इदमपि वचनं बाध्येत ॥

तत्र "सर्वक्षेत्रेष्वि" ति क्षेत्रात् निष्कृष्य 'क्षेत्रज्ञमि'ति ज्ञमात्रं मनसि निधाय तस्यैक्यं वर्णयन् भगवान् शरीरभेदेनैवात्मभेदः, न स्वरूपतः। "सर्वक्षेत्रेषु क्षेत्रज्ञं मां विद्धि" इति तत्र योजनायाम्, मां सर्वक्षेत्रेषु क्षेत्रज्ञरूपं विद्धि, इति योजनायां वा सर्वक्षेत्रेषु क्षेत्रज्ञस्यैकस्यैव स्वाभेदं गायतीति क्रमपरिवर्तनमात्रेण शिरोवेष्टनप्राणायाम एव, न नासिकास्पर्शः, प्राणायामफलं तु दूरे ॥

### परम्परया जीवशरीरनियामकत्वेन भगवतोऽपि शरीरित्वसिद्धान्ते प्रत्यक्षदौर्बल्यमङ्गीकृतप्रायं श्रीभाष्यसिद्धान्ते

तत्र शरीरस्य जीवनियम्यस्य जीवद्वारा परमात्मनियम्यतामादाय परमात्मशरीरत्वमित्यत्र श्रीभाष्यानुयायिन एव विवदन्ते। तत्र न हि

परम्परया नियामकत्वे सर्वव्याप्तिर्भगवत उपपद्यते, प्रयोजनं वा तत्र, परंतु प्रत्यक्षविरुद्धं जागरादिशरीरस्य परमात्मशरीरत्वस्वीकरणम्, इष्टापत्तौ तु शास्त्रस्य प्रत्यक्षबाधकत्वं गले पतितम् ॥

राजनियम्यस्य भृत्यस्य स्वकलत्रादिनियामकत्वेऽपि किं भृत्यकलत्रं राज्ञोऽपि कलत्रम्? येनोक्तदृष्टान्तेन जीवशरीरस्यापि भगवच्छरीरत्वं सूपपादं स्यात् ॥

मुक्तात्मनः परमात्मशरीरत्वेऽपि प्रत्यक्षस्यागमेन बाधः

एतेन—मुक्तात्मनः परमात्मशरीरत्वमपि—परास्तम्; न हि तस्य परमात्मशरीरत्वे परमात्मना परमं साम्यमुपपद्यते; अन्यथा बद्ध-मुक्तयोः शरीरत्वाविशेषे तत्साम्यवैषम्यकथया किं प्रयोजनम्? कथं च साम्यं मुक्तात्मनः? न हि मुक्तसुखेन तत्संकल्पमात्रसृष्टेन भगवतोऽपि सुखम्। न हि प्रत्यगात्मा मुक्तः कर्मकृतं भगवतः शरीरम्, इष्टापत्तौ तु तस्यैव जगत्कारणत्वस्यापि स्वीकारेणैव भगवतो जगत्कारणत्वनिर्वाहात् व्यर्थं भगवतोऽपि स्वीकरणम्?

न हि मुक्तस्य सत्यसंकल्पस्य स्वोपभोगार्थं संकल्पमात्रेण स्वेच्छामात्रेण वा सर्वस्रष्टृत्वं संभवति भगवत इव। किं मुक्तसंकल्पसृष्टा मुक्तभोग्या एव भवन्ति, नान्यभोग्याः स्वाप्नादय इव, शुक्तिरूप्यादय इव वा। यद्योम्, तर्हि स्वार्थैकदृष्टिः, भ्रान्तो वा मुक्त इति स्यात्। संकल्पसृष्टा यदि न मिथ्या, तर्हि कुतो वा भगवत्संकल्पकृतोऽपि न तन्मात्रोपभोगमात्रयोग्यः? यदि तस्य जीवकार्यापेक्षमेव सत्यसंकल्पस्यापि स्रष्टृत्वम्, तर्हि स्वीयम्, परकीयं वा कर्मानपेक्ष्य सत्यसंकल्पत्वमात्रेण स्वोपभोग्यमात्रस्यापि स्रष्टृत्वं मुक्तस्यापि कथम्?

किं बद्धा अपि केचन तच्छक्तिविशेषमात्रेणान्यनिरपेक्षं स्वोपभोग्यमात्रस्रष्टारोऽपि मुक्ताः? साधनान्तरपेक्षाऽनपेक्षस्रष्टृत्वाभ्यां विशेषे तु मुक्तभोग्याः शुक्तिरूप्यादय इव न कार्यकराः। अतो मुक्त-परमात्मनोः स्वरूपैक्यवाद एव युक्तः, न तु परमसाम्यवादः। परमसाम्यमपीदं मुक्तौ प्रत्यक्षेण साध्यते, उत शास्त्रेण। आद्ये बाधः; अप्रत्यक्षत्वात्, द्वितीये तु गलग्राही शास्त्रप्राबल्यवादः ॥

### स्वाप्निकानां जीवेश्वरसृष्टत्वचर्चा

तत्र जागरसृष्टिमवष्टभ्य जगत्कारणत्वचर्चा भगवतः, "संध्ये सृष्टिराह हि" इति स्वप्ने जीवसृष्टिश्चेत्यद्वैतसिद्धान्तः। श्रीभाष्ये तु सर्वत्रेश्वरसृष्टिरेव; तथापि सृष्टित्वाविशेषे वैषम्यं "वैधर्म्याच्च" इति सूत्रे प्रतिपद्यमानं न तत्रोपपद्यते। आद्वैतमते तु ईश्वरस्रष्टृत्व-जीवस्रष्टृत्वाभ्यां वैषम्यं विशदम्, तथापि सृज्यमानत्वेन साम्यम्, स्वाप्नवत् मिथ्यात्वेन च यदि स्वीक्रियते, तर्हि साम्य-वैधर्म्ये उभे अपि स्वरसे। ईश्वरसृष्टित्वेन जीवसृष्टीनां साम्यं तु साम्यमेव, न वैधर्म्यम्॥

अनुभवितुरस्वातन्त्र्यमुभयत्रापि साम्यमादाय, "त्रयोऽवसथाः त्रयः स्वप्नाः" इत्यादियोजनं न युक्तम्। वस्तुतस्तु—जीवन्मुक्तानां दृष्टा जागरा अपि स्वाप्ना एव तत्तत्कालमात्रे मिथ्यात्वनिश्चयेन॥

"अतीतस्याननुसन्धानं भविष्यदविचारणम्।
औदासीन्यं वर्तमाने जीवन्मुक्तस्य लक्षणम्॥"

इति सर्वेषु भोगेषु व्यवहारयोग्यतयैव स्वाप्न-जागरयोः साम्यम्। अत एव स्वप्नदृष्टान्तेन जागरमिथ्यात्वानुमानमपि, शुक्ति रूप्य-स्वाप्नसाधर्म्यं तु मिथ्यात्वेन सुनिर्वहम्, तद्दृष्टान्तेन सर्वस्यापि जगत इत्येव तदाशयः॥

### 'वैधर्म्याच्च'सूत्रं जागरोपलक्षणम्

एतेन—"वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्र आदिपदमपि—व्याख्यातम्; तेन शुक्तिरूप्यादेर्जागरप्रतीत्यन्तरस्योपलक्षणात्, तेन च जागराणां निरालम्बनत्वम्, शुक्तिरूप्यादावंशतो बाधितमपीति ज्ञाप्यते। स्वाप्नमिथ्यात्वं तु सूत्रस्वारस्योपपत्तौ सम्यगुपपादितम्॥

अत्र 'स्वप्नादिवत्' इति स्वप्नप्रत्यय एव विवक्ष्यते। यस्तु योगाचारेण दृष्टान्ततया विवक्ष्यते। तेन स्वप्नप्रत्ययो निरालम्बनः कथमपि बाधित विषयकत्वाद् भवतु नाम, न तु तद्दृष्टान्तेन जागरप्रत्ययो निरालम्बनो भवितुमर्हतीति सूत्राशयः। तत्र दृष्टान्ते योगाचारादिमते स्वप्नप्रत्ययो न यथार्थः, न वाऽद्वैतसिद्धान्तेऽपि॥

### अद्वैतसिद्धान्तस्य बौद्धसिद्धान्ताद्वैषम्योपपादनम्

तत्राद्वैतसिद्धान्ते—

"अर्थेनैव विशेषो हि निराकारतया धियाम्।"

इत्यर्थवैशिष्ट्येनैव प्रत्ययस्य भ्रमत्वादर्थात्मनेव, प्रत्ययात्मनाप्यविद्यैव परिणमते, इत्युभयमिथ्यात्वम् , तत्सत्यत्वं तु सत्याधिष्ठानज्ञानात्मना, न तु स्वात्मना, यथा शुक्तिरूप्यादिस्थले, इति स्वप्नप्रत्ययसत्यत्ववादो निरालम्बः। सौषुप्तः प्रत्ययस्तु तत्राविद्यावृत्त्यङ्गीकारपक्षेऽपि तत्तद्विषयस्याविद्यापरिणामत्वाभावात् , विषयाबाधात् प्रमाणमिति वैषम्यम् ॥

सुषुप्तिर्हि स्वोपाधिपराणामात्मिकाऽऽनन्दाकारवृत्तिरिति कश्चन प्रस्थानभेदः। न चैवं स्वप्नो जागरो वा, इति वैषम्यम् ॥

मिथ्यात्वेऽपि प्रपञ्चस्य बौद्धमतवत् स्वप्नस्य जागरस्य वा, न निरालम्बनत्वमिति तु संप्रतिपन्नम् ॥

सत्यप्येवं प्रत्यक्षादीनां शास्त्रबाधितार्थविषयत्वेनाप्रामाण्यम् , सति बाधे परतो ग्राह्यं दुर्वारम्। बाधितोऽप्ययं मिथ्या नार्थक्रियाकारीति तु विशेषः। अपौरुषेयत्वेन साम्येऽपि कर्मकाण्डानामन्यशेषत्वेन ज्ञानोपयोगे तात्पर्यात् तदर्थानामखण्डाकारसाक्षात्कारेण बाधो न व्याहन्यते। निर्विशेषवाक्यानां स्वबाधितस्वरूपबोधकानां न विषयबाधलक्षणमप्रामाण्यमिति गतम् ॥

तत्रापौरुषेयत्वं पूर्वपूर्वक्रमापेक्षोच्चारणविषयक्रमापेक्षाराहित्यमित्युक्तम्—वैदिकेषु वाक्येषु क्रमेऽस्वातन्त्र्यरूपम्। तदुक्तम्—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ॥"

इति। तस्याविद्यापरिणामत्वेऽप्याकाशादीनामिव तदबाधम् , इति न वर्णनित्यत्व-पदनित्यत्वादिप्रयुक्तं तदपौरुषेयत्वम् , येन लौकिकवाक्यानामप्यपौरुषेयत्वं स्यात् ,'अर्थं बुद्ध्वा शब्दरचने'ति न्यायेन स्वोत्प्रेक्षितार्थबोधनार्थं स्वातन्त्र्यं वाक्यरचनायां नास्ति बौद्धादीनां वाक्य इव, न तदर्थज्ञाने भ्रम-प्रमाद-विप्रलिप्सामूलकत्वसंभावना। अत एव तस्य पुरुषदोषनिबन्धनाप्रामाण्यशङ्कावसरः ॥

वाक्यतात्पर्यगतिपर्यालोचनयैव तत्तद्वाक्यप्रामाण्यं स्वीकर्तव्यम् , इति न्यायतोऽविरुद्धार्थप्रतिपादनमेव तत्कृत्यम् , तदर्थमेव मीमांसाशास्त्रम् , इति मीमांसान्यायानुगृहीतवेदवाक्यानां तत्तत्पुरुषकरणजन्यज्ञानस्य करणादिदोषसंभावनयाऽप्रामाण्यशङ्कास्कन्दितस्य तत्तच्छास्त्रबाधकत्वं न युक्तम् ॥

बौद्धवाक्यान्यपि वेदविरुद्धार्थबोधकत्वेनैव विप्रलिप्सामूलकानि, तत एवाप्रमाणानि। तदीयान्यहिंसावाक्यान्यपि स्वबुद्धिमूलानीति तेषां सिद्धान्तात् श्रुतिमूलत्वाभावेन न प्रमाणानीति तु कुमारिलपादादयः ॥

तत्र द्वैताद्वैतश्रुत्योरपच्छेदन्यायेनाद्वैतश्रुतेरेव प्राबल्यम्। 'इदं रजतमि'ति ज्ञानापेक्षया "नेदं रजतमि"तिज्ञानस्येव, न तु प्राथम्यमिति कृत्वा द्वैतश्रुतीनामेव प्रामाण्यम्। तत्तु सगुण-निर्गुणवादप्रकरणे विशदीकरिष्यते। परत्वं तु प्रमाणत्वेनाभिमतपूर्ववाक्यानपेक्षाप्रयुक्तत्वविशिष्टमेव बाधकताप्रयोजकम्; अन्यथा भ्रमानन्तरभ्रमस्यापि बाधकत्वापत्तिः। शून्यवाक्यं तु न प्रमाणम्, न वाऽद्वैतवादपूर्ववृत्तत्वमपेक्ष्य प्रवृत्तमिति नियन्तुं शक्यते ॥

शून्यं हि चतुष्कोटिविनिर्मुक्तं प्रथमम्, तन्निषेधपरं "सत्यं ज्ञानमि"ति तन्निषेधपरताऽपि सत्यादिवाक्यानां नासंभविनी। क्रमस्त्वत्राऽऽर्थः, न शाब्दः। अत एवासत्कारणवादस्याप्याशङ्कानिरासेन सत्कार्यवादसमर्थनं छान्दोग्य उपपद्यते। "असदेवेदमि"ति 'इहे'ति च द्वैतमनूद्यानुवादो बहुशो दृश्यते, सत्स्वरूपाबाधेन, 'अद्वितीयमि'ति द्वितीयमात्रनिषेधेन च; एकविज्ञानेन सर्वविज्ञानसाम्यात्। मुण्डकोपनिषदोऽपि सप्रपञ्चस्याप्रपञ्चत्वबोधन एव तात्पर्यम्, नान्यथैकविज्ञानेन सर्वविज्ञानोपपत्तिः ॥

भेदवासनाया अप्यविद्याया इव दोषत्वात्
भेदवाक्यानि बाध्यन्ते

तत्रानाद्यविद्येव भेदवासनाऽप्यनादिभेदभानस्य मूलतामर्हति, भेदवासनाया दोषत्वं स्वभेदे वेदान्तानां परमतात्पर्यनिर्णयाधीनम्, न तु भेदवासनैव सर्वत्र दोषः, इति बाध्य-बाधकनिर्णयापेक्षं तत्तद्वासनाया दोषत्वावधारणम्। तत्र ज्वालाभेदप्रत्यक्षस्य बाधकत्वे ज्वालैक्यवासनाया दोषत्वम्। तत्र यद्यैक्यवासनैव सर्वत्र दोषः, तर्हि ज्वालाभेदप्रत्यक्षं कथं प्रमा?

शास्त्रे बाध्य-बाधकभावे तु तत्तन्न्यायः प्रमाणम्, इति न भेदवाक्यानां बाध्यत्वे विरोधः ॥

भेदवासनाया दोषत्वनिर्णये नान्योन्याश्रयदोषः

एतेन—भेदवासनाया दोषत्वनिर्णये शास्त्रबाधकत्वनिर्णयः, तन्निर्णयश्च दोषत्वनिर्णय इत्यन्योन्यायाश्रय इति—परास्तम्; दोषनिवृत्तौ बाधज्ञानम्, तेन बाध्यत्वनिर्णय इत्येव स्वीकाराद् नान्योन्याश्रयः ॥

यूपादित्यवाक्यादिषु श्रुतेरन्यथानयने कारणम्

तत्र यूपादित्यवाक्यस्य यूपविधिशेषत्वाद् न तद्भेदे तात्पर्यम्; अतस्तस्यान्यथा नयनम्, अर्थवादत्वाच्च तस्य तथार्थत्वम्। न हि विधौ परः शब्दार्थोऽसति तात्पर्यविरोधे ॥

न चाभेदवाक्यान्यर्थवादाः, स्तुतिपराणि वा; अज्ञातार्थबोधकत्वेन विधिसमानत्वात्, अतो भेदवाक्यानामप्यभेदशेषाणामेवाऽन्यथानयनं युक्तम्। अधिकं तु 'तत्त्व'मर्थविचारे ॥

तत्र भेदवासनानिवृत्तिस्तु मूलाविद्यानिवृत्त्यैव, इत्यभेदवाक्यार्थानुशीलनेन तत्साक्षात्कारार्थमेव यत्नः कर्तव्यः, तेन च समूलदोषनिवृत्तौ निर्विशेषं तत्त्वमेवाबाधितमवशेषितं भवति ॥

सर्वज्ञस्येश्वरस्य, व्यासवसिष्ठादेश्च भेदप्रत्यक्षमपि बाधितविषयत्वाद् भ्रम एव, परं तु स बाधित एवानुवर्तते, तथा ज्ञायते च, इति नार्थक्रियाकारी। अत एव तेषाम्, जीवन्मुक्तानां वा प्रारब्धवशेन लोकानुग्रहार्थं वोपदिशतामाहार्यारोप एव वाऽयम्, नाधिष्ठानतत्त्वाज्ञाननिबन्धन इति जीवन्मुक्तपरीक्षायां व्यक्तीभविष्यति ॥

प्रपञ्चाभावज्ञानस्य प्रमात्वाप्रमात्वादिविकल्पायोगः

ब्रह्मज्ञानं हि साक्षाद् मूलाविद्यां निवर्तयत् तेन सह सर्वप्रपञ्चमपि तत्कार्यं निवर्तयति। ततश्च न ज्ञाता, ज्ञानं वा, इति प्रपञ्चाभावज्ञानस्य प्रमात्वादिविकल्पो निरालम्बः। प्रपञ्चसत्तादशायां तु न ब्रह्मज्ञानम्, न च तेन प्रपञ्चनिवृत्तिः, इति कथं प्रपञ्चाभावज्ञानम्? येन तस्य प्रमात्वाभाव आशङ्कितुं शक्यते ॥

ब्रह्मज्ञानस्य न असत्त्वसंभावनाऽपि; प्रमाणान्तरेण तस्य बाधायोगः; तत्र दोषस्यासंभवात्

तत्राविद्या प्रत्यक्षादिज्ञाने तद्विषयात्मना परिणमितया चक्षुरादेरपि तत्परिणामित्वेन च चक्षुरादिसामग्र्यात्मना च प्रत्यक्षज्ञानं प्रति हेतुः।

तत्र विषयात्मना परिणामित्वेन दोषविधया ज्ञानस्य हेतुः; ज्ञाने विषयस्यापि हेतुत्वात् विषयांशे बाधाबाधाभ्यामेव प्रामाण्याप्रामाण्ये, न तु ज्ञानसामग्री-ज्ञानयोः सत्त्वासत्त्वापेक्षे प्रामाण्याप्रामाण्ये । व्यक्तीभविष्यति चेदमनन्तर एव प्रकरणे । अतोऽद्वैतवाक्यजन्यं ज्ञानं न दोषमूलम् । तत्राविद्यापरिणामत्वेन स्वरूपतो मिथ्यात्वेऽपि वेदान्तवाक्यानां तदर्थस्याविद्यापरिणातत्वाभावात् प्रामाण्यम् ॥

तत्र प्रमाणान्तरेणाद्वैतशास्त्रस्य विरोधेऽप्यद्वैतशास्त्रस्यैव प्राबल्यम्, अविद्याकार्याविषयकत्वात् । न चात्र दोषत्वस्य कल्पनमन्यत्रापि; क्लृप्ताया एवाविद्याया दोषत्वात्, येनाद्वैतप्रामाण्यरक्षणार्थमद्वैतशास्त्रजन्यज्ञान एव दोषः कल्प्यतामित्याशङ्क्येत । न चाद्वैतवाक्यप्रमाण्ये यावत्तत्सत्त्वमप्रामाण्यं कोऽपि वदति ॥

आदित्ययूपवाक्यवैलक्षण्यं तूक्तमेव । समन्वयाधिकरणं हि ज्ञेयब्रह्मस्वरूपमात्रपरतया, अविद्यानिवृत्तिमात्रेणोपक्षयेन वाऽखण्डार्थपरत्वेनैव वेदान्तानां प्रामाण्यं व्युत्पादयति ॥

निर्विशेषवाक्यानामेव बाधकत्वं न्यायसिद्धम्,
उत्तरमीमासायां सगुणविचारो सवि
शेषवाक्यप्राबल्यहेतुः

उत्तरमीमांसामुख्यार्थस्तु निर्विशेषब्रह्मस्वरूपनिर्णय एव; तथापि तत्र तत्र सगुणवाक्यानामपि विचारः सगुण एव गुणांशत्यागेन निर्गुणोऽपि, तयोरौपाधिक एव भेदः, स्वरूपतस्त्वैक्यमित्यभिप्रेत्य, तेन च देवतामीमांसाया विष्णुमात्रपर्यवसायिन्या अपि निर्विशेषवादेन न विरोध इति फलति ॥

आकाश-प्राण-ज्योतिरादिपदानां ब्रह्मपरत्वं तु तत्तत्प्रकरणस्य विद्यमानं परमात्मपरत्वं व्युत्पादयितुम् । तेन च सर्वभूतकारणत्वादिब्रह्मधर्माणामन्यत्राविचारितानां संकलनं भवति । न चैतावता निर्गुणवाक्याप्रामाण्येऽपि पर्यवसानं तेषामधिकरणानाम् ॥

जीव-ब्रह्मैक्यं न प्रत्यक्षस्य विषयस्तद्भेदप्रत्यक्षवत्, इति कथं विषयभेदे विशदे प्रत्यक्षेण शास्त्रभेदः ? अन्यथा सगुणब्रह्मवादिनाम्, देहातिरिक्तपराणां च प्रत्यक्षाविषयविषयकाणामप्रामाण्यं स्यात् ॥

अतोऽन्यथा सिद्धं प्रत्यक्षादि, अनन्यथासिद्धमद्वैतवाक्यम्। "आकाशस्तल्लिङ्गात्" "अन्तस्तद्धर्मोपदेशात्" इति न्यायशरीरमप्यनन्यथासिद्धमन्यथासिद्धतः प्रबलमिति ज्ञापयति। इदं तु न केवलं स्वरूपसत्त्वमात्रेण, किन्तूपदिश्यमानत्वेनापि, इति सूचयितुमेव द्वितीये 'उपदेशात्'इति पदम्। तत्र लिङ्गपदं धर्मपदं चोपलक्षणं स्वरूपस्यापि, तेन च निर्विशेषवाक्यप्राबल्यमपि न्यायसिद्धम्॥

### व्यवहारनिर्वाहाय यूपादित्यवाक्यम्, व्यवहारबाधार्थमद्वैतवाक्यम्, अतः प्रथमस्य प्राबल्यम्

तत्र यूपादित्यवाक्यस्य स्तावकत्वम्, यूपाञ्जनादिविधिस्तुत्यर्थम्। तेन च तत्र प्रवृत्तिसिध्यर्थम्; व्यवहारनिर्वाहकत्वात् तत्प्रशंसायाः यावद्व्यवहारं व्यवहाराविरोधेन प्रामाण्यार्थं लक्षणा, 'तत्त्वमस्या'दिवाक्यजन्यं ज्ञानं तु व्यवहारबाधार्थम्, इति व्यवहाराविरोधेनान्यथानयनं नार्हति। अतो "जीवत्वेश्वरत्वादिनिवृत्तिपरत्वेन तत्त्वमसि'-वाक्यस्य भेदनिवृत्तिप्रयोजनपरत्वात् तस्याभेदपरत्वमुपपद्यते। न च तत्र घट-पटादीनां स्वरूपतोऽभावेनाभेदबोधः, किन्तूपाधिमात्रनिवृत्त्येति विशेषः॥

### प्रत्यक्षस्य तत्कालमात्रवर्तिविषयकत्वम्, शब्दस्य तु कालत्रयवर्तिविषयकत्वम्, अतः प्रत्यक्षं शास्त्रबाध्यम्

न च द्वैतप्रत्यक्षं सर्वदेशकालवर्तितया भेदं गृह्णाति, किन्तु प्रत्यक्षकालमात्रवर्तितया। तदुक्तम्—"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म, तत् प्रत्यक्षं विद्यमानोपलम्भनत्वात्"इति। इदं तु चक्षुरादिजन्यप्रत्यक्षविषयम, शब्दस्तु सूक्ष्मं व्यवहितं विप्रकृष्टं सर्वं बोधयितुं क्षमते, इति त्रिकालाबाधितार्थविषयकत्वं शब्दस्य। अतस्तस्याबाधितार्थविषयकत्वं प्रमाणप्रवृत्तिमात्रेण। तत्रापि व्यवस्थाविशेषो न्यायनिर्णेय इति तूक्तम्॥

### अद्वैतसिद्धान्ते मननादिविधिसार्थक्यम्

यथाच प्रवृत्तिमात्रेणाबाधितनिर्विशेषबोधकानामपि तेन साक्षात्कारेऽपेक्षिताङ्गकलापानां पूर्तौ, सति च प्रतिबन्धके प्रतिबन्धकनिवृत्तिपर्यन्तं न साक्षात्कारोदयः, ततस्तु तत्साक्षात्कारसंपत्तिः,

तथा समन्वयाधिकरणे भाष्ये व्यक्तम्। अतो न मननादिविध्यनुपपत्तिः। सत्यं बन्धो मिथ्या, यथा शुक्तिरूप्यम्, तथापि यावद्बाधकज्ञानं न तन्निर्णयः, इति प्रमाणत्वेन ज्ञानमवसीयते, इति बाधकज्ञाननिष्पत्त्यर्थः प्रयत्नो न विफलः॥

देहातिरिक्तात्मस्वरूपादौ शास्त्रस्यैव बाधकत्वम्, चन्द्र-
प्रादेशिकत्वप्रत्यक्षे दूरत्वमेव हेतुः

तदुक्तम्—शास्त्र-प्रत्यक्षयोर्विरोधे शास्त्रं बलीयः—इति। देहातिरिक्तात्मपरे चन्द्रादिपरिमाणपरे शास्त्रे तथा दर्शनात्, असंभावितपुरुषदोषशास्त्रप्रामाण्यस्य युक्तत्वाच्च॥

शास्त्रबाधितत्वान्यथानुपपत्त्या चन्द्रप्रादेशिकत्वप्रत्यक्षस्य विषयगतदूरत्वादिदोषनिमित्तत्वमध्यवसीयते। यद्यपि तत्र सामीप्यमपि दोषः; तथापि शास्त्रप्रामाण्यं रक्षणीयमिति न सामीप्यमत्र दोषः॥

अतः—

"अतिदूरात् सामीप्यादिन्द्रियघातादव्यवस्थानात् अन्यथाग्रहः"

इति कारिकाऽपि—व्याख्याता। तत्र दोषत्वनिर्णयस्तु बाधज्ञानावसेयः, न तु दोषज्ञानाधीनो बाधनिर्णयः, येनान्योन्याश्रय आपद्येत, 'नेदं रजतमि'ति बाधज्ञानेन हि परीक्षाधीनेन प्राचीनस्य दोषमूलकत्वमवधार्यते॥

न चैवं मानान्तरेण दोषमूलकत्वावधारणम्, दोषस्य नियतस्वभावत्वेन नियमेन सामीप्यादेरेव वा, दूरत्वादेरेव वा केनापि प्रमाणेन बाधकज्ञानेन विना दोषत्वानिर्णयात्। न हि भ्रमाबाधकं किमपि प्रमाणं भ्रमस्य दोषमूलकत्वावधारणे शक्नोति। सत्यं दोषजन्यत्वे निर्णीते भ्रमत्वं ज्ञातुं शक्यते, दोषमूलत्वावधारणं विना नास्य बाधज्ञानं संभवति, यदि बाधितार्थविषयकत्वमेव भ्रमत्वम्॥

परोक्षज्ञाने बाधकज्ञानत्वप्रयोजकव्यवस्था,
वेदप्रामाण्यव्यवस्था पौरुषेय-
शाक्याद्यागमाप्रामाण्यं च

इदं प्रत्यक्षज्ञानस्य चक्षुराद्यधीनस्य भ्रमत्वनिर्णायकबाधमूलकदोषनिश्चयेन, यत्र परीक्षायां बाधज्ञानं संभवति। यत्र तु परीक्षायां बाधज्ञानं न निर्धारयितुं शक्यते—अत्यन्तपरोक्षफलार्थतया साधनविशेषनिर्धारणं शाक्याद्यागमेषु, शून्यागमेषु च परोक्षप्रमाणेषु बाधज्ञाना-

धीनं न संभवति, तत्रापि निश्चितप्रामाण्यकश्रुतिबाधितत्वेन शाक्याद्यागमानां दोषमूलकत्वावधारणम् ॥

उभयस्यापि समप्रामाण्यवादिनां तु ये श्रुतेः श्रुतित्वमात्रेण बाधकत्वं न मन्यन्ते, तेषां संभावितदोषत्वासंभवितदोषत्वाभ्यां प्रामाण्याप्रामाण्योर्निर्धारणेऽपि दोषमूलकत्वनिर्णयो न संभवति, विना बाधज्ञानम्। अयमेव न्यायः प्रत्यक्ष-श्रुत्योर्बलाबलनिर्णयेऽपि स्वीक्रियते ॥

शाक्यैर्यदि सर्वज्ञप्रणीतत्वेन तदागमानां प्रामाण्यमुच्यते, तर्हि पौरुषेयत्वाद् न तेषां श्रुतिबाधकत्वम्, श्रुतीनां तु तदसंभवात् प्रामाण्यमिति तन्मतनिरासो न निराकर्तुं शक्यते। इयं च शाक्यानां शङ्का वेदस्यापि सर्वज्ञेश्वरप्रणीतत्वे संभवेत्। अत एव बौद्धसर्वज्ञत्ववद् वेदस्वातंत्र्यमपि निरस्यति कुमारिलपादः ॥

वैदिकानां तत्प्रामाण्यवादिनां तु दृष्ट्या शाक्यागमानां श्रुतिबाधितत्वेनैव दोषवत्त्वनिश्चयः ॥

अत एव साङ्ख्य-योग-पाशुपत-पाञ्चरात्राणां श्रुतिबाध एवाप्रामाण्यम्, अन्यथा तु प्रामाण्यम्। तथा च प्रमाणान्तरेण दोषमूलकत्वावधारणं परीक्षायोग्येषु वेदबाधितत्वेनैव। सर्वथा तु विना निश्चितप्रामाण्यकप्रमाणान्तरविरोधं नाप्रामाण्यं कस्यापि प्रमाणस्य। न चात्र प्रत्यक्षश्रुतिवन्निश्चितं प्रामाण्यमेव सर्वत्रेति वैदिकानां राद्धान्तः, इति प्रकृते मुमुक्षाविषयार्थपरशास्त्रस्य शास्त्रत्वेन प्रमाणस्यानिश्चितप्रामाण्यकप्रत्यक्षेण बाधो न विकल्पसङ्गः ॥

अत एवोक्तम्—

"तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ॥
अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते ॥"

इति। बाधज्ञानाभावेऽपि दोषजन्यत्वज्ञानादेव भ्रमत्वनिश्चय इति तु शाक्यागमविषयम्, यत्र सम्भाव्यमानदोषत्वम्। वेदविपरीतार्थशास्त्रप्रवर्तकत्वाद्वा निश्चितं विप्रलिप्सादिमूलकत्वं नियतम्। न चैवं श्रौतज्ञानस्य दोषमूलकत्वसंभावनाऽपि, इति सामान्यतो वेदवाक्यानाम्, विशिष्य च वेदान्तवाक्यानां विषयांशे दोषमूलकत्वाभावाद् नाप्रामाण्यशङ्कावसरः ॥

वस्तुतस्तु—शाक्याद्यागमानां प्रागेव दोषमूलकत्वनिर्णयात् तेषामनुत्पत्तिलक्षणमेवाप्रामाण्यम्, न तु प्रामाण्यज्ञानस्य बाधेनाप्रामाण्यग्रहः ॥

अत एव—

पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति।
साक्षाद् विपर्ययज्ञानाद् लब्धेव ह्यप्रमाणता ॥

इति निष्कर्षः ॥

शास्त्रजन्यज्ञाने नाऽविद्याया दोषत्वम्, अतः प्रत्यक्षेण
दोषजन्येन नागमबाधः

वस्तुतस्तु—प्रत्यक्षस्यापि दोषजन्यत्वम्, वेदान्तस्यापि दोषजन्यत्वमिति स्थिते दोषजन्यत्वमात्रेणानुत्पत्तिलक्षणमप्रामाण्यं प्रत्यक्षस्य भवति, शास्त्रस्य तु तत्तत्सहकारिकारणसहकृतस्य न ज्ञानोत्पत्तिप्रतिबन्धः; तत्र पुरुषदोषस्यासंभाव्यतया ज्ञानोत्पत्तिप्रतिबन्धासंभवात्। पश्चादेव दोषजन्यत्वेनाप्रामाण्यम्; तदपि परत एव ग्राह्यम्, इति प्रत्यक्षेण शास्त्रजन्यज्ञाने न संभवति ॥

सर्वथा तु परीक्षानिर्णयचन्द्रप्रादेशिकत्वप्रत्यक्षस्यागमेन बाधवत् तादृशजीवत्वेश्वरत्वोपलक्षितस्यापि शास्त्रगम्यत्वात् तेन प्रत्यक्षजीवेश्वरभेदबाधो युक्तः। अन्यत्र प्रत्यक्षेण परीक्षितेनापरीक्षितस्य प्रत्यक्षस्य बाधो भवतु वा, मा वा, चन्द्रप्रादेशिकत्वप्रत्यक्षस्येवागमेन प्रत्यक्षबाधो दुर्वारः ॥

शुक्तिरूप्यादौ शुक्तौ रजताभावमात्रम्, ब्रह्मणि तु प्रपञ्च-तद-
भावावुभावपि, 'अध्यारोपापवाद'न्याय-
तत्र प्रमाणम्

तत्र "इदं रजतमि"ति प्रत्यक्षस्य शुक्तीन्द्रियसंनिकर्षदशायामाप्तोपदेशजन्यप्रत्यक्षेण बाधाद् प्रत्यक्षस्यैव प्रत्यक्षेण बाधनयेनाभेदप्रत्यक्षेण शास्त्रमूलकेन, तन्मूलेनाऽऽगमेन वा जीवभेदप्रत्यक्षस्य लोकसिद्धस्य बाधोऽबाधः। अखण्डाकारवृत्तिप्रयुक्तप्रपञ्चाभावः, अज्ञानाभावो वा ब्रह्मरूपत्वात् प्रत्यक्ष एव। न हि तदा ब्रह्मव्यतिरेकेण प्रपञ्चो नाम इति ब्रह्मैव सर्वाभावः। अनावृतं स्वप्रकाशं ब्रह्मचैतन्यं हि स्वतोऽपरोक्षत्वात् शुक्तित्वप्रत्यक्षेण रजतप्रत्यक्षस्येव ब्रह्मप्रत्यक्षेण प्रपञ्चस्य बाधो न दुष्यति ॥

तत्र यद्यपि स्वप्रकाशचैतन्यं प्रपञ्चाधिष्ठानं न प्रपञ्चविरोधि; अधिष्ठानस्याज्ञातस्याज्ञान-तत्कार्याश्रयत्वेनतद्विरोधित्वाभावात् ; तथाप्यनावृतं चैतन्यं स्वप्रकाशज्ञान-तत्कार्यविरोधि । तत्र "नेह नानाऽस्ति किञ्चन" इति श्रुतिः प्रपञ्च-तदभावयोरुभयोरपि सामानाधिकरण्यं बोधयति; तथापि सोऽपि विरोधः प्रपञ्चासत्यत्वमभिप्रेत्य, न तु तत्सत्यत्वमभिप्रेत्य ॥

तत्र शास्त्रं ब्रह्मणि जगत्कारणत्वादिना सर्वजगदाश्रयत्वमध्यारोपविधया बोधयति, अपवादतया च निषेधति, इत्यध्यारोपापवादाभ्यां प्रपञ्च-तदभावोभयबोधनं प्रपञ्चमिथ्यात्वोपपादकत्वात् , इति कथं शास्त्रेण शास्त्रसिद्धस्यैव बाधायोगः । अनेनेदमेवावगम्यते—यत् तटस्थविधयैव जगद् ब्रह्मणो लक्षणम् , न तु स्वयं तत्र परमार्थतः सम्बन्धेनेति, इति प्रपञ्चस्य शास्त्रेण बाधो युक्तः । तत्र प्रमाणजन्याखण्डाकारसाक्षात्कार एव ब्रह्माज्ञाननिवर्तको भवितुमर्हति, न तु भावनाप्रकर्षजः; तस्य प्रमाणाजन्यत्वेनाप्रमाणभावनाजन्यस्याविद्यकविषयकत्वस्य कामिनीसाक्षात्कारस्थल इवावश्यकतयाऽज्ञानानिवर्तकत्वात् ॥

वेदान्तनिरपेक्षस्य भावनाप्रचयस्य साक्षात्काराहेतुत्वम् ,
तत्सापेक्षस्य साक्षात्कारहेतुत्वम्

न च भावनाप्रकर्षस्यापि वेदान्तनिरपेक्षस्य ब्रह्मसाक्षात्कारजनकत्वं योगिनामपि, येन तदेकचित्ततयाऽऽत्मक्रीडत्वादिसम्पन्नस्यापि भावनाप्रचयमात्रात् स भवितुमर्हति ॥

व्यक्तं चैतत्—"स्मृत्यनवकाशदोषप्रसङ्गादिति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादि"त्यत्र भाष्ये, अध्यासभाष्यभामत्यां च ॥

तत्र योगिनो हि साङ्ख्याः, पातञ्जलाः, अन्ये वा वेदान्तनिरपेक्षमात्मतत्त्वं साक्षात्कर्तुमसमर्थाः, इति तदपेक्षितवेदान्तवाक्यानुसारेणैव साक्षात्कारे व्यवस्थापनीये षड्विधतात्पर्यलिङ्गोपबृंहितानि तत्त्वमस्यादिवाक्यान्यद्वितीयं ब्रह्मतत्त्वमेव शास्त्रमुख्यतात्पर्यविषयं गमयन्ति, इति वेदान्त-तत्सहकृतयोगजसाक्षात्कारः तन्मूलः, योगोपबृंहितं शास्त्रं वा कथं पामरसाधारणलौकिकप्रत्यक्षबाध्यं स्यात् , कथं वा तदवगतमैक्यमवास्तवं च स्यादिति ?

तत्रार्चिरादिना ब्रह्मलोकप्राप्तिर्गौणी मुक्तिः, ऐक्यं तु परमा मुक्तिरिति तत्साधनमैक्यसाक्षात्कार एव वेदान्तानां परमं तात्पर्यं युक्तम् ॥

प्रत्यक्षस्याऽऽगमेन बाध्यत्वोपसंहारः

सत्यपि ज्ञानसामान्यस्य स्वतो ग्राह्ये प्रामाण्ये, प्रत्यक्षादौ प्रबलेन प्रमाणान्तरेण, परीक्षितेन प्रत्यक्षेण वा बाधे परतोऽप्रामाण्यम्, वेदान्तानां तु नैवम् , इति न प्रत्यक्षेण वेदान्तानां बाधः, किन्तु वेदान्तेनैव प्रत्यक्षस्य बाध इति तत्त्वम् । यथाच द्वैतपराणामर्थान्तरे पर्यवसानं न क्षोदक्षमम् , तथोत्तरत्र विशदम् ॥

॥ इति शास्त्रप्राबल्योपपत्तिः ॥

## असत्यात् सत्योत्पत्त्युपपत्तिः

### असत्यज्ञानमात्रं न साधकम्, किन्त्वसत्यविशेषितम्, अतोऽसत्यस्यापि सत्यसाधकत्वम्

अत्र ब्रह्मसिद्धिः—"नायं नियमः—असत्यं न कस्मैचित् कार्याय प्रभवतीति। भवति हि माया प्रीतेः, भयस्य च; असत्यरेखागवयादयः, लिप्यक्षराणि च सत्यगवयादिप्रतिपत्तेर्निमित्तम्—इति ॥

सर्वत्रासत्यज्ञानस्यैव सत्यप्रतिपत्तेर्हेतुत्वम्—ज्ञानं च सत्यमिति तदा स्यात्, यदि विना विशेषितमर्थेन ज्ञानमात्रं साधनं स्यात्। तत्रार्थस्यापि विशेषणत्वे त्वसत्यात् सत्यसिद्धिः। ज्ञानमात्रस्य साधनत्वे सर्वस्मात् सर्वकार्योपपत्तिः ॥

अर्थोपलक्षितस्य ज्ञानस्य साधनत्वे सर्वत्रार्थस्य विषयविधया कारणत्वानापत्तिः। अर्थोपलक्षितं च यदि स्वरूपमात्रम्, तदापि स एव दोषः। उपलक्ष्यतावच्छेदकं तत्र यदि ज्ञानत्वम्, तदपि सर्वत्र समानम्। यत्र ज्ञानम्, अर्थश्चोभयमसत्यम्, तत्र तस्य प्रीत्यादिकार्यनिमित्तत्वायोगः ॥

### मायायाः स्वरूपतो मिथ्याभूताया अपि हेतुत्वादप्यसत्यात् सत्यसिद्धिः

तत्र मायायाः स्वरूपत एव हेतुत्वम्, न तज्ज्ञानस्य। माया सत्यमिति वादो हठवादः। शङ्काविषं स्वरूपतः शङ्काविषत्वेनैव हेतुः, नोपलक्षणत्वेन। एवं सर्वत्रापि तत्तत्कार्यकारिणां सत्यज्ञानानामपि तत्तद्विशेषितानामेव तत्तत्कार्यनिमित्तताया अनुभवसिद्धत्वात्। बाला हि, किं बहुना ? प्रबुद्धा अपि रेखासु वर्णबुध्यैव पदविशेषाननुसन्दधते ॥

### सर्वत्र भ्रमस्थले सविषयस्यैव कार्यकारित्वानुभवः

द्वित्राणि वर्णानि दृष्ट्वा पदमिति रेखास्वेव पदत्वं प्रत्यभिजानन्ति, इति स्वरूपत एव रेखा वर्णप्रतिपत्तिम्, पदप्रतिपत्तिं वा जनयन्ति। अयमेव रेखागवयेऽपि। न च गवयसादृश्यमेव गवयप्रतिपत्तिहेतुः सादृश्यज्ञानात् सादृश्यज्ञानान्तरं ह्युपमितिः। अत्र तु गवयानुभव एव भवति—गवयोऽयं मया दृष्टः' इति, 'सोऽयं गवयः' इति प्रत्यभिज्ञानं हि तत्रानुभूयते ॥

तत्रासत्यशास्त्रविषयकज्ञानात्, असत्यधूमज्ञानाद्वा सत्यस्य ब्रह्मणः, सत्यस्य वह्नेश्च ज्ञानं लोकानुभवसिद्धम्। सत्यस्वाप्नप्रतीत्यनुभवसिद्धो भूषणस्यासत्यात् सत्योत्पत्तौ मुख्यं निदर्शनं न तज्ज्ञानमात्रात्, उपलक्षिताद्वा ज्ञानात्। न च स्वाप्ना स्त्री तदधिष्ठानं वोभयमपि समम्॥

अस्तु वा सत्यविषयकज्ञानस्य सत्यज्ञानजनकत्वनियमः; तथापि न सत्यविषयकज्ञानमात्रस्यापि सत्योत्पत्तिहेतुत्वं नियतम्, किन्तूत्सर्ग एव, तावताप्यसत्यात् सत्योत्पत्तिः कथं सुवारा? मिथ्याज्ञानमप्यसत्यमेव, सत्यमपि तद् ज्ञानदशायां वर्तमानतयैव प्रतीत्या नोपलक्षणत्वं कुत्राप्यसत्यस्य॥

औपाधिकत्वमपि तदुपाधित्वप्रयुक्तविशेषवत्त्वेनैव। न च मिथ्यासर्पेणोपाधिना कोऽपि विशेष आधीयते। यद्यत्र सत्यसर्पव्यावृत्तिविशेषः, तर्हीदं विविच्यताम्—कुतो वा तत्रापि सर्पस्योपाधित्वमेव, न विशेषणत्वमिति॥

यदि तत्र ज्ञानमात्रं सत्यम्, न विषय इति, तर्हि सत्यस्थलेऽपि स एव न्यायः कथं नावसरति? इति सर्पस्य न कुत्रापि सत्यमरणादिहेतुत्वम्, किन्तु तज्ज्ञानस्येति ज्ञानाकारविशेषत्वमेव विषयाणाम्, ज्ञानव्यतिरेकेणाकार्यकारित्वात्, इति योगाचारमतप्रवेशापत्तिः "वैधर्म्याच्च न स्वप्नादिवदि"ति सूत्रविरोधश्च॥

असतो न कारणत्वम्, किन्तु सदसद्विलक्षणस्यैव, अतो न मिथ्याभूतस्य सत्यार्थकारित्वायोगः; सत्त्वस्य कारणतानवच्छेदकत्वात्

वस्तुतस्तु—अद्वैतिनोऽप्यसतो न कारणत्वं मन्यन्ते, किन्तु कारणसत्त्वं न नियतम्, सत्त्वं न कारणतावच्छेदकमित्येव। यदि कारणं सदेव भासते, तर्हि कामं तत्र सत्तादात्म्यमात्रं कारणतायां गमकम्, न तु सत्त्वमपीति, इति मिथ्याभूतमपि सत्तादात्म्येन प्रतीयमानत्वात् कार्यकारि भविष्यति। सदसद्विलक्षणमपि जगत्, अज्ञानं वा सत्तादात्म्येन प्रतीयमानं सत्यकार्यकारि दृश्यते। सत्यत्वं च कार्यस्य सत्ताजात्यादि, न त्वबाध्यत्वम्, इति मिथ्याभूतस्यार्थक्रियाकारित्वं कथं बाधितम्॥

तत्र कारणतावच्छेदकतया विवक्ष्यमाणस्त्रिकालाबाध्यत्वरूपो धर्म इति कुत्रावगतम्? न चेदं ब्रह्मणोऽपि निर्धर्मकस्य, न वा ज्ञानस्य, सर्वस्य जगतो वा, किन्तु क्वचिदुपाधौ सत्त्वेन प्रतीत्यर्हत्वाभाव एव, यत् शशशृङ्गब्रह्मव्यावृत्तं सर्वानिर्वचनीयसाधारणम्, यदि कारणतावच्छेदकम्,

तर्हि मिथ्याभूतस्यासाधकत्वकथा कथमात्रम्। सत्ताजात्यादिसत्त्वं मिथ्याभूतस्यार्थक्रियाकारित्वं न व्याहन्ति। अतो नासतोऽकारणत्वस्थापनार्थं प्रयत्नोऽद्वैतिनाम्। अतो वेदान्ता अनिर्वचनीया अपि सत्यार्थक्रियाकारिणो भविष्यन्ति, अन्यथा ब्रह्मापि, जगदुपादानं न स्यात्; तस्यापि निर्धर्मकस्य सत्त्वाभावात्। तत्र सतः कारणत्वनिषेध एव तात्पर्यम्, न त्वसतः कारणत्वसमर्थने। मिथ्यापदार्थस्तु न सन्, नाप्यसन् इति त्वन्यदेतत्॥

ज्ञानस्यैवार्थक्रियाकारित्वेऽपि वेदान्तज्ञानेन ब्रह्मज्ञानाविरोधः, विषयसत्यत्वासत्यत्वनिर्णयस्तु प्रमाणान्तराधीनः

कारणत्वं तु तस्याव्याहतम्। असत्यात्, तद्विषयकज्ञानाद्वा सत्यम्, तद्विषयकज्ञानं वोत्पद्यते, परन्तु कार्यभूतज्ञानविषयसत्यतायां कारणभूतज्ञानसत्यता न प्रयोजिका। अतोऽसत्यबाष्पधूमज्ञानेन सत्यवह्निज्ञानवद् असत्यतत्त्वमस्यादिवाक्यजन्यज्ञानेन सत्यब्रह्मज्ञानं न विरुद्धम्॥

वर्णानामारोपितपदत्ववतां सत्यार्थबोधकत्वविवरणम्

तदुक्तं भामत्याम्—"अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात्" इति तत्र ह्रस्वत्व-दीर्घत्वे ध्वनिगते स्वाभिव्यङ्ग्यवर्णगते मत्वा नग-नागशब्दयोर्भेदः, इति वर्णनित्यत्ववादिनः। तत्र शक्तत्वं पदानामेव, न तु पदज्ञानस्य। तत्र शाब्दबोधे पदार्थोपस्थितेः सहकारिकारणत्वात्, पदार्थस्य पदशक्तिज्ञाप्यत्वात् पदेनारोपितभेदेन भिन्नार्थप्रतीतिः, इति सत्यादेव सत्यार्थप्रतीतिरिति नियमो भज्यते। वर्णा एव ध्वनिरिति हि वैयाकरणाः। यत्र ध्वनिरन्या, वर्णस्तु तदभिव्यङ्ग्योऽन्य इति सिद्धान्तः, यत्र वर्णा नित्याः॥

तत्र ध्वनिगतानां ह्रस्वत्व-दीर्घत्वादीनां वर्णेष्वध्यारोप्यमाणानां प्रातिभासिकत्वात्, प्रातिभासिकवर्णघटितपदज्ञानस्यापि प्रातिभासिकत्वाद् असत्यादपि सत्यार्थज्ञानोत्पत्तिर्दृश्यते॥

सत एव कारणत्वमित्यस्यासतः कारणत्वनिषेधे

तात्पर्यम्

तत्र सत एव कारणत्वमित्यनेनासतः कारणत्वनिषेध एव तात्पर्यात्, असतः शशशृङ्गादेः कार्यत्व-कारणत्वयोरुभयोरप्यसंभवात्,

व्यावहारिकसतस्तत्त्वमसीति वाक्यस्यासदर्थविषयकत्वस्य बाधाच्च, पारमार्थिक-व्यावहारिकान्यतरविषयकज्ञानस्यैव वाक्यजन्यत्वस्यावश्यकत्वात्, ब्रह्मणोऽव्यावहारिकत्वं पारमार्थिकविषयकत्वं च तत्त्वमस्यादिवाक्यजन्यज्ञानस्यार्थसिद्धम् ॥

### न्यायचन्द्रिकादृष्ट्याऽर्थोपलक्षितस्यापि नार्थक्रियाकारिता

कारणस्य ज्ञानस्यापि पारमार्थिकविषयकत्वं न नियतमित्येवात्र विवक्षितम्; स्वप्नस्थले तु तदर्थ-तज्ज्ञानयोरुभयोरपि तूलाविद्यापरिणामत्वात्, स्मृतिभ्रमत्वपक्षे तस्याऽविद्यावृत्तिरूपत्वमिति न्यायचन्द्रिकासिद्धान्तेन ज्ञानमात्रस्यार्थोपलक्षितस्यापि सत्यार्थक्रियाकारित्वदर्शनाच्च कार्यसत्यत्वे कारणसत्यत्वं न प्रयोजकम् ॥

### अबाध्यस्य नासत्त्वम्, स्वप्नज्ञानमपि नासत्यम्

यत्तु—स्वाप्नार्थस्येव स्वाप्नज्ञानस्यापि बाधादर्शनात्. इति तद्यदि तदधिष्ठानज्ञानाभिप्रायम्, तर्हि नानिष्टम्। न हि भ्रमस्थले भ्रमकार्यकारित्वमधिष्ठानज्ञानस्य; तस्याधिष्ठानविषयकत्वेन कार्यकारित्वाभावात्, किन्तु भ्रमज्ञानत्वेन. तत्तु बाधितमेव। न हि 'शुक्तौ रूप्यं नासीदि'तिवत् रूप्यसाक्षात्कारो नासीदिति कोऽपि प्रबुद्धः प्रत्येति। अतो बाधानन्तरं प्रतीतस्याप्यर्थान्तरस्य स्मरणमात्रेण प्रतीतिकालिकभ्रम एव बाधित इति शक्यं वक्तुम्। अतो नाबाध्यस्यासत्यत्वम्, असत्यत्वं स्वाप्नज्ञानस्यापि शुक्तिरूप्यादिज्ञानस्येव ब्रह्मप्रमातिरिक्तबाध्यत्वेनैव ॥

### ज्ञानमात्रस्य सत्यस्याप्यसत्यविषयविशेषितस्यैव कारणत्वम्

वस्तुतस्तु—विषयवैलक्षण्यप्रयुक्तमेव तत्र कार्यवैलक्षण्यमपि, इति ज्ञानकारणत्वं कारणतावच्छेदकतया विषयस्यापि; अन्यथा सूक्ष्मचिदचिद्विशिष्टकारणतायां विशेषणस्य प्रकृत्यादेरकारणत्वे ब्रह्मपरिणामवादतो विशिष्टकारणत्वपक्षेऽपि कथं निस्तारः? कार्य-कारणभावो हि ज्ञानस्य विषयविशेषप्रयुक्तवैलक्षण्येनैव, न तु ज्ञानत्वमात्रेण रूपेण। तदपि विषयवैलक्षण्यकृतमेव, न तु प्रमाणभेदनिबन्धनमिति त्वन्यदेतत् ॥

प्रत्यक्षानुमित्यादिभेदस्य विषयवैलक्षण्यं विना नोपपत्तिः

एवमेव ज्ञानानां जनकत्वमपि

प्रकृते तु विषयस्यापि ज्ञानवत् कारणत्वं वर्तते वा, न वेति विचारणीयम्। तत्र तत्तज्ज्ञानानां विलक्षणतत्तत्कार्यजनकानां वैलक्षण्यादि विषयवैलक्षण्यकृतमेव। तद्धि विषयाणामपि विशेषणत्वं विना नोपपद्यते। विशेषणत्वं च तस्यापि कार्यान्वयित्वेन। प्रत्यक्षानुमित्यादिभेदः सामग्रीभेदमात्राद् निर्वाह्यो न भवति, इति प्रतिकर्मव्यवस्थाविषयः, न तु प्रकृते स सङ्गतः, इत्यप्रकृतविषयविस्तारो ग्रन्थविस्तरमात्रम्, तथापि यथास्थानं सोऽपि विचारो भविता॥

ज्ञानस्य जनकत्वं न विषयस्योपलक्षणत्वेनापि

तत्र विषयोपलक्षितत्वेन हेतुत्ववादस्तु निरस्त आदावेव। तत्र वृत्त्यवच्छिन्नं चैतन्यं मत्वा विषयस्योपलक्षणत्वं वा, चैतन्यमात्रं ज्ञानं वा, वृत्तिमात्रं सत्वेति वा। आद्ये स्वप्नादिज्ञानानां प्रत्यक्षाणां तत्तदाकारवृत्तेस्तत्तद्वृत्तिवर्तमानतामन्तरेण प्रत्यक्षत्वायोगाद् न तत्रार्थानामुपलक्षणत्वं चोदक्षमम्॥

अत एव न तृतीयः; वृत्तिमात्रस्य ब्रह्मेतरविषयेष्वज्ञाननिवर्तकत्वाभावेन ज्ञानपदार्थत्वायोगात्। चैतन्यं तु केवलं सर्वदा स्वप्रकाशं नित्यप्रत्यक्षं सर्वसाधारणं तत्तज्ज्ञानत्वेन तत्तदसाधारणज्ञानस्य वा साधनम्। स्मृतिस्तु तद्भ्रमत्वपक्षेऽपि असत्येव सत्यार्थक्रियाकारिणीति कथमर्थोपलक्षणतायामप्यसत्याद् न सत्योत्पादः?

स्वप्नस्य शुभसूचकत्वमप्यर्थविशेषितत्वेनैव

एतेन—शुभाशुभसूचकत्वमपि—व्याख्यातम्। तत्तत्स्वप्नविशेषेण तत्तत्कार्यभेदसूचनस्य तत्तदर्थविशेषणं विनाऽसंभवेनासत्यस्यार्थस्याप्यसत्यज्ञानस्येव कारणत्वध्रौव्यात्। तत्र स्वाप्नभ्रमस्य बाध्यत्वं शुक्तिरूप्यादिभ्रमस्येव ब्रह्मप्रमेतरप्रमाबाध्यत्वेन; तस्य तूलाविद्याकार्यत्वात्। तत्तत्कार्यस्य भ्रमस्य तु ब्रह्मज्ञानमात्रबाध्यत्वाद् व्यावहारिकत्वम्, इति कारणात् भ्रमादधिकसत्ताकत्वमेव कार्यस्य भ्रमस्य॥

अर्थविशेषितस्यापि ज्ञानस्य, अर्थस्य वा नाबाध्यत्वं कारणत्वप्रयोजकम् व्यावहारिकाबाध्यत्वेनापि निर्वाहात्

निष्कर्षस्तु—कार्य-कारणभावः, कार्यस्य कारणस्य, वा त्रिकालाबाध्यत्वरूपं सत्त्वं तस्य तद्भावार्थं नापेक्षते, विनाऽपि सत्त्वं कार्यपूर्व-

काले स्वरूपतः, सत्ताजात्यादिविशिष्टरूपेण वा कारणत्वम्, तत्तदुत्तरकालवृत्तित्वेन कार्यत्वं च निर्वहति। ततश्च कदाचित् स्वरूपतो बाधेऽपि कार्यपूर्वक्षणे वृत्तिमात्रेण कारणता नापहीयते ॥

तत्र कदाचिद् बाधपदेन कार्योत्तरकालावच्छेदेन तदभावो विवक्षितः, निष्पन्ने कार्ये तस्य सत्यत्वम्, असत्यत्वं वाऽकिञ्चित्करमिति ॥

सति चैवं कारणस्य प्रातिभासिकं व्यावहारिकं पारमार्थिकं वा सत्त्वं न कारणतायां प्रयोजकम्। तदुक्तम्—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥"

इति।

### प्रातिभासिकत्व-व्यावहारिकत्व-पारमार्थिकत्वनिरुक्तिः

ततश्च प्रातिभासिकादपि व्यावहारिकम्, व्यावहारिकादपि पारमार्थिकं कार्यं न विरुद्धम्। प्रातिभासिकात् प्रतिभासिकपरम्परा, व्यावहारिकाद् व्यावहारिकपरम्परा तु संप्रतिपन्नैव। तत्र कारणाधिकसत्ताकं कार्यं स्वाप्नस्थले न दृष्टम्, इति स्वान्यूनसत्ताककार्यजनकत्वं कारणस्य नियतम्, इति नात्र स्वानधिकसत्ताककार्यजनकत्वं कारणानामिति नियमः, तेनैव सर्वनिर्वाहश्च न संभवति। सत्ताभेदश्च सत्तात्रैविध्यकल्पमाश्रित्य। तत्र ब्रह्मप्रमातिरिक्तप्रमाबाध्यत्वं प्रातिभासिकी सत्ता, ब्रह्मप्रमामात्रबाध्यत्वं व्यावहारिकी सत्ता, स्वबाधकज्ञानशून्यप्रकाशत्वं पारमार्थिकी सत्तेति विभागः। तत्रान्त्ये प्रकाशत्वविशेषणमसद्वारणाय ॥

स्वाप्नसूचकत्वमप्यत एवोपपद्यते। न चात्र स्वाप्नस्य सूचकत्वं सूचनरूपज्ञापनविषयत्वरूपप्रयोजकत्वेनौपचारिकम्; तदौपचारिकत्वकल्पनस्य निर्मूलत्वात् ॥

कुञ्जरारोहणादीनि स्वप्ने धन्यानि, खरयानान्यप्रशस्तानि, स्त्र्युपहितदर्शनसाध्याश्च चरमधातुविसर्गादयो जाग्रदवस्थायामनुवर्तन्ते, स्त्रीसाध्यास्तु माल्यविलेपनादयो नानुवर्तन्ते ॥

### मायामात्रसूत्रं न स्वप्रकाशज्ञानाभिप्रायम्, किन्तु तदर्थाभिप्रायम्

तत्र "सूचकश्च हि" इति सूत्रम् "मायामात्रं त्वि"ति प्रकृतं स्वाप्निकमादायैव, न तु तज्ज्ञानम्। न हि स्वप्नसंशयमात्रस्य मायामात्रत्वमुक्ताधि-

करणार्थः, किन्तु स्वाप्नार्थस्य; तत्र प्रत्ययमात्रचर्चायां तत्सत्यत्वमते किमिति मायामात्रत्वव्यवस्थापनम् ? अतो नात्र स्वाप्नज्ञानस्यैव मायामात्रस्य सूचकत्वम्, किन्तु ज्ञायमानस्य स्वाप्नस्य। तत्र ज्ञानं स्वरूपसदेवार्थक्रियाकारि कामं भवतु, विषयस्तु ज्ञायमानतयैवार्थक्रियाकारी। विषयज्ञानमर्थक्रियाकारि, ज्ञायमानतया विषयोऽर्थक्रियाकारीति चानर्थान्तरम् ॥

"उपायाः शिक्षमाणानां बालानामुपलालनाः।"

इति हरिवचनदृष्टान्त एव प्रकृतोपयोगी। तत्रोपलालना असत्याः सत्यार्थक्रियाकारिण्य इति प्रसिद्धमेव। पचेर्ण्वुलश्च मेलनं स्वरूपसदपि पाचकशब्दस्य कल्पिता एवावयवाः, स्फोटस्य तु सुतराम्, इति दार्ष्टान्तिकोऽपि न प्रकृतप्रतिकूलः॥

एतेन—स्थूलारुन्धतीन्यायोऽपि—व्याख्यातः; तत्र कल्पिता प्रथमा ह्यरुन्धती ज्ञायमानतयैव मुख्यारुन्धतीज्ञानकारणम्, अन्यथा यस्य कस्यचित् द्वारा मुख्यारुन्धतीज्ञानसंभवात् आरोपिताऽरुन्धतीद्वारेणैवारुन्धत्या उपदेशो वितथः। इयमेवा'ध्यारोपापवाद'न्यायेनोपदेशपरम्परा॥

तत्रासत्यं न किञ्चिद्वस्तु; तथापि नावस्त्वपि; अपरोक्षतया प्रतीयमानत्वात्, किन्तु सदसद्विलक्षणमनिर्वचनीयम्। न च वस्त्वेव कारणमिति खलु प्रकृतो विषयः, इति मिथ्यार्थस्य वस्तुभिन्नत्वमकिञ्चित्करम्। किं बहुना ? ज्ञानमपि प्रमाणं न वस्त्वेव, इति यदि वस्त्वेव कारणम्, तर्हि ज्ञानमपि कथं नाम कारणम् ?

### अवताराणां श्रेयःसाधनत्वमप्यसत्यात् सत्योत्पत्तौ निदर्शनम्

अत्रावताराणां परमात्माभिन्नतया सद्दिव्यग्रहमङ्गलग्रहाणां कथं प्राकृतानि शरीराणि मुख्यशरीराणि ? इति तत्र दिव्यमङ्गलविग्रहत्वारोपणं नियतम्॥

यथा तत्र—शालिग्रामे विष्णुदृष्टिरप्यध्यास एव मनसि ब्रह्मदृष्टिवत्। तथा तेऽप्यारोपितेषु तदाराधनं तद्विग्रहाराधनत्वेन यदि कारणं श्रेयःपरम्परायाः तर्हि, कथं नामासत्याद् न सत्योत्पत्तिः ?

तत्र यदि देहात्मविवेकिनां परमात्म-तद्विवेकग्रहणस्यापि सुलभतया मूर्तामूर्तरूपेण द्वैविध्यस्य प्रतिपन्नतया च परमात्मनस्तद्विग्रहवत्त्वेन

ग्रहणस्य कार्यकरत्वसंभवेऽभेदारोपोऽनपेक्षितः, तर्हीदमायातम्—अविवेकिनां दृष्ट्या मूर्तोपासना, विवेकिनां दृष्ट्या न मूर्तोपासनम्, तथाप्यर्चावताररूपाण्यसत्यानि फलहेतव इति। देहात्मविवेकेऽमूर्तरूपत्ववादस्तु भगवतोऽशरीरत्वं स्वाभाविकमिति भूषणदृष्ट्यापि फलति॥

मीमांसकदृष्ट्यैव ह्रस्वत्वादीनां नादगतानां वर्णेष्वारोपः, न तु स्फोटवाददृष्ट्या; वर्णानामेव स्फोटवादे नादत्वात्, मीमांसकसिद्धान्तस्योभयसम्प्रतिपन्नत्वाच्च। यथा नग-नागादिशब्दा अप्यत्रोदाहरणम्, तथा पूर्वमुक्तम्। देवताधिकरणभाष्ये "कथं तर्ह्येकस्मिन् बहूनामुच्चरतामेक एव सन् गकारो युगपदनेकरूपः स्यात्—उदात्तश्चानुदात्तश्च स्वरितश्च, सानुनासिकश्चेति। ध्वनिकृतोऽयं भेदप्रत्ययः, न तु वर्णकृतः इत्युक्तिस्त्वेकस्मिन् वर्णे युगपत्स्वरभेदविषया, न तु भिन्नेषु वर्णेषु॥

नग-नागशब्दयोर्ह्रस्वत्व-दीर्घत्वयोस्तु वर्णभेदत्वात् तत्र ह्रस्वदीर्घादीनां युगपदुच्चारणार्थत्वाच्च न वर्णेषु ह्रस्वत्व-दीर्घत्वादीनां स्वाभाविकत्वे प्रमाणम्, प्रायिकाभिप्रायत्वादस्य भाष्यस्य। एकस्मिन्नेव वर्णे युगपदनेकेषां ह्रस्वत्व-दीर्घत्वादीनामुच्चारणे तु तेषामप्युपलक्षणमिदं भाष्यम्। सर्वथा तु यद्यविवेकिनां भ्रममात्रमर्चावतारेषु तत्तच्छरीराणामाराध्यज्ञानानां फलहेतुत्वम्, तर्हि कथं नासत्यात् सत्योत्पत्तिः? उपलक्षणतया हेतुत्वपक्षस्तु निरस्तः॥

अर्थानां ज्ञानोपलक्षणत्वायोगः

तत्रोपलक्षणस्याहेतुत्वं कार्यपूर्वक्षणेऽसत्त्वात्। मिथ्यार्थस्तूपलक्षणं ब्रह्मदृष्ट्या, तदपि बाधज्ञानदशायाम्, न तु बाधकज्ञानोत्पत्तेः पूर्वमिति व्यवहारदशायां घटादिज्ञाने घटादेः कथमुपलक्षणत्वम्? तदानीं तेषां स्वरूपतो लौकिकपारमार्थिकत्वेन वा सत्त्वात्॥

मिथ्यार्थस्य न केवलं साधकत्वम्
किन्तु ज्ञापकत्वमपि

एतेन—मिथ्यार्थस्य सत्यार्थज्ञापकत्वमपि—व्याख्यातम्; यत्तु सत्यज्ञापकत्वं सत्यविषयकज्ञानजनकत्वम्, ज्ञानस्य च सत्यतया सत्यजनकत्वे न क्षतिः; तेनाप्यसत्यात् मिथ्यार्थात् सत्यज्ञानोत्पत्तिरेव स्वीकृता, इति कथं स्वेनैव स्वस्य न पराहतिः। न ज्ञानं भवतु सत्यम्? विषयो भोग्यो वा भवतु, तथापि कार्यं सत्यम्, कारणं मिथ्येत्यद्वैतसिद्धान्त एवैता-

वता भूषणमपि सिद्धान्तयति। एतावताप्यसतः सदुत्पत्तेः साधनात्। "कथमसतः सज्जायेत" इति श्रुतिस्तु कथं न सतः सज्जायेतेत्यर्थपरेत्यन्यत्र व्यक्तम् ॥

उपादानत्वमपि स्वरूपत एव, न तु सत्त्वेन, कार्याणां सत्प्रतीतिस्तु सत्तादात्म्येन

तत्र यद्युपादानमपि कारणम्; तथापि न तत्सत्त्वविशिष्टम्, किन्तु सत्स्वरूपम्; अतो न विरोधः; कारणत्वस्य सत्त्वानिरूप्यत्वात्, कथायामनपेक्षणाच्च कारणत्वं च पूर्वकालसम्बन्धमात्रनिरूप्यत्वेन। सर्वथा तु मिथ्याभूतात् सत्योत्पत्तिर्दुरपह्नवा। तत्र सत्त्वासत्त्वकथा वृथैव। तत्रासत्त्वम् तुच्छत्वम्, न मिथ्यात्वमिति त्वन्यदेतत्, मिथ्यार्थस्यैव जनकत्वात् ॥

मिथ्यात्वं नासत्त्वम्, किन्त्वनिर्वचनीयत्वम्

तत्र मिथ्यात्वं स्वाधिष्ठाने परमार्थतोऽभावः, न त्वभावमात्रम्। स्वरूपतोऽभावेऽपि सोऽधिष्ठानसाक्षात्कारानन्तर एव, न तत्पूर्वकाले, इति न मिथ्यार्थस्य कारणत्वेऽपि कार्य-कारणयोः सामानाधिकरण्यविरोधः। शुक्तिरजतादिकमपि बाधात् पूर्वं शुक्तावनिर्वचनीयरजतोत्पत्तेः स्वीकारात् शुक्तौ वर्तत एव। अनिर्वचनीयवादस्तु सर्वज्ञानयाथार्थ्यवादनिरासेन समर्थितः। तत्रानिर्वचनीयमपि चाक्षुषशुक्तिदेशेऽध्यासात् प्रत्यक्षमेवेत्यपि तत्र तत्र व्यक्तम्। विशेषतस्त्वद्वैततत्त्वशुद्धौ। अनिर्वचनीयख्यातिं विना सर्वनिर्वाहायोगाच्च ॥

वेदान्तानां स्वतो मिथ्याभूतानामप्यबाधितार्थबोधकत्वलक्षणं प्रामाण्यमबाधम्

तत्र यद्यसत्यं सत्यमेव जनयतीति वा, सत्यमेव जन्यमिति वा न नियमः, तर्हि कथमसत्येनापि वेदेन सत्यमपि नावबोद्धुं शक्यते? इति बाधितार्थत्वं कदापि वेदान्तानां न संभवति। सविशेषवाक्यानामपि यावद्बाधं प्रामाण्यमबाधम्। अयमेव न्यायोऽन्येष्वपि ज्ञानेषु। किं बहुना? बार्हस्पत्यशास्त्रमूलान्नमयात्मतावादोऽपि यावत्तन्निषेधपूर्वकमन्योपदेशपर्यन्तं प्रामाणिक एव, इति वेदान्ताप्रामाण्यकथा न क्षोदक्षमा ॥

तत्र स्वयंप्रकाशमपि ब्रह्म तदावरणनिवर्तकवृत्तिविषयत्वमात्रेण वेदान्तवेद्यमित्युपचारमात्रम्। इदमेवाभिप्रेत्योक्तम्—

"ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते ।"

इति वेदस्य ब्रह्मबोधकतासामर्थ्यादिकं पूर्वमुपपादितम् ॥

भ्रमस्थले ज्ञानस्यापि मिथ्यात्वात् न तत्र सत्यात् सत्योत्पत्तिः

तत्र भ्रमस्थलेऽविद्यापरिणामवृत्तिरपि मिथ्यैव, न सत्या; तस्या नाशस्यापि तदुपादानतूलाविद्यानाशरूपत्वेन तूलाविद्यानाशे तद्बाधस्यार्थसिद्धत्वात् ॥

बाधात् पूर्वं प्रातिभासिकत्वम्, व्यावहारिकत्वं वा सत्त्वं सर्वं मिथ्यासाधारणम्, तत्तु सत्त्वेन प्रतीत्यर्हत्वमात्रम्, न नार्थक्रियाकारित्वम् इति सत्त्वस्य कारणतावच्छेदकत्वेऽपि नासत्यात् सत्योत्पत्तिवादस्य क्षतिः ॥

तत्र व्यावहारिकत्वं ब्रह्मप्रमाबाध्यत्वम्, ब्रह्मप्रमापूर्वप्रातिभासिकमपि शुक्तितत्त्वसाक्षात्काराभावे, तूलाविद्याया मूलाविद्याऽवस्थाविशेषत्वात् व्यावहारिकमेव व्यवहारानुपयोगित्वेऽपि; अन्यथा न तस्य प्रातिभासिकत्वमपि । किं बहुना ? सर्वं न सर्वव्यवहारविषयः ? इति व्यवहारयोग्यत्वमेव यथा व्यावहारिकत्वम्, एवं ब्रह्मप्रमातिरिक्तबाध्यत्वयोग्यमेव प्रातिभासिकत्वम्, इति मूलाज्ञान-तत्प्रयुक्तान्यतरत्वं व्यावहारिकत्वम्, तत्त्वं तु ब्रह्मप्रमातिरिक्ताबाध्यत्वयोग्यत्वप्रयुक्तम्, ब्रह्मप्रमातिरिक्तप्रमाबाध्यत्वस्यप्रयोजकतूलाज्ञान-तत्प्रयुक्तान्यतरत्वं प्रातिभासिकत्वमिति तयोर्विवेकः ॥

निर्दुष्टप्रातिभासिकत्व-व्यावहारिकत्वनिष्कर्षः

ब्रह्मप्रमातिरिक्ताबाध्यत्वमित्यनुमानापेक्षितपक्षतावच्छेदकाभिप्रायम्, न तु व्यावहारिकत्वविवेचनम्, इति प्रातिभासिकेषु न ब्रह्मप्रमाऽव्यवहितपूर्ववर्तिष्वबाधितेष्वव्याप्तिः । अतो नष्टानामपि घटादीनां तदुपादानमृदादिक्रमेण मूलाविद्यारूपत्वाद् अविद्यानिवर्तकब्रह्मज्ञानेनैव बाधः, इति न व्यावहारिकत्वस्य क्षतिः । अयमेव न्यायो भाविनामपि; तेषामप्यविद्यारूपत्वेनोक्तविधया ब्रह्मप्रमाबाध्यत्वात् । अतोऽतीतादीनामपि तदुपादानमूलाज्ञाननिवृत्त्या बाधः । अधिष्ठानज्ञाननिवर्त्यत्वं तु प्रातिभासिक-व्यावहारिकसाधारणं लक्षणम्,

तत्तदसाधारणं तु पूर्वोक्तम्, इति नातिव्याप्त्यव्याप्त्यसम्भवाः अनिर्वचनीयख्यातेः साधनात्, इति न चिद्भिन्नत्वे सति सत्त्वेन प्रतीत्यर्हत्वं वा लक्षणकोटौ निवेशनीयम्। ब्रह्मणि, असति वाऽबाध्यत्वस्योक्तलक्षणद्वयस्याभावात्। शून्यज्ञानं तु शून्यस्य साधिष्ठानकत्वाभावात्, ब्रह्मणोऽपि स्वयं तदनधिष्ठानत्वात् न बाधकम्, न वा ब्रह्मप्रमा तदतिरिक्तप्रमा। सर्वथा तु शून्यप्रमा, न ब्रह्मप्रमा, न वा शून्यप्रमाबाध्यत्वं लक्षणकोटौ प्रविष्टम्, इति कथमतिव्याप्तिर्ब्रह्मणि प्रातिभासिकत्वलक्षणस्यास्य व्यावहारिकत्वलक्षणस्य वा। न हि बाध्यत्वमात्रं लक्षणम्, किन्तु तत्तदधिष्ठानप्रमाबाध्यत्वम्। पारमार्थिकत्वं शून्यादिसर्वव्यावृत्तं लक्षितमधस्तात्॥

निष्कर्षस्तु—पल्लवाज्ञान-तत्कार्यान्यतरत्वं प्रातिभासिकत्वम्, मूलाज्ञानतत्प्रयुक्तान्यतरत्वं व्यावहारिकत्वम्। भावरूपत्वमज्ञानस्य संप्रतिपन्नम्, ज्ञाननिवर्त्यत्वमपि; तस्य कर्मैकरूपप्रकृतिरूपत्वे परं विप्रतिपत्तिः॥

### प्रातिभासिकेषु व्यावहरिकेषु च सत्प्रतीतिनिर्वाहः

अनुपहितसत्स्वरूपतादात्म्यं व्यावहारिकत्वम्, उपहितसद्रूपतादात्म्यं प्रातिभासिकत्वमिति वा तदुभयमनुसन्धेयम्। तत्र सद्रूपस्याधिष्ठानत्वात् सदात्मना प्रपञ्चेनाभेदेऽपि प्रपञ्चात्मना परस्परं भेदोऽपीति तदुभयसामानाधिकरण्यं भेदाभेदघटितमुपपन्नम्। अत एवोक्तम्—भेदसामानाधिकरण्योपलक्षिताभेदस्यैव संसर्गत्वम्, न तु तद्भेदविशिष्टभेदाभेदोभयस्य, येन तयोर्विरोधात् सामानाधिकरण्यं नोपपद्येत॥

### बौद्धागमबाधितत्वेन ब्रह्ममिथ्यात्वापत्तिशङ्कापरिहारः

तत्र बौद्धागमः पौरुषेयो निर्णीतदोषः, इति तदागमस्य दुष्टत्वनिर्णयाद् नापौरुषेयवेदबाधकत्वं युक्तम्; अन्यथा सविशेषवाक्यानामप्यप्रामाण्यापत्तिः, इति शून्यज्ञानबाधितत्वं न वेदान्तजन्यज्ञानस्य; तन्मते शून्यस्य ब्रह्मानधिष्ठानत्वेन ब्रह्मणः शून्यज्ञानाबाधितत्वेन तदसत्यताया अप्रसरात्॥

### ब्रह्मसत्यत्वानुमानम्

एतेन—ब्रह्म, अबाधितम्, अनारोपितत्वात्, व्यतिरेकेण घटवदिति—व्याख्यातम्; अनारोपितत्वं हि साक्षात्, परम्परया वा

किञ्चिद्रूपेण ज्ञातसदर्थ-विशेष्यकतादात्म्यसंवन्धावच्छिन्नप्रतीतिविपया-न्यत्वम्। तत्तु ब्रह्मणि वर्तते, वाधितत्वं नास्ति, वाधितत्वं तु स्वाधिष्ठान-तत्त्वसाक्षात्कारनिवर्त्यत्वम्। न च घटोऽनारोपितः, अवाधितो वा, इति न व्यतिरेकव्याप्तिवर्णनं सौगतसाधारणमभिप्रेत्य। वेदप्रामाण्यपरिग्रहवा-दिनां तु न ब्रह्मणो बाध्यत्वशङ्काया अप्यवसरः ॥

॥ इत्यसत्यात् सत्योत्पत्त्युपपत्तिः ॥

# जीवन्मुक्त्युपपत्तिः

### जीवन्मुक्तिस्वीकारप्रयोजनम्

तत्र जीवन्मुक्तिस्वीकारो ब्रह्मसिद्धिकाराणां प्रस्थानम्। सा च बाधितानुवृत्त्या निर्वहति। तत्स्वीकारप्रयोजनं तु सत्यपि शरीरे शरीराभिमानराहित्येन—

"अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः॥"
"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥"

इति श्रुत्यर्थविवरणम्, विद्यमानस्य निवृत्तकर्माधिकारस्यानुभूयमानेनाऽऽत्मतत्त्वोपदेशाधिकारसम्पत्तिनिरूपणद्वाराऽद्वैततत्त्वोपदेशोपपत्तिश्च॥

परदृष्ट्या सशरीरस्यापि स्वदृष्ट्याऽशरीरत्वात् परममुक्तौ दिव्यशरीरान्तरस्वीकारवैयर्थ्यम्। दिव्यत्वादिव्यत्वाभ्यां शरीरस्य सत्तामात्रेण बन्धप्रयोजकत्वाप्रयोजकत्वनैयत्यसूचनम्, तेन च शरीराद्युपाधिनिवृत्तिमात्रेण मुक्तिः, न तु स्वरूपान्तरापत्तिर्मुक्तिरिति बोधनं च॥

### जीवन्मुक्तस्वरूपम्

तत्राविद्याया दग्धपटन्यायेन पूर्वमिवोत्तरोत्तरपरिणामराहित्येन दग्धपटवत् कार्यात्मना कारणात्मना चासत्त्वेऽपि, संस्कारमात्ररूपेणावस्थानानुवर्तमानाया बन्धानुपयोगित्वेन शरीरपातानन्तरमेव विदेहमुक्तिव्यवस्थापि सिध्यति; अकार्यकारित्वाच्चात्राज्ञानस्य संस्कारात्मनाऽवस्थानेऽपि मुक्ततुल्यत्वे का वा कथा परममुक्ताविति ख्यापनादिकमपि तत्स्वीकारस्य प्रयोजनम्॥

### बद्ध-जीवन्मुक्तविवेकः जीवनं न बन्धः

तत्र जीवनं तत्तद्भुज्यमानसंस्कारात्मकर्मप्रयुक्तस्थूलशरीर-तत्सम्बद्धसूक्ष्मकारणशरीरसंस्कारानुबन्धि-तत्तद्व्यवहारवत्त्वं जाग्रदाद्यवस्थाविशेषः। न च मुक्तस्य जीवनम्, न वा मुक्तिः, इति जीवन्मुक्तपदव्यपदेश्यत्वादि। मुक्तत्वं तु पूर्वोक्ततत्तच्छरीरसंस्कार-तदनुबन्धिव्यवहाराणामधिष्ठानतत्त्वसाक्षात्कारबाधितानां संस्कारात्मनाऽननुवृत्तिः। तेन बद्धस्य शरीर आत्मत्वाभिमानः, तत्प्रयुक्तव्यवहाराश्च स्वरूपत एवानुवर्तमानास्तत्तन्निबन्धन-

सुख-दुखादिनिदानानि भवन्ति, जीवन्मुक्तस्य तु बाधितसंस्कारात्मनाऽनुवर्तमानाः सर्वेऽप्यभिमानादयो दग्धपटवदकार्यकारिणः, तेन च विद्यमानवदवभासमाना अपि न बन्धकास्तस्येति विशेषः ॥

तेन च बद्धानामिव कर्मोपार्जितस्थूल-सूक्ष्मशरीरसंस्कारवत्त्वेऽपि प्राणाऽपान-निमेषोन्मेष-वृद्धि-भग्नक्षतसंरोहणादिसर्वशरीरधर्माणां जीवन्मुक्तशरीरेऽप्यनुवृत्तावपि तेषां बाधितानां ज्ञाननिवर्तितानामपि संस्कारात्मनैव सत्त्वाद् जीवनम्, मुक्तिश्चोभयमविरुद्धम्। तेन च सशरीरत्वम्, अशरीरत्वं च जीवन्मुक्तस्य, बद्धस्य तु सशरीरत्वमात्रम् ॥

### प्रारब्धांशानां संस्कारमात्रेणाऽनुवृत्तिमात्रं जीवन्मुक्तौ

तत्राविद्यानिवृत्तिर्मोक्ष इति वादेऽपि बाधितानां संस्कारात्मनैव प्रारब्धकर्ममात्रवशेनानुवृत्त्या संस्कारात्मनाऽविद्या-तत्प्रयुक्तानामनुवृत्तिरकिञ्चित्करी; यथा नष्टानां घटादीनां संस्कारात्मना सतामप्यकार्यकारित्वम्, एवं शरीरादीनामपि निवृत्ताविद्यानामपि तत्र ज्ञानानिवर्तितभुज्यमानप्रारब्धसंस्कारात्ममात्रतया संस्कारात्मनाऽनुवृत्तिः तत्सम्बन्धिव्यवहाराणां च न विरुध्यते। तेन च निवृत्तायामविद्यायां तत्प्रयुक्तप्रारब्धांशमात्रानुवृत्तिर्न व्याहन्यते ॥

तत्र जीवत्वं प्रतिनियतदेहाभिमानः, तत्प्रयुक्ततत्तच्छरीरानुबन्धिव्यवहारानुवृत्तिश्च। सा च जीवन्मुक्तस्याप्यविशिष्टा। मुक्तिस्तु तस्य तेषां संस्कारात्मनैवानुवृत्त्याऽकार्यकारित्वेन, तेन बद्धवत् तत्तच्छरीरानुबन्धिनां रागद्वेषादीनामपि संस्कारात्मना विद्यमानानामबन्धकत्वाद् बद्धादविशेषो न जीवन्मुक्तस्य ॥

### जीवन्मुक्ति-परममुक्त्योर्विशेषः

तत्र जीवन्मुक्तिरियं गौणी। गौणत्वं च जीवनस्य, न तु मुक्तेः। तच्चानुवर्तमानं शरीरादीनामबन्धकत्वमात्रेण, मुक्तौ तु संस्कारात्मनाऽपि शरीरादीनामननुवृत्त्या मुख्यत्वं विदेहमुक्तेरवसेयम् ॥

### प्राप्तब्रह्मलोकेभ्यो गौणमुक्तेभ्यो जीवन्मुक्तस्य विशेषः

कार्यलोकप्राप्त्या जगद्व्यापारवर्जभोगमात्रसाम्यं तूत्क्रमणादिसाध्यं मुक्तिस्वरूपमपि गौणमेव, परं तु तत्र, परब्रह्मसामीप्यमात्रेण सर्वातिशयिताऽऽनन्दावाप्त्या गौणत्वम्, न तु निरतिशयानन्दरूपत्वेनापि ॥

सैव गौणी मुक्तिर्जीवन्मुक्तस्यापि, परं तु न सा ब्रह्मलोकप्राप्तिनिबन्धना, संकल्पादेव स्वभोगयोग्यानां स्वयं स्रष्टृत्वेन, किन्तु सर्वत्राकामहतत्वेन। तथापि स्वरूपानन्द एव जीवन्मुक्तानाम्, न तु ब्रह्मलोकं गतानामिव साधनविशेषापेक्षः, इति हिरण्यगर्भादितोऽपि विशेषो जीवन्मुक्तस्य। अस्य प्रारब्धकर्मशेषमात्रेण मुक्तिरचिरेण, यतस्तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये। अनेन जीवन्मुक्तिनिरूपणस्येदं मुख्यं प्रयोजनम्, यदुपासनादितोऽपीहैव तत्त्वसाक्षात्काराभ्यासोऽधिकः, यद् विनैवोत्क्रमणमयमत्र ब्रह्म समश्नुते॥

जीवन्मुक्तेर्वैकुण्ठावाप्त्यपेक्षयाऽप्यतिशयिता

तत्रोपासनादिगम्यमुक्तिर्यदियमपि गौण्येव, परन्तु गौण्यपीयं ततोऽप्यतिशयिता। तत्र यदि जीवन्मुक्तिरियममुख्येति नानुपादेया, किन्तु हेयैव, तर्हि ततोऽपि नीचा वैकुण्ठलोकाऽवाप्तिः, लोकान्तरावाप्तिर्वा दूरत एव वर्जनीया स्यात्॥

तत्र यद्यपि ब्रह्मलोकगता अपि—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

इति वचनाद् परमुक्तिभाजो ब्रह्मणा सह भवन्ति, तथापि जीवन्मुक्तस्य तावदेव चिरम्, यावदन्न शरीरं भुज्यमानकर्मफलमात्रं विमोक्ष्यति, इति महत्तमा जीवतो मुक्तिः॥

शरीरपातो हि हिरण्यगर्भादिदेववर्गस्य केषांचन देवपरिमाणेन शतवत्सरान्ते, केषांचनाधिकारिकाणां कर्माधिकारान्ते, कल्पान्ते च ब्रह्मणः, सर्वमुक्तौ च वैकुण्ठनाथस्य, कैलासनाशस्य, गणनाथस्य वा, जगदम्बायाश्चिद्रूपिण्या वा। मनुष्याणां तत्र देवादिपरिमाणेन शतं समा अपि शतं दिनानि, शतं क्षणाः, ततोऽपि न्यूनतमाः, संख्यानानर्हक्षणविशेषो वा। इदमेवाभिप्रेत्य गीता—

"क्षिप्रं हि मानुषे लोके सिद्धिर्भवति भारत॥"

इति। जीवन्मुक्तस्य दृष्ट्या तु तत्त्वसाक्षात्कारक्षण एव मुक्तिः; अकार्यकारित्वात् संस्कारात्मनाऽनुवर्तमानानां शरीरादीनाम्। स हि स्वीयं शरीरं छायामात्रं स्वस्य, अन्यस्य कस्यचन वा पश्यति वा, न छायाया इव ताडनेन, मारणेन, खण्डनेन वाऽऽत्मानं ताड्यमानं हन्यमानं वा समीक्षते। इममेव पुरुषधौरेयमभिप्रेत्य गीता—

"यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःख-सुखं धीरं सोऽमृतत्वाय कल्पते ॥"

इति ।

न विरोधो न चोत्पत्तिर्न बन्धो न विपर्ययः ।

इत्याद्याः श्रुतयोऽप्येनमेवाभिप्रेत्य प्रवृत्ताः ॥

जीवत्व-मुक्तत्वयोरविरोधः

अद्वितीयब्रह्मतत्त्वसाक्षात्कारे जातेऽपि प्रारब्धकर्मणा प्रतिबन्धात् तदीयो व्यवहारो यावत्तत्कर्मफलसंस्कारसमाप्ति संस्कारात्मनाऽनुवर्तते, इति तु "समाना चासृत्युपदेशादमृतत्वं चानुपोष्य" "विमुक्तश्च विमुच्यते" इत्यादीनि प्रमाणान्यपि ॥

अत एव सूत्रम्—"तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ" "भोगेन त्वितरे क्षपयित्वा ततः सम्पद्यते" इति सूत्रे । अतो जीवनमिदं परदृष्ट्यैव, न तु स्वदृष्ट्या । स्वदृष्ट्या तु तदाभासमात्रम् । जाग्रत्सुषुप्त एव जीवन्मुक्त इति निष्कर्षः । इदं तु जीवनमात्रमप्याऽऽप्रारब्धकर्मफलसंस्कारसमाप्ति, आशरीरसंस्कारपातं वा मुक्तस्य, बद्धानां दृष्ट्या तु सत्यतया भानमात्रम्, शरीरसंस्कारपाते तु मुक्तिः ॥

अतो न वस्तुनो मुक्तिः, न वा जीवत्वम् । जीवत्व-मुक्तत्वे उभे अपि प्रतिभासमात्रम्, यावत्तद्बाधं जीवन्मुक्तपदव्यपदेशः । ततश्च न निरोधः, न चोत्पत्तिः, न बन्धः, न मोक्षः, किन्तु सर्वोपाधिविरहितं स्वयं-ज्योतिस्संविन्मात्ररूपमेव मुक्तो नाम ॥

तत्र देहादीनां बाधितानां प्रारब्धकर्मणा प्रतिबन्धात् स्वरूपेण नष्टानामप्यविद्याया अपि नाशेऽप्यविद्यासंस्कारात्मता हि परदृष्ट्याऽनुवर्तमानानामपि शरीरादीनां जीवन्मुक्तदृष्ट्या स्वाप्नानामिव, शुक्तिरूप्यादीनामिव वाऽकार्यकारित्वमात्रम् ॥

न च तावता स्वरूपसत्त्वम्, इति मिथ्यात्वम्, बाध्यत्वं वा न व्याहन्यते । मिथ्यासर्पदष्टानामिव, रज्जुतत्त्वसाक्षात्कारवतामिव वा सर्पादिसंस्कारानुवृत्तिः कञ्चन कालम्, न तावता सर्पमिथ्यात्ववत् देहादिमिथ्यात्वबाध इति न ब्रह्मसिद्ध्याद्यनुपपत्तिः ॥

स्थितप्रज्ञादीनां जीवन्मुक्तानां च स्वरूपनिष्कर्षः

स्थितप्रज्ञ-गुणातीत-गौणमुक्तेन्द्रादि-हिरण्यगर्भान्ता हि प्राप्तात्मसाक्षात्कारा जीवन्त एव मुक्ता नाम । तत्र जीविते केषांचन स्वकर्मोपार्जित-

शरीरात्माभिमानेन, केषाञ्चिच्च स्वेच्छानिर्मितशरीरात्मतया वेत्यन्यदेतत्। इन्द्रादयः, नित्यसूरयः ब्रह्मान्ता अपि जीवन्मुक्ता एव, न तु जीवन्तीति बद्धा इव, तच्छरीरतादात्म्यधीप्रयुक्ततद्धर्मोत्पत्ति-विनाशादिरहिताः, इति मुक्ता एव। इदमेवाभिप्रेत्याऽऽनन्दमीमांसायां प्रतिपर्यायं "श्रोत्रियस्य चाकामहतस्ये"ति जीवन्मुक्तस्याप्यनुसन्धानं श्रुतौ॥

तत्र शरीरसंस्कारपातपर्यन्तं संस्कारात्मना देहवत्त्वम्, परममुक्तौ तु विधूतसर्वोपाधि निरुपाधिकसंविन्मात्रत्वमिति निष्कर्षः। अहिनिर्ल्वयिनी दृष्टान्तस्तु परेषां दृष्ट्यैव। अहिनिर्ल्वयन्यामपि हि शरीरत्वबुद्धिः परेषाम्, अहिदृष्ट्या तु न तच्छरीरम्, इति तेन नयेन शरीरात्मतानभिमानोऽहेरिव जीवन्मुक्तस्येति सूचनमात्रेण सर्पस्य तद्विनिर्मुक्तशरीरे स्वशरीरत्वाभिमानराहित्यवत् विदुषो विविक्तक्षेत्र-क्षेत्रज्ञस्वरूपस्य स्वस्वरूपानुभवमात्रम्, न तु मुख्यं शरीरित्वम्, तद्व्यवहारप्रयुक्तसुख-दुःखादिबन्धमात्रं वेति मन्तव्यम्॥

तत्र स्थितप्रज्ञः, गुणातीतः, उभयस्वभावो वा जीवन्मुक्तोऽद्वैतदृष्ट्या तत्त्वज्ञानी, श्रीभाष्यदृष्ट्या तु कर्मयोगी, भक्तियोगी वा भवतु, तस्यापि विधूतसर्वकर्मबन्धस्य प्रारब्धशरीरेण तदनुबन्धिव्यवहारज्ञानेन वा कथं सुख-दुःखाभिमानकृत्यम्? को वा विशेषस्तत्रापि बद्ध-मुक्तयोः॥

यदि भक्तिमहिम्ना तस्य सशरीरस्यापि न तत्प्रयुक्तसुख-दुःखादिभाक्त्वम्, तर्हीदमत्र विविच्यताम्—भक्तियोगनिष्ठस्य, मुक्तस्य च को वा विशेष इति?

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन॥"

इति स्मृतिः प्रारब्धकर्मेतरनिवृत्तिपरेति श्रीभाष्यस्यापि संमतम्, इति कथं स्थितप्रज्ञो भक्तियोगनिष्ठ एव भवितुमर्हति॥

तत्राद्वैतमते ज्ञानेनाज्ञान-तत्प्रयुक्तानां नाशेऽपि संस्कारात्मनाऽनुवृत्तेः, परममुक्तौ तेषामप्यननुवृत्तेः परममुक्ति-जीवन्मुक्त्योर्विशेषो विशदः॥

### संस्कारात्मना नाशोऽपि तत्त्वज्ञानपाटवादेव

जीवन्मुक्तानां बाधितसंस्कारवतामपि तदानीमप्यभ्यासपाटवात् शरीरपातान्तकालीनेन तत्त्वज्ञानेनैव संस्काराणां निवृत्तिः। तत्र तस्य संस्कार-

स्य स्वत एव निवृत्तिवादस्तु तदर्थप्रयत्नान्तरनपेक्षाभिप्राय इति ब्रह्मसिद्ध्यवलम्बनेन विवेचितम्, इति न तेषामनुवर्तमानानां ज्ञाननिवर्त्यत्वेन मिथ्यात्वानुपपत्तिः। भूषणं त्वत्र जोषमास्ते ॥

तत्रानेकजीववाद एकमुक्तौ सर्वमुक्तिवारणार्थं तत्तज्जीवानां भिन्नभिन्नप्रकारसुख-दुःखाद्यनुभवार्थं च प्रतिजीवमविद्याया अवस्थाविशेषः, कारणशरीरात्मा च वर्तते, येन जीवभेदेन सुप्त-प्रबुद्धभेदनिर्वाहो भवति, यस्तु सर्वानुभवसिद्धो नापलपितुं शक्यते, इति जीवभेदेनाविद्यांशमात्रस्य तत्त्वज्ञानेन नाश ईश्वरभावो मुक्तिर्यावत्सर्वमुक्तीति फलति, एकजीववादे सुतरां जीवन्मुक्तिं विना नोपपत्तिः ॥

अविद्याया विक्षेपशक्त्यात्मनाऽनुवृत्तिमात्रं जीवन्मुक्ता-
विति पक्षस्योपन्यासः

तत्र बाधितानुवृत्तिर्बाधितस्यैव संस्कारात्मनाऽनुवृत्तिरिति पक्षः साम्प्रतमुपपादितः, बाधिताज्ञानशक्तिविशेषस्य विक्षेपशक्तिमात्रस्यानुवृत्तिरिति पक्षोऽपि प्रायेण पूर्वपक्षादविशिष्टः। अत्र हि सर्वस्य बाधितस्य नामरूपांशमात्रानुवृत्तिः, यथा मृतशरीरस्यात्माननुषङ्गेण केवलशरीररूपेण, तथा जीवन्मुक्तानां दृष्ट्या बाधिताः शरीरादयो न सदात्मना, चिदात्मना, आनन्दात्मना वा भान्ति, किन्तु केवलं नाम-रूपात्मना संस्कारात्मनाऽनुवर्तमानेन। तेन च न तस्यानुगमः, तदभिमुखी प्रवृत्तिः, निवृत्तिर्वा कुतश्चन, इति तदीयाः शरीरानुबन्धिनः सर्वे व्यवहारा न तं बध्नन्ति ॥

मायाविद्याभेदाभेदपक्षयोर्व्यवस्था

तत्र विक्षेपशक्तिरविद्यायाः परिणामप्रयोजिका, आवरणशक्तिस्तु ब्रह्मणो विवर्तमानताप्रयोजिका। तत्र तत्त्वज्ञानेन साक्षादावरणशक्तिमात्रं निवर्तते, विक्षेपशक्तिस्तु तदावरणविनाशे ब्रह्मणो विवर्तमानतायां निवृत्तायां निवर्तते यदि प्रारब्धशेषो नानुवर्तते, तदनुवृत्तौ तु तदन्त एव विनश्यति। तन्नाशोऽप्यावरणशक्तिमदविद्यानाशप्रयुक्त एव, इति परम्परया तत्त्वज्ञानप्रयुक्त एव। अयं च पक्षोऽविद्याया आवरणशक्तिमत्या, विक्षेपशक्तिमत्याश्च भेदपक्षे। तथा च मायांशानुवृत्तिर्जीवन्मुक्तानाम्, तत्त्वज्ञानाभ्यासवशात्तु मायाया अपि नाश इति व्यवस्था ॥

जीवन्मुक्तिर्यावत्प्रारब्धभोगं मायांशमात्रानुवृत्त्या

"विद्वान् नामरूपाद्विमुक्तः" इति तु परममुक्त्यभिप्रायं शरीरपातान्तावस्थजीवन्मुक्तिपरम्। तत्र मायाऽविद्ययोरैक्यपक्षे प्रथमः कल्पः, तयोर्भेदे द्वितीयः कल्पः। उभयत्रापि मायायाः, अविद्यायाश्च तत्त्वज्ञानेन सकृदेव नाशः, प्रारब्धावशेषे तु जीवन्मुक्तस्य केवलमंशविशेषमात्रस्य संस्कारात्मनाऽवस्थानम्?

एतेन—

"शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चापरः स्यात्।
प्रारब्धनाशात्प्रतिभासनाशः एवंविधा नश्यति चात्ममाया॥"

इति वचनम्—व्याख्यातम्। इदं हि मायाऽविद्याभेदपक्षमाश्रित्य। तेन च परोक्षज्ञानादसत्त्वापादकाज्ञाननाशे परमार्थबुद्धिर्जगतो निवर्तते, अपरोक्षज्ञानेन तु ब्रह्मणोऽधिष्ठानांशविशेषसाक्षात्कारात् सदादिब्रह्मरूपाननुवृत्त्या नामरूपमात्रानुवृत्त्या जगतः कार्याक्षमत्वम्, प्रारब्धनाशे तु नामरूपात्मनोरपि निवृत्तिरिति तदर्थः॥

तथा चासत्त्वापादकाज्ञाननिवृत्तिः, अनानन्दतापादकाज्ञाननिवृत्तिः, नामरूपमात्रानुवृत्तिश्च जीवन्मुक्तानामिति फलति। मायाऽविद्यैक्ये प्रारब्धशेषाभावे तु तत्त्वज्ञानेन शक्तिद्वयवत्या एकस्या मायाऽविद्याभेदभिन्नाया निवृत्तिः॥

जीवन्मुक्तिसमर्थनम्

सर्वथा तु तदधिगमसूत्रानुसारिणी प्रारब्धशेषानुवृत्तिप्रक्रिया न निरासमर्हति, जीवन्मुक्तौ प्रमाणानि पूर्वोद्धृतान्यपि नाप्रमाणीकर्तुं शक्यानि; जीवन्मुक्तावनुवर्तमानानामपि तत्त्वज्ञानैकनाश्यत्वस्य ब्रह्मसिद्ध्यनुसारेण व्यवस्थापनात्, न संस्कारात्मनां मिथ्यात्वानापत्तिरिति गतम्॥

जीवन्मुक्तानां संस्काराणामपि निवृत्त्या मिथ्यात्वसमन्वयः

अविद्याकार्याणामतीतानामनागतानां चाविद्यारूपत्वादविद्यानाशातिरिक्ततन्नाशासंभवाद् नाविद्यानाशप्रयुक्तनाशप्रतियोगित्वेन मिथ्यात्वम्, किन्तु कारणात्मना नाशप्रतियोगित्वेन, बाध्यत्वेनैव वा वर्तमानानां स्थूलात्मना प्रारब्धकर्मसहकृताविद्याकार्याणाम्, तावन्मात्रोपादानाविद्यांशनिवृत्त्या स्वरूपतोऽविद्यालेशस्यानुवृत्तिः, अनुवर्तमानानां तेषां रज्जुत्वसाक्षात्कारेण निवृत्तस्यापि सर्पस्य संस्कारात्मनाऽनुवृत्तस्येवानुवर्तमान-

भयहेतुत्ववत् स्वरूपतो निवृत्तानामपि तन्मूलाविद्यांशमात्रात्मनाऽविद्यांश-मात्रानुवृत्त्या संस्कारात्मनैवानुवृत्तिरिति न दोषः ॥

न चात्र कारणनाशेऽपि कार्यानुवृत्तिन्यायो नैयायिकाभिमतो वेदान्तेऽपि, येन कारणनाशानन्तरं द्रव्यस्यानुवृत्तिः कुत्रापि न दृष्टेति वैषम्य-कथाया अवसरलेशोऽपि ॥

कारणात्मतां विनाऽपि कार्यनाशोपपत्तिर्जीवन्मुक्तौ

वस्तुतस्तु—कारणनाशात् कार्यनाश इति न्यायस्य द्रव्यविषयत्वे द्रव्यस्य विनश्यदवस्थस्य नाशः किं कारणनाशात् पूर्वम्, उत कारण-नाशकाले, उत तदनन्तरम्, उत अनाश एव। न चात्र प्रथम-द्वितीयौ कल्पौ विकल्पसहौ; कारणनाशस्य कार्यनाशप्रयोजकत्वनियमभङ्गापत्तेः, अन्त्ये तु कार्यमात्रस्य नित्यत्वापत्तिः। तथाच कारणनाशानन्तरमेव कार्यनाश इति नियमोपपत्त्यर्थं द्रव्यस्यापि क्षणकालं कारणात्मतां विनापि स्वरूपेणावस्थानमिति स्वीकर्तव्यम्। तत्र च प्रारब्धकर्मसहकृतकारणना-शस्य तत्प्रतिबन्धात् यावत्तदनुवृत्ति कार्यानुवृत्तिप्रयोजकत्वोपपत्त्याऽऽदे-हपातं कारणात्मतां विना केवलकार्यात्मतयैवानुवृत्तौ न काऽपि क्षतिः ॥

जीवन्मुक्तानां सर्वत्र ब्रह्मात्मताबुद्धिरेव

प्रारब्धकर्मणः प्रतिबन्धकत्वे तत्सत्तायां कारणनाशावसरे कार्याणां विनश्यदवस्थत्वमपि नोरीक्रियत इति स्वीकारेऽपि विनश्यदवस्थस्येवा-विनश्यदवस्थस्यापि विनाऽऽधारमनुवृत्तिर्ब्रह्मविवर्तमात्रत्मता ब्रह्मा-धिष्ठानतादात्म्यमात्रेणापि न विहन्यते। अस्मिन् कल्पे तु कार्याणि सर्वाणि जीवन्मुक्तानां सच्चिदात्मनैव प्रतीयन्ते, न नाम-रूपात्मना। इमं पुरुषधौरेयं लक्ष्यीकृत्यैव—

"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"
"समः शत्रौ च मित्रे च तथा मानापमानयोः।"
"शीतोष्णसुख-दुःखेषु तथा मानापमानयोः ॥"
समदुखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥"

इति गीतावचनानि ॥

तेन चेदं फलति—प्रारब्धकर्मसहकृततत्त्वज्ञानस्य प्रारब्धकर्मफले-तरबाधकत्वमेव, न तु सर्वकार्यबाधकत्वमिति। तत्र चाविद्यालेशानु-

वृत्तिः, अविद्यालेशमात्रानुवृत्तिः, कार्यमात्रानुवृत्तिर्वा या कापि वा साऽनुवृत्तिर्भवतु, सति प्रारब्धकर्मणि समूलसर्वकार्यबाधस्तत्त्वज्ञाने सति न भवतीत्यत्रैव निर्भरः; अन्यत्रानाश्वासात् ॥

सर्वथा तु तावत्पर्यन्तमनुवर्तमानतत्त्वज्ञाननाश्यतैव प्रारब्धफलानामपि, सर्वात्मनाऽविद्या-तत्कार्यनिवृत्त्यनन्तरमेवाखण्डाकारवृत्तिर्निवर्तते, न तु केषांचन तद्विरोधिनां नाशमात्रेण । न ह्यन्यथाऽवतारपुरुषाणां धर्मप्रतिष्ठा स्वाभीष्टा सिद्ध्यतीति तु निष्कर्षः ॥

पञ्चमादिभूमिकासु स्थितप्रज्ञा जीवन्मुक्ता एव,
येषां द्वारेणोपदेशोपपत्तिः

"अत्र ब्रह्म समश्नुते" इति वाक्यस्य समाधिदशाभाव्यनुभवपरत्वं न शतभूषण्याः, किन्तु भूषणमूलाया दूषण्याः । भूषणं त्वत्र सम्भ्रान्तं दूषणीमेव निरस्यति, न तु भूषणीम् ॥

तत्र समाधिदशायां वस्तुतो ब्रह्मानुभवोऽपि यद्यपि जीवन्मुक्तिर्भवतीति भूषणी वदति । "अत्र ब्रह्म समश्नुते" इति तु वित्तोत्क्रमणं देहपातान्ते मुक्तिपरमेव सा मन्यते । तत्र समाधिदशायां ब्रह्मानुभवमात्रदशायामविद्यायाः स्वरूपतोऽनाशेऽपि जीवन्मुक्तिः; शरीरानुबन्धिसर्वव्यवहाराणां तत्प्रयुक्तसुख-दुःखाद्यनुभवानामभावात् , तदापि स्थितप्रज्ञत्वाद् जीवन्मुक्तिरित्येव तात्पर्यम् ॥

तत्र भूमिकाभेदेन व्युत्थितानां जीवन्मुक्तत्वेऽपि न क्षतिः । पञ्चमादिभूमिकायां तु व्युत्थितानामपि जीवन्मुक्तत्वमेव, इति तेषामुपदेशाधिकारादिसंभवादुपदेशोपपत्तिः ॥

पञ्चमादिभूमिकासु हि तेषां ब्रह्मानुभवविरोधिनी वृत्तिर्न भवति; पूर्वोक्तरीत्याऽनुवर्तमानं कार्यजातमपि ब्रह्मात्मनैव तत्तदारूढा इव व्युत्थिता अपि पश्यन्ति । स्वरूपमात्रप्रकाश एव मुख्या मुक्तिः, अन्यस्यापि प्रकाशः स्वप्रकाशब्रह्मात्मनैव, न तु तत्तन्नामरूपात्मनेति-जीवन्मुक्तिः सम्भवत्येव ॥

इदमेवाभिप्रेत्याऽनुपदमुक्तम्—"शास्त्रेण नश्येत् परमार्थरूपम्"-इत्यादि । तेन च न श्रवणादिवैयर्थ्यम् ; कार्याक्षमत्वात् । सर्वप्रपञ्चनाशप्रयोजकापरोक्षसाक्षात्कारार्थतया तदुपयोगात् । तेन हि कार्याक्षमत्वमात्रं सर्वस्य प्रपञ्चस्य भवति । तदुक्तम्—"कार्याक्षमं नश्यति चापरोक्ष्यात्" इति ॥

### जीवन्मुक्तानां लोकसंग्रहार्थं कर्मानुष्ठानसंस्कारानुवृत्तिः कर्मण्यकर्मदृष्ट्या

तत्र जीवन्मुक्तानां प्रारब्धकर्मशेषमात्रेण व्यवहरतां संस्कारात्मना तद्दृष्ट्या कार्याद्यमदेहाद्यनुवृत्तावपि तत्रात्मत्वबुद्धेरभावाद् न वर्णाश्रमादिकर्माधिकारः। तथापि परदृष्ट्या तेषां सशरीरत्वात् तेषां संस्कारात्मनैव कर्मानुवृत्तिरपि। तत्तु कर्म तेषां लोकानुग्रहमात्रार्थम्, न तु स्वात्मसंस्कारार्थम्॥

### जीवन्मुक्तानां गृहस्थादीनामपि तत्तदाचारोऽपि जनकादीनामिव

संन्यासिनाम्, गृहस्थानां च जीवन्मुक्तानां तु तत्तदाश्रमित्वम्, तत्तद्वर्णत्वादिकं वाऽऽत्मनोऽमन्यमानानां कर्मानुष्ठानं चित्तशुद्ध्याद्यर्थमपि; अन्यथा तु न तेषां बन्धनिवृत्तेः संभावनाऽपि। तदनुष्ठानमपि लोकसंग्रहार्थमपि; अन्यथा शिष्टाचारस्यापि प्रामाण्येन तदनुष्ठानाननुष्ठाने प्रमाणीकृत्य तदेकप्रामाण्यदृष्टीनां शास्त्रविरुद्धं यथेच्छाचारप्रवृत्तिप्रयोजकत्वेन कर्तृत्वनिबन्धनस्येव प्रयोजकत्वनिबन्धनस्यापि पापस्य ते भाजनं स्युः॥

### समाधितो व्युत्थितानामेव वासनावशात् कर्मानुष्ठानसंस्कारानुवृत्तिः, न तु समाधिदशायाम्

अत एव भगवानपि स्वस्यापि कर्मानुष्ठानं लोकसंग्रहार्थं स्वस्य कर्मानधिकारेऽपि गीतायां गायति। समाधितो व्युत्थितानां तु पूर्ववासनयाऽनुष्ठानम्। सप्तमभूमिकायां तु जीवन्मुक्तस्य न कोऽप्यधिकार इति त्वन्यदेतत्। अन्यत्र संस्कारात्मना देहाद्यनुवृत्तिः, ततः कर्मानुवृत्तिरपि न जीवन्मुक्तस्याभिनयमात्रम्। ईश्वरदृष्टान्तस्त्वाधिकारिकाणामपि तत्तच्छरीरेणैव व्यवहरतां कर्मानुष्ठानं नियतमित्यंशमात्रेण॥

तत्र पञ्चम-षष्ठभूमिकातो व्युत्थितस्य कर्मानधिकारिणोऽपि पटुतमसंस्काराभावेनाभिमाननिवृत्त्यभावेऽपि समाध्यवस्थायामनुभूतात्मतत्त्वोपदेशः, तदनुबन्धिप्रश्न-प्रतिवचनादिकं च न विरुध्यते, सप्तमभूमिकायां तु नोपदेष्टापि, इति स्थितप्रज्ञानामुपदेशो न विरुध्यते। सप्तमभूमिकास्थस्यैव संस्कारमयास्तदनुबन्धिनो व्यवहाराः, परंतु तेषां संस्कारात्मभिर्देहाभिमानादिभिः, स्व-स्वकर्मानुष्ठानमपि संस्कारात्मकमेव भवति। सोऽपि लोकसंग्रहार्थो भवत्येव, समाध्यवस्थायामेव पञ्चम-षष्ठभूमिकयोः

तत्त्वसाक्षात्कारानुवृत्तिदशायामज्ञानविषयत्वनिवृत्त्या कर्मानुष्ठानं तु वासनावशात् लोकसंग्रहार्थमेव । समाध्यवस्थायां शरीरात्मभावानुसन्धानस्य तदानीमभावेन कर्माधिकाराभावः ॥

सशरीरत्वेऽपि बद्ध-जीवन्मुक्तयोः शरीरस्यात्माभिन्नतया, भिन्नतया च ग्रहणं विशेषः

तत्र सशरीरत्वं बद्ध-जीवन्मुक्तयोरुभयोरपि समानम्, विशेषस्तु बद्धानां शरीराभिन्नतयाऽऽत्मस्वरूपज्ञानम्, जीवन्मुक्तानां त्वात्मभिन्नतया शरीरज्ञानम्; उभयत्र शरीरात्मनोरभेदज्ञाने सत्यपि बद्धानां शरीरभेदांशस्याप्राधान्येन ग्रहः—भेदसामानाधिकरण्योपलक्षिताभेदस्य तत्र संसर्गतया भानात्, जीवन्मुक्तानां त्वभेदांशस्याप्राधान्यम्, भेदांशस्य प्राधान्यम् । तत्राभेदसामानाधिकरण्योपलक्षितस्य भेदस्य संसर्गतया भानात् । पूर्वत्रात्मत्वेन शरीरस्य ग्रहणादभेदप्राधान्यम्, उत्तरे त्वशरीरत्वेनात्मनो ग्रहणात् शरीरात्मनोर्भेदग्रहस्य प्राधान्यम् । 'अहं गौरः' इति पूर्वत्र ज्ञानम् उत्तरत्र तु गौरं शरीरमिति ॥

इदं च नाम-रूपात्मना स्वरूपतो देहानुवृत्तिरिति मते, स्वोपादानमात्राविद्यांशसहितशरीरानुवृत्तिकालेऽपि, संस्कारात्मना देहानुवृत्तिपक्षे तु स्वरूपतोऽनुवर्तमानशरीरवत्त्वं सशरीरत्वम्, संस्कारात्मना तु वर्तमानशरीरवत्त्वमिति विवेकः ॥

जीवन्मुक्तस्य सशरीरत्वाशरीरत्वोभयनिष्कर्षः

अतो जीवत्वम्, मुक्तत्वं च न विरुद्धम्; आदावेव शरीरस्यापि बाधितत्त्वेन कार्याक्षमतयाऽनुवृत्तौ तु प्रतिभासमात्रेण सशरीरत्वम् । तच्च न वस्तुगत्या यथा शुक्तिरूप्यादीनां प्रातिभासिकत्वम् । अतः सशरीरत्वश्रुतौ प्रतिभासघटितत्त्वं न दोषः ॥

तत्र मिथ्यात्वेन निर्णीतशरीरवत्त्वमशरीरत्वं बाधदशामादाय । तदेव बाधावस्थायां सशरीरत्वम् । अतो जीवन्मुक्तानां बाधितत्त्वेन निर्णीतशरीरवतां संस्कारात्मना शरीरानुवृत्तावप्यशरीरत्वमेव । शरीरकार्याक्षमत्वं तदीयशरीरस्य दग्धपटन्यायेन ॥

तत्र मिथ्याभूताज्ञाननिमित्तत्वं स्वरूपतो मिथ्यात्वमभिप्रेत्य, मिथ्याज्ञाननिमित्तत्वं तु प्रतीतिमाश्रित्य । तेन च सशरीरत्वं मिथ्याज्ञाननिमित्तमपि भ्रान्तिज्ञानापेक्षितपूर्वानुभवस्य प्रमात्वं विनापि भ्रान्तिगोचर इति

सिध्यति। इदमेवाभिप्रेत्याध्यासभाष्ये—"अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य, "मिथ्याज्ञाननिमित्तः" इति चाहमाद्यध्यासः समर्थितः ॥

स्वर्गाद्यर्थिनां शरीरविवेकग्रहस्य जीवन्मुक्तशरीरविवेकग्रहस्य च विशेषः

अत्र शरीरपदेन स्थूलसूक्ष्मकारणशरीराणां त्रयाणां ग्रहात् शरीरविविक्तेनात्मग्रहणात् न तेषामन्यदुःखेनान्यस्येव शरीरदुःखेन स्वस्यापि दुःखग्रहः, स्वर्गाद्यर्थिनस्तु न शरीरविविक्तमात्मानं जानन्ति, इति तेषां सूक्ष्मशरीराभिमानिनां तदन्तर्गतान्तःकरणधर्मदुखादिना दुखादिमत्त्वमुपपन्नम्। तदुक्तमाकरे—यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियते; तथाप्यशनायाद्यतीतमात्मतत्त्वं नाधिकारेऽपेक्ष्यते; अनुपयोगित्वात्, प्रत्युत विरोधाच्चे"ति ॥

"पश्वादिभिश्चाविशेषात्"इत्यादिभाष्यं त्वीदृशानेव विदुषोऽधिकृत्य, न तु जीवन्मुक्तान्, इति जीवन्मुक्तानां सशरीरत्वं न तच्छरीरकार्यक्षमम्; अन्यथा स्वाप्निकानाम्, सुषुप्तानां वा जागरिकशरीरेण परैर्दृश्यमानेनैव तत्तत्स्वाप्निक-व्यवहारादिकमित्यापत्त्या स्वप्ने ताडितस्य स्वाप्निकस्य शरीरे क्षत-रक्तपातादिकमपि तत्रानुवर्तेत, न चानुवर्तते जागरे। न च शरीरान्तरं परस्य प्रत्यक्षम् ॥

अतः परदृश्यमानमेव स्वरूपं न स्वस्यापीति नियमः, येन परदृष्ट्या व्यावहारिकेणैव शरीरेण सशरीरत्वं स्यादिति ॥

जीवन्मुक्तानां कर्मणो भोगेन क्षय एव भस्मसाद्भावः

तत्र प्रारब्धस्यैव भोगेनैव क्षय इति तु संस्कारात्मनाऽप्यभावमभिप्रेत्य; नाशस्यैव क्षयपदार्थत्वात्। भस्मसाद्भावो ह्यत्र क्षयपदार्थः ॥

अत एव "ज्ञानाग्निः सर्वकर्माणि"इत्यत्र सर्वपदं प्रारब्धेतरपरमितिविवरणं बहूनाम्, इति सशरीरत्वाशरीरत्वयोर्जीवन्मुक्ते न व्याघातः ॥

अविद्यामहिम्ना तु सशरीरत्वम्, अशरीरत्वं चोभयमविरुद्धम्, अविद्या चात्र प्रारब्धकार्यमपि; सर्वस्याविद्योपादानकत्वात्। आक्षेपोत्तरस्य दुर्वचत्वस्यैव रूपान्तरं माहात्म्यमिति लिखद् भूषणं स्वाप्निकानां तत्तत्पुरुषमात्रानुभाव्यत्वे भगवतः शक्तिविशेष एव शरणमिति श्रीभाष्यीयमप्युत्तरं कथमीश्वरसृष्टत्वेन सर्वानुभाव्यत्वमिति प्रश्नस्य, तदशक्य-

त्वाभिप्रायमित्येव हृदयेनापि मन्यते। भवतु, अघटितघटनापटीयसी शक्तिरेवेश्वरस्य, अविद्याया वा बहुषु स्थलेषु शरणं कर्तव्यम् ॥

प्रकारान्तरेण बद्ध-मुक्तभेदः

इतोऽपि बद्ध-मुक्तयोर्भेदः, यत् बद्धः स्वशरीरम्, तच्छायां च पृथक्पश्यति। तत्र छायायास्ताडनेनात्मानं न ताडितं मन्यते, शरीरताडनेन त्वात्मानं ताडितं मन्यते, जीवन्मुक्तस्त्वाणिमाण्डव्यादिः शरीरमेव स्वच्छायामिव पश्यति, इति न शरीरदुःखेन दुःखी। अतो बद्धः सशरीरः, जीवन्मुक्तस्त्वशरीर इति। न चात्र छायामयशरीरान्तरोत्पत्तिरभिप्रेयते, किन्तु छायाया इव संस्कारात्मना, स्वरूपेण वा विद्यमानाया शरीरकार्यकारित्वं तच्छरीरस्येति, इति छायामयशरीरान्तरोत्पत्तिदूषणमनुक्तोपालम्भनम्। उपदेशानुपपत्तिवादपरीक्षायामधिकं विशदम् ॥

एतेन जीवन्मुक्तानां विहितेष्वनधिकारेऽपि निषेधशास्त्रविषयत्वाद् न भिन्नकर्मताऽऽपात इति भामत्यपि—व्याख्याता। सा हि शरीरविविक्तात्मतत्त्वज्ञानिनम्, स्वात्मतया शरीरमजानन्तं वा समाधिव्युत्थितपञ्चमषष्ठभूमिकास्थं जीवन्मुक्तमधिकृत्यैव। न च तस्य शरीरधर्मब्राह्मणत्वाद्यभिमानः, इति न विहितकर्माधिकारः शरीरस्थब्राह्मणत्वाद्यधिकारनिबन्धनः। विधिषु श्राद्धोऽधिकारी। अस्याधिकारिणः पुरुषस्य स्वस्य तत्तत्कर्माधिकारप्रयोजकाधिकारविशेषवत्त्वनिश्चय एव नान्यः कोऽपि श्रद्धाशब्दार्थः। स तु न जीवन्मुक्तस्य; शरीरविविक्तात्मस्वरूपदर्शिनोऽपि हि शरीरं वर्तत एव, सशरीरत्वात्; तथापि संस्कारात्मनाऽनुवृत्तिः लोकसंग्रहार्था न विरुध्यते। निषेधाधिकारे तु शरीरधर्मस्य कस्याप्यधिकारितावच्छेदकस्याभावात् सामान्यतः सशरीरं प्रति प्रवृत्तो निषेधाधिकारोऽवर्जनीयः ॥

तच्च शरीरं प्रस्थानभेदेन स्वरूपतो वाऽनुवर्तताम्, संस्कारात्मना वा। तत्र च प्रस्थानभेदाः पूर्वमुट्टङ्किता विस्तरेण। सर्वथा न जीवन्मुक्त्यनुपपत्तिः ॥

॥ इति जीवन्मुक्त्युपपत्तिः ॥

# बाधायां सामानाधिकरण्योपपत्तिः

### बाधायां सामानाधिकरण्यस्वरूपविषयनिष्कर्षः

चतुर्विधेषु—विशेषण-विशेष्यभावनिबन्धनाध्यासनिबन्धनाभेदनिबन्धन-निबन्धनबाधासामानाधिकरण्येषु बाधायां सामानाधिकरण्यमस्य-प्रकरणस्य लक्ष्यम्। तस्यास्य विप्रतिपन्नमद्वैतप्रस्थानेषु सर्वेषूदाहरणम्—"सदेव सोम्येदम्" "सर्वं खल्विदं ब्रह्मेति ॥

"तत्त्वमसी"ति तु बाधायां सामानाधिकरण्यमिति नैष्कर्म्यसिद्धि-प्रस्थानम्। प्रस्थानान्तराणि त्वभेदे सामानाधिकरण्यमिति मतभेदः प्रस्थानभेदेन ॥

तत्रानिर्वचनीयख्यातावेव बाधायां सामानाधिकरण्यपक्षः। स चाद्वैतिनामेव, अन्यत्र तु न तत्कथापीत्यादि शतभूषण्यां विशदम्। श्रीभाष्यं तु सर्वज्ञानयाथार्थ्यवादमेवोरीकुर्वाणं बाधायां सामानाधिकरण्यं नानुमन्यते। स तु वादः सर्वानुभवविरुद्धः; बहुतरदोषास्पदश्च न क्षोदक्षम इति विवेचितम्। आस्तामियमौपोद्घातिकी कथा ॥

तत्राधिष्ठानारोप्ययोः सामानाधिकरण्यम्, स्वस्य स्वबाधकज्ञानविषयस्य च सामानाधिकरण्यम्, स्वोपादानाज्ञानविषयस्वोपादानस्य स्वस्य च सामानाधिकरण्यं वा स्व-स्वाधिष्ठानोभयसामानाधिकरण्यपर्यवसितं तदिति निष्कर्षः ॥

### बाधायां सामानाधिकरण्यस्योदाहरणे समन्वयः

तत्र "सदेव सोम्येदमि"त्यत्रेदंपदार्थस्य सता सामानाधिकरण्यम् "एकमेवाद्वितीयमि"त्यनन्तरवाक्येन बाधकेन ब्रह्मणः सद्वितीयत्वस्य बाधाद् द्वितीयबाधकज्ञानविषयेण सद्रूपेण ब्रह्मणा द्वितीयस्य सामानाधिकरण्ये प्रथमं सामानाधिकरण्यनिमित्तमबाधम् ॥

तत्र "इदम्पदोपात्तप्रपञ्चोपादानाज्ञानविषयस्य विवर्तोपादानस्यैव सत्पदार्थत्वात् तेन सहेदम्पदार्थस्य सामानाधिकरण्यं द्वितीयलक्षणलक्षितम्, सद्रूपब्रह्मण इदंपदार्थस्य च सामानाधिकरण्यात् फलितं लक्षणमप्यव्याहतम् ॥

तत्रेदं सामानाधिकरण्यं ब्रह्मविवर्तोपादानत्वनिर्णयाधीनम्। परिणाम्युपादानोपादेययोः सामानाधिकरण्यं तु विशेषण-विशेष्यभावेन सामानाधि-

करण्य एवान्तर्भवति। तत्र ब्रह्मणोऽपरिणामित्वं त्वविप्रतिपन्नम्। विशिष्ट-परिणामित्वपक्षोऽपि विशेष्यपरिणामित्वपक्षवत् विशिष्टानित्यात्वापत्त्या न संभवतीति पश्चात् व्यक्तीभविष्यति, इत्यवर्जनीयेऽधिष्ठानारोप्यभाभावे ब्रह्म-तद्व्यतिरिक्तयोर्बाधायां सामानाधिकरण्ये लक्षणाया आवश्यकतायां सत्यामपि तस्यां 'फलमुखगौरवं न दोषाये'ति न्यायेन तत् सोढव्यमेवागत्या॥

वस्तुतस्तु—बाधायां सामानाधिकरण्यमित्युपन्यासो बाधं श्रुतिसिद्धं प्रमाणीकृत्य फलितार्थकथनमेव। 'इदं रजतमि'त्यादौ सामानाधिकरण्यं बाधान्यथानुपपत्तिसिद्धमादायैव। तथाच बाधितबाधकज्ञानविषयोभयविषयकं सामानाधिकरण्यं बाधायां सामानाधिकरण्यम्॥

अधिष्ठानस्यारोप्येण बाधायां सामानाधिकरण्यम्, न त्वारोप्यस्याधिष्ठानेन सामानाधिकरण्यम्

तत्र परस्पराध्यासेऽप्यधिष्ठानस्याबाधितत्वादारोप्येणाधिष्ठानस्य तादात्म्यं न बाधायां सामानाधिकरण्यम्। तथा च बाधायां सामानाधिकरण्ये नाधिष्ठानलक्षणा, न वा निवृत्तिलक्षणा। श्रीभाष्योक्तरीत्योक्तार्थद्वयलक्षणायां हि "नेदं रजतम्" 'न स्थाणुश्चोरः, 'न सत् जगदि'ति वाक्यार्थः स्यात्। न चायमर्थः; समानाधिकरणपदघटितस्य 'सदेवेदमि'ति वाक्यस्य, "सर्वं खल्विदमि"ति वाक्यस्य च प्रतिपाद्यार्थैक्यरूपत्वाभावादुक्तस्यार्थस्य॥

ईश्वरेण जगतो न बाधायां सामानाधिकरण्यम्। तत्र विशेष्यांशसंन्मात्रेणैव तत्साक्षात्कारस्यैवाज्ञाननिवर्तकत्वात्

तत्र निर्विशेषं ब्रह्म नाधिष्ठानम्, किन्तूपहितं तद्विषय एव, इति नेश्वरेण सामानाधिकरण्यं बाधायां सामानाधिकरण्यम्; तत्रेश्वरस्य चैतन्यांशेनैव विवर्तोपादानत्वेन तेनैवांशेनैव बाधायां सामानाधिकरण्यम्, तस्य बाधकज्ञानविषयत्वं वृत्त्युपहितरूपेण, अविद्योपहितरूपेणाधिष्ठानत्वमित्यधिष्ठानतादशायां सविशेषत्वमेव॥

तस्य सत्यत्वं त्वविद्योपहितस्वरूपेण, वस्तुगत्या तु निर्विशेषत्वं वृत्त्युपधानदशायाम, इति निर्विशेपोपादानतायामेव पर्यवसानं। विशेष्यांशस्याबाधितत्वेनाधिष्ठानत्वेनान्वयात्, इति न विशिष्टस्योपादानत्वम्, इति "सर्वं खल्विदमि"त्यादौ सत्यब्रह्माधिष्ठानकत्वं न विरुद्धम्॥

### बाधायां सामानाधिकरण्येऽधिष्ठानालक्षणाऽभावः

न चात्र ब्रह्मपदस्य, इदंपदस्य वा लक्षणा, 'ब्रह्म नेदं सर्वमि'ति तु बाधज्ञानाभिलापमात्रम् , न तु बाधकज्ञानम् , न वाऽधिष्ठान-प्रकार-तत्तादात्म्योभयविषयकं समानाधिकरणं ज्ञानम् , इति कथं वाऽधिष्ठानलक्षणा, निवृत्तिलक्षणा वा? 'अयं चोर' इत्येव सामानाधिकरण्याकारः, न तु स्थाणुश्चोर इति। इदन्त्वेन स्थाणुज्ञानं विना भ्रमासंभवात् , विशेषज्ञानस्य भ्रमबाधकत्वाच्च। अतो नात्र लक्षणालेशोऽपि, इति कथं बाधार्थसामानाधिकरण्यमतिजघन्यम् ?

"तत्त्वमसी"त्यत्र बाधायां सामानाधिकरण्यपक्षेऽप्ययमेव न्यायः, परं तु तत् प्रस्थानान्तरम्। तत्रापि कूटस्थचैतन्ये, संविन्मात्रे जीवस्याभासस्य स्वरूपतोऽध्यासस्यैव विवक्षणात् तद्व्यतिरेकेण जीवाभाव इष्ट एव। स च तदुपाध्यहंभावाभाव एव॥

तत्र बाधायां सामानाधिकरण्ये 'इयं शुक्तिरि'त्यधिष्ठानज्ञानमेव बाधकम्, तस्मिंश्च निष्पन्ने तद्व्यतिरेकेण रजताभावसिद्ध्या बाधकत्वस्यानुवाद एव—'नेदं रजतमि'ति, न तु तत्र रजतनिषेधः, शुक्तेः रजताभेदनिषेधो वा; अनिर्वचनीयरजतस्य स्वरूपतोऽभावे तदभेदस्याऽपि बाधात् तदभेदाधिष्ठानस्यासंभवात् ॥

### "तत्त्वमसी"त्यत्र न बाधायां सामानाधिकरण्यम्

न च "तत्त्वमसि" इत्यत्रापि नैष्कर्म्यसिद्धिमते धर्मिणोरिदंरजतयोरिव तादात्म्यापन्नतया प्रतीयमानयोर्वस्तुतोऽभेदः, येन तत्रापि सामानाधिकरण्यं दुर्वचम्। तत्र हि कल्पे नाभेदे सामानाधिकरण्यम् ; स्वरूपैक्यात्। अतो बाधार्थत्वायोगः। बाधार्थसामानाधिकरण्यपक्षः प्रपञ्चस्य समूलस्यानिर्वचनीयत्ववादमाश्रित्यैव, इति तदभ्युपगम्यैव तदुपपादनम्। अनभ्युपगमपक्षस्तु नाद्वैतमते, इति न कृत्वाचिन्तयाऽयं विचारः। परानभ्युपगमस्यैवायमभ्युपगम इति तु प्रागेव निरूपितम्॥

### "सर्वं खल्विदमि"ति नोपासनापरम्

तत्र "सर्वं खल्विदमि"ति न सर्वस्य ब्रह्मात्मत्वोपासनाविधानम्। तत्र यदि तदुपासनम् , तर्हि तावताऽपि तदध्यासरूपमेव भविष्यति, न तु वस्तुसदर्थकथनम्। तत्राध्यास आहार्यरूपः सति भेदग्रहणे मनोब्रह्मणोरिव।

तादात्म्याध्यासे तु प्रतीतिदशायां सदर्थविषयकत्वमित्यसदर्थविषयकत्वापेक्षया प्रातिभासिकसदर्थविषयकत्वमेव युक्तम्। नापि "शान्त उपासीते"ति विहितशमविध्यर्थवादतया चरितार्थता ॥

न चात्रोपासनाकारनिर्देश उपासनाविध्यश्रवणे संभवति; "शान्त उपासीते"ति तु "स क्रतुं कुर्वीते"ति विहितोपासनायाः शमविधानार्थमनुवाद एव; अन्यथा ब्रह्मप्रकरणत्वात् मनोमयादिवाक्यापेक्षितविशेष्यसमर्पकत्वं ब्रह्मपदस्य न स्यात् , इत्यन्तरधिकरणसिद्धान्तानुपपत्तिः, इत्यर्थवादस्य सर्वस्याधिष्ठानारोप्यभावसिद्धतादात्म्यानुवादपरत्वमेव "सर्वं खल्विदं ब्रह्मे"ति वाक्यस्येति वक्तव्यम्; अन्यथा "तज्जलानि"ति वितथम्। तद्धि सर्वतादात्म्यं सर्वोपादानत्वप्रयुक्तं नाहार्यारोपेणोपासनाविधिप्रयुक्तमिति गमयति ॥

तत्रोक्तविध्यर्थवादस्य शमप्रशंसायामेव तात्पर्यम् , न तु विधीयमानविशेषणतयाऽर्थवादस्य प्रशंसोपयोगिनो विधानेऽपि, येन "सर्वं खल्विदं ब्रह्म"त्यनुसन्धानाधीनशमविशिष्ट उपासीतेत्यर्थः स्यात्। कथं च सर्वोपादानत्वाभावे ब्रह्मणः, सर्वस्य ब्रह्मोपादेयत्वाभावे च "सर्वं खल्विदं ब्रह्मे"-त्यनुसन्धानाधीनत्वं शमविधौ? तच्च कार्य-कारणभावप्रयुक्तमिति "तज्जलानि"ति वाक्यशेषो गमयति। "सर्वं खल्विदं ब्रह्मे"ति वाक्ये हि न नानात्वविधानम् , येन नानात्वानुसन्धानविधानं शान्तिहेतुतया न विवक्षितुं शक्यते, इति कार्य-कारणभावेनैव सामानाधिकरण्येऽत्र विवक्षणीये न बाधायां सामानाधिकरण्यं विना गतिः ॥

तत्र "तज्जलानि"तीति शब्दो हि इतिशब्दस्य हेतुपरत्वात् तज्जत्वात् तल्लत्वात् , तदनत्वाच्च 'सर्वं खल्विदं ब्रह्मे'ति पूर्वेणैव वाक्येनान्वेति, तेन च कार्य-कारणभावनिबन्धनं सामानाधिकरण्यं द्रढयति। तत्तु यदि बाधायामेव, तर्ह्येव शान्तेः स्तुतिः सुतरां लगति, न तु तत्रानुसन्धानविधानशङ्कापि, विना विधायकमनुसन्दधीतेत्यादिपदमनुसन्धानविधिरित्युपपद्यते ॥

### "सर्वं खल्विदं ब्रह्मे"ति शान्तिकाम उपासीतेति-योजनाऽप्रामाणिकी

एतेन—शान्तिकामः "सर्वं खल्विदं ब्रह्म तज्जलानि"त्युपासीतेति योजनाऽपि स्वतन्त्रभूषणकल्पिता—परास्ता; योजनायाः अस्या अप्रामा-

णिकत्वात्। सर्वस्य ब्रह्मकार्यत्वेन ब्रह्मव्यतिरेकेणाभावज्ञानमात्रेण शमविध्यर्थवादतया नयनमेव हि मुख्यमत्र। न चात्र सर्वात्मतया ब्रह्मोपासनविधिरपरोऽपि। सर्वस्य ब्रह्मत्वेन स्तुतिमात्रं हि शमविधेरत्र, न तु सर्वात्मना ब्रह्मोपासनमपि; अन्यथा शमस्य नात्र विधिरित्यापद्येत। न चेष्टापत्तिः; शमविधेरत्र सर्वैरपि भाष्यकारैर्विवक्षणात्॥

"सदेव सोम्येदम्" इत्यत्र दुरपह्नवं बाधायां सामानाधिकरण्यम्, न च शरीर-शरीरिभावेनात्र निर्वाहः शरीरवाचकानां पदानां शरीरिपर्यन्तत्वायोगात्

अस्तु नामाऽत्रेतिशब्दमहिम्ना, कारणान्तरेण वोपासनाविधिः। "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमग्र आसीत्" इत्यत्र सामानाधिकरण्यं कथं न बाधायाम्? यत्रानन्तरमेव—"एकमेवाद्वितीयमि"ति बाधोऽप्युपदिश्यते। न चात्र सामानाधिकरण्यस्यान्यथोपपत्तिः। शरीर-शरीरिभावेन सामानाधिकरण्यपक्षस्तु नोपपद्यते; शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्याप्रामाणिकत्वात्; अन्यथा "अहं गच्छामि" इत्यादौ गन्तुरात्मनोऽपि शरीरत्वात् कथं वा तत्र परमात्मनो गमनं न भवति? युष्मदस्मच्छब्दयोः सर्वत्र शरीरिपर्यन्तत्वे नियते "युष्मद्युपपदे" "अस्मद्युत्तमः" इति सूत्रद्वयं कं युष्मदर्थमस्मदर्थं वाऽभिप्रेत्य प्रवृत्तम्? को वा मुख्यः शरीरी—जीवात्मा वा? परमात्मा वा? यदि परमात्मैव, तर्हि शरीरवाचकानां पदानां शरीरिपर्यन्तत्वनयेन न "बहु स्यां प्रजायेये"त्यादावहंपदेन परमात्मनो ग्रहणम्? तस्याशरीरत्वात्, चिदचिच्छरीरकस्तु प्रथमपुरुषत्वात् नाहमर्थतामर्हति, इति प्रथम-मध्यमोत्तमपुरुषाख्यपुरुषत्रयानौचित्यम्। तत्र जातिशक्तिवादिनां पक्षे शरीरत्वपरस्य शरीरपदस्य न शरीरिपरत्वम्॥

एतेन—व्यक्तिशक्तिवादिनां पक्षेण शरीरवाचकानां पदानां शरीरिपर्यन्तत्वमिति—परास्तम्, शरीरपदार्थव्यक्तेः तच्छरीरमात्ररूपत्वेन शरीरिणः शरीरव्यक्तिरूपत्वाभावात्। विशेषणवाचकानां शब्दानां विशिष्टपरत्वं तु यदि नियतविशेषणाभिप्रायम्, तर्हि तत् सर्वस्य परमात्मनियतविशेषणत्वं विना नोपपद्यते। न चैतदपि संभवति; "यस्य पृथिवी शरीरमि"ति परमात्मपृथक्तया निर्दिष्टानां पृथिव्यादीनां परमात्मनियतविशेषणत्वाभावात्, पृथिवी अन्तरात्मेत्येवोपदेश आपद्येत

शरीरपदं ह्युपाधिपरतायामपि युज्यते । अधिकमद्वैततत्त्वशुद्ध्यादौ व्यक्तम् । अतः पृथिवी-परमात्मनोरैक्याभावात् तत्समानाधिकरण्यमपि लक्षणयैव निर्वाह्यम्, इति न शरीर-शरीरिभावनिबन्धनमेव सामानाधिकरण्यमेव लक्षणया निर्वाह्यम्, किन्तु बाधायां सामानाधिकरण्यम्; तत्राधिष्ठानलक्षणायाः, निवृत्तिलक्षणाया वा अभावस्योपपादनात् । न ही'दं रजतमि'त्यत्र प्रवृत्तिनिमित्तयोरिदंत्व-रजतत्वयोरेकाश्रयत्वाभावः, न वा प्रपञ्च-तदुपादानोपहितब्रह्मणोरनेकाश्रयत्वम्, येन बाधायां सामानाधिकरण्यं न स्यात्, शुद्धब्रह्माश्रयत्वादुभयोः । शरीरशरीरिभाव एव खलु प्रवृत्तिनिमित्तयोरेकाश्रयत्वं बाधितम् ।।

अत्र "नेह नानाऽस्ति किञ्चन" "एकमेवाद्वितीयम्", इति बाधमात्राभिप्रायम्, न तत्र बाधायां सामानाधिकरण्यं भ्रान्तिज्ञानगोचरं विषयीकरोति, इति तादृशानां वाक्यानामत्रोदाहरणं न बाधायां सामानाधिकरण्येऽधिष्ठानलक्षणाया निवृत्तिलक्षणाश्चोपपादकतामर्हति ।।

'योऽयं चोरः सः स्थाणुरि'ति तु स्थाणुरेव चोरोऽभादित्यभिप्रायं स्थाण्वतिरिक्तचोराभावपरं विशेषरूपेण ज्ञाताधिष्ठानस्य तादात्म्यघटकभेदांशपरित्यागेन स्वरूपैक्यबोधनविधया चोरत्वांशाविवक्षयाऽभेदसामाधिकरण्यमवगाहते, इति नात्राप्यधिष्ठानलक्षणा; अधिष्ठानस्य स्वशब्देनैवोपादानात् । चोरपदेन तु स्वरूपमात्रविवक्षा जहदजहल्लक्षणया, न तु चोरत्वनिवृत्तिरत्र पदार्थः । न च विना लक्षणां तत्र गतिः परमतेऽपि ।।

"सर्वं खल्विद"मित्यत्राभिन्ननिमित्तोपादानत्वानुपपत्ति-
बाधार्थसामाधिकरण्यमन्तरा

सर्वथा तु बाधकालिकत्वादस्य प्रत्ययस्य न बाधायां सामानाधिकरण्यम् । 'इदं रजतम्' 'सदेव सोम्येदम्' 'सर्वं खल्विदं ब्रह्म' त्यादावबाधावस्थायामधिष्ठानारोप्ययोः सामानाधिकरण्यं हि बाधार्थसामानाधिकरण्यम् । तत्राधिष्ठानारोप्यभावो ब्रह्मणो विवर्तमानत्वान्यथानुपपत्त्या सर्वज्ञत्वस्य सर्वतादात्म्यमात्रनिबन्धनत्वपक्षेऽनुपपत्त्या च, इत्यभिन्ननिमित्तोपादानत्वान्यथानुपपत्त्या सर्वस्य प्रपञ्चस्य मिथ्यात्वेन निर्वहणायाविद्योपहितस्य स्रष्टृत्वं सर्वज्ञत्वातिरिक्तं न किमपि । अतो निमित्तत्वसहचरितोपादानत्वमेव मिथ्यात्वप्रयोजकम् । तत्र ब्रह्मणो निमित्तत्वमात्रेण विशिष्टस्य विशेषणमात्रस्य चोपादानत्वेनाभिन्ननिमित्तोपादनत्वं नैकस्य, इति कथमभिन्ननिमित्तोपादानत्वम्?

"मृत्तिकेत्येव सत्यमि" ति श्रुतिप्रदर्शितदृष्टान्तोऽपि मृदादिक्रमेणाऽविद्योपहितब्रह्मोपादानतायामेव पर्यवसायि, मृदादीनामप्यविद्याकार्याणामविद्यात्मनैव घटाद्युपादानत्वम्, इति तदुपहितस्य चैतन्यस्याप्युपादानत्वमवर्जनीयम्; अन्यथा 'सन् घटः'इत्यादिप्रतीतिर्न निरुह्येत न वा, घटादीनां वाचारम्भणत्वं सूपपादम्। अयमेव न्यायो वृश्चिकादीनां गोमयाद्युपादानकत्वेऽपि ॥

विवर्त-परिणामपदयोरुपादेयत्वमात्रेणोभयत्र प्रयोगोऽविना
परिणामं न विवर्त इत्यभिप्रायेण

वृश्चिकोऽपि गोमयादीनां मृदादिवत् स्वतोऽविद्यात्मना परिणामिकारणत्वाद् गोमयदृष्ट्या परिणामः, तदुपहिताधिष्ठानात्मना विवर्तः। विवर्तपदं तत्र तत्र परिणामेऽपि नूनं प्रयुज्यते, इत्युभोरप्युपादानतामात्रेण पर्यायत्वमिवेति केचन मन्यन्ते। इदमेवाभिप्रेत्य प्रकृत्यधिकरणे विवर्तेऽपि "परिणामात्" इति परिणामपदम् ॥

"जगच्च सः" "रामभूतं जगत्सर्वम्" इत्यनयोर्विशेषः

विवर्तपदं ह्युपादेयविषमसत्ताक उपादानविशेष एव मुख्यम्, परिणामे गौणम्। एवं परिणामपदमपीति केचन। परे त्वविद्यापरिणामत्वं नियमेन ब्रह्मविवर्तसहचरितम्। अतो विवर्तस्थानेऽपि परिणामपदमिति परिणामपदं विवर्तस्याप्युपलक्षणम्। एवमेव विवर्तोऽपि परिणामं विना न संभवति, इति विवर्तपदं परिणामस्याप्युपलक्षणमिति मन्यन्ते ॥

एतदभिप्रायमेव "जगच्च सः" इति विष्णुपुराणम्। "रामभूतं जगत्सर्वमि"ति तु गौणाभेदपरम्। न हि रामस्य रामत्वेन ज्ञातस्याग्नित्वेन ज्ञानस्याग्नेरिवोपादानत्वं संभवति, इति तत्र न बाधायां सामानाधिकरण्यम्; रामस्य जगदनधिष्ठानत्वात्। रामोऽप्यविद्योपहितसंविन्मात्रमिति रामतापन्युपनिषद्दृष्ट्या तु परमात्मस्वरूपमिति विवक्षायां तत्रापि बाधायामेव सामानाधिकरण्यं "सर्वं खल्विदं ब्रह्मे"त्यादाविव ॥

तत्र सर्वस्य ब्रह्मतादात्म्येन मिथ्यात्वोपन्यासाद् राग-द्वेषानुदयहेतुत्वेन भूतार्थवादत्वेन स्तुतिमात्रं शमविधिशेषतया, न तु शमोत्पत्तेः पूर्वं मिथ्यात्वज्ञानस्यापि तत्राविवक्षा, येन शमोपासनादीनां भेदबुद्धिसापेक्षाणामनुपपत्तिः स्यात् ॥

### "इदं सर्वं यदयमात्मे"त्यत्रापि बाधायां सामानाधिकरण्यम्

एतेन—"इदं सर्वं यदयमात्मे" त्यपि—व्याख्यातम्। इदमपि "सदेव सोम्येदम्" "सर्वं खल्विदं ब्रह्मे"त्यादाविव सर्वशब्दस्योपादेयपरत्वादुपादानोपादेयप्रयुक्तसामानाधिकरणपरमेव, न तु जीवानामपि सर्वशब्देनात्र ग्रहणम्। न च जीवानां ब्रह्मोपादानकत्वम्, किन्तु तदुपाधिमात्रस्य, इति न कुत्राप्यर्थसंकोचः। अत एव "इदं सर्वम्" 'सदेव सोम्येदम्" "सर्वं खल्विदं ब्रह्मे" त्यादौ सर्वत्रेदंपदमपि॥

### "तत्त्वमसी"त्यादौ जीवस्यानुपादेयत्वात् न बाधायां सामानाधिकरण्यम्, किन्त्वभेदे

सति चैवं जीवानां ब्रह्मभेदे औपाधिकं जीवभेदमादायैव, स्वरूपतस्तु तेषामभेदः, यमेवाश्रित्य 'तत्त्वमस्या'दिमहावाक्यानि। "तत्त्वमसि" "अहं ब्रह्मास्मि" त्यादौ बाधायां सामानाधिकरण्यं तु प्रस्थानान्तरम्। तत्र तु सर्वपदेन जीवात्मनामपि ग्रहणमविरुद्धम्॥

### अद्वैतमते 'तत्त्वमस्या'दिवाक्येषु लक्षणाऽकिञ्चित्करी

लक्षणाऽपि हि लौकिकी, इति 'लक्षणा'नामग्रहणमात्रं न दोषाय; अन्यथा शरीर-शरीरिभावेऽपि लक्षणैव; एवं निर्गुणादिपदानां हेयगुणराहित्यादिपरत्वेऽपि लक्षणैव; 'ज्ञानमुत्पन्नं नष्टमि'त्यादावुत्पत्ति-नाशपदयोः संकोच-विकासपरत्वे लक्षणैव; शरीरवाचिनां शरीरिपरत्वे मुख्ये "यस्य पृथिवी" त्यादौ पृथिव्यादिपदानां शरीरपरत्वे लक्षणैव; "तत्त्वमसी" त्यत्राप्यसिपदेऽस्तिपरत्वे लक्षणैव, त्वंपदस्य जीवमात्रपरत्वात् सूक्ष्मचिदचिद्विशिष्टपरत्वे लक्षणैव, इति लक्षणाविस्तरो भूषणादीनामपि। श्रीभाष्यमते विनाप्युपादानत्वं कथं न नियम्य-नियामकभावो द्वैतमत इव। तत्र द्वैतिभि, न केवलं शरीर-शरीरिभावम, किन्तूपादानोपादेयभावमप्यप्रामाणिकं मत्वा नियम्य-नियामकभावो व्यवस्थाप्यते। स एव पक्षो यदक्षोभ्य-विद्यारण्यविवादावसरे मध्यस्थपदमलङ्कृतवद्भिः शतदूषणीकारैः सिद्धान्तत्वेन व्यवस्थापितः, तर्हि कथं श्रीभाष्यमतस्य ब्रह्मोपादानत्ववादस्यापि निरस्तप्रायत्वं न स्वीकृतं भूषणमूलाचार्यैः? इति श्रीजयतीर्थादिभिः खण्डितस्य श्रीभाष्याभिमतब्रह्मोपादानतावादस्यान्यैः कैरपि श्रीभाष्यानुयायिभिरद्याप्यनिरासात् शतदूषणीकारैरपि तदनि-

रासात् तिलाञ्जलिरेव शतदूषणीकारैरपि प्रादायि श्रीभाष्यस्य, इति ब्रह्मो-पादनताकथाऽस्तं गता चिरादेव, इति नाद्यापि केनाप्युज्जीविता। न केवलं शरीर-शरीरिभावः, किन्तूपादानोपादेयभावोऽपि; राजभृत्यादाविव सत्यपि भेदे नियम्य-नियामकभावसंभवात्, इति स वितथ एव स्यात्॥

विवर्तोपादानत्वं विना न"सर्वं खल्विदम्" इति सामा-
नाधिकरण्यनिर्वाहः

अतो ब्रह्मण उपदानतां विना यदि नियम्य-नियामकभावो न भवति, उपादानत्वं च यदि तदर्थं स्वीकर्तव्यम्, भास्करसंमतब्रह्मपरिणामवादश्च यदि न प्रामाणिकः, तर्हि विवर्तमानतयैव तदुपादानत्वम्, नियामकत्वं च वक्तव्यम्, इति कथं वाधायां सामानाधिकरण्यं विना "सर्वं खल्विदं ब्रह्मे"-त्यादौ सामानाधिकरण्यस्य निर्वाहः?

यथाच वाधायां सामानाधिरण्ये न लक्षणा, तथा पूर्वमुपपादितम्। तदुपपादकं ब्रह्मणोऽधिष्ठानत्वम्, प्रपञ्चस्य त्वारोपितत्वं च, "यथेदं रजत-मि"त्यादौ॥

जगद्-ब्रह्मणोः सामानाधिकरण्यमध्यासेनैव

अत एव "सदेवेदमि" त्यत्राध्यारोपेणोपक्रम्य, "अद्वितीयमि" त्यप-वादेन, यत्तदद्रेश्यमि"त्यपवादेनोपक्रम्य, भूतयोनिः सर्वशयः, सर्वज्ञः, सर्ववित् तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" इत्यध्यारोपेणोपसंहार-श्चोपपद्यते! तत्रापवादेनोपक्रमस्याप्यर्थक्रमेणाध्यारोपापवादाशय एव, इति श्रुत्यनुगृहीतत्वमधिष्ठानारोप्यभावस्य॥

ब्रह्मणः प्रवेशश्रुतिरपि तत्रात्मनोऽनुवेधपरोपा-
दानतायामनुकूला

"तत् सृष्ट्वा तेदवानुप्राविशत् तदनुप्रविश्ये"त्यपि मुखं व्यादाय स्वपितीतिवद् मायोपहितस्य मायापरिणामदशायां तदात्मभावमभि-प्रेत्यैव, इति तदप्यधिष्ठानारोप्यभावस्य न प्रतिकूलम्। अत एव "सच्च त्यच्चाभवदि" ति। तत्रापि वाधायां सामानाधिकरण्येनोपसंहारः॥

अनुप्रवेशशब्दार्थस्तु सदाद्यात्मनाऽनुवर्तमानत्वमेव, येनाधिष्ठानत्वं व्यवस्थाप्यते, "इदं रजतमि" त्यादावधिष्ठानमिदं रजतादिष्वनुवर्तत इति प्रत्यक्षम्। न चानुप्रवेशशब्दार्थो विशिष्टोपादानतायां घटते। न हि विशेष्यमात्रं विशिष्टस्योपादानत्वं विना स्रष्टुं शक्नोति, न वा स्वसृष्टं

सर्वं स्वविनाभूतं पश्चादविनाभूतमिति वा व्यापकस्य ब्रह्मणोऽनुप्रवेश-शब्दार्थो मुख्यः सुवचः ॥

न हि गृहे देवदत्तस्येव ब्रह्मणः प्रवेशो मतद्वयेऽपि, किन्तु सम्बन्धमात्रमेव। स च तादात्म्यरूपेण 'सदिति'सत्तादात्म्यरूपोऽद्वैतमतेऽप्यविशिष्टः ॥

### अभिन्ननिमित्तोपादानत्वं ब्रह्मण एव

न च सृष्ट्युत्तरकालं ब्रह्मणा जगतः सम्बन्धः; सत्कार्यवादे सद्विवर्तवादे वा, पूर्वमसतोऽनन्तरमाविर्भाव इति वाऽऽरम्भवाद इवाभावात्, इति समकालिकमेव स्रष्टृत्वं, नानुप्रवेशापेक्षया। तद्धि स्रष्टुरेवोपादानत्वमित्यर्थसिद्धम्। तत्र स्रष्टृत्वं विशेष्यमात्रस्य, उपादानत्वं विशिष्टस्येति वादो श्रुत्यक्षरविरुद्धः; अन्यस्य स्रष्टृत्वम्, अन्यस्योपादानत्वमिति-स्वीकारात् ॥

अद्वैतमते तु भामतीमते, विवरणमते चोभयत्रैकस्यैव स्रष्टृत्वम्, उपादानत्वं चेति ब्रह्ममात्रोपादानतावाद एवोक्तश्रुत्यक्षरानुगुणः। सा च यदि न परिणामिता, तर्ह्यधिष्ठानत्वापरपर्यायो विवर्तमानतैव, इति "सच्च त्यच्चाभवदि"ति सामानाधिकरण्यमिव "सर्वं खल्विदं ब्रह्मे" ति सामानाधिकण्यमपि बाधायामेव सुसङ्गतम् ॥

### ब्रह्मणः स्रष्टृत्वं धर्मभूतज्ञानावस्थामादाय न भवति

एतेन—धर्मभूतज्ञानीयामवस्थामादायेति—परास्तम्; कस्य वेयं धर्मभूतज्ञानीयाऽवस्था—किं स्वरूपज्ञानस्य ब्रह्मणः, उत धर्मभूतज्ञानस्यैव। आद्ये धर्मभूतज्ञानानित्यत्वापत्तिः। स्वरूपज्ञानावस्थात्वं धर्मभूतज्ञानस्य मृदादीनां घटत्वाद्यवस्थेव चेत्, तर्हि ब्रह्मण एव परिणामविशेषो धर्मभूतज्ञानं स्यात्, इति परिणामितापत्तिः। अयमेव न्यायः प्रत्यगात्म-धर्मभूतज्ञानयोरपीति जीवानित्यतापत्तिः कृत्यान्तरम् ॥

इदमत्रानुयुज्यते—विना धर्मभूतज्ञानीयामवस्थां कथं स्रष्टृत्वम्? सर्वज्ञत्वस्य विना धर्मभूतज्ञानं दुरुपपादत्वात्। यदि स्रष्टृत्वं धर्मभूतज्ञानमपेक्ष्यैव, तर्हि धर्मभूतज्ञानीयावस्था कथं सृष्ट्युत्तरकालिका? कथं च "तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यनयोः सम्बन्धः? विना धर्मभूतं ज्ञानं स्रष्टृत्वं तु बाधितम्, अद्वैतमते तु श्रुतिसन्दर्भोऽनुगुणम् ॥

### विवर्तोपादानतायां ब्रह्मणः 'कृत्स्नप्रसक्त्य-धिकरणमपि प्रमाणम्

एतेन—कृत्स्नप्रसक्त्यधिकरणमपि—व्याख्यातम्। तद्धि ब्रह्मणो विवर्तोपादानतानिरूपणपरमिति "श्रुतेश्च शब्दमूलत्वादि" ति सूत्रभाष्य-भामत्यादौ व्यक्तम्। 'ब्रह्मणः सर्वव्याप्तिनिरूपणपरमि" ति श्रीभाष्यसि-द्धान्ते कृत्स्नस्य ब्रह्मणो व्याप्तिस्तत्तदुपाधित्वमात्रेण, न तु जाति-व्यक्त्यो-रिवेति भूषणाचार्यचरणानां सिद्धान्तः। स हि प्रायेणाद्वैतसिद्धान्तमेवानु कुरुते, इति तत्रैव व्यक्तम् ॥

स्यादेतत्—श्रुतिप्रकाशिकासंमतो जाति-व्यक्त्योरिव सम्बन्ध एव यद्यनुप्रवेशशब्दार्थः, तर्हि ब्रह्मणो गुहाप्रवेशस्तत्तज्जातिरूपत्वमिति व्यक्तम्। अतः सा जातिः सा, परा सत्ता इत्यद्वैतसिद्धान्ते सदात्मनाऽनु-वर्तमानत्वमेवानुप्रवेशः। स चाद्वैतमत एव स्वरसः ॥

### अनुप्रवेशस्तादात्म्यसम्बन्ध एव, न तु शरीर-शरीरिभावः

न हि घटसृष्ट्यनन्तरं घटत्वस्य प्रवेशः, येन सृष्ट्यनन्तरं जातिवद-नुप्रवेशोऽपि सुवचः स्यात्। न च जाति-व्यक्त्योः शरीर-शरीरिभावः, येन जातिव्यक्त्योरिव ब्रह्मणः प्रपञ्चेन सम्बन्धः शरीर-शरीरिभावनिबन्धनः स्यात्। एतेन—दृष्टान्त-दार्ष्टान्तिकयोः साम्यमपेक्षितांशमात्रतयैव, न तु शरीर-शरीरिभावादिनापीति—परास्तम्। इदमेवात्र पृच्छ्यते—केन वांशेन साम्यं जाति-व्यक्त्योः, ब्रह्म-प्रपञ्चयोश्चानुप्रवेशित्वानुप्रवेश्य-त्वयोरत्र विवक्ष्यते? अनुप्रवेशनिबन्धनश्च धर्मः को वा ब्रह्म-प्रपञ्चयोः शरीर-शरीरिभावातिरिक्तः, योऽपि नोपपद्यते। तत्रानुप्रवेशश्चिदचिद्विशिष्टे विशेष्यमात्रस्य वा, विशिष्टस्य वा। आद्ये विशिष्टोपादानतादशायामेव विशेष्यमात्रस्य स्रष्टृत्वे सृष्ट्यनन्तरमनुप्रवेशायोगः, द्वितीते तु विशिष्टस्य विशिष्टेऽनुप्रवेशो बाधितः ॥

अद्वैतमते तु चैतन्यमात्रस्य सदादिरूपेणोपादनस्याविद्योपहितस्या-नुप्रवेशः, न तु विशिष्टस्येति नानुपपन्नम्। निष्कर्षस्तु—उपाधिरिवो-पाध्यवच्छिन्नमपि शुद्धचैतन्यमौपाधिकरूपेण बाधितत्वात्, 'सन् घटः' इत्यादिप्रतीतौ घटावच्छिन्नचैतन्यस्यापि सामानाधिकरण्यं बाधायामेव। अत एवाभेदाव्यक्त्यर्था वृत्तिरिति कल्पे घटादेर्वृत्तिप्रतिफलितचैतन्यतादा-त्म्येन भानम् ॥

ब्रह्मणोऽविद्योपहितस्यैव सर्वं समाप्नोषि" इत्यत्र सम्बोध्यत्वम्

अत एव—

"सर्वं समाप्नोषि ततोऽसि सर्वः ॥"

इति शुद्धचैतन्यस्य तत्तदवच्छेदकावच्छिन्नत्वेन सर्वत्वोपपादनम्; अन्यथा सर्वशरीरकत्वेनैव सर्वत्वात् "सर्वं समाप्नोषि" इति वितथम् ॥

इदं हि मायोपहितचैतन्ये शुद्धचैतन्यांशमात्रमभिप्रेत्यैव, तेनांशेनैव ब्रह्मणो विवर्तोपादानत्वात्, इति नान्यासंबोध्यत्वम्; मायोपहितचैतन्यस्यैव विशिष्टस्य संबोध्यत्वात्। तत्रोपाध्यंशस्य नाम-रूपात्मना सर्वतादात्म्यं चैतन्यांशस्य सच्चिदानन्दात्मना तादात्म्यमिति हि विवरणप्रस्थानम् ॥

भामतीप्रस्थाने तूपहितांशस्यैवोपादानत्वम्, उपाधिस्तु केवलं सत्तामात्रेण व्यावर्तयति, इति तत्राप्युपहितस्यैव सतो बोध्यत्वम्, इत्युपधानेऽप्यविद्यया साकं सर्वेषामुपाधीनामप्यविद्यानिमित्तकानां बाधात्, इति बाधायां सामानाधिकरण्यं सुस्थम् ॥

चैतन्यस्याज्ञानविषयत्वाविरोधः, अधिष्ठानत्वं च; प्रमाणजनितवृत्तेरेवाज्ञानविरोधित्वात्

अयमत्र विवेकः—निमित्ततया, उपादानतया, उभयथा वा मूलाज्ञानमखण्डब्रह्मविषयं ब्रह्मणः सदादिभेदस्यापि कल्पकमंशतो ब्रह्मविषयकं ब्रह्मणः प्रपञ्चोपादानतोपपादककम्। तच्च तद्विषयकाखण्डाकारवृत्त्याऽज्ञाने निवृत्ते सर्वोपाधिविरहे स्वतः प्रकाशते। ततश्च स्वप्रकाशस्यापि चैतन्यस्याखण्डस्याप्यविद्याकल्पिताऽऽनन्दाद्यात्मनाऽज्ञानम्, प्रपञ्चोपादानत्वं च न व्याहन्यते। वृत्तेरेवाज्ञानविरोधित्वेन चैतन्यमात्रस्य स्वप्रकाशस्य तदविरोधित्वेन चांशभेदमात्रस्य स्वप्रकाशेऽपि चैतन्ये ज्ञानेनाधिष्ठानत्वं दुरपह्नवम् ॥

सकृदखण्डाकारवृत्त्याऽज्ञाने नष्टे घटादाविव न पुनरप्यावरणम्

तच्च ज्ञानं वेदान्तप्रमाणजनिताखण्डाकारवृत्तिः। न च तदा तत्राज्ञानकल्पिताः सदादिभेदाः सन्ति; तत्प्रयोजकस्याज्ञानस्य निवृत्तत्वात्। अतो नाज्ञानस्य दुर्घटघटनस्वभावस्याप्यखण्डाकारवृत्त्या पटुतमसंस्कारादिसचिवया नाशे ब्रह्मणः, मुक्तात्मनो वाऽखण्डस्वरूपस्य पुनरप्यावरणादिकमज्ञानप्रयुक्तम्, बाधादिकं वा समापतति ॥

अपृथक्सिद्धविशेषणवाचकानां विशिष्टवाचित्वव्युत्पत्तिमाश्रित्य शक्यार्थैक्येन सामानाधिकरण्यं सर्वत्रैकरूपमिति श्रीभाष्यानुयायिनः, उपादानोपादेयभावप्रयुक्ततादात्म्यनिबन्धनं सर्वत्र सामानाधिकरण्यमिति त्वद्वैतिनः ॥

### उपादानोपादेयभावप्रयुक्त-तादात्म्यातिरिक्त-शरीर-शरीरिभावादीनां सामानाधिकरण्योपपादकत्वायोगः

तत्रापृथक्सिद्धिप्रयोजकं किमुपादानोपादेयत्वम्, शरीर-शरीरिभावः, नियम्य-नियामकभावो वा, गुण-गुणिभावो वा किमित्येकं विवेक्तुं यदि न शक्यते, तर्हि नैकरूपं सर्वत्र सामानाधिकरण्यं सुवचम्। ब्रह्ममात्रस्य चिदचिद्भ्यां सामानाधिकरण्यं नोपादानोपादेयभावनिबन्धम्, नियम्यनियामकभावनिबन्धनं वा सामानाधिकरण्यं नियतम्; राजभृत्ययोर्व्यभिचारात्। तत्र तस्य, तयोश्च शरीर-शरीरिभावे न किमपि प्रमाणम्, न वा गुण-गुणिनोर्नियम्य-नियामकभावः। तत्र तादात्म्यमपृथक्सिद्धिरिति चानर्थान्तरम्। सर्वत्रोपादानोपादेयभावनिबन्धनं सामानाधिकरण्यमुपादानोपादेयभावाभावेऽपि प्रतिपाद्यैक्याभिप्रायम्। प्रतिपाद्यैक्यं तु भेदप्रयोजकोपाधिनिवृत्तिमात्रेण स्वरूपैक्यपर्यवसायि ॥

॥ इति बाधायां सामानाधिकरण्योपपत्तिः ॥

## संविदद्वैतोपपत्तिः

**एकविज्ञानेन सर्वविज्ञानोपपादकसंविदद्वैतविष-**
**यत्वमस्य प्रकरणस्य लक्ष्यम्**

बाधायां सामानाधिकरण्यं "सर्वं खल्विदं ब्रह्मे"त्यादावधिष्ठानारोप्यभावनिबन्धनम्, तदारोप्यस्य सत्तादशायाम्, प्रतीतिदशायाम्, तदन्यतरदशायां वा। परमार्थतस्तु संविन्मात्रमधिष्ठानमंशतोऽज्ञानविषयोऽप्यखण्डाकारसाक्षात्कारोदयेऽज्ञान-तत्प्रयुक्तसर्वोपाधिविरहे निर्विशेषं स्वयंज्योतिरवतिष्ठते। तदेव मुक्तात्मस्वरूपम्, तद्व्यतिरिक्तं किमपि स्वेन, स्वोपादानात्मना वा नास्तीत्यद्वितीयसंविन्मात्रमित्यद्वैतराद्धान्तः॥

इदं च संविन्नानात्वनिषेधेन संविदात्मत्व-समर्थनेन चोपपादितमेव। प्रकृते तु संविदतिरिक्तसर्वाभावरूपेण तन्मात्रपरिशेषोऽखण्डाकारवृत्त्याऽज्ञाने निवृत्त इति विविच्यते। यत्तु भगवता—

"यज्ज्ञात्वा नेह भूयोऽन्यद् ज्ञातव्यमवशिष्यते॥

इति गीतायाम्, "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातम्" "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति", "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"त्यादिवाचारम्भणश्रुति-प्रतिज्ञा-दृष्टान्तादिभिः श्रुतिभिरुपक्रमोपसंहाराद्युपबृंहणेनोपपाद्यते॥

**दृग्दृश्यभेदेन पदार्थद्वयम्, तत्र दृगात्मत्वमेकमेव पार-**
**मार्थिकम्, सत्यप्येवं तत्र घटादीनां परस्परासाङ्क-**
**र्यम्, प्रतिकर्मव्यवस्था, तत एवोपाधि-**
**भेदाज्जीवभेदव्यवस्था च**

तत्र प्रमाण-प्रमेय-प्रमिति-प्रमातृभेदेन व्यवहारदशायां पदार्थस्य चतुर्धा विभागेऽपि प्रमाण-प्रमिति-प्रमेयाणां दृश्यकोटिप्रवेशात् प्रमातृस्वरूपेऽपि तस्यान्तःकरणोपहितत्वेन तत्रोपाधेरपि दृश्यकोटौ प्रवेशात्, उपहितस्वरूपमात्रस्य दृग्रूपत्वात् दृग्-दृश्यभेदेन द्वेधैव तस्य विभागः॥

तत्र दृक्स्वरूपमधिष्ठानतया सर्वत्रानुगतकमेकम्, दृश्यं तु तत्तद्रूपं ततो व्यावृत्तम्, इत्येकदृगनुविद्धानां सर्वेषामेकदृगुपादानकत्वमवश्यं स्वीकर्तव्यम्। तत्तद् घट-पटादिभेदेन भिन्नानां कार्याणामेकदृगुपादान-

कत्वेऽपि परस्परव्यावृत्तत्वं तत्तदसाधारणोपादानान्तरमप्यपेक्षते, इति मृदादिरूपेणाविद्याया अपि परिणामविधया कारणत्वम् । तत्रापि तत्तन्मृत्पिण्डादिरूपेणोपादानत्वमादायैव कार्यभेदव्यवस्था, इत्येकस्य ब्रह्मणः स्वरूपेण, तत्तत्परिणाम्युपादानानां च तत्तद्रूपेण कारणत्वमिति वा, दृश एव तत्तदुपाध्यात्मना व्यावृत्तरूपेणैव विवर्तनाद्वा न कार्याणां परस्परं साङ्कर्यम्, सर्वकार्यकारित्वं वाऽऽपतति ॥

अनेन—जीवभेदोऽपि—व्याख्यातः; तत्तदुपाधिभेदेनैव तेषां भेदात्, संविद्रूपेणाभेदादिति सच्चिदात्मत्वप्रकरणे व्यक्तम् । श्रीभाष्यमतेऽपि सूक्ष्मचिद्विशिष्टरूपेण कारणस्यैकत्वेऽपि कार्यासाङ्कर्यादिकमेवमेव निर्वहणीयम्, विलक्षणयोरपि कार्य-कारणभावश्च । न च कार्य-कारणयोः सर्वात्मना साम्यम्, तथा वैषम्यं वा कुत्रापि; विनापि सालक्षण्यं केतकीगन्धे सर्वगन्धादिभ्रमो भवतीति विवरणप्रस्थाने व्यक्तम्, इति जडस्य दृश्यध्यस्तत्वेनाध्यारोपापवाद'न्यायेन सद्वितीयत्वेऽपि संविन्मात्रस्याखण्डाकारवृत्त्याऽज्ञाने निवृत्ते, तत्प्रयुक्तानां सच्चिदादिभेदानाम्, अन्येषां च कार्याणां निवृत्त्या संविदद्वैते न काऽपि बाधा ॥

### संविदद्वैतेऽपि संविदस्तदुपाधेरविद्याया अप्युपादानत्वेन न घटादिप्रतीतिविरोधः

तत्राविद्यांशे सत्कार्यवादः, संवित्स्वरूपे सद्विवर्तवादः इत्यद्वैतब्रह्मसिद्धौ व्यक्तम्, इति तत्तद्रूपेणैव मृदादीनां घटादिकारणत्वाद् न मृत्पिण्डादपि सुवर्णघटाद्यापत्तिः, इति न संविदद्वैते तन्मात्राधिष्ठानतायामद्वैतासिद्धिः ॥

### वृत्तेर्ज्ञानत्वेऽपि न संविददधिष्ठानत्वमपि ? अतः सर्वत्रानुगमोऽधिष्ठानस्य सद्रूपस्यैव

ज्ञानं हि संविद्रूपम्, वृत्तिरूपम्, वृत्त्यवच्छिन्नचैतन्यरूपं च । तत्रान्तःकरणपरिणामरूपं न मुख्यं संविद्रूपम्, न वा तत् सर्वेषामधिष्ठानम्; वृत्तिरूपस्य तत्तदुपाध्याकारविशेषैर्नानारूपाया न सर्वाधिष्ठानत्वम् ॥

अयमेव न्यायः—वृत्त्यवच्छिन्नचैतन्य-साक्षिणोरप्यधिष्ठानत्वे; उपाधिभेदेन तयोरपि नानात्वात् । अन्तःकरणोपहितस्य तत्तत्कारणशरीराज्ञानविशेषोपहितस्यैव साक्षित्वाद् न तस्याप्यैक्यम् । जीवाज्ञानपक्षे, ब्रह्माज्ञानपक्षे चोभयत्राप्यज्ञानविषयस्यैक्याद् सदेवाधिष्ठानम् । अत एव सर्वत्रानुवर्तमानत्वं संविन्मात्रस्य ॥

एतेन—घटादिविषयाणां ज्ञानानां मध्ये कस्यचित् सकलज्ञेयकल्पकत्वेष्टौ यततमस्य तत्कल्पकता, तततमस्मात् प्राक् प्रपञ्च एव न स्यात्, प्रपञ्चस्याभावे च तततमस्याप्युत्पत्त्ययोगः, सर्वकल्पनानुपपत्तिश्च; निर्विषय-निराश्रयसंविदधिष्ठानकत्वे चाविशेषात् सर्वं युगपत् कल्पितं स्यादिति—परास्तम्; संविन्मात्रस्याधिष्ठानत्वेन तत्तज्ज्ञानानामनधिष्ठानत्वे चादोषात् ॥

संविद्यध्यासेऽपि केषांचन ज्ञातैकसत्ताकत्वे, केषांञ्चन तदभावे च प्रयोजकनिष्कर्षः

संविदाश्रयत्वे युगवत् सर्वेषामारोपापत्तिस्तु नानिष्टा; अज्ञानोपहितचैतन्य आरोपिता ज्ञायमानाः केवलं सत्तयैवारोप्यन्ते, न तु ज्ञायमानतया शुक्तिरूप्यादय इव। तत्र हि साक्षिचैतन्यं विषयचैतन्याभिन्नमधिष्ठानम्, इत्यन्तःकरणेनाज्ञानविषयताया निर्मूलत्वात् ज्ञायमानतयाऽधिष्ठानत्वं युक्तम्, मूलाविद्याविषयाध्यस्तानां त्वज्ञाततयैवाध्यासः, न तु ज्ञायमानतयाऽपि। शुक्तिरूप्यादि तु ज्ञाततयैव। अत एव घटादीनां न सर्वदा भानम्। 'सर्वं वस्तु ज्ञाततया, अज्ञाततया वा साक्षिभास्यमि'ति ह्यद्वैतराद्धान्तः, इति न सर्वदा सर्वमपीक्ष्यते; अभानापादकाज्ञाननिवर्तकवृत्त्यन्तःकरणान्यतरोपधानं विना न 'भाती'ति व्यवहारप्रसंगः, 'अस्ती'ति परोक्षज्ञानमप्यत एव व्याख्यातम्; असत्त्वापादकाज्ञाननिवर्तकवृत्तिविषयतायां तस्याप्यसंभवात्। सत्यप्येवमखण्डाकारवृत्त्या शास्त्रजन्ययाऽज्ञानस्य, तत्प्रयुक्तानां च निवृत्त्या संविन्मात्राद्वैतसिद्धिरप्रत्यूहा ॥

तत्र तद्रूपं संविन्मात्रं स्वप्रकाशमज्ञानविषयत्वादधिष्ठानम्, सद्वितीयं च; वृत्तिमात्रोपधानात् सर्वोपाधिविरहे तदेवाद्वितीयं च। अविद्यावस्थायां सद्वितीयत्वम्, बाधे त्वज्ञानादेरद्वैतमिति विवेकः ॥

स्वप्रकाशसंवित्तादात्म्येऽप्येकस्य सत्यत्वमपरस्य मिथ्यात्वमविरुद्धम्

तत्रा'हं'ज्ञानं सदा निवृत्तावरणं तत्तदुपाधिमात्रोपहितं स्वयंप्रकाशमपि न संशय-विपर्ययादिगोचरः; अज्ञानविरोध्यन्तःकरणोपधानात्। न चैवं स्वप्रकाशमज्ञानोपहितं संविन्मात्रम्; तस्य स्वप्रकाशस्याप्यज्ञानोपहितस्य तद्विषयत्वेनावृतस्य तदधिष्ठानत्वेन तत्तदारोप्यवत्तया प्रतीतिर्यवदखण्डाकारवृत्ति न विरुध्यते। अतो नाधिष्ठानरूपसंवित्स्वरूपवत्

तत्राऽऽरोप्यस्य ज्ञेयस्यापि सत्यत्वम् , प्रथमस्य बाधकज्ञानविषयत्वात् , द्वितीयस्य बाधकज्ञानबाध्यत्वाच्च ॥

मिथ्यात्वेऽपि यावद्बाधं सत्त्वेन प्रतीत्यविशेषः

बाधकज्ञानबाध्यमपि यावद्बाधं दृश्यं सर्वमबाध्यात्वाद् लौकिक-पारमार्थिकम् , अधिष्ठानज्ञानस्वरूपं तु त्रिकालाबाध्यम् । अत एव प्रथमं गौणं तत्त्वम् ; अबाधितत्वसामान्यात् , द्वितीयं तु मुख्यं तत्त्वम् ; सार्वदिकाबाध्यत्वात् । श्रीभाष्यमते तु आभूतसंप्लवस्थायित्वेनाकाशादिवद् नित्यम् परमात्मा तु सार्वदिकस्थायित्वेन मुख्यं नित्यम् । न चैतावताऽत्र व्याहतिः,

अयमेव न्यायो दृश्यानां संविदश्च तत्त्वतायाम् , अबाध्यतापरपर्यायायाम् ॥

एतेन—उपाधिभेदेन न चैतन्यभेदः, तत्तदुपाध्यवच्छिन्नरूपेण नित्यत्वानित्यत्वे, स्वरूपतोऽबाध्यत्वं च चैतन्यस्य—व्याख्यातम् ; यथा घटाकाश-मठाकाश-महाकाशादौ ॥

वृत्तिनिर्गमाऽज्ञानत्रैविध्य-भावरूपाज्ञानविषये वक्तव्यमद्वैततत्त्वशुद्ध्यादौ, अत्रापि तत्र तत्र व्यक्तम् ॥

भामतीमते ब्रह्मण एवोपादानत्वेऽपि नाम-रूपादिभानाविरोधः
तत्रापि कल्पान्तर इव नाम-रूपयोः प्रपञ्चनियतधर्मत्वमेव, सत्त्वादीनां च ब्रह्मनियतत्त्वम्

यत्तु—भामतीमतेऽविद्याया निमित्तकारणमात्रत्वेन सत्ता-भानानन्द-नाम-रूप-पञ्चकवत्त्वं विषयाणां बाधितम्—इति, तदिदं ब्रह्मण एव नैसर्गिकं प्रावाहिम् , नित्यं वोक्तसत्ताभानाऽऽनन्द-नाम-रूपप्रपञ्चविवर्तस्यात्यन्तवैलक्षण्येऽपि स्वीकाराद् न विरुध्यते ॥

आवृतं हि चैतन्यमनाद्यविद्याऽऽत्मना यथा भाति, तथा घटाद्यात्मनाऽपि भाति । न ह्यविद्यापरिणामात्मनैव ब्रह्म भाति; अन्यथाऽज्ञानादीनां ब्रह्मविवर्तत्वानुपपत्त्या तत्त्वज्ञानबाध्यत्वं नोपपद्येत , इति तु प्रस्थानान्तरमात्रम् ॥

तत्र सद्रूपत्व-प्रकाशस्वभावत्वानन्दस्वरूपत्वानि ब्रह्मणोऽसाधारणधर्माः; सर्वब्रह्मकार्यानुगतत्वात् , तत्तन्नाम-रूपे तु तत्तद्व्यक्तिगते;

व्यावृत्तत्वात् , इति भामतीमतेऽपि सत्तादीति त्रीणि रूपाणि ब्रह्मण एव। घटादीनाम् , अविद्यादीनां चानादीनां स्वाभाविके द्वे रूपे नाम रूपाख्ये; अन्यथा सत्तादीनां तत्तद्विवर्तस्वभावत्वे नाम-रूपयोरिव व्यावृत्तत्त्वापत्तिः, तत्तन्नाम-रूपयोर्वाऽनुवृत्तत्वापत्तिरिति महानेव सङ्कर आपद्येत् ॥

### स्वप्रकाशसंविदा नित्यसम्बन्धेऽपि विदिताविदित-त्रिभागाद्युपपत्तिः

तत्र संविन्मात्रस्य मुख्यज्ञानत्वेऽपि तदवच्छेदकत्वमात्रेण तत्तादात्म्यमात्रेण वा सर्वेषां विदितत्वाविदितत्वोपपत्त्या न विदिताविदितविभागानुपपत्तिः। विदिताविदितविवेकस्य वृत्त्यवच्छिन्नचैतन्याभिन्नप्रमातृ चैतन्यावच्छेदकत्व-साक्षिसम्बन्धान्यतरतदभावप्रयुक्तत्वेन संविन्मात्रसम्बन्धासम्बन्धयोस्तदप्रयोजकत्वात्। संविदसम्बद्धविषयासंभवात् न तद्भावोऽपि तत्प्रयोजकः। अत एव देवदत्तेन ज्ञातस्य यज्ञदत्तेन, घटज्ञानेन पटस्य, एकघटज्ञानेन घटान्तराणां च ज्ञानम् , प्राथमिकघटज्ञानेनैव सार्वदिकतद्घटज्ञानम्, परोक्षज्ञानेनापरोक्षज्ञानं वाऽद्वैतमते न समापतति ॥

तत्र—

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।"

इति सिद्धान्तात् परोक्षज्ञानमपि क्षणविषयकमेव, यथा शब्दः। तत्र सत्ताया कालस्य च प्रत्यक्षवेद्यत्वम्। तत्र परोक्षज्ञाने नीरूपस्यापि भानेऽपि प्रत्यक्षे कथं नीरूपस्य ज्ञानमिति शङ्कायां रूपवत्त्वं न प्रत्यक्षे प्रयोजकमिति तत्र निर्धार्यते। न चैतावता प्रत्यक्षत्वमेव कालस्य, इति क्षणभेदेन परोक्षज्ञानमपि तत्तत्क्षणविशेषविषयकं भिन्नमेव। अतस्तत्रापि ज्ञाताज्ञातविषयताभेदात् विदिताविदितविवेकः ॥

धारावाहिकज्ञानमपि प्रत्यक्षमिव परोक्षमपि यावद्विरोधिवृत्त्युत्पत्तिपर्यन्तमेकमेव। तथाचाज्ञातायां संविद्यध्यासमात्रेण न सर्वेषां सर्वदा भानापत्तिः, न वा सर्वदाऽभानापत्तिः। वृत्तिप्रयुक्तावरणविषयतानिवृत्तितदभावाभ्यां भानाभानयोरुपपत्तेः ॥

### श्रीभाष्यमते सकृत् ज्ञातस्य पुनरज्ञानं विरुद्धम्, नैवमद्वैतमते

तत्र यथा श्रीभाष्यमते धर्मभूतज्ञानं पुरुषभेदेन भिन्नम् , एवमद्वैतमतेऽपि वृत्तिभेदेन साक्षिभेदः समानः। विशेषस्तु प्रतिक्षणं वृत्ति-

भेदोऽज्ञानविषयताभेदश्चाद्वैतमते। श्रीभाष्यमते तु धर्मभूतज्ञानं तत्तत्पुरुषदृष्ट्यापि भिन्नम्, इत्येकेन प्रथमं घटे ज्ञाते तस्यैव ज्ञानस्य नित्यस्य सर्वदा वर्तमानत्वात् तदज्ञानस्यापि निवृत्तत्वात् कथं घटादेः पुनरज्ञानमिति ?

यदि तस्य नाशात् पुनरज्ञानम्, तर्हि धर्मभूतज्ञानं प्रतिपुरुषमपि पौनःपुन्येन संकोच-विकासास्पदं संकोच-विकासावस्थाभेदात् भिन्नभिन्नाज्ञानविषयताविरोधित्वेनैव प्रकाशकं तद्विषयाणामिति स्वीकर्तव्यम्, अन्यथा सकृत् ज्ञातस्य कथं पुनरप्यज्ञानम्, भानं वा? सामग्रीभेदनिबन्धनप्रसरणभेदेन विभिन्नविषयसंपर्कात् तत्तदवस्थापन्नज्ञानानामेव सविषयकत्वं तु विषयभेदे यद्यपि संभवति; एकस्यैव विषयस्य ज्ञानाज्ञाने तु विषयभेदाभावेन धर्मभूतज्ञानभेदाभावात् कथमुपपद्यते? इति घटादेरेकविषयस्य, विदिताविदितविभागानापत्तिः श्रीभाष्यमते दुर्वारा॥

ततः क्षणभेदेन, विषयभेदेन, सामग्रीप्रसरणभेदेन च तदुपपत्तिर्वर्णनीया, इति विदिताविदितविभागो वृत्तिज्ञानभेदसम्बन्धासम्बन्धकृतोऽद्वैतमते। एकसंविदधिष्ठानकत्वेऽपि न विरुध्यते, इत्यन्तःकरणपरिणामरूपज्ञानभेदेन, तत्सम्बन्धासम्बन्धकृतेन च भेदेन विदिताविदितविषयकत्वमित्येव स्वीकर्तव्यम्, न तु नित्यसंवित्सम्बन्ध-तदभावनिबन्धनो विदिताविदितविवेक इत्येव गतिरुभयत्र॥

अहमर्थो न मुख्यात्मा सुषुप्ति-मुक्त्यादावहमंशाभानात्, स तूपहित एव। अयमेव न्यायः साक्षिण्यपि

एतेन—प्रमाताऽपि—व्याख्यातः। स हि चिदचिद्ग्रन्थिरूपोऽप्यचिदुपहितसंविदात्मनैवाहमर्थः, न तु केवलमहङ्कारः, इत्यहङ्कारमात्रस्य सुषुप्तौ लयेऽपि तद्घटकं संविन्मात्रमहङ्कारोपलक्षितम्, न केवलं सुषुप्तौ, किन्तु मुक्तावप्यनुवर्तेत। हृदयग्रन्थिमात्रस्य मुक्तौ निवृत्तेः, उपहितस्य चिदंशस्यानिवृत्तेः। तथा च श्रुतिः—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"

इति। तत्र सुषुप्तस्य कारणात्मनाहङ्कारोपहितस्य स्वरूपेण जागर उपधानाद् न प्रत्यभिज्ञाविरोधः, मुक्तस्य तु न प्रत्यभिज्ञा; तत्र स्वप्रकाशमात्मस्वरूपं संविन्मात्रं न स्वप्रकाशार्थं ज्ञानान्तरमपेक्षते; अन्यथा घटादिवदस्वप्रकाशत्वापत्तिरिति व्यक्तमधस्तात्॥

साक्षिभास्यत्वेऽप्यज्ञानस्याज्ञातत्वमेव विदिताविदितवि-
भागो वृत्ति-तदभावाभ्यामेव

एतेन—साक्षिभास्यत्वमपि—व्याख्यातम्। साक्षी हि स्वसम्बद्धं सर्वं साक्षाद् भासयति, परम्परया तु स्वभास्यज्ञानभास्यविषयमपि; साक्षात्साक्ष्यसम्बद्धज्ञानाज्ञानद्वारा वा स्वासम्बद्धं तु न भासयति, इत्यज्ञानस्यापि साक्षिभास्यत्वेऽपि न तावता विदितत्वव्यपदेशः। अज्ञानं हि साक्षिभास्यमप्यविदितमेव, न तु ज्ञानमिव विदितम्, इत्यज्ञानस्य साक्षिभास्यत्वेऽपि विदिताविदितविवेकोपपत्तिः। संविन्मात्रसम्बन्धेन तु न विदितत्वम्, किन्तु वृत्तिज्ञानमादाय विदितत्वं स्वीकरणीयम्॥

न च संविन्मात्रं प्रमाणानाघ्रातम्; औपनिषदत्वात्तस्य सर्वप्रमाणानाघ्रातत्वानुपपत्तेः। यावच्छास्त्रप्रवृत्ति तु स्वयंप्रकाशतया स्वतः सिद्धसंविन्मात्रं नासत्कल्पमिति ब्रह्मसिद्धावुक्तम्। ब्रह्मसिद्धिरियं यद्यपि नोपाधिनिवृत्तिदशामभिप्रेत्यैवासत्कल्पत्वं निरस्यति; तथापि घटादिप्रतीतिदशाया अप्युपलक्षणम्। तदा हि 'सन् घटः' इत्यनुगतैकसदनुविद्धप्रतीतेरेव तत्र प्रमाणत्वात् नासत्कल्पता संविन्मात्रस्य। अत एव नीरूपस्यापि ब्रह्मणोऽपि प्रत्यक्षविषयत्वम्—

"न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते॥"

इति नयेनोपहितं ब्रह्म शास्त्रविषय इति तु शास्त्रजन्यवृत्त्युपधानप्रयुक्तावरणाभावात् संविन्मात्रमित्येवं परम्। तच्च स्वतःसिद्धं स्वप्रकाशचैतन्यमेव। तत्र वृत्त्योपाधिभूतयाऽविद्याया उपाधेर्नाशः; समानविषयकत्वादुभयोरित्यपि व्यक्तमधस्तात्। अद्वैतसिद्धौ ह्यविद्याद्युपाधिविशिष्टतया विनाशः, उपाधिमिथ्यात्वप्रयुक्तविशिष्टमिथ्यात्वं च वर्णितम्, न तु कार्यानन्वय्युपाध्युपहितस्यात्र मिथ्यात्वम्, विशेषणपरत्वादत्रोपाधिपदस्य। अतस्तत्तदुपाधिविशिष्टस्योपाधिद्वारा शुद्धचैतन्याधिष्ठानस्योपाधिविशिष्टरूपेण मिथ्यात्वेऽपि संविन्मात्रस्याधिष्ठानस्य मिथ्यात्वे न मानम्॥

सर्वथा तु संविन्मात्राधिष्ठानत्वे संविन्मात्रस्य प्रमातुः, अन्तःकरणावच्छिन्नस्य च भेदाद् न सर्वेषां सार्वज्ञम्, विदिताविदितविभागानुपपत्तिश्च॥

### अखण्डाकारवृत्तिदशायां न ज्ञान-ज्ञेय-ज्ञात्रादिविभागः; ततः पूर्वं तु विदिताविदितविभागादिकम्, उपहितानुपहितभेदश्च

तत्र संविन्मात्राधिष्ठानज्ञानं न प्रमाता, न वाऽखण्डाकारवृत्तिविषयः प्रमाता, तदा सर्वोपाधीनां विलयात्। तत्राऽऽद्ये संविद्यज्ञाताया-मध्यारोपादज्ञाततैव, द्वितीये तु न ज्ञातता, न वाऽज्ञातता; निर्विषयत्वात्, अज्ञातत्त्वाभावाच्च, इति ज्ञाताज्ञातविभागोऽप्यज्ञानेनाऽऽवरणाऽनवरणदशायामेव वक्तव्यः॥

तत्र च वृत्तिसम्बन्ध-तदभावावेव प्रयोजकावित्युक्तम्। संविन्मात्रस्य मुक्तावप्यसत्कल्पत्वं तु स्वप्रकाशत्वात् तस्य न क्षोदक्षममिति ब्रह्मसिद्धावुक्तमत्राप्यनुसन्धेयम्॥

सोपाधिका संविन्नाना, निरुपाधिका त्वेका। साश्रयत्व-सविषयत्वादिकं वृत्तिरूपायाः संविदः, धर्मभूतज्ञानस्य वा, आत्मस्वरूपज्ञानस्य तु न साश्रयत्व-सविषयकत्वे, तत्प्रयुक्तनानात्वं चेत्यादि संविदात्मत्व-तद्नानात्वादि-प्रकरणेषु व्यक्तम्। अखण्डाकारवृत्तिविषयः सर्वोपाधिशून्यं स्वयंज्योतिःस्वभावं च संविन्मात्रं तु स्वव्यतिरिक्तस्य, स्वस्मिन्नध्यारोपितस्य च सर्वस्य समूलाज्ञानस्य निवृत्तत्वात् स्वमात्रस्य परिशेषितत्वाच्चाद्वैतमेव, यस्यैकस्य ज्ञानात् सर्वविज्ञानप्रतिज्ञादि, यदेवाभिप्रेत्य—

"ज्ञानं विज्ञानसहितमिदं वक्ष्याम्यशेषतः।
यद् ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते॥"

इति गीता, इत्यलमधिकेनात्राप्रस्तुतेन॥

इति संविदद्वैतोपपत्तिः

# उपदेशानुपपत्तिः

मुक्तस्वरूपम् , अनावृतसंवित्स्वरूपमात्रम् , मुख्यतत्त्वदृष्ट्यो-
पदेशानुपपत्तिस्तदुपपत्तिर्वोभयोरपि
सिद्धान्तयोः

सर्वेषु संप्रदायेष्विवाद्वैतसम्प्रदायेऽपि नारायण-ब्रह्म-वसिष्ठ-शक्ति-पराशर-व्यास-शुक-गौडपाद-गोविन्दभगवत्पादक्रमेण, पद्मपाद-हस्तामलक-तोटकसुरेश्वराख्यतच्छिष्यवर्ग-तत्तच्छिष्यवर्गक्रमेण, तत्तच्छिष्यपरम्परया, च तत्त्वोपदेशः, परम्पराक्रमेणानुवर्तमानो दरीदृश्यते। न चेयमुपदेशक-परम्परा तदुपदेशो वाऽद्वैतवादेनोपपद्यते ॥

तत्र यदीश्वरे लीलारसोचितोपदेशादिव्यवहारः सम्प्रतिपन्नः, तर्हि भगवतो वासुदेवस्यार्जुनं प्रत्यात्मतत्त्वोपदेशः लीलारसोचितो नानुपपन्नः इति "न त्वेवाहमि" ति श्लोकेऽर्जुनं प्रति भगवतो गीतोपदेशानुपपत्तिः शतदूषण्यैव खण्डिता ॥

तत्र 'स्वव्यतिरिक्तानन्तसंसारिचेतनसद्भावेने'ति लिखन्ती तात्पर्यचन्द्रिका यदीश्वरात् पृथक्भूतान् संसारिण उद्दिश्योपदेशं समर्थयति, तर्हि जीवेश्वरयोरात्यन्तिकभेदो योगाचार्यस्य दृष्टया, न तु स्वापृथक्सिद्धिर्जीवानामनन्तानामिति फलति ॥

इदमेवात्र पृच्छयते—कथं स्वापृथक्सिद्धान् जीवान् स्वपृथक्सिद्धान् मत्वा भगवतो गीतोपदेष्टृत्वम् ? तत्रार्जुनोऽपि नरावतारो नातत्त्वज्ञानी बद्धात्मा संसारी शिष्यत्वेनाभिनयमात्रलीलारस आत्मानं न तदपृथक्सिद्धं तच्छरीरं मन्यते, इत्युभावपि शरीर-शरीरिभावं विशदमनवगच्छन्तौ कथं गुरु-शिष्यभावमर्हतः श्रीभाष्यमते ?

यद्यपृथक्सिद्धावपि तद्घटकभेदांशमात्रेण लीलारसोऽयमभिनयः, तर्हि नात्मतत्त्वोपदेशो गीताचार्यस्य तत्त्वदर्शिपदमधिष्ठाय संभवति, इति स्वयमुरीकृतप्रायं शतदूषण्या ॥

तत्र संसारिणोऽपि परम्परमात्मतत्त्वमविदुषो भगवान् स्वापृथक्सिद्धान् पश्यति शरीरित्वात्तस्य, इत्यर्जुनं व्याजीकृत्य श्रीगीतावतरणमित्यप्यनुपपन्नम् ॥

"तत्र तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥"

इति स्वयं भगवान् स्वस्येव तत्त्वदर्शिनामन्येषामप्युपदेष्टृत्वमनुजानाति। तत्त्वदर्शिनश्च भगवन्तमेव सर्वात्मानं मन्वाना सर्वं चेतनाचेतनवर्गं भगवन्तमेव पश्यन्त आत्मानमिव सर्वमपि भगवच्छरीरमेव समीक्षणमाणाः परमात्मपृथक्भूतं कमप्यनवलोकमानाः कं वोद्दिश्य ज्ञानमुपदेक्ष्यन्ति? तेन हि परमात्माऽपृथक्सिद्धमात्मानम्, अन्यांश्च तथाविधान् पश्यन्तः तदा तदा परमात्मानमपि शिष्यं गृहीत्वोपदिशन्तीति वक्तव्यम्। अर्जुनोऽपि स्वशरीरतया गृह्यमाण एव यद्युपदेश्यः, तर्हि नायमर्जुनं प्रत्युपदेशः, किन्तु स्वात्मानं प्रति, स्वशरीरं प्रति वेति को नामाऽनुन्मत्त एवमुपदेष्टा श्रीभाष्यसिद्धान्तेऽपि स्यात्? लीलारसमयाभिनयकथा कामं दूर आस्ताम्। अत उपदेशानुपपत्तिः श्रीभाष्यमते, न केवलं भगवतः, किन्तु तत्त्वज्ञानिनां वसिष्ठ-पराशरादीनामपि॥

तत्र यदि तत्त्वज्ञानिनां मुक्तात्मतायामेव परमात्मशरीरत्वेनात्मनोऽनुसन्धानम्, यावन्मुक्ति मात्रया तद्भेदानुसन्धानमपि वर्तते, इत्यामुक्ति तत्त्वज्ञानिनामुपदेशो न दोषाय, तर्हि स एव न्यायोऽनुसन्धीयतामद्वैतसिद्धान्तेऽपि, इति कथमद्वैतसिद्धान्तमात्र उपदेशानुपपत्तिः?

तत्र श्रीभाष्यसिद्धान्ते त्र्यन्तसिद्धान्ततत्त्वत्रयं व्यवहारदृष्ट्या, निष्कर्षविधया वा। परमार्थतस्तु तत्त्वद्वयविशिष्टमेकमेव तत्त्वम्। तत्रैकस्य मुक्तस्य सर्वशरीरितया परमात्मस्वरूपसाक्षात्कारेऽन्येऽपि वस्तुगत्या न मुक्ता इति यदि नैकमुक्तौ सर्वमुक्तिः भगवच्छरीरत्वेऽपि न तथाऽऽत्मानमवलोकयन्ति, तर्हि स एष न्यायोऽद्वैतमतेऽप्येकस्य तत्त्वज्ञानेऽप्यन्यस्यातत्त्वज्ञानाद् यावन्मुक्ति तत्त्वज्ञानिनाम्, अतत्त्वज्ञानिनां वाऽमुक्तानां विवेकः, उपदेष्टृत्वं तु न मुक्तानाम्, किन्तु तत्त्वज्ञानिनामेव॥

उत्पन्नमात्रमात्मनस्तज्ज्ञानं न फलाय, अतस्तदभ्यासोऽत्र-
र्जनीया जीवन्मुक्तानाम्, अतस्तेषां द्वारो-
पदेशोऽपपत्तिः

सत्यपि तत्त्वज्ञाने यावद् न भगवतः संकल्पोदयः, तावत् तत्त्वज्ञानाभ्यासस्तत्त्वज्ञानिनामपि-"आवृत्त्यसकृदुपदेश" न्यायेनावर्जनीयः श्रीभाष्यसिद्धान्तेऽपि एवमेवाऽऽमुक्ति यावदज्ञानस्य, तत्संस्कारस्य वा निवृत्तिस्तावत्पर्यन्तमात्मतत्त्वसाक्षात्कार आवर्तनीयः। आवृत्तिश्च स्वयं तत्त्व-

साक्षात्कारस्याविच्छिन्नमभ्यसनेन, शिष्यान् प्रत्युपदेशेन, परस्परं ज्ञानिभिः साकं चिन्तनेन च, न तु प्रथमोत्पन्नेन, बहुकालमनभ्यस्यमानेन वा तत्त्वज्ञानेनापि, इयतैव कालेन मुक्तिरित्यत्र न कापि विनिगमना। अभ्यासपाटवम्, प्रारब्धभोगोपभोगश्चोभौ सर्वत्र तत्त्वज्ञानफलोदयस्य पराकाष्ठाऽद्वैतसिद्धान्ते। श्रीभाष्ये तूत्पन्नमात्रे तत्त्वज्ञाने, किं बहुना? प्रपत्तिमात्रेणापि सन्तुष्टो भगवान् विनैव तत्त्वज्ञानाभ्यासमपि केषांचन मुक्तिप्रदानाय संकल्पते, इति भगवत्संकल्पमात्राधीना मुक्तिः, इति सत्यपि भगवत्संकल्पे प्रारब्धशेषः, अभ्यासपाटवादिकं सर्वमकिञ्चित्करम्॥

इदमनेन विशदम्—यावत्प्रारब्धभोगोपशमं तत्त्वज्ञानिनः सुलभा अद्वैतसिद्धान्ते स्थितिप्रज्ञाः गुणातीताः, जीवन्मुक्ता वा, येषामुपदेशकत्वम्, श्रीभाष्यमत इवेत्यव्याहतम्॥

तत्त्वज्ञानित्वातत्त्वज्ञानित्वे उपदेष्टृत्व-तदभावावपि
समानावुभयत्र

एतेन—

"अद्वैततत्त्वविज्ञश्चेत् नोपदेष्टा भवेदसौ।
उपदेष्टुं प्रवृत्तश्चेत् भ्रान्त एव भवेदसौ॥"

इति—परास्तम्॥

"श्रीभाष्यतत्त्वविज्ञश्चेत् नोपदेष्टा भवेदसौ।
उपदेष्टुं प्रवृत्तश्चेत् भ्रान्त एव भवेदसौ॥"

इति हि समानम्। उक्तरीत्या तत्त्वज्ञाननिबन्धनं ह्युपदेष्टृत्वं यदि न तत्त्वज्ञानिनामपि, तर्हि किमुपदेष्टृत्वं तत्त्वज्ञाननिबन्धनम्? अतत्त्वज्ञानिनो ह्युपदेष्टृत्वे—

"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥"

इति भगवद्वचनमप्यतत्त्वज्ञानिवचनम्, अप्रमाणम्, भ्रान्तवचनं वाऽऽपद्येत। तत्र यद्यद्वैतं न तत्त्वम्, तर्हि 'अद्वैततत्त्वविज्ञश्चेदि' त्यपार्थम्। परमं तु तत्त्वमद्वैतमेव, यत्रापि तत्त्वज्ञानिनो जीवन्मुक्ताः तत्त्वसाक्षात्कारपाटवार्थं यतमाना बहवो महात्मनः स्वयमभ्यासपाटवार्थं परस्परं विचारेण चाऽऽमुक्ति कालं क्षिपन्तस्तत्र तत्रासन्, कुत्रापि भवितुमर्हन्ति च। तथा च गीता—

"मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानयोगेन भास्वता ॥"

इति ।

गीताया 'मां'पदार्थो ज्ञेयप्रकरण संविन्मात्रमेव

'मां' शब्दार्थस्त्वत्र "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इतिन्यायेन "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥" इत्युक्तविध एव, प्रत्यगभिन्न-संविन्मात्रज्ञानिन एव, इति तत्त्वज्ञानिनामुपदेष्टृत्वं कथं न भवति ?

भ्रान्तत्वं त्वतत्त्वस्य तत्त्वतया ज्ञानेन, न तु तत्त्वस्य तत्त्वतया ज्ञानेन । तत्र यदि स्वापृथक्सिद्धमर्जुनं स्वपृथक्सिद्धं मन्वानो भगवान् न भ्रान्तः, तर्हि शास्त्रतः सर्वोपाधिविरहितं स्वयंज्योतिःस्वरूपमात्मानं जानन्नप्य-भ्यासपाटवेन समाधितो व्युत्थाय व्यवहरन्नपि कथमतत्त्वज्ञानी, कुतो वाऽभ्यासपाटवार्थं परस्परं तत्त्वं कथयन्तोऽपि न तत्त्वज्ञानिन इति निर्णीतिः शास्त्रार्थः ? फलविलम्बस्त्वकिञ्चित्करः, इति सविशेषब्रह्मज्ञानि-नामिव निर्विशेषात्मतत्त्वज्ञानिनामप्युपदेष्टृत्वं यावदज्ञानसंस्कारानुवृत्ति न व्याहन्यते ॥

तत्र यथा श्रीभाष्यमतं जीवं यदि स्वशरीरत्वेन परमात्मा गृह्णाति, तत्त्वज्ञानी वा परमात्मानं सर्वात्मत्वेन, तदाऽऽत्मानमपि स्वशरीरमिव मत्वा भगवानन्यस्मै स्वशरीरायोपदिशतीति मन्यते, तथाऽद्वैतसिद्धान्तेऽपि स्वा-त्मानं यथावदवगत्यार्जुनमप्युपाधिभेदात् भिन्नमिवत्मानो मन्यमानमुपदि-देशेति विवक्षायां को वा दोषः ? तत्त्वज्ञानी भगवान् लीलामात्रेण तत्त्व-मर्जुनायोपदिशतीति तु समानम् ॥

श्रवणजनितं ज्ञानं तत्त्वज्ञानम् , किन्त्वभ्यस्यमानमेव

न हि जन्यज्ञानमात्रमनिवृत्ताज्ञानानामपि तत्त्वज्ञानम् ॥ तद्धि तत्त्वज्ञानमप्यभ्यासापाटवादकार्यकारि केवलम् , न तु तावताऽतत्त्वज्ञान-मपि; अन्यथा तत्त्वज्ञानमात्रेण मुक्तौ श्रीभाष्यमतेऽपि दुर्लभा एव तत्त्व-ज्ञानिन उपदेष्टारः ॥

### वस्तुगत्यैक्यसाक्षात्कारे सर्वव्यवहारविरोधः

वस्तुत ऐक्यं जीवानाम्, जीव-ब्रह्मणोर्वा न भेदव्यवहारप्रतिबन्धी, किन्तु विधूताविद्यानिबन्धनभेदस्वरूपात्मना प्रकाश एव तद्विरोधी, इति तावत्पर्यन्तमुपदेष्टृत्वमबाधम्। सर्वस्य लीलारसस्य, अन्यस्य वा मिथ्यात्वं चैतन्यव्यतिरेकेणाभावसाक्षात्कारान्तरकालिकः कार्यकारी तदैव, न तु तद्बाधदशायामपि, इति मिथ्याशब्दप्रयोगमात्रेणाद्वैतवादनिरसनं शास्त्राणामेवाप्रमाणीकरणम्। न च स्वरूपतः शास्त्राणां मिथ्यात्वेऽपि विषयतस्तस्याप्रामाण्यमिति पूर्वमुक्तम्, इति सर्वप्रमाणप्रामाण्यवादो यथासंभवमद्वैतसिद्धान्तेऽपि सम्भवति॥

### भगवतः, आधिकारिकाणामिव बाधितानुवृत्त्योपदेष्टृत्वम् तच्च जीवन्मुक्तादीनामपि

तत्र भगवान् वासुदेवोऽप्यद्वैततत्त्वमेव परमार्थमुपदिशति, साक्षाच्छङ्करावतारभूता भगवत्पादा अपि तथा, इति नाद्वैतोपदेशोऽनुपपन्नः, अन्यथा श्रीभाष्यतत्त्वोपदेशोऽपि कथम्? प्रयोजनं त्वद्वैतसिद्धान्तेऽपि, शिष्याणां तत्त्वज्ञानार्थमेव श्रीभाष्यमत इव तत्र तत्त्वज्ञानिनां बाधितानुवृत्त्योपदेष्टृत्वम्; भगवतोऽपि स्वेच्छाकल्पितस्य शरीरस्य बाधितानुवृत्तिकल्पत्वात्॥

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।<br>परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥"

इति वचनात् यावत्स्वाधिकारसमाप्ति जीवन्मुक्तकल्पस्य गौणमुक्तस्यैव स्वीकारेण तदवतारस्यापि तथात्वस्यैवोचितत्वात् जीवन्मुक्ततुल्यत्वमेव, इति तद्वदेवोपदेष्टृत्वम्। तत्र गौणमुक्तानां ब्रह्मादीनाम्, तद्देशवासिनां वा तत्त्वज्ञानिनां तत्तदिच्छैव माया, अन्येषां तु गुणत्रयवती माया। मायास्रष्टृत्वमेव सर्वत्र भोग्यवर्गाणाम्, इति ब्रह्मादयोऽपि मायावशादेव व्यवहरन्तोऽप्युपदेश्यानां तत्त्वज्ञानिनोऽपि तदभ्यासपाटवार्थमेव यतन्ते, इति न कोऽपि दोषः॥

सर्वेषामुपदेष्टॄणां विक्षेपशक्तिमात्रेणानुवर्तमानमायानामेवोपदेष्टृत्वम्। सा च विक्षेपशक्तिमात्रं भगवदिच्छा वा, अन्यद्वेरन्यदेतत्। बाधितानुवृत्तिरियं विक्षेपशक्तिमात्रानुवृत्तिरित्यपि कल्पः कल्पते। विनाऽविद्यासंस्कारम्, विक्षेपमात्रं वा वोपदेष्टृत्वं न कस्यापि॥

### यावत्संविन्मात्रत्वमुपदेश्योपदेशकभावो मिथ्यात्वग्रहेऽपि, ततस्तु न किमपि

एतेन—तत्त्वज्ञानिनां साक्षात्कृतात्मतत्त्वानाम्, निर्विचिकित्साश्रवणाद्यधीनापरोक्षज्ञानवतामप्युपदेश्यानां मिथ्यात्वेन ग्रहणाद् नोपदेष्टृत्वमिति—परास्तम्। मिथ्यात्वग्रहो हि भाव्येतेषाम्, न तु विद्यमानोऽपि, इति न ततस्तस्योपदेशघातकत्वम्। उपदेशफलं तु स्वस्यैवोपदेश्यानामप्यभ्यासपाटवे नाज्ञाननिवृत्तिर्भाविनी न विरुध्यते। न च यावदज्ञानसंस्कारनिवृत्ति जीवब्रह्मैक्यम्, तदैक्ये तूपदेशानुपपत्तिः। न त्वैक्यं केवलं परोक्षतयाऽवधृते। न हि राजपुत्रस्य राजत्वं भाव्यवद् धृतमपि राजकार्यकारि यावाद्राजत्वसम्पत्ति, ऐक्यसम्पत्तौ तु नोपदेशकस्य, उपदेश्यस्य वोपदेश्योपदेशकभावः। न हि मुक्तं प्रति शास्त्राणां प्रवृत्तिः, किन्तु मुमुक्षुं प्रति। मुक्तस्तु तत्त्वज्ञानी तादृशो मुमुक्षुं प्रति तत्त्वमुपदेष्टुं प्रभवति यावन्मुक्त्युपदेश्योपदेशकयोस्तत्तदुपाधिभेदभिन्नयोर्नैक्यं; भेदप्रयोजकाज्ञानानुवृत्त्या, इति कथं तयोरैक्यम्?

### नारायणादीनां परम्परागुरूणामसिद्धोपदेष्टृत्वोपपत्तिरद्वैतमतेऽपि

एतेन—

"नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।"

इत्यद्वैतसम्प्रदायपरम्पराऽपि—व्याख्याता। तत्र नारायणोऽपि यदि मायाशरीरः सविशेषः परमात्मा, तर्ह्यनेकजीववादे सर्वमुक्तौ मोक्ष्यत्येव। आत्यन्तिकमुक्तिपर्यन्तं तु स्वेच्छाकल्पितशरीरः सन् लीलारसो विहरन्नेव स्थास्यति। एवमेवान्येऽपि भगवत्पादपर्यन्ता जीवन्मुक्ता एव सन्तो देहपातान्ते मुक्ता इति सांप्रदायिकः पन्थाः। अन्येषु तु त्वस्मदाचार्यपर्यन्तेषु के वा मुक्ताः, के वाऽपरोक्षसाक्षात्कारवन्त आसन्? के वा सन्तीति तु स्वयं तदेकप्रत्यक्षमिदम्। ब्रह्मेन्द्रादयः केचन स जीवन्मुक्ता आसन्निति प्रसिद्धमिदम्। भगवत्पादसिंहासनाधिष्ठिताः साम्प्रतमपि जीवन्मुक्तवदेव व्यवहरन्ति॥

### गुरुपरम्परायां पितृ-पुत्रभावः केवलगुरुशिष्यभावव्यवस्था च

तत्र नारयणमारभ्य शुकपर्यन्तं न केवलं गुरु-शिष्यभावः, किन्तु पितृ-पुत्रभावोऽपि। पराशरविषये 'तत्पुत्रे'ति विशिष्य निर्देशस्तु मध्यमणिन्यायेन पितृ-पुत्रभावस्य पूर्वमुत्तरं च गोविन्दभगवत्पर्यन्तमनुषङ्गार्थमिति

शारीरकमीमांसाभाष्यवार्तिकमवगमयति। तेन च भगवत्पादमारभ्य केवलं गुरु-शिष्यभाव एव। अत एव तेषामाचार्यत्वेनैव प्रसिद्धिः, तेन च नारायणस्योपक्रमः पितृपुत्रभावेनापि, शङ्कराचार्योपक्रमस्तु गुरु-शिष्यभावमात्रेणेति फलति। एतेन—शुकस्य गौडपादाचार्यस्य च न सम्बन्धलेशोऽपीत्यश्रद्धेयत्वमद्वैतसिद्धान्तस्येति—परास्तम्॥

### अद्वैतसिद्धान्ते शैव-वैष्णवादीनामिव न लिङ्गधारणं नियतम्, वैकल्पिकत्वात्तस्य यथासम्भवं प्रामाणिकत्वम्

शैवलिङ्गधारणम्, वैष्णवलिङ्गधारणं चाप्रयोजकम्; अद्वैतिनां सर्वदेवैक्यपरत्वात्, पञ्चायतनपूजासम्प्रदायस्यैवानादित्वात्, साक्षाच्छङ्करावतारविस्तारितत्वादद्वैतसिद्धान्तस्य, शैवलिङ्गधारणसम्प्रदायमात्रं नाद्वैतविरोधि। तत्र तत्तल्लिङ्गधारणं वैकल्पिकं शास्त्रसिद्धत्वात्॥

तत्र जीवन्मुक्तानां मुक्तात्मवत् सर्वोपाधिरहितस्वयंज्योतिरात्मस्वभावतयाऽवस्थानात्, देहादिबाधितसंस्कारोपहितत्वात्, विक्षेपशक्तिमात्रमायोपहितत्वाद्वा, शरीराभिमानराहित्येऽपि श्रीराम-कृष्णाद्यवताराणामिव सर्वोऽपि व्यवहारो न दोषाय॥

### भगवत इव जीवन्मुक्तादीनामप्युपदेष्टृत्वाविरोधः, इति नोन्मत्तकथा

तत्र यदीश्वरस्य सर्वज्ञत्वादर्जुनदर्शनाभ्यास-शरणागतत्वाभिमतपुरुषोद्देश्यकोपदेशाभ्यासादीनां पृथक् पृथगवस्थितानां कदाचित् संस्कारोन्मेषवशादुन्मत्तव्यवहारेष्विव पूर्वोत्तरभावकल्पना, तर्हि जीवन्मुक्तानामपि संस्कारोन्मेषवशादुपदेशाभ्यासादिकमुपपद्यत एव। तत्रेश्वरस्य यदि लीलारसोऽकामहतत्वेऽपि, तर्हि "श्रोत्रियस्य चाकामहतस्ये"ति ब्रह्मसमानस्य कथं न लीलारस एवोपदेष्टृत्वादि॥

तत्र गौणमुक्तात्मनामाजानजदेवादीनां ब्रह्मान्तानां जगद्व्यापारवर्जं प्राप्तब्रह्मसाधर्म्याणां स्वभोगमात्रोपयुक्तजगत्सृष्टिर्यदि लीलामात्रं सत्यकामानाम्, प्राप्तकामानामपि, तद्वाप्तकामानाम्, अकामहतानां च जीवन्मुक्तानामपि प्राक्तनसंस्कारोन्मेषवशादुन्मत्तवद् व्यवहरणमपि लीलामात्रमेव; अप्रयोजनत्वेऽपि विनैवोद्यमं क्रियमाणक्रिया हि लीलामात्रमात्ममात्रतोषाय, यथा बालानां क्रीडाविशेषा इति तु निष्कर्षः॥

### प्रतिबिम्बं प्रति बिम्बस्योपदेष्टृत्वमपि नोन्मत्तकथा; छायादेव्यादौ दर्शनात्

एतेन—प्रतिबिम्वं प्रति बिम्वस्योपदेश उन्मत्तव्यवहार इति—व्याख्यातम्। तत्र हि भूषणमप्यत्रैवेश्वरस्योपदेशो प्राचीनसंस्कारोन्मेषवशादुत्तरव्यवहारसमान इति लिखति। भूषणी तु प्रतिबिम्वं प्रति बिम्वेनोपदेशोऽनुन्मत्तानामपि बहुशो दरीदृश्यत इति प्रत्युत्तरति—छायादेवी-संज्ञादेव्यादिदृष्टान्तेन ॥

### छायादेव्या अस्पष्टप्रतिच्छायाचेतना, न प्रतिबिम्ब एव

तत्र भूषणम्—प्रतिबिम्बोऽत्र संज्ञादेव्या अस्पष्टं प्रतिच्छायाभानमिति वदति। इदमेवात्र पृच्छ्यते प्रतिच्छायाया अस्पष्टाया अप्यचेतनत्वाविशेषात् यदि तया सह संवादः, तस्या भगवता सूर्येणापि पत्नीवद् व्यवहरणम्, तत्र सन्तानवृद्धिश्च भगवतः सूर्यस्योन्मादं नापादयति, तर्हि भगवतो वासुदेवस्यार्जुनं स्वप्रतिबिम्वं प्रत्युपदेशोऽपि कथमुन्मादमापादयितुमीष्टे ?

"प्रतिबिम्वतुल्यां छायामन्यस्त्रियं कृत्वे"ति श्रीधरीयविवरणेनापि चैतन्यस्यापि प्रतिफलितत्वेन छायाऽपि तदीया चेतनैवासीदिति यदि गम्यते, तर्हि जीवप्रतिबिम्ववादेऽपि चैतन्यप्रतिफलनविशिष्टचिच्छायापर्यन्तमन्तःकरणमेव जीवः। स च शरीराद्युपाधिकोऽर्जुनादिव्यपदेश्य इति कथमर्जुनं प्रति भगवत उपदेश उन्मत्तस्योपदेशः ?

वस्तुतस्तु—तस्येश्वरप्रतिबिम्वत्वमन्तःकरणोपहित उपहितांशस्यैव, न तूपहितस्य प्रमातृचैतन्यस्य, न तरां सूक्ष्मशरीरान्तरोपहितस्य, स्थूलशरीरेणोपहितस्य। तत्रार्जुनत्वं स्थूलशरीरोपहितत्वरूपेणैव, न तु सूक्ष्मकारणशरीरोपहितरूपेणापि। अत एव सुषुप्तस्य जागरनाम्नोद्बोधनेऽप्यनुद्बोधो वालाक्यप्यजतशत्रुसंवादे, इत्यर्जुनस्य भगवत्प्रतिबिम्बत्वोल्लेखोऽप्यनुपपन्नः, वाधितश्च ॥

छायादेवीविषये तु चैतन्यविशिष्टाया एव छायायाः, न केवलं स्वशरीरस्य, किन्तु स्वसामर्थ्येन स्वस्वीयदिव्यसूक्ष्मकारणशरीरोपहितस्यापि तत्तद्वासनाविशिष्टस्यैव छायादेवीत्वात्, तत्सदृशान्यसृष्टौ संज्ञादेवीवदेव सर्वव्यवहारस्य दुष्करत्वात् योगमहिम्ना शरीरद्वयेऽपि सौभर्यादिवनु प्रवेशकल्पने छायादेव्या संज्ञादेव्याश्चोभयोरपि पत्नीत्वेन निर्देशस्यासंभ-

वात्, तथा कल्पने प्रमाणाभावाच्च प्रतिबिम्बं प्रति बिम्बेनोपदेशादिक-मव्याहतम् ॥

सर्वथा तु जीवस्येश्वरमुख्यप्रतिबिम्बत्वेऽप्यर्जुनस्य शरीरत्रयोपहितस्य तत्प्रतिबिम्बत्वाभावात् तस्यापि प्रतिबिम्बत्वेऽपि छायादेवीदृष्टान्तेनोप-देशोपपत्तेश्च नात्र किमप्यनाञ्जस्यम्। सर्वथा चेश्वरादन्यत्वं जीवात्मनो न संभवति। तत्र भूषणमतेऽपि भगवतः स्वापृथक्सिद्धैरर्जुनादिभि-र्व्यवहार उन्मत्तव्यवहारतुल्य इति प्रतिपादनात् कथं नोन्मत्तव्यवहा-रापत्तिः श्रीभाष्यमते, भूषणव्यवस्थायां वेति तु निष्कर्षः ॥

### अद्वैतसिद्धान्तस्य नास्तिकसिद्धान्तत्वनिरासः

एतेन—अद्वैतिनां नास्तिकत्वोपन्यासोऽपि—परास्तः। यत् सत्स्वरूप-मस्ति पदव्यपदेश्यम्, अबाध्यम्, तदस्तीति प्रतीयते व्यवहारदशायाम्, पारमर्थिकदशायां वा, तत् तदा तत्रैव तेनैव रूपेण नास्तीति वदन्तो हि नास्तिकाः। सति घटे भूतले तत्रैव तदैव नास्तीति वदन्नपि नास्तिक एव, परन्तु नात्राऽस्तिपदव्यवदेश्यं पदार्थमात्रम्, किन्तु परलोकादि न चाद्वैतिनः परलोकमीश्वरमन्यं वा तत्त्वं वेदैकसमधिगम्यं नास्तीति वदन्ति, किन्त्वस्तीत्येव ॥

वस्तुतस्तु—त्रिकालाबाध्यं बाध्यमिति वदन्त एव नास्तिकाः, न तु मिथ्याभूतं मिथ्येति वदन्तोऽपीत्येवात्र विवक्षितम्। निःशेषितसकलो-पाधिप्रतिभासो मुक्तात्मा तु न शिष्यः, न वा गुरुरिति विशदमनुपदमेवो-क्तम्, जीवन्मुक्तास्तु मुक्ततुल्या अपि न मुक्ताः, इति "बोधयन्तः परस्प-रमि"त्युपपन्नम् ॥

### जीवन्मुक्तानामुपदेष्टृत्वोपसंहारः

एतेन—कथं चासावुपदेष्टा, जीवन्मुक्तो वा वेदान्तश्रवणजनितात्म-साक्षात्कारनिःशेषिततत्त्वप्रतिभासे शिष्ये सत्यतां प्रत्येष्यतीति—परास्तम्; जीवन्मुक्तस्य संस्कारात्मनाऽनुवर्तमानप्रारब्धफलभोगमात्रयोग्य-देहादिमतो न निःशेषिततत्त्वप्रतिभासत्वं मुक्तस्यैवेति हि विशदमुपपादि-तमधस्तात् ॥

जीवन्मुक्ता अपि कथयन्तः परस्परम्, अभ्यासपाटवार्थं मन्वानाः, निदिध्यासमानाः, गुरु-शिष्यभावमभिनयन्तश्चोपनिषत्सु विद्यावंशपरम्प-

रादर्शनात् आख्यायिकाविशेषाच्च दृश्यन्ते, इति का वा बाधा गुरु-शिष्याभावाभावेऽपि परस्परं जीवन्मुक्तानाम् ?

विचारविनिमयो हि गुरुशिष्यभावेन, वादि-प्रतिवादिभावेन, सौहार्देन, अन्यथा वा प्राप्तात्मतत्त्वसाक्षात्कारदृढीकरणार्थं जीवन्मुक्तानामपि संभवति ॥

### अर्जुनं व्याजीकृत्य गीतोपदेशः सर्वार्थः

अर्जुनोऽपि नरावतारः परमात्मनो ज्ञानमयदिव्यशरीरावतारो भगवानिव प्राप्तात्मसाक्षात्कारः केवलं शिष्यभावमभिनयति—अस्थानस्नेहस्य, धर्माधर्माज्ञानस्य, तदधीनवैयाकुल्यादिकस्य च भगवान् वासुदेव इव। अत एव "पार्थं प्रपन्नमुद्दिश्ये"त्यस्य तं व्याजीकृत्य विवरणं गीतार्थसंग्रहव्याख्यायाम् ॥

न चार्जुनविषये तं प्रत्युपदिष्टार्थोपदेशस्य तदनुष्ठानानुपयोगित्वम्, अन्यथा—

"नष्टो मोहः स्मृतिर्लब्धा, त्वत्प्रसादान्मयाऽच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥"

इत्युक्त्वार्जुनस्य युद्धे सोत्साहं प्रवृत्तिर्नोपपद्येत ॥

न च भगवत इवार्जुनस्याप्यभिनयो निष्प्रयोजनः; तं व्याजीकृत्य कृतस्योपदेशस्य सर्वार्थतया तद्वदस्थानस्नेह-कारुण्य-धर्माधर्माज्ञान-वैयाकुल्यादिशालिनामेवंप्रकारमेव कर्तव्यमिति ज्ञानजननेन साफल्यात् ॥

### गीतायां श्रीकृष्णार्जुनयोर्गुरु-शिष्यभावः

तत्र गीतायां भगवताऽर्जुनं प्रत्युपदेश आचार्यभावेनैव, न तु भगवद्भावेन। अत एवार्जुनस्य—"शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इति गुरु-शिष्यभावेनैवोपदेशस्योपक्रमः, न तु भगवद्-भागवतभावेन। अनेन ज्ञाप्यतेऽधिगततत्त्वसाक्षात्काराणां गुरुशिष्यभावोऽप्यभिनयेनेति, अन्यथा किमर्थं गुरु-शिष्यभावेनोपक्रमः ॥

### तत्त्वसाक्षात्कारवन्त इव परोक्षज्ञानिनोऽप्युपदेष्टारो भवितुमर्हन्ति

न च जीवन्मुक्तानामेवोपदेशकत्वेनोपदेशोपपत्तिः, किन्तु वेदान्ततो न्यायसिद्धमर्थं परीक्ष्याधिगतनिर्विचिकित्सपरोक्षज्ञानिनः परीक्ष्य निर्णीत-

मर्थमनिवृत्ताविद्या अप्युपदेष्टुं प्रभवन्ति, इति तेषामुपदेशकत्वेनाप्युपदेशोपपत्तिः। अत एव मीमांसा मननादिविधया। जीवा हि सोपाधिकाः स्वयमपरोक्षतया, परेषामनुमेयतया च सिद्धाः स्वस्यैवान्यस्यापि विचारनिर्णीतार्थस्य शास्त्रमात्रशरणा उपदेष्टारो भवन्ति, परन्तु निदिध्यासन-साक्षात्कारयोः पाटवेन बहव एव फलभाजो जन्मान्तरीयसुकृतपरिपाकवशादात्मतत्त्वसाक्षात्कारावाप्त्या, यानभिप्रेत्येयं गीता—

"स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥

इति। अत एव गीता—

"अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥
तत्र ते बुद्धिसंयोगं लभन्ते पूर्वदैहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥"

इति। तत्र तत्त्वोपदेशः, उपदेष्टुः स्वस्य साक्षात्कारपाटवार्थः, येन संस्कारात्मनाऽनुवर्तमानानां बाधितानां तद्विकल्पनानां मूलाविद्यात्मना पुनरुन्मज्जनेन जीवन्मुक्तानां पुनरपि जन्मान्तरप्रसङ्गो वार्यते; अन्यथा जडभरतादीनामिव प्रारब्धशेषकालिकविकारादिना पुनरपि जन्मान्तरग्रहणमापद्येत। साक्षात्कारपाटवेन तु न संस्कारात्मनाऽनुवर्तमानानां साविद्यादीनां पुनरपि बन्धनिदानत्वमिति निर्धार्यते ॥

न चात्रानिवृत्ताया अविद्यायाः साक्षात्कारापाटवे निवृत्तिः, किन्तु संस्कारात्मना देहादीनां स्वपूर्वरूपतापादनम्, इत्युपदेष्टुः साक्षात्कारपाटवार्थमुपदेशकत्वम् ॥

सनियमं गीताया श्रवण एवात्मसाक्षात्कारः, न तु गुरुपरम्परां विना सक्षात्काराधीनाऽविद्यानिवृत्तिः, गीताया नार्जुनमात्रविषयत्वं च

एतेन—तत्त्वोपदेशश्रोतुः साक्षात्कारार्थं तत्त्वोपदेश इति—व्याख्यातम्; तस्याप्यज्ञातात्मतत्त्वस्योपदेशमहिम्ना साक्षात्कारस्य संभवात्। अन्यस्यानुद्दिष्टस्यापि श्रोतुः साक्षात्कारो यद्यपि भवति; तथापि—"आचा-

यद्धयेव खल्वधीता विद्या वीर्यवत्तरा भवती" ति श्रुत्याऽनुदिष्टस्य श्रोतुर्गुरूपसदनादिरहितस्य स साक्षात्कारो न वीर्यवान् भवति। अत एव—

"कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वा धर्मसंमूढचेताः।
यच्छ्रेयः स्याद् निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥"

"समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि" ति गुरूपसदननियमं विना प्रपन्नस्यापि न वीर्यवान् साक्षात्कारो भविष्यतीत्यभिप्रेत्यैव भगवता गीतम्—

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥"

इति। तत्त्वज्ञानिनां सनियमोपसदनेनैवात्मतत्त्वोपदेशोऽयं वीर्यवान् जिज्ञासूनां भवति, नान्यथेति ॥

तत्रार्जुनो गीतायामुद्दिष्टः कर्मयोगमात्रमुख्याधिकारितया, न भक्तियोग-ज्ञानयोगाधिकारिदृष्ट्या। तत्र कर्मयोगस्यापि साङ्ख्ययोगतत्त्वज्ञानपर्यवसायित्वादर्जुनो न मुख्यतन्मात्राधिकारितयोद्दिष्ट इति त्वन्यदेतत् ॥

अत एव पार्थं प्रपन्नमुद्दिश्य=तं व्याजीकृत्य गीतावतरणमिति भगवद्यामुनाचार्याः। अनेन ज्ञायते—नात्रार्जुनमात्रमुद्दिश्य गीतोपदेशः, किन्त्वन्येऽपि श्रोतारो भगवदुद्दिष्टाः; तथाप्यर्जुनस्याप्युपदेशफलं साक्षात्कारो यद्यपि भवति, परं तु न स वीर्यवान् , इति, ज्ञानिनां गुरूपसदने सनियमे भगवता नियोगोऽर्जुनं प्रति। अतो नात्र सम्प्रदायविलोपकथा ॥

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इत्यविद्या-तत्सम्बन्धादीनामनादित्वमुक्तम्। तेन चाविद्येव तत्संयोगोऽप्यनादिरविद्ययैव कल्पितः। तत्र यावत्तत्त्वसाक्षात्कारं ब्रह्माविद्याश्रयविषयम्, तद्विषयमात्रं वाऽज्ञानम्। उत्पन्ने तु तत्त्वसाक्षात्कारेऽज्ञाननिवर्तनक्षमे निवृत्ताविद्यं ब्रह्म, न तु ततः प्राक् , इति वस्तुगत्या निवृत्ताविद्यमपि ब्रह्म तत्त्वसाक्षात्कारात् पूर्वमज्ञातत्वात् तदविद्यानिवृत्त्यर्थस्ततत्त्वोपदेश इति सुगमः पन्थाः ॥

### तत्त्वोपदेशो नाविद्यावरणनिवृत्तिमात्रार्थम् , किन्तु ब्रह्मणस्तदाश्रयत्वनिरासार्थमपि

न च ब्रह्म सदानिवृत्ताविद्यमिति वस्तुस्थितिकथनमात्रम् , न तु तत्स्वभाववर्णनमिदम्। परमार्थतोऽविद्याविरहस्तु साक्षात्कारदशायाम् , तदनन्तरक्षणे वा; अनादित्वादविद्या-तद्योगयोः। तत्राविद्या-तद्योगयोरनादित्ववर्णनेन स्वरूपतोऽविद्यावत्त्वं ब्रह्मणः, तत्तिरोधानेन तद्योगश्च विवक्ष्यते ॥

तत्राऽविद्याश्रयत्वाभावाभिप्रायेण निवृत्ताविद्यत्वम् , तदावरणनिरासाभिप्रायेणोपदेशसार्थक्यमिति विभागः। अतो नाविद्याश्रयत्वनिरासमात्रार्थं तत्त्वोपदेशः, तथा सति ह्यन्योन्याश्रयस्याऽऽपत्त्या नानावृतं ब्रह्म सिध्यति, इति तदाश्रयणमपि निवर्तनीयमित्यभिप्रायेणोपदेशोपपत्तिः ॥

### अपरोक्षनिश्चयवत् परोक्षनिश्चयोऽपि कार्यकारी, इति यावदात्मसाक्षात्कारमुपदेशोपपत्तिरविकला

तेन च न ब्रह्मणोऽविद्याश्रयत्वे निर्भरः, किन्तु तद्विषयत्व एव प्रस्थानद्वयाभिप्रेते निर्भर इति सूच्यते, इति सावरणाविद्यानिरासार्थोपदेशोपपत्तिः प्रस्थानद्वयसंमताऽत्र विवक्ष्यते। निर्मूलाविद्यानिवृत्त्यर्थमुपदेश इत्यस्याप्येवमेवाशयः। अतः परोक्षनिश्चवतामप्युपदेशोपपत्तिरविद्यानिवृत्तिपर्यवसायित्वादविकला ॥

न च परोक्षनिर्विचिकित्सज्ञानिनाम् , तदपरोक्षज्ञानिनां वोपदेशस्तत्त्वावेदनविमुखः; उभयेषामप्युपदेशस्य तत्त्वज्ञानाभिमुखत्वात्। आत्मैक्यं मुक्त्यवस्थामाश्रित्य, न तु बद्धावस्थां मुमुक्षावस्थामाश्रित्य वा; इति यावत्तत्त्वसाक्षात्कारमात्मभेदस्यानिवारणादद्वैतमते नात्मभेदासिद्धिः, न वाऽत्मभेदाभावत् गुरु-शिष्यभावाद्ययोगेनोपदेशानुपपत्तिरिति विवेकः ॥

आत्मेतरसर्वमिथ्यात्वमपि मुक्त्यवस्थामभिप्रेत्यैव। तत्र यस्यैकस्यैक्यविरोधिनोपाधिना सम्बन्धः, तस्य तत्सम्बन्धविमोकनिबन्धना मुक्त्यवस्था। तत्र ब्रह्मणोऽपि सत्त्वाधिकमायोपाधिकसम्बन्धप्रयुक्तभेदविमोकनिबन्धनमुक्त्यवस्थायामैक्यं संभवति, किं बहुना ? सर्वाधिष्ठानत्वाद् ब्रह्मणस्तत्र कल्पितसर्वोपाधिसम्बन्धेन, घटाद्यवच्छेदकभेदेन वा तत्तदवच्छिन्नचैतन्यभेदस्योपाधिसम्बन्धभेदप्रयुक्तभेदस्य मुक्त्यवस्थायामेव विमोकः, यथा घटाकाशाद्युपाधिभेदप्रयुक्तभेदस्य तदुपाधि-

विरहदशायाम्, इति तदैक्यमबाधम्। सर्वस्योपाधेर्विनाशेन, बाधेन वा मुक्त्यवस्थायामात्मैक्येऽपि तावत्पर्यन्तं भेदो वर्तते, इति नोपदेश्योपदेशकथाऽनुपपत्तिः ॥

### "उत्क्रमिष्यतः" इति सूत्रं श्रीभाष्यप्रतिकूलम्, नाद्वैतस्य, काशकृत्स्नमतद्वैतत्त्वपरम् सिद्धान्ते, औपाधिकभेदनिवृत्तिपरत्वात्तस्य

"उत्क्रमिष्यत एवंभावादित्यौडुलोमिः" इति सूत्रस्य पूर्वपक्षत्वं तूत्क्रान्तिसापेक्षत्वं मुक्तेरिति पक्षस्याप्रामाणिकत्वेन, इति तत् तन्निरपेक्षमुक्तिपक्षप्रतिकूलम्, श्रीभाष्यमते तूत्क्रान्तिसापेक्षत्वाद् मुक्तेः औडुलोमिमतस्य पाञ्चरात्रसिद्धान्तत्वाच्च तस्य पूर्वपक्षत्वं नोचितमिति पूर्वमुक्तम् ॥

न चाद्वैतमते काशकृत्स्नमतस्यैव सिद्धान्तत्वविरोधः; औपाधिकत्वावस्थायामुपहितांशमात्रैक्यस्याद्वैतसिद्धान्तत्वात्। न चोपदेश्योपदेशभावस्तावन्मात्रस्य, इति यावन्मुक्ति भेद औपाधिकरूपेण, ततस्तु न तेनापि रूपेण; उपाधीनां मिथ्यात्वादिति तु हृदयम् ॥

### "तत्त्वमसी"त्यस्य न व्यक्तिद्वयैक्यमर्थः, किन्तु निरुपाधिकस्वरूपमात्रता

अमुमेवार्थमभिप्रेत्य "तत्त्वमसी" त्यादौ विशेषणांशत्यागेन स्वरूपमात्रमैक्यं वाक्यार्थः, इति सर्वज्ञत्व-किञ्चिज्ज्ञत्वादेः साङ्कर्यायोगेन व्यक्तिद्वयैक्यस्याविवक्षणेन च धर्मत्यागलक्षणाऽप्यत एवोपपद्यते। न चात्र सर्वज्ञत्व-किञ्चिज्ज्ञत्वविशिष्टव्यक्त्योरैक्यं संभवति। तत्तु यदि शरीर-शरीरिभावेन मुक्तात्मनः, तर्हि श्रीभाष्यमतेऽपि सर्वज्ञत्वाद् न किञ्चिज्ज्ञसर्वज्ञव्यक्त्यैक्यमत्र वाक्यार्थः। धर्मभूतज्ञानसंकोचावस्थाप्रयुक्तं हि किञ्चिज्ज्ञत्वं तद्विरहाद् मुक्त्यवस्थायां संभवति। जागराद्यवस्थायामपि न धर्मभूतज्ञानस्यैकान्तेन संकोच एव, इति भाविनीमवस्थामाश्रित्य व्यक्तिद्वयैक्य औडुलोमिमतप्रवेशापत्तिः। यावत्त्वावस्थानं व्यक्तिद्वयैक्यं तु सुषुप्तौ, प्रलये वा। न च तां दशामेवादाय "तत्त्वमसी"ति वाक्यम्। सृष्टिप्रक्रमणेन "तत्त्वमसी" त्युपदेशस्यैकविज्ञानेन सर्वविज्ञानोपादनार्थत्वस्यैवौचित्यात्। अहमर्थमुख्यात्मत्वनिरासप्रकरणे त्वधिकम् ॥

अपरोक्षज्ञानिनामिव परोक्षज्ञानिनामप्युपदेष्टृत्वाविरोधः

अयं भावः—अपरोक्षज्ञानिनो जीवन्मुक्तस्य समाधिदशायामनुभूतैकात्मतत्त्वस्वरूपोपदेष्टृत्वं व्युत्थितदशायाम्। परोक्षज्ञानिनस्तु स्वयमप्रत्यक्षीकृतस्य शास्त्रप्रमाणैकनिष्ठस्य सविशेषब्रह्मण इव स्वानपरोक्षितस्याप्युपदेशो न विरुध्यते। निर्विशेषाऽऽत्मतत्त्वोपदेष्टृत्वं "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति न्यायात्। शास्त्रदृष्टिश्चेयं शास्त्रार्थज्ञानजा परोक्षा, अपरोक्षा वा प्रस्थानभेदेनेति त्वन्यदेतत्॥

श्रीभाष्यमतेऽप्युपदेशानुपपत्तिः समाना

एतेन—निर्विशेषावस्थायाः शास्त्रमुखेन विज्ञाय सविशेषावस्थाया इवोपदेशो न विरुध्यते; अन्यथा सविशेषब्रह्मणोऽपि वैकुण्ठनाथस्य स्वरूपतः स्वशरीरितया वाऽप्रत्यक्षस्य कथं श्रीभाष्यकारादिभिरुपदेशोऽपि न नोपपद्यते? इति परमतेऽप्युपदेशानुपपत्तिः समाना॥

सर्वान्तर्यामिण एवोपदेष्टृत्वे हेयोपादेयाविवेकापत्तिः

न च सर्वत्र परमात्मन एवोपदेष्टृत्वम्, न भाष्यकारादेरिति वाचोयुक्तिः कबन्धदृष्टान्तेन युक्तिसहा; अन्यथाऽद्वैततत्त्वोपदेशकोऽप्यन्तर्यामी परमात्मैवेति समानत्वात् कथमन्तर्याम्युपदेशो प्रमाणम्?

वस्तुतस्तु—श्रीभाष्यमते साङ्ख्य-योग-पाशुपत-नैयायिक-वैशेषिक-सौगत-चार्वाकादिदर्शनतत्त्वोपदेष्टाऽपि परमात्मैवान्तर्यामी, तथा यादवप्रकाशादिसिद्धान्तोपदेष्टापि, इति कथमन्तर्यामिण एवोपदेष्टृत्वे हेयोपादेयव्यवस्था सम्प्रादायेष्वन्यतमस्य॥

मौनेन व्याख्यानमभ्यासपाटवस्योपलक्षणाभिप्रायम्, श्रीभाष्यमते तु तदनुपपन्नम्; सविशेषस्य श्रौतत्वादेव

एतेन—मौनेन व्याख्यानमपि—व्याख्यातम्; वेदान्तश्रावितस्यापि मनन-निदिध्यासनपरिपाकनिबन्धनस्वानुभवैकवेद्यत्व एव तस्य तात्पर्यात्। सविशेषब्रह्मवादे तु कथं वाचामगोचरत्वम्? कथं वा मौनम्? असङ्ख्येयगुणाभिप्रायं मौनमिति तु शास्त्रेऽसङ्ख्येयकल्याणगुणाकरत्वं ब्रह्मणो यदि प्रतिपादितम्, तर्हि तत एव न मौनम्, तदप्रतिपादने तु तदर्थतात्पर्यकत्वाध्यवसायनिर्बन्धोऽप्रामाणिकः, निर्गुणादिवाक्यविरुद्धश्च, इति यावदुपासनमुपास्यस्य यावच्छ्रुतगुणविशिष्टता, न ततोऽधिकगुणविशि-

ष्टता ब्रह्मण; अश्रौतगुणानामुपास्यानामनुपास्यानां च तत्र कल्पने प्रमाणाभावात् ॥

असङ्ख्येया ब्रह्मगुणा ज्ञानमात्रस्याप्युपदिश्यमाना अध्यारोपनयेन नेयाः, इति निर्विशेषतैव परमार्थः

सन्ति हि बहवो ब्रह्मणो गुणा जगत्कारणत्वानिरूपकाः, तदुपादकेष्वपि बहवोऽनुपास्याः, येषां परम्परया ब्रह्मस्वरूपप्रतिपादन एव पर्यवसानम्, यथाऽन्नरसमयः अन्ये चत्वारश्च, प्रियशिरस्कत्वादयः, तत्र यदि तेषामपि ब्रह्मगुणत्वम्, तर्हि कथं तेषामनुपास्यत्वम्, अनुपास्यत्वे च न तेषां तज्ज्ञानमात्रे यद्युपयोगः, तर्हि ज्ञानमात्रस्योपदिश्यमाना गुणा अध्यारोपापवादन्यायेनैव निर्दिश्यन्ते, इति निर्विशेषतैव ब्रह्मणः परमार्थ इति निगदव्याख्यातम् ॥

निर्विशेषवाक्यानामपवादविधया प्रवृत्त्याऽद्वैतमात्रपर्यवसायित्वम्

तत्र "यतो वाचो निवर्तन्ते" इति वाक्यमविद्यानिवृत्तिपर्यन्तमेव शास्त्राणां प्रवृत्तिः, न त्वनावृत-स्वप्रकाश निर्विशेषस्वरूपपर्यन्तं शब्दानां व्यापार इत्यभिप्रायम्। निर्विशेषवाक्यमपि भेदकधर्मनिवृत्तिपर्यन्ताभिप्रायम, न तु स्वरूपबोधनाभिप्रायम्, इति न निर्विशेषवाद उपदेशानुपपत्तिः। वेदपूर्वकोऽयमुपदेशो निर्विशेषस्य वेदार्थस्योपपादनमन्तरा न घटते ॥

सन्ति हि साम्प्रतमपि स्थितप्रज्ञा उपदेष्टारः। न चेदं प्रत्यक्षबाधितम्। तत्र यदि भूषणस्येमे न प्रत्यक्षाः, तर्हि मा नाम प्रत्यक्षा भवन्तु, ये केचन ते भवन्तु। इदमेवात्र पृच्छ्यते—किं साक्षात्कृतसविशेषतत्त्वाः केचन भूषणस्योपदेष्टारो वर्तन्ते वा, न वा। आद्ये प्रत्यक्षविरोधः, अन्त्ये कथं स्वयमाचार्यपुरुषत्वादिप्रचारेण सर्वप्रलोभनम्? इत्यलमेतावता ॥

॥ इत्युपदेशोपपत्तिः ॥

## तिरोधानोपपत्तिः

#### जीवेश्वरस्वरूपविवेकः, तिरोधाननिबन्धनं च

सत्यपि जीवब्रह्मैक्ये जीवत्वेनेश्वरत्वे न च तयोर्भेदः। तत्र जीवस्य जीवत्वमाविद्याकान्तःकरणादितादात्म्याध्यासात्, जीवेश्वरयोर्बिम्ब-प्रतिबिम्बभावेनोपाधेः प्रतिबिम्बमात्रपक्षपातित्वेन चेश्वरवत् सर्वज्ञत्व-सर्वशक्तित्व-सत्यसंकल्पत्वाद्यभावेश्वरेण रूपेण न जगत्स्रष्टृत्वम्; तिरोहितत्वादैश्वरस्य रूपस्य, पराभिध्यानेन तदुपाधिनिवृत्तौ तु विवरणमते जीवस्यापि सत्यसंकल्पत्वादिकम्; यावत्सर्वमुक्तीश्वरभावस्यैव मुक्तात्मस्वरूपत्वात्, भामतीमते तूपाधिनिवृत्त्या नेश्वरस्येश्वरत्वम्, जीवस्य वा जीवत्वं यावदखण्डाकारवृत्त्युपधानमित्यपि गतमधस्तात्॥

#### अविद्याश्रयत्वम्, तदुपाधिकत्वं वा संविन्मात्रस्येश्वरस्य वा, अविद्या न कर्म,

तत्र तिरोधानमविद्ययोभयत्र संविन्मात्रस्यैव, न तु विशिष्टस्य चैतन्यस्य, जीवस्य, ईश्वरस्य वा। "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ"इति सूत्रेऽप्ययमेवार्थो बादरायणेनोपपादितः। तत्र जीवस्य तिरोधानमुक्तसूत्रविवक्षितं तदुपाध्युपहितत्वेनोपाधिदोषभाक्त्वेन चेश्वरापेक्षया विवरणमते न्यूनशक्तित्वेन, न त्वविद्याश्रयत्वेन। भामतीमतेऽप्यविद्योपधानमात्रेणैवाविद्याया जीवाश्रयत्वव्यपदेशात्, आविद्यकान्तःकरणावच्छिन्नत्वेन तस्य जीवानाश्रितत्वात् तिरोधानं न जीवस्य; संविन्मात्रस्यैवाविद्योपहितत्वात्। न च कर्मैवाऽविद्याऽत्र विवक्षिता॥

"अविद्याकर्मसंज्ञाऽन्ये"ति विष्णुपुराणं तु कर्मण एवाविद्यात्वं नाभिप्रैतीति पूर्वमेव निरूपितम्, इति जीवस्य कर्माश्रयत्वेऽविप्रतिपत्तावपि कर्मैवाविद्येति वादो विष्णुपुराणेनैव विरुद्धत्वात् निरालम्ब इति गतमधस्तात्। अतो न कर्मणैवानादिना जीवस्य तिरोधानमिति युक्तम्। न हि कर्मसाधनादि जीवाश्रितं भवितुमर्हति। बीजाङ्कुरन्यायस्तु बीजादङ्कुरान्तरम्, अङ्कुरान्तराद् बीजान्तरमिति सजातीयानादित्वेनैव। सोऽपि कार्य-कारणयोरुभयोरपि सजातीययोः प्रत्यक्षत्वेनैव। न च कर्मणः कारणस्य, कार्यस्य च सजातीययोरेकतरस्यापि प्रत्यक्षत्वम्, इति न कर्मा-

नादित्वेन जीवबन्धानादित्वनिर्वाहः संभवति। अतोऽद्वैतसिद्ध्युक्तरीत्याऽऽवरणशक्तिमत्त्वमनाद्यविद्यागतं संविन्मात्रविषयमादायैव, इति तिरोधानोपपत्त्यनुपपत्ती विवेचनमर्हतः, न तु कर्मरूपाविद्यागते ते आहत्य ॥

तिरोधानभेदः, तेन ब्रह्मणः स्वप्रकाशस्याविरोधः
प्रमाणजन्यवृत्तेरेव तद्विरोधश्च

तत्रावरणं नाम सत्त्व-चित्त्वाऽऽनन्दत्वविपरीतासत्त्वापादकत्वाभानाऽऽनानन्दतापादकत्वरूपं त्रिविधमज्ञानगतो धर्मविशेषो ब्रह्मणश्च स्वप्रकाशस्यापि जीवं प्रति तदप्रकाशपर्यवसितम्। न चैतद् नित्यप्रकाशस्य चैतन्यस्य स्वतःप्रकाशत्वस्य विघातकम्। घटावृतो हि दीपः स्वयं प्रकाशमानोऽप्यन्यस्मा अप्रकाशमानोऽपि न स्वयं स्वाप्रकाशः; अतोऽन्यं प्रति सत्त्व-चित्त्वाद्यात्मना स्वप्रकाशचैतन्याप्रकाशोऽज्ञानाधीनो न व्याहन्यते। तत्र घटादेरावरणस्यान्यतोऽपसरणेन दीपस्य प्रकाशः, संविन्मात्रे तु तदावरणनिवृत्तिः प्रमाणजन्यान्तःकरणवृत्त्यधीन इति त्वन्यदेतत् ॥

घटादेः फलव्याप्यत्वम्, ब्रह्मणस्तु वृत्तिव्याप्यत्वमात्रम्

तत्र घटादेर्जडस्याज्ञानकार्यस्य च साक्षाद् नाज्ञानाश्रयत्वम्, तद्विषयत्वं वा, किन्त्वज्ञानविषयचैतन्यावच्छेदकत्वेनैव तत्त्वम्, इति घटादीनां तत्तत्प्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यभास्यत्वेन फलव्याप्यत्वापरपर्यायेणैव भानम्, न तु साक्षात् ज्ञानविषयत्वेन। चैतन्यं तु तत्तदाकारवृत्त्युपधानेन तत्तदावरणांशनिवृत्त्या वृत्तिविषयत्वेनोपचारादेव विषयो नामेत्यद्वैतराद्धान्तः ॥

जीव-साक्षिणोः सर्वदा भानमन्तःकरणोपधानेन
ब्रह्म तु न तथा

तत्र सत्यपि परमार्थतो जीव-ब्रह्मैक्ये जीवोऽन्तःकरणोपधानेन स्वरूपेण, साक्षिरूपेण च सदा 'अहमि'ति नित्यनिवृत्तावरणतया सदा-प्रकाशते, न तु ब्रह्माज्ञानोपहितं सदा सर्वस्य प्रकाशते। अत एवात्मनि न संशय-विपर्ययौ, ब्रह्मणि तु न तथेति व्यवस्था ॥

अखण्डस्यापि ब्रह्मणोऽनाद्यविद्याकल्पितसदादिभेदेषु कस्य-
चन प्रकाशः; कस्यचना ज्ञानेनावरणम्

इदमेवाभिप्रेत्याद्वैतसिद्धौ—नास्ति 'न प्रकाशते' इत्यादिव्यवहारो ब्रह्मणि तदाश्रिताविद्यावरणकृत्यमिति विवेचितम्। तदाशयस्तु—अखण्डं

ब्रह्म 'नास्ति' 'न भाति' इति व्यवहारविषयोऽनाद्यविद्याकल्पितसदार्यंशेषु केनचनांशेन भाति, केनचन न भाति। तच्चाखण्डं परिपूर्णमिति चानर्थान्तरम्। तच्च यद्यपि परमार्थतो निर्विभागम्, अथाप्यनाद्यविद्यावशात् तद्विभागकल्पना न विहन्यते; अघटितघटनापटीयस्त्वादविद्यायाः॥

तत्र परमतेऽघटितघटनापरीयस्त्वमीश्वरस्य स्वाप्नादिस्थले, अद्वैतमते तु सर्वत्र तदुपाधेरविद्यायाः। अखण्डं तु चैतन्यं मुक्तावेव सर्वोपाधिविरहितं स्वयंप्रकाशात्मनाऽवतिष्ठते, संसारदशायां त्वविद्यावशात् तस्य कश्चनांश आवृतः, कश्चनानावृतः, न तु परिपूर्णं भाति, सत्यपि तस्मिन् सदा परिपूर्णे सद्वितीयत्वाद्वितीयत्वाभ्यां ब्रह्मणो बन्ध-मोक्षावस्थयोर्भानम्॥

संसारदशायां रूपभेदेन भानाभाने, मुक्तौ तु परिपूर्णेनाखण्डेन रूपेण, इति तस्य भानाभानव्यवस्था

अत एव रूपभेदेन भानाभानयोरविरोधः। अत एव 'सन् घटः' 'घटो भाती'त्यादौ घटात्मना सतो भानम्, मुक्तौ तु सर्वोपाधिरहितेन स्वयंज्योतिष्ट्वेन। तत्र सद्वितीयत्वमाध्यासिकम्, अद्वितीयत्वं तु स्वतः, इति न तयोर्विरोधः। तत्राप्यानन्दांशस्य संसारदशायां न भानम्। तत्र विषयानन्दप्रकाशस्तु पूर्णानन्दप्रतिबिम्बमात्रस्य प्रकाशः, न तु स्वरूपानन्दस्य, अनावृतानन्दप्रकाशस्तु मुक्तावेव॥

यद्यप्यानन्दांशो न चिदंशाद् भिन्नः, तथापि सोऽनाद्यविद्यावशादनादिः कल्पितः। अत एव "आनन्दो ब्रह्मेति व्यजानात्" "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता"इत्यानन्दात्मना ज्ञानमेवाखण्डब्रह्मज्ञानमित्याऽऽम्नानम्। तत्राविद्याया इव तद्भेदस्याविद्यकस्याप्यनादित्वं जीवेशभेदादेरिवाविद्याप्रयुक्तत्वेनाविरुद्धम्॥

तत्राखण्डाकारवृत्तिर्जीवन्मुक्तानामानुभाविकी, येषां बाधितस्याप्यज्ञानस्य संस्कारात्मनाऽनुवृत्तिः, उपदेष्टृत्वादिकं चेति गतम्। अनादित्वं चास्य न प्रावाहिकम्, किन्तु यावदखण्डाकारवृत्त्येकरूपम्, यथा जीवेशयोः, अविद्या-जीवेश्वराणाम्, इति न जीवैक्यस्य यावन्मोक्षं सिद्धिः, अकृताभ्यागमादिर्वा॥

### शरीरसम्बन्धस्याविद्यकत्वम् ; अन्यथाऽनादित्वायोगात् , अत्र "कर्मानादि"त्यादिति सूत्राविरोधश्च

अयमेव न्यायो जीवत्वेश्वरत्वादावपि, इति कर्मानादितान्यायो नात्र परिहारः, अन्यथा कर्मैक्ये कर्मभेदनिबन्धनजन्मभेदानुपपत्तिः। अत एव भाष्यम्—"शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैषानादित्वकल्पना" इति। भामत्यामुत्तरभाष्यावतरणं त्वसत्कार्यवादेन, न तु सम्प्रतिपन्नसत्कार्यवादेनेति कल्पतरौ व्यक्तम्। रत्नप्रभा-न्यायनिर्णययोस्तु कर्मणां शरीरसम्बन्धस्य च कार्य-कारणभावस्याप्रत्यक्षत्वादन्धपरम्परैषाऽनादिता व्यक्तीकृता ॥

एतेन—"न कर्मानादित्वादि"त्यपि—व्याख्यातम्। इदं हि नाविद्यामात्रं शरीरादिविभागकारणम्, किन्तु तत्तत्कर्मापेक्षैवाविद्या शरीरादिविभागकारणमिति निरूपणपरमित्युत्तर सूत्र उपपाद्यते। अत्राप्यु"पलभ्यते चे"त्यत्र भाष्येऽनिर्वचनीयतावादोपपादनपरतया, केवलकर्मापेक्षतानिरासपरतया च विवृतम्, इति केवलकर्मापेक्षस्यैव सशरीरकत्वस्य निरासाद् नान्धपरम्पराऽनादित्वपक्षस्य पूर्वत्र साधितस्य विरोधीनी, इति न विरोधलेशोऽपि, इत्यध्यारोपापवादाभ्यामेव संसारप्रतीति-तदभावयोरुपपत्तिः। स च सर्वस्य संसारस्य मिथ्यात्वं विना नोपपद्यते ॥

अज्ञानं तु साक्ष्यविरोधि; साक्षिभास्यत्वात् यावत्स्वोपधानं संविदो विद्यमानमपि प्रमाणजन्याखण्डाकारनिवृत्तौ निवृत्त्या न मुक्तावप्यनुवर्तते। उपहितं हि चैतन्यं साक्षि, न शुद्धं सर्वोपाधिरहितमिति व्यक्तमन्यत्र। अतो नाविद्याऽनादित्वं विरुध्यते ॥

### तिरोधानकृत्यं ब्रह्मणो विवर्तमानता, तत एव घटाद्यात्मना विवर्तः

स्वप्रकाशचैतन्यमावृतं सत् जगदात्मना विवर्तते, इत्यावरणकृत्यं ब्रह्मणो विवर्तमानत्वम्, अधिष्ठानत्वं वा, इति नाविद्याया आवरणकृत्यायोगः। तत एव ब्रह्मानन्दात्मना वा प्रकाशात्मना वाऽऽवृतं घटाद्याकारेण, अतीन्द्रियाकारेण च विवर्तते। न च स्वप्रकाशचिद्रूपत्वमज्ञानसम्बन्धविरोधि, किन्तु वृत्त्युपधानमेवेति व्यक्तं तत्र तत्र। तत्राचेतनप्रपञ्चः सर्वोऽप्यधिष्ठानप्रकाशाधीनप्रकाशत्वादविद्योपहितनियम्यः, तदुपाधिकत्वाच्च चेतनोऽपि कथञ्चन नियम्यः। "तमेव भान्तमनुभाति सर्वमि"त्यपि

तदभिप्रायमेव जीवस्वप्रकाशत्वं त्वन्तःकरणोपधाननिबन्धनसाक्षिता-दात्म्येन, संविन्मात्रेण वा; अन्तःकरणपरिणामवृत्तेरिवान्तःकरणस्याप्य-ज्ञानविरोधित्वात् ॥

तत्रांशभेदेनाऽऽविद्यकेनानादिना प्रकाशाप्रकाशावधिष्ठानस्य न व्याहतौ, सत्त्व-चित्त्वादिधर्माध्यासोऽप्यत एव व्याख्यातः। अखण्डाऽऽत्मनाऽप्रकाशनिबन्धनत्वात्तदध्यासस्यापि। तत्रानाद्यज्ञानात् सदादिस्वरूपभेद-कल्पना, तत एवांशतो ज्ञानाज्ञानाभ्यां धर्माध्यासः, इति नाधिष्ठानयाथात्म्यप्रकाशेन सत्त्व-चित्त्वादिधर्माध्यासकथा विरुध्यते; उभयोर्भिन्नरूपत्वात्। स्वरूपभेदं कल्पितमभिप्रेत्य स्वरूपस्याधिष्ठानत्वम्। अधिष्ठानयाथात्म्यं चाखण्डं रूपम्, तत्र धर्माध्यासः, इति नैकस्यैव कार्य-कारणभावोऽत्र, येन विरोधः स्यात्। निर्विशेषत्वं तु विशेषस्याध्यासिकत्वेन न व्याहन्यते ॥

### असत्त्वापादकत्वादितिरोधानस्वरूपविवेकः, संसारदशायां सदादिखण्डरूपेणैव भानं च

निष्कर्षस्तु—अविद्यया ब्रह्मणस्तिरोधानं नाम तस्यासत्त्वापादकत्वम्, अभानापादकत्वादि च। तत्र स्वप्रकाशे ब्रह्मणि कल्पितेष्वंशेषु चिदात्मना प्रत्यक्षेण रूपेणाप्रकाशापादकत्वमेवाभानापादकत्वम्। अप्रकाशश्च जीवात्मानं प्रति, येन गुरुत्वादिकमतीन्द्रियमधिष्ठानतादात्म्यापन्नमपि न प्रकाशते। घटादिकमप्यधिष्ठानतावच्छेदकं कदाचिद् न भासते। कदाचित्तु तदज्ञाननिवृत्त्या भातीति प्रत्ययगोचरः ॥

परोक्षतादशायां घटादिकम्, तत्तदवच्छिन्नचैतन्यं च प्रतीयते, न तु प्रत्यक्षतया तदा भातीत्यनुभवसिद्धम्। एवं कदाचन प्रियमिति, कदाचनाप्रियमिति च। इदं चाज्ञानस्यासत्त्वापादकत्वादिकं विना नोपपद्यते। न हि घटादिकं तदवच्छिन्नं चैतन्यं वा सदाऽपरोक्षमेवाऽऽनन्दात्मनाऽपि भाति, येन सद्रूपेण प्रकाशे प्रकाशरूपम्, आनन्दरूपं च नित्यमेव प्रतीयेत, येन रूपेणाधिष्ठानं ज्ञायते, तत्र तदारोपदशायाम्, तत्तत्प्रतीति-दशायां वा तत्तदात्मनैवाधिष्ठानस्य तत्तत्प्रतीतावनुवेधः, नाऽखण्डात्मना, किन्त्वनाद्यविद्याकल्पितसच्चिदादिभेदात्मनैवेति व्यक्तमधस्तात् ॥

### मुक्तौ त्वखण्डात्मनैव भानम्

मुक्तौ तु नाज्ञानम्, न वा तत्कल्पिताः सच्चिदादिभेदाः, इति न तदाऽपि सदाद्यात्मनैव ब्रह्मभानम्। अतो नासत्त्वापादकत्वमज्ञानस्य बाधितम् ॥

तत्र 'नास्ती'ति व्यवहारप्रयोजकत्वमसत्त्वापादकत्वम्, न भातीति व्यवहारप्रयोजकत्वमभानापादकत्वम्, तथा नानन्द इति व्यवहारप्रयोजकत्वमनानन्दतापादकत्वमिति तद्भेदो लघुचन्द्रिकादौ विवेचितः। न चात्रानुपपत्तिलेशोऽपि, इत्यज्ञानविरोधानकृत्यम् ॥

### सविशेषत्व-निर्विशेषत्वे तिरोधान-तदभावनिबन्धने

इदं च तिरोधानमज्ञानाधीनमनादि सदादिकल्पितभेददशायामेव, नाखण्डदशायाम्, यस्यैव निवृत्ताविद्यस्य, निवृत्तसदादिभेदस्य च निर्विशेषत्वम्; अन्यथा तु तत् सविशेषमेव, परं तु सविशेषत्वं ब्रह्मणोऽधिष्ठानत्वनिबन्धनं तस्यावृतावस्थायामेव, निर्विशेषत्वं तु तस्यानावृतसंविन्मात्रतायाम्, इति न सविशेषत्व-निर्विशेषत्वयोर्व्याघातः ॥

### बन्ध-मुक्तिविवेकः

तदेव त्रिकालाबाध्यम्, सविशेषमपि परं, तु विशेष्यस्वरूपांशमात्रेण त्रिकालाबाध्यम्, सविशेषत्वाकारेण तु विशेषाणामुपाधीनां बाध्यत्वाद् न त्रिकालाबाध्यं विशिष्टेन वेषेण, इति बन्ध-मोक्षयोर्ब्रह्मस्वरूपं सविशेषत्व-निर्विशेषात्वभ्यां रूप भेदाभ्यां भिन्नमिव, इति बन्ध-मुक्ति विभागोऽद्वैतराद्धान्ते ॥

### स्वप्रकाशचैतन्यस्यापि वृत्त्यपेक्षा तिरोधाननिवृत्त्यर्थम्

तत्र यावदखण्डाकारवृत्ति सविशेषत्वम्, ततस्तु निर्विशेषसंविन्मात्रता। तत्राखण्डाकारवृत्तेरपेक्षाऽविद्यानिवृत्तौ, न तु ब्रह्मणः स्वयंप्रकाशतायाम्, इति न वृत्त्यपेक्षा स्वप्रकाशस्यावृतस्य विरुध्यते ॥

### जीवस्वरूपस्यापि ब्रह्मणः प्रकाशाप्रकाशौ तिरोधान-तदभावाभ्यामेव

नित्यं स्फुरणस्वभावोऽपि जीवात्मा तदुपाधि-कारणशरीराज्ञानसम्बन्धात्, तदाश्रितकर्मरूपाविद्यामहिम्ना वा देहात्मभ्रान्त्या 'अहं गौरः' इत्यादिरूपेण प्रतीयते यावदज्ञानम्, तन्निवृत्तौ तु शुद्धस्वप्रकाशप्रत्यगात्मतया भासत इति सम्प्रतिपन्नम् ॥

### मतद्वयाभिमताज्ञाननिवर्तकात्मस्वरूपज्ञानव्यवस्था

इयान् विशेषः—अणुत्व-ज्ञानानन्दत्वादिधर्मविशिष्टतया जीवात्मस्वरूपज्ञानं तदज्ञाननिवर्तकं परमते, अद्वैतमते तु निरुपाधिसंविन्मात्राधिष्ठानज्ञानं तदज्ञाननिवर्तकम्। यथा चाणुत्वादिकं न जीवस्वभावः, तथा

व्यक्तं तत्र तत्र। उभयत्र यावदात्मस्वरूपसाक्षात्कारं देहात्मभ्रमनिबन्धनाः शयनासन-भोजनादिव्यवहारा आत्मानुबन्धिनोऽनुवर्तन्ते। सति तु परमात्मसाक्षात्कारे सर्वेऽपि व्यवहाराः, किं बहुना? तान्मूलकारण-देहादि-तन्मूलाविद्यादिरपि निवर्तते। न हि देहात्मविवेकः, स्वर्गाद्यर्थं कर्म कुर्वाणानामपि नास्ति, इति तावन्मात्रेणात्मस्वरूपज्ञानं नात्मज्ञानम्। अतोऽशनायाद्यतीतात्मतत्त्वज्ञानमेवाविद्यानिवर्तकम्, येन देहात्माविवेकोऽपि समूलं निवर्तते, इति तावत्पर्यन्तं देहात्मभ्रमानुवृत्तिरद्वैतमते न विरुद्धा, परमते तु देहात्मविवेकदशायामपि तद्भ्रमानुवृत्तिः, तन्निबन्धना देहाद्यपेक्षव्यवहाराश्च न कथमुत्पद्यन्ते?

यावदात्मसाक्षात्कारमज्ञानस्य तिरोधायकत्वम्, तन्निवृत्तिश्च प्रमाणजन्यज्ञानेनैव

अतो यावद्ब्रह्मसाक्षात्कारमज्ञानम्, तन्मूलदेहात्मादिभ्रमः, अज्ञानेन तिरोधानं च ब्रह्मणोऽखण्डाकारवृत्तिज्ञानाभावनिबन्धन एव, सत्यां तु तस्यां तन्निवृत्त्या सर्वभ्रमनिवृत्तिरित्येव युक्तम्। तिरोधायकत्वं त्वज्ञानस्य तमस इव स्वभाव एव, इति जन्यप्रकाशाधीनैव तन्निवृत्तिरित्यवश्यमेव स्वीकर्तव्यम्। सत्यमाविद्यकान्तःकरणपरिणामो वृत्तिरपि परम्परयाऽविद्याधीनैव; तथापि तस्या अपि प्रमाणजन्याया अज्ञानविरोधित्वं न दुष्टमिति व्यक्तमन्यत्र। न च कर्मैवाविद्येति तु व्यक्तमधस्तात्॥

अनादेर्दोषविधया प्रपञ्चकारणस्याज्ञानस्य नाज्ञानान्तरापेक्षा, काच-कामलादौ तथा दर्शनात्

अज्ञानं चेदम्—

"जीव-ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडमस्माकमनादयः॥"

इति सिद्धान्तादीशादय इवानादि न स्वस्यापि कल्पकान्तरपेक्षते; अन्यथाऽनवस्थापत्तेः। तद्धि दोषविधयैव प्रपञ्चोपपादनम्। न च दोषो दोषान्तराधीनात्मलाभ एव दोषत्वं भजते, येनाज्ञानान्तरकल्पनापत्तिः। न च काच-कामलादयो दोषा दोषान्तराधीनात्मलाभाः; अन्यथा तेषामदोषत्वापत्त्या लौकिकभ्रमोऽपि न निर्वोढुं शक्येत॥

### प्रपञ्च-शुक्तिरूप्यभ्रमयोर्मिथ्यात्वाविशेषेऽपि दोषनिवर्तकज्ञाने तन्निवर्त्ये च विशेषः

तत्र शुक्तिरजतादिस्थले दोषो न शुक्तिरूप्यहेतुः, न वा साक्षाद् भ्रमहेतुः, किन्तु शुक्तित्वावरणविधया शुक्त्यवच्छिन्नचैतन्यस्य विवर्तमानतोपपादकतया। स एव न्यायोऽत्रापि। अविद्यया तत्कल्पितांशविशेष आवृते ज्ञातांशान्तरेण ब्रह्म विवर्तते, इति ब्रह्म विवर्तमानतोपधायकतयाऽज्ञानेन प्रपञ्चभ्रमनिर्वाहोऽद्वैतराद्धान्ते॥

तत्र मिथ्यात्वं शुक्तिरूप्यस्य, शुक्तित्वाज्ञानस्य वा, शुक्तितत्त्वज्ञानबाध्यत्वेन। तत्र शुक्तिरूप्यभ्रमहेतुर्न शुक्तितत्त्वज्ञानेन बाध्यते, इति शुक्तिरूप्यवद् न व्यवहारदशायां तद्धेतुर्दोषोऽपि; मिथ्याभ्रमबाधकाबाध्यत्वादुक्तदोषस्य। अत्र तु भ्रमबाधकबाध्य एव दोषोऽपि। अतो दोषस्यैवात्र भ्रमहेतुत्वम्, विषयहेतुत्वं चोभयमिथ्यात्वेऽपि॥

एतेन—प्रपञ्चभ्रमे निमित्तकारणमेवाविद्येति भामतीसिद्धान्तोऽपि—व्याख्यातः। तत्रापि भ्रमबाधकबाध्य एव दोषोऽपि, इति प्रपञ्चवत् तद्भ्रम-तद्दोषाणां सर्वेषां मिथ्यात्वमविशिष्टम्॥

वस्तुतस्तु—शुक्तिरूप्यादिभ्रमे काचादिरेव दोषः। न च स शुक्तिरूप्यहेतुः। शुक्तिरूप्यहेतुस्तूलाज्ञानं तूपादानमात्रम्, न तु तत् दोषविधयाऽपि हेतुः, इति दोषकारणता दोषान्तरकारणतामपेक्षत इति नियमो न कथमपि; अदृष्टचरत्वात् तथा व्याप्तेः। तत्र भ्रमहेतुबाधकज्ञाने विषयाकारेण परिणाम्युपादानं नश्यतीति न्याय उभयत्र समानः। अत्र तु भ्रमहेतुर्दोष एवोपादानमपि विवरणमते, इत्युभयमपि बाधकज्ञानबाध्यम्, मिथ्या च। न च दोषः, उपादानं वा दोषान्तरम्, उपादानान्तरं वाऽपेक्षत इति वक्तुं शक्यमिति निरूपितम्॥

तत्राविद्याया दोषत्वम्, परिणामित्वं चोभयं चाघटितघटनापटीयस्त्वाद् न दोषावहम्॥

विशिष्टब्रह्मोपादानतावादोऽपि ब्रह्मण एव निमित्तत्वेनोपादानत्वेन च विचित्रशक्तियोगेनैव निर्वहणीयः। लोकविरोधस्तूभयत्र समानः॥

### जीवेश्वरभेदादीनामप्यज्ञानप्रयुक्तत्व-मिथ्यात्वे

एतेन—अज्ञानसम्बन्धादीनामज्ञानप्रयुक्तानां मिथ्यात्वमपि—व्याख्यातम्। यद्यपि तेषामनादीनां नाज्ञानाधीनत्वम्; तथापि तेषामज्ञानाभावव्यापकाभावप्रतियोगित्वेनाज्ञानप्रयुक्तत्वात्, तन्निवृत्तौ निवृत्त्या मिथ्यात्वम्। जीवेश्वर-तद्भेदादीनामप्यत एव मिथ्यात्वम्; अज्ञानप्रयुक्तत्वात्॥

तत्राज्ञानं स्वत एव बाध्यम्, नाज्ञानप्रयुक्तत्वं स्वस्यापेक्षते, इति तद्व्यतिरिक्तानामेव तत्प्रयुक्तत्वेन, तन्नाशप्रयुक्तनाशप्रतियोगित्वेन च मिथ्यात्वम्॥

### जीवेश्वरोपाधीनामज्ञानप्रयुक्तत्वेनौपधिकत्वमेव तेषमज्ञानप्रयुक्तत्वम्

जीवेश्वरादीनामपि तत्तदुपाधीनामज्ञानेतरेषामज्ञानप्रयुक्तत्वेनौपाधिकमज्ञानप्रयुक्तत्वम्। कालादृष्टादीनामपि समानमेतत्। औपाधिकमेव जीवादीनामज्ञानप्रयुक्तत्वम्, न स्वत इति जीवोपाधिर्यदि न स्यात्, तर्हि जीवोऽपि न स्यादिति कल्पना नानिष्टा॥

### अज्ञानस्य शुद्धब्रह्माश्रयविषयोभयत्वम्, न तु साक्षिण इति तयोर्विशेषः

तत्राज्ञानस्य ब्रह्मणा सम्बन्धो विषय-विषयिभावः, आश्रयाश्रयिभावो वा, यमाश्रित्य तिरोधानोपपत्तिः, आश्रयोपपत्तिश्च व्यवस्थाप्यते। तत्रापि प्रमाणत्वं स्वप्रकाशस्यापि ब्रह्मणो न विरुद्धम्, प्रमाणजन्याया वृत्तेरेवाविद्यानिवर्तकत्वस्य बहुश आवेदनात्॥

तत्र शुद्धं चैतन्यमज्ञानाविरोध्यज्ञानविषयः, तदाश्रयश्च। साक्षिचैतन्यं तु न शुद्धम्, किन्त्वन्तःकरणोपहितं तद्वृत्त्युपहितं वा; तदुपाधिनिवृत्तौ निवृत्तावरणांशकत्वाद् न 'न ज्ञानामी'ति प्रत्यक्षविषयः॥

### भावरूपमेवाज्ञानं 'न जानामी'ति प्रत्ययविषयः

अयमेव न्यायोऽहमर्थेऽपीति व्यक्तमन्यत्र। न च ब्रह्मणोऽन्यद् घटादिकमज्ञानकार्यमज्ञानाश्रयः, तद्विषयो वा। न चाज्ञानातिरिक्तं किमपि ब्रह्मावरकं संभवति। भावरूपमेवाज्ञानमुभयसंप्रतिपन्नम्। "न जानामी"-त्यादिप्रतीतेर्ज्ञानाभावगोचरत्ववर्णनं स्वसिद्धान्तमेव व्याहन्ति॥

तत्र 'न जानामी'तिप्रतीतिः श्रीभाष्यमते न स्वरूप-धर्मभूतज्ञानाभावपरा, एवमद्वैतमतेऽपि न स्वरूपज्ञानाभावपरा, वृत्तिरूपज्ञानाभवपरा वा । न ह्यभावस्यावरणं कृत्यम् ; अन्यथा प्रकाशाभावातिरिक्ततमः-पदार्थस्वीकारायोगात् , किन्तु भावरूपाज्ञानपरेति व्यक्तमुत्तरत्र ॥

ब्रह्मतिरोधायकत्वं भावरूपस्याज्ञानस्यैव, तस्य घटादितिरोधायकत्वं तु घटादीनां चैतन्यावच्छेदकत्वमात्रेण

भावरूपं चाज्ञानं स्वप्रकाशब्रह्मावरकम् , तदवच्छेदकतया घटादीनामप्यावरकमिति तदा तदा 'घटं न जानामि' 'जानामी'ति प्रतीतेर्निर्वाहः । तद्धि न स्वप्रकाशब्रह्मरूपेण ज्ञानेन निवर्तते, किन्तु वृत्त्यैव । अतो 'न जानामी'ति 'जानामी'ति च प्रतीती उपपद्येते । तत्र घटस्य तदभावेन साकं यथा न प्रतीतिः, एवमज्ञानस्यापि वृत्त्या सह न प्रतीतिः, इति वृत्त्याऽज्ञानस्य सदैव विरोधः ॥

घटज्ञानादौ प्रतिज्ञानमज्ञानानामवस्थाविशेषाणाम्, तद्विषयत्वस्य वा भेदेन नैकघटज्ञानादेव मुक्तिः, न वा सर्वघटाज्ञाननिवृत्तिः

न चात्रापि वृत्तिमात्रस्याज्ञानमात्रेण विरोधः । यावन्ति ज्ञानानि, तावन्त्यज्ञानानि अज्ञानविषयत्वानि वेत्यद्वैतसिद्धान्तः; अन्यथा धर्मभूतज्ञानेनापि सकृत् घटप्रकाशे सर्वदा कथं न घटादिप्रकाशः ? तथाच 'न जानामी'ति प्रतीतिर्न ज्ञानाभावावगाहिनी; प्रतियोग्याश्रयज्ञानसत्त्वासत्त्वयोरुभयथापि तदयोगात् , अद्वैतसिद्धान्ते तु यथा 'न ज्ञानामीति प्रती'तिर्भावरूपाज्ञानवादे सूपपादा; साक्षिणोऽज्ञानभासकत्वात् , तथोत्तरत्र विशदम् । अधिकमिष्टसिद्धौ ॥

तत्र घटस्याज्ञानमित्यत्र घटपदस्याज्ञानपदैकदेशेन ज्ञानेनान्वयेऽस्वारस्याद् अज्ञानं भावरूपं पदार्थान्तरमिति कल्प एव समञ्जसः, 'न जानामि'-इति न शब्दप्रयोगोऽपि । तत्र वृत्तिज्ञानाभावस्यैव परमतेऽपि विवक्षणीयतया तस्याज्ञानविरोधित्वेन विरोधार्थत्वं 'न' शब्दस्य न दुष्यति । अतो 'न पचती'त्यादौविव नात्राभावो नञर्थः । यथाच जडस्याप्यज्ञानविषयचैतन्यावच्छेदकत्वादज्ञानविषयत्वम् , वृत्त्या च तस्य निवृत्तिः, तथाऽनुपदमुक्तम् । अत एव न तस्य ब्रह्मसाक्षात्कारनिवर्त्यता, अव-

च्छिन्नचैतन्याश्रयिणामज्ञानानाम्, तद्विषयत्वानां च तत्तच्चैतन्यावच्छेदक-वृत्तिमात्रेण तत्तदाकारेण निवृत्तेरविरोधात् ॥

घटादेरज्ञानविषयत्वम्, ज्ञानविषयत्वं च गौणम्

घटादेरज्ञानकर्मत्वमपि तद्विषयचैतन्यावच्छेदकत्वेन गौणमेव । आत्म-स्वप्रकाशत्वमज्ञानविषयत्वेन न विरुद्धम् । सत्यप्येवं सर्वोपाधिविरहित-स्वरूपतया स्वप्रकाशसंविन्मात्रेण निर्विशेषरूपेणावस्थानमेव सर्वोपाधि-मूलाविद्यानिरासार्थं वृत्तिमपेक्षते । सा चाखण्डाकारैव ब्रह्माश्रित-तद्वि-षयकमूलाविद्यानिवर्तिका; उपहितान्याविषयकत्वे सत्युपहितविषयकत्व-स्यैवाज्ञाननिवर्तकत्वात्, इति न घटादिज्ञानमात्रेणाज्ञाननिवृत्त्यापत्तिः ॥

वृत्तिभास्यत्वे, साक्षिभास्यत्वे वा ज्ञानाज्ञान-तद्विषयाणां ब्रह्मतो विशेषः

तत्राभानापादकाज्ञानं सर्वत्र यद्यपि तत्तदाकारवृत्त्युपधानेनैव निव-र्तते । सा च साक्षिभास्येत्यपि वृत्तिस्वीकारपक्षेऽविशिष्टा, कल्पान्तरे त्वन्तकरणोपधानेनैव निवर्तते । 'सुखं जानामी'त्यादौ सुखमेवान्तःकरण-परिणामविशेषोऽज्ञानविरोधीति व्यक्तमन्यत्र । सर्वत्र वृत्तेरज्ञाननिरास-मात्रेणोपयोगः । भानम्, भासकत्वं वा स्वतश्चैतन्यस्यैव, इति न वृत्ति-मात्रेण प्रकाशः कुत्रापि, येन घटादिवत् ब्रह्मणोऽपि जडत्वापत्तिः ॥

घटज्ञानाज्ञान-ब्रह्मज्ञानाज्ञानयोर्विशेषः, अज्ञानस्य ब्रह्मतिरोधायकत्व-मात्रम्, सामान्यज्ञानेन ब्रह्माज्ञानस्य सर्वात्मना निवृत्तिः

परमत एव तु धर्मभूतज्ञानेनैव घटादीनामिव स्वरूपज्ञानस्य पर-मात्मनोऽपि भानसंभवात् जीवेश्वरयोरुभयोरपि जडत्वापत्तिः, इति चैतन्यस्यैवाज्ञानेनावरणं साक्षात्, न तु घटादेः । वृत्तिरपि चैतन्य-गतावरणस्यैव साक्षात् निवर्तिका, न घटादिगतस्याज्ञानस्य; तस्या-प्रसिद्धत्वात् । तत्राज्ञानं मूलाविद्यारूपं ब्रह्मैवावृणोति, तत्तदवस्थाविशेषा-स्तु ते ते तत्तदवच्छिन्नचैतन्याश्रितास्तत्तद्वृत्तिमात्रनिवर्त्याः । न चाज्ञान-सामान्यम्, वृत्तिसामान्यं वाऽद्वैतमते, इति ज्ञानस्य, अज्ञानस्य च विषय-निरूप्यत्वेन सामान्य-विशेषांशाज्ञानकथादिकमद्वैतसिद्धान्ते, किन्तु यदंशे निश्चयः, तदंशे नाज्ञानमित्येव । अखण्डाकारवृत्तिस्त्वखण्डविष-यिणी निर्विशेषचैतन्याश्रितामेवाविद्यां निवारयति, इति न तया ब्रह्मा-ज्ञानानिवृत्तिः, इति न ब्रह्मणोऽज्ञानेन तिरोधानानुपपत्तिः ॥

॥ इति तिरोधानोपपत्तिः ॥

## अथात्माद्वैतोपपत्तिः

आत्माद्वैतवादः संविन्मात्रमुक्तात्मानमभिप्रेत्य, न त्वहमर्थं
बद्धात्मानम् , यत्राऽऽत्माद्वैतमेव, न तद्द्वैतम् ,
परमते तु समस्वभावः

आत्माद्वैतवादोऽयं मुक्तात्माभिप्रायोऽद्वैतसिद्धान्ते, न बद्धात्माभिप्रायः; बद्धात्मनः परमत इवाद्वैतसिद्धान्तेऽपि स्थूल-सूक्ष्मशरीरोपाधिकस्यौपाधिकपरिमाणत्वेन प्रतिशरीरं नैयायिकाभिमत इव भिन्नत्वेनाद्वैतानङ्गीकारात् । अत एव भाष्यम्—"न त्वेवाहमि"ति श्लोकव्याख्यावसरे शरीरभेदापेक्षः 'त्वमहमि'त्यादिव्यपदेशः, न मुख्यात्मस्वरूपमभिप्रेत्येति ॥

मुक्तात्मा तु विगलितसर्वोपाधिः स्वप्रकाशसंविन्मात्रं निर्विशेषं ब्रह्मैव परमार्थगत्या, इति तदेवाद्वैतम् , परमतेऽपि यद्यपि मुक्तात्मा विकसितैकस्वभावधर्मभूतज्ञानद्वारा सर्वव्यापकोऽपि सर्वदाऽहमर्थत्वाद् भिन्नस्वभाव एव; तथापि समस्वभावः, नैक इति विशेषः ॥

समाद्वैतवादे मुक्तात्मनां परस्परानुसन्धानापत्तिः
नैवमद्वैतात्मवादे

यत्र यदि धर्मभूतज्ञानमात्रेण मुक्तात्मा स्वरूपतो भिन्नोऽपि व्यापकः, तर्हि कथं वा मुक्तानां न परस्परसुखाद्यनुसन्धानापत्तिः धर्मभूतज्ञान विकाससाम्यात् ? अद्वैतमते तु स्वरूपस्य निर्विशेषत्वाद् अनुसन्धानप्रयोजकमनआद्युपाधिविरहाद् न मुक्तात्मनां परस्परानुसन्धानम्; स्वरूपैक्यात् ॥

मुक्तात्मनो न प्रत्यक्षादिप्रमाणविषयत्वम् , किन्तु
श्रुत्येकगम्यत्वम्

सति चैवं मुक्तात्मस्वरूप इव तदद्वैतेऽपि श्रुति-स्मृत्यादिकमेव प्रमाणम् , न प्रत्यक्षादि । तत्रासंप्रज्ञातसमाधिपञ्चम-षष्ठ-सप्तमभूमिकास्थानामात्मैक्यप्रत्यक्षमपि संभवतीति विशेषो न निह्नवमर्हति ॥

तदुक्तं सिद्धान्तबिन्दौ—'असंप्रज्ञातसमाधेः श्रुतिस्मृतिसिद्धत्वाच्च" इति । न चाहमर्थो मुक्तात्मेति व्यक्तमन्यत्र । अहंप्रत्ययः पूतिकूष्माण्डायमानो नात्मनि प्रमाणमिति वदन्ती भामती श्रुति-स्मृतिनिरपेक्षप्रत्यक्षप्रमाण-

विषयत्वमेवात्मनो ब्रह्माभेदयोग्यस्य सर्वोपाधिविरहितस्य वारयति, न तु श्रवणादिनिबन्धनसाक्षात्कारविषयत्वमपि ॥

### सर्वगतत्वं मुक्तात्मनोऽद्वैतमते स्वभावः, अन्यत्र तु तदौपाधिकम् ; धर्मभूतज्ञानविकासप्रयुक्तत्वात् तस्य

तत्र प्रत्यक्षं मानसं शाब्दं वेत्यन्यदेतत् । एतेन—अनुमानमपि—व्याख्यातम् ; तद्धि प्रवृत्तिनिवृत्तिलिङ्गकं बद्धात्मन एव, न तु मुक्तात्मनः; तस्य श्रुत्येकसमधिगम्यत्वात्, तन्मूलमननादिमूलकत्वाद्वा । तत्र मुक्तात्मनः सर्वगतत्वे न विप्रतिपत्तिः, तत् स्वरूपतोऽन्यतो वेति त्वन्यदेतत् । सर्वगतत्वं चाऽऽत्मनः स्वतः, अणुत्वमौपचारिकं स्यात् । तदणुत्वे तु तस्य सर्वगतस्वरूपत्वमौपचारिकम् । तत्र मुक्त्यवस्थायां तदणुत्वकृत्यं न किमपि; धर्मभूतज्ञानविकासेन तस्य सर्वगतस्यैव स्वीकारात् । तदणुत्वकृत्यं तु संसारदशायामेव, इति मुक्तात्मनः सर्वगतत्वं स्वभावः, बद्धात्मन औपाधिकस्य, अन्यस्य वाऽणुत्वं स्वभावः इत्यवस्थाभेदेनाणुत्व-विभुत्वयोरुपपत्तिरेव स्वरसा ॥

### मुक्तात्मनां भेदानुभवो भ्रान्तिमूलो श्रुतिमूलानुभवेन बाधमर्हति

एतेन—विगीतानि, शरीराणि, मय्यैवात्मवन्ति, शरीरत्वादिति जीवन्मुक्तानामनुमानं स्वानुभवमूलकमवलम्ब्य मुक्तात्मनामैक्यवाद एवोचित इति—व्याख्यातम् । न चात्र कालात्ययापदेशः । स हि न बद्धात्मनामनुभववाधितत्वेन, बद्ध-मुक्तानुभवयोर्भिन्नात्मविषयकत्वात् , अन्यानुभवेनान्यबाधस्यायोगाच्च । न हि भ्रान्तानुभवेन प्रामाणिकानुभवो बाधमर्हति । श्रुतिमूलत्वाच्चोक्तानुमानस्य न प्रत्यक्षेण भ्रममूलकेन बाधो युज्यते । तत्र देहात्मप्रत्यक्षं भ्रम एवेति संप्रतिपन्नम् , इति देहविविक्तप्रत्यगात्मस्वरूपानुभूवमूलानुमानस्य देहात्मप्रत्यक्षेण बाधो न विकल्पसहः ॥

### सर्वेषां शरीराणामेकसंविन्मात्रनियम्यत्वम्, न भिन्नात्मनियम्यत्वम् , अतो न वस्तुत आत्मभेदः

अत्रात्मशब्देन प्रत्यगात्मस्वरूपं सविन्मात्रं विवक्षितम् , न तु बद्धात्मस्वरूपसंविन्मात्रम् । तेन च सर्वाणि शरीराणि, एकसंविन्मात्रनिय-

म्यानि, तत्प्रकाशाधीनप्रकाशानि, एकसंवित्स्वरूपमात्राधिष्ठितानि वेति विवद्यते ॥

### शरीरभेदेन न स्वत आत्मभेदः

तत्र यथैकब्रह्मकार्याण्यपि घट-पटादीनि कार्यात्मना भिन्नानि, कारणात्मना त्वभिन्नानि, सर्वानुगतं सद्रूपं ब्रह्मैकमेव; एवमत्रापि शरीरत्वेन शरीराणां भेदेऽपि सर्वशरीरानुगतंसंवित्स्वरूपमेकमिति विवेकः ॥

### प्रत्यगात्मनामभेदे 'न त्वेवाहमि'ति, जीवब्रह्माभेदे "अंशो नाने" ति सूत्रं च प्रमाणम्

इदमेवाभिप्रेत्य । योगवाविष्ठम्—"न त्वेवाहमि"ति श्लोकव्याख्यारूपम्—

"संविदाकाशमेवाहं भवानपि जना अपि ।
म्रियामहे नो कदाचित् कुतः संविद् विनश्यति ॥"

इति । इदमेवाभिप्रेत्य "अंशो नानाव्यपदेशादन्यथापी"ति सूत्रेऽन्यथाऽपीत्यभेदव्यपदेशोऽपि ब्रह्मणा जीवानां प्रतिपाद्यते ॥

### अंशत्वमभेद एव, न भेदे, इत्यत्र भाष्य-भामत्यादि, भेदस्तु जीवेश्वरयोरौपाधिक एव

इदं हि सूत्रं जीवेश्वरयोः स्वामि-भृत्यन्यायेन भेदसम्बन्धमात्रं निषेधति तयोरभेदस्य समर्थनेन। अत एवांशपदम् । न हि भृत्यः स्वामिनोंऽशो नाम। स एव हि तस्यांशो नाम, यो येन समानस्वभावः—यथा ऽग्नेर्विस्फुलिङ्गः। तयोश्च न भेदमात्रम्, किन्त्वभेदोऽपि। तत्र भेद उपाधिभेदात् , अभेदस्तु स्वरूपैक्यात्। तत्र चाभेद एव वस्तुसन् , न तु भेदः; तथा अंशत्वमपि न परमार्थ इति कृत्वांऽश इवेति भाष्यादि। भामती तु विशदमभेदस्यैव पारमार्थिकत्वमात्रपरमंशपदमित्युपपादति ॥

### 'पराचु तच्छ्रुते' रिति सूत्रमपि जीवेश्वरैक्यवादमपि स्वरूपेण समर्थयति

तथा जीवेश्वरयोरग्निविस्फुलिङ्गयोरिव सत्यप्यौपाधिके भेदे संवित्स्वरूपेण ब्रह्मात्मनैक्यम् , उपकार्योपकारकभावस्तु भिन्नेन रूपेण, नैक्येनेति सर्वत्र भाष्य-भामत्यादौ व्यक्तम् । न चात्र "परात्तु तच्छ्रुतेरि" त्यादिना जीवेश्वरयोरुपकार्योपकारकभावे, राज-भृत्ययोरिव नियम्य-निया-

मकभावे च समर्थिते समर्थनीयं किमप्यवशिष्यते। यदि संविदात्मना तयोरप्यैक्यं न सिसाधायिषितम्, तर्हि तस्यैव समर्थनीयत्वे वितथमिदमधिकरणमापद्येत ॥

### द्वितीय-तृतीयपादस्य जीवात्मनः संविन्मात्रत्वसमर्थन एव तात्पर्यम्

वस्तुतस्तु—द्वितीय-तृतीयपादेन "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" इत्यारभ्य जीवात्मनः एवोत्पत्तिश्रुत्यादिविरोधपरिहारार्थं प्रक्रान्तस्यौपाधिकमेवोत्पत्त्यादिमत्त्वम्, ज्ञातृत्वम्, अणुत्वम्, कर्तृत्वम्, अंशत्वं च; स्वरूपं तु तस्य ब्राह्मं संविन्मात्रमेवेति व्यवस्थायामेव तात्पर्यम् ॥

अत एव—"प्रकाशादिवन्नैवं परः" इति सूत्रमपि प्रकृत एवाधिकरणे। तत्र चौपाधिकं स्वरूपमादाय जीवेश्वरयोरुपकार्योपकारकभावादिकम्, परमार्थतस्त्वैक्यमेव; यथा—न परमार्थतस्तस्योत्पत्तिः; किन्तु नित्यत्वम्. न ज्ञातृत्वं परमार्थतः, किन्तु ज्ञानस्वरूपत्वमेव, तथा नाणुत्वं परमार्थतः, किन्तु विभुत्वम्, एवं न कर्तृत्वं परमार्थतः, किन्तु संविन्मात्रत्वम्, एवमंशत्वमपि न परमार्थतः किन्तु ब्रह्मैक्यमेव, इति सर्वोऽपि विचारोऽयं जीवब्रह्मैक्योपपादनपरत्वादद्वैतसिद्धान्त एव संगच्छते। अन्यत्र तु ब्रह्मविचारे प्रतिज्ञाते विचरस्यास्य न सङ्गतिलशोऽपि। इदमनेन सिध्यति—यत्—सर्वेषामुत्पत्त्यादीनामौपाधिकत्वनिरूपणं न तावन्मात्राभिप्रायम्; तत्र श्रुत्यादीनामतात्पर्यात्, संविन्मात्रतादिष्वेव श्रुतेस्तात्पर्याच्च, इति "तत्त्वमसी"त्यादिजीव-ब्रह्माभेदश्रुतीनां जीव-ब्रह्मैक्य एव पर्यवसानम्, इति निर्विशेषवाक्यानाम्, अभेदपराणां च वाक्यानां सविशेषवाक्यैर्भेदवाक्यैश्च न विरोधलेशोऽपि; भिन्नार्थत्वात् श्रुतीनामिति तु निष्कर्षः ॥

### जीवात्मन्याय एव परमात्मनि; न्यायसाम्यात्, इति सृष्ट्यादिवाक्यानाप्यभेद एव पर्यवसानम्

एतदेवाभिप्रेत्य तत्परत्वादभेदश्रुतीनां भेदश्रुतितः प्राबल्यमिति तत्र तत्र विशदीक्रियते। तेन च न्यायसाम्यात् जीवत्वमिवेश्वरत्वमप्यौपाधिकम्, न तु पारमार्थिकम्, इति सृष्ट्यादिवाक्यानामपि न तात्पर्यमिति सूचनात् "तत्त्वमसी"त्यत्र पदत्रयलक्षणाऽऽवश्यकताऽपि ज्ञाप्यते। व्यक्तं चैतत् भाष्य एवात्र ॥

### बिम्ब-प्रतिबिम्बभावेऽपि जीवेश्वरयोरौपाधिकयोर्न जीवस्येव ब्रह्मणः संसारित्वापत्तिः

तत्र यावत्तत्त्वसाक्षात्कारं जीवेश्वरभावयोरौपाधिकयोः, तद्भेदस्य च सत्यत्वेऽप्युपाध्युपहित ईश्वरः, जीवस्तूपाधिविशिष्टः, इति नोपाधिगतदोषा विशिष्टं जीवमिव तदुपहितमीश्वरमपि स्पृशन्ति। इदं च न जीवेश्वरयोर्बिम्ब प्रतिबिम्बभावे, किन्तु तत्तदुपाध्यवच्छेद एवेति कल्पेऽपि बिम्ब-प्रतिबिम्बाभावकल्पे तु तयोः, उपाधेः प्रतिबिम्बपक्षपातित्वनियमाद् नेश्वरस्यापि जीवगतवेदनाद्यनुभवापत्तिः ॥

### सोपाधिक-निरुपाधिकजीवेश्वरयोरनैक्यम्

तत्रौपाधिका गुणाः दोषा वा तत्तदुपाधितादशायां कार्यानन्वयेऽपि; अन्यथा जाग्रतीव सुषुप्तेऽपि विधि-निषेधाधिकारापत्तिः, इति जीवस्येवेश्वरस्योपाध्युपहितस्य न तदीयसुखाद्यनुभवापत्तिः ॥

तत्र मुक्तात्मनो नौपाधिकत्वम्; सर्वोपाधिविरहात्; संविद्रूपत्वेनैश्वरस्येव ब्रह्मस्वरूपत्वाच्च न तदेश्वरः, जीवो वा, इति संविन्मात्रेणाभेदे सुख-दुःखसाम्यापादनं न क्षोदक्षमम्, शुद्धस्य तु जीवस्य नेश्वरेणैक्यम् ॥

### श्रीभाष्यमते मुक्तात्मनां परस्परानुसन्धानापत्तिः

वस्तुतस्तु—परमत एव सर्वेषां मुक्तात्मनां धर्मभूतज्ञानविकासेन सर्वात्मसम्बन्धात् सुख-दुःखसाम्यापत्तिः। "भोगमात्रसाम्यलिङ्गाच्चे"ति सूत्रे तु ब्रह्मणा भोगसाम्यं मुक्तात्मनां प्रतिपाद्यते, न तु बद्धात्मनामपि। न हि संकल्पमात्रेण तत्तत्सृष्टानामन्यभोग्यत्वम्; अन्यथा मुक्त-जीवसृष्टानां बद्ध-जीवभोग्यत्वमापद्येत। "भावे जाग्रवदि"ति पद्ये तेषामपि सर्वानुभाव्यत्वापत्तेः ॥

सत्यं धर्मभूतज्ञानव्यक्तीनामस्ति भेदः, किमेतेन? तावतापि तद्व्यक्तिसम्बन्धस्य सविताविशेषात् कथं तद्व्यक्तिमात्रेणापि परकीयसुख-दुःखाद्यनुभवोऽपि नापलपितुं शक्यते? न हि धर्मभूतज्ञानानामैक्यं मत्वा सुखसाम्यापादनमत्र, किन्तु तेषां सर्वत्र सम्बन्धाविशेषात्। भोक्तृत्वं बाह्यार्थज्ञातृत्वादिकं वा जीवानां धर्मभूतज्ञानस्य विकसितस्य द्वारेणैव हि परे मन्यन्ते, इति तद्व्यक्तिभेदमात्रमकिञ्चित्करम् ॥

### जीव-परमात्मनोः शरीर-शरीरिभावः, तयोरुपाधितः, स्वरूपतो वा तादात्म्याध्यासश्चेत्यनर्थान्तरम्

तथाच तत्तच्छरीरोपाधिकानां तत्तच्छरीरकत्वेनैव सुखित्वम् , दुःखित्वं वा, इति न शरीरान्तरोपाधिकानां जीवानां जीवान्तरसुख-दुःखादि-साम्यापादनं चोदक्षमम् ; अन्यथा परमात्मनः सर्वशरीरकत्वेन, तत्तच्छरीरकसर्वजीवात्मशरीरकत्वेन च कथं न जीवदुःखेन दुःखित्वम् , सुखित्वं वा ॥

तत्र शरीर-शरीरिभावः शरीरस्यात्मन्यध्यासेन, नान्यथेत्यद्वैत-सिद्धान्तः। परमते तु सत्ययोरेव तयोरपृथक्सिद्धिमात्रेण। तत्र सर्व-शरीरत्वं ब्रह्मणो बाधितम् ; जीवशरीरस्य परमात्मशरीरत्वासंभवात् , अन्यथा परमात्मनोऽपि जीववत् जीवकर्मकृतशरीरेण शरीरित्वे कथं न जीवदुःखेन दुःखित्वम् ? न चान्यकर्मकृतशरीरमन्यस्य शरीरता-मर्हतीति ॥

### अपृथक्सिद्धेः कार्य-कारणभावनिबन्धनत्वमपि, नैकान्तेन शरीर-शरीरिभावनिबन्धनत्वम्

शरीर-शरीरिभावो हि नियम्य-नियामकभावापरपर्यायः कार्य-कारण-भावनिबन्धनो विशिष्टस्यैव परिणामित्वे विशिष्टयोरेव भवितुमर्हति, न तु विशेष्यमात्रस्य कारणान्तर्गतस्य, कार्यान्तर्गतस्य च। विशेष्यमात्र-परिणामितायां तु तस्यानित्यत्वापत्तिः ॥

### अन्नमयादिसंदर्भस्य शरीर-शरीरिभावपरत्वायोगः, तस्य परमात्माऽधीनत्वस्यान्नमयादौ विवक्षायामेव तात्पर्यम्

"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः"इत्यादिसंदर्भो हि संविन्मात्रस्य शुद्धब्रह्मण एव सर्वाधिष्ठानत्वमाम्नाति, नानन्दमयस्य। न चात्रान्नमयादिर्विशिष्टः परमात्मा, आनन्दमयो वा; विज्ञानमयस्यैव तन्मते जीवत्वेन जीवशरीरकस्य तेन विवक्षण आनन्दमयेन परमात्मना तत्परेण विशिष्टविवक्षाया असंभवात्। "तस्यैष एव शारीर आत्मे"ति आनन्द-मयपर्यान्ते श्रूयमाणस्यानन्दमयपरत्वे "तस्मादेतस्मात् अन्योऽन्तर-आत्मा आनन्दमयः" इत्यतोऽतिरिक्तस्यार्थस्यात्रानिरूपणात् वितथमिदं वाक्यम् , पुच्छब्रह्मपरतायां तु तत् सार्थकमिति विशदमन्यत्र ॥

अन्नमयादिसन्दर्भोऽप्यधिष्ठानारोप्यभाव एव, जीवदुःखेन
ब्रह्मणो दुःखित्वाद्ययोगः, शरीर-शरीरिभावे तु तदापत्तिः

अतः परमात्माधिष्ठितत्वमन्नमयादीनामित्यत्रैवास्य सन्दर्भस्य तात्पर्यम्। तत्राधिष्ठानारोप्यभाव एव सर्वस्य ब्रह्मणा सम्बन्ध इति विवक्षायां कथमध्यस्तधर्मेणाधिष्ठानं परमार्थतो धर्मवत् स्यात्? तदुक्तमध्याससमर्थनानन्तरमाकरे—"तत्रैवं सति तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि न सम्बध्यते" इति, इति स्वरूपैक्ये जीव-ब्रह्मणोर्न जीवस्य, ब्रह्मणो वा निर्विशेषस्य न समसुख-दुःखापत्तिः। उपाधीनां तु ब्रह्मव्यतिरेकेणाभावात्, बाधाद्वा न तद्धर्मेण ब्रह्म धर्मवत्॥

तत्र शरीरत्वमुपाधित्वं चेत्यनर्थान्तरम्, इति शरीरित्वस्य तदुपाधिकत्वमात्रपरत्वाद् घटादीनामपि चैतन्यावच्छेदकत्वेन शरीरत्वं नानिष्टम्॥

शरीरपदस्योपाधिपरत्वादन्तर्यामिब्राह्मणमपि
भेदाभेदपरं न विरुध्यते

एतेन—"यस्य पृथिवी शरीरमि"त्यादिकमपि—व्याख्यातम्। तत्राध्यासे कार्यात्मना नानात्वात्, अधिष्ठानात्मना त्वैक्यमित्येव सिद्धान्तात् कल्पितभेदमादाय सर्वशरीरकत्वमिति भेदव्यपदेशः,'अहं गौरः' इत्यभेदव्यपदेशश्चोभावपि न व्याहतौ। यथा च शरीरलक्षणपरिष्कारो नयद्युमणिभूमिकाप्रपञ्चितो न क्षोदक्षमः, तथाऽद्वैततत्त्वशुद्धौ व्यक्तम्॥

बालाक्यजातशत्रुसंवादे जीवातिरिक्तत्वपक्षोपपादनावसरे शरीरनाम्ना सम्बोधनेऽनुत्थानात् सुषुप्तं प्रति न शरीरस्य मुख्यं शरीरत्वमित्यवगम्यते। प्राणातिरिक्तत्वपक्षोपपादनपरतयापि तद्योजनमभ्युच्चयमात्रम्, न तु तत्र तात्पर्यम्॥

एतेन—मृतशरीरे शरीरलक्षणानन्वयोऽपि—व्याख्यातः, अधिकमद्वैततत्त्वशुद्धौ॥

एतेन—जाग्रच्छरीरं सर्वं मदविद्याकल्पितमिति जीवन्मुक्तानुभवोऽपि—व्याख्यातः। न चायं बद्धानुभवेन बाधमर्हति। तदुक्तम्—

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥
आत्मौपम्येन सर्वत्र समं पश्यति यो नरः।
सुखं वा यदि वा दुःखं स योगी परमो मतः॥"

इति। यथा च जगत् सर्वमपि संविन्मात्राधिष्ठानकमाविद्यकत्वाद् मिथ्या, तथोपपादितमधस्तात्, इति शरीरेणात्मनः सम्बन्धोऽप्याध्यासिक एव, इति तद्विविक्तमात्मस्वरूपमात्रं पश्यतां न स्वशरीरेणेव शरीरान्तरेणापि सम्बन्धेऽपि तदवच्छेदेन सुखित्वम्, दुःखित्वं वाऽऽत्मनः। न च परमतेऽपि मुक्तात्मनां धर्मभूतज्ञानव्यक्तेर्विकसिताया इतरात्मसम्बन्धेऽपि तद्दुःखित्वेन दुःखित्वम्; तत्र यथा मुक्तात्मनां बद्धात्मशरीरं न भोगायतनम्; तेषां तदशरीरकत्वात्, एवमेवात्रापि। कल्पितत्त्वं परं शरीरसम्बन्धस्य विशेषः॥

जगन्मिथ्यात्वमिव शरीरित्वस्यापि जागरत्वाविशेषात् मिथ्यात्वमेव। "याथातथ्यतोऽर्थान् व्यदधात्" इत्यत्र "शाश्वतीभ्यः समाभ्यः" इति वाक्यशेषात् कालस्यापि जगत्त्वाविशेषात् "शाश्वतीभ्य" इति समाविशेषणमनर्थकम्॥

यावद्विधातृसत्त्वं सर्वेषां विषयाणां सत्यत्वमविप्रतिपन्नम्। एतेन—सर्वोऽप्यात्मा, अहम्, चेतनत्वादित्यपि—व्याख्यातम्। तत्र चेतनत्वादिति संविद्रूपत्वमेव विवक्षितम्। तेन च चिदचिद्ग्रन्थिरूपस्याहमर्थस्याप्यचिदंशविनिर्मुक्तेन स्वरूपेण सर्वाभेद एव पर्यवस्यति—"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि" इत्युक्तरीत्या। अत्र साम्यमैक्यमेव, न तु साधर्म्यमात्रम्। अत एव—"सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः।" इति जीव-ब्रह्मैक्योपदेश उपपद्यते॥

श्रुत्यर्थानुवादमात्रत्वादनुमानस्य साध्य-हेत्वैक्यं न दोषाय। परार्थानुमानत्वादस्य न सिद्धसाधनत्वम्; परं प्रत्यसिद्धत्वात्, संविदात्ममात्रतैव ह्यहमर्थो मुख्यः। न चायं न्यायोऽन्तःकरण-घटादिष्वपि; तद्भेदस्य प्रत्यक्षत्वात्, तदभेदस्याप्रामाणिकत्वाच्च॥

आत्माद्वैतस्यैव श्रुति-स्मृति-सूत्रसिद्धत्वम्, अत एव "नात्मा श्रुतेरि"ति सूत्रे अन्यत्र चैकवचनान्तस्याऽऽत्मपदस्य प्रयोगः

संविदात्मना शरीरविविक्तरूपेणात्माभेदस्तु श्रुति-स्मृत्यादिसिद्धः। तथाच गीता—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।"
"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि॥"

इति। "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" इति च सूत्र आत्मपद-मेकवचनान्तम्। "तस्माद्वा एतस्मादात्मनः" इति, "तत्त्वमसी"ति च प्रत्यगात्माभिन्नतया ब्रह्मस्वरूपोपदेशोऽप्यत एवोपपद्यते। अहमर्थात्माभेदस्तु परमार्थदशामभिप्रेत्य, इति व्यवहारदशायां तद्भेदप्रत्यक्षो न मुक्तिदशायां तदभेदविरोधी ॥

आत्मभेदप्रत्यक्ष-तदभेदश्रुत्यादीनामविरोधः

आत्मैक्यं हि मुक्तिदशायाम्, न बद्धदशायाम्। तत्र च न सुख-दुःखानुसन्धातृत्वम्, इति नात्माद्वैतवादेऽन्यसुख-दुःखादेरन्यानुभाव्यत्वापत्तिः। सौभर्यादीनां तु नान्तःकरणभेदः, न वा तदुपहितस्य सौभर्यादेर्भेदोऽपीति तु विशेषः। अन्तःकरणस्याणुपरिमाणत्वमद्वैतमते मध्यमपरिमाणत्वेन। अत एव तस्य संकोच-विकासौ परमते धर्मभूत-ज्ञानस्येव, इति तद्गुणसारत्वेनाणुत्वमपि गौणं नानुपपन्नम् ॥

सौभर्यादीनामनेकशरीरैरुपभोगेऽपि तदुपाधेरन्तः-
करणस्यैक्याद् नात्मभेदः

एतेन—सर्वशरीरव्यापित्वमप्यन्तःकरणस्य, तद्द्वाराऽऽत्मनश्च—व्याख्यातम्। न च कल्पभेदेऽप्यन्तःकरणभेदः; अन्यथा कृतहानाकृताभ्यागमप्रसङ्गात्, अन्यथा सुषुप्तौ नित्यप्रलयेऽप्यन्तःकरणस्य कारणात्मनाऽवस्थानात् सुप्तोत्थितस्याप्यन्यदेवान्तःकरणम्, सूक्ष्मशरीरावयवज्ञानेन्द्रियादिकं वाऽप्युपेयं स्यात् ॥

जातिस्मरत्वं हि महाप्रलयानन्तरमपि तस्यैवान्तःकरणस्यानुवृत्त्यैव, अन्यथा तु न तदप्युपपद्येत ॥

वामदेवादीनामपि विविक्तसंविन्मात्रानुभव एव, न
विशिष्टानुभवः

प्रह्लाद-वामदेवादयः सार्वात्म्यं संविन्मात्रतयैवानुभवन्ति, न तु विशिष्टाहमर्थभावेन। जीवन्मुक्तानामपि तेषामन्तःकरणं परमुपाधितयाऽनुवर्तते, न तु विशेषणतया, इति तद्विविक्तसंविन्मात्रानुभवो न व्याहन्यते। सुप्तस्य हि शरीरे विद्यमानेऽपि न तद्विशिष्टतयाऽऽत्मानुभवः, जीवन्मुक्तानां च विद्यमान एव शरीरे शरीरदुःखेन न दुःखित्वम्, इति संविन्मात्रैक्याभिप्रायमेव "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रम् ॥

एतेन—"सर्वगत्वादनन्तस्ये"ति प्रह्लादस्य स्वस्य परमात्माभेदानुसन्धानमपि—व्याख्यातम्। इयान् विशेषः—इन्द्र-वामदेवादीनां सर्वं प्रत्यगात्माद्वैतज्ञानम्, प्रह्लादस्य तु परमात्माभेदज्ञानमखण्डाकारवृत्त्यभ्यासदशापन्नम्, न तु तत्रापीश्वरत्वेन तस्यैक्यं विवक्षितम्, येन जीवेश्वरैक्यमापद्येत ॥

सार्वात्म्यानुभवे प्रह्लाद-वामदेवादीनां विशेषः

तत्र वामदेवस्या"हं मनुरभवं सूर्यश्चे"ति प्रत्यगात्मैक्याभिप्रायम्, 'अहं वासुदेवः'इति ज्ञानं तु प्रह्लादस्य। न चेदमभेदानुसन्धानं शरीरशरीरिभावनिबन्धनम्; वामदेवस्य मन्वादिशरीरकत्वाभावेन तत्र तेन सामानाधिकरण्यस्य बाधात्। संविन्मात्रैक्याभिप्रायत्वस्यैव वक्तव्यत्वे तेनैव नयेन "वासुदेवोऽहमि"ति ज्ञानस्यापि तत्त्वमसिवाक्यजन्याखण्डचैतन्याभिप्रायत्वस्यैव युक्तत्वात् ॥

परमते जीवानां परस्परमभेदानुसन्धानायोगः, तत्र मनुशरीरकपरमात्माभेदविषयकत्वाभावश्च

कथं वा परमते जीवानां परमात्मैक्यमिव परस्परमप्यैक्यम्? तद्धि न शरीर-शरीरिभावेन; जीवानां परस्परानियम्यत्वात्, परस्पराशरीरत्वाच्च। स्वरूपैक्ये त्वात्माद्वैत एव प्रभातम्, इति प्रतिज्ञाहानिः, अपसिद्धान्तश्च ॥

एतेन—"अहं मनुरभवमि"ति मनुविशिष्टपरमात्माभेदपरमिति—परास्तम्। तथा सति हि स्वविशिष्टस्यैव परमात्मनः जीवान्तरविशिष्टपरत्वे जीवानामप्येकपरमात्मशरीरत्वेनैक्यापत्तिस्त'दभिन्नाभिन्नस्य तदभिन्नत्वम्' इति नयेन। तत्र च 'अहमभवमि'त्युत्तमपुरुषस्तु द्विरत्रानुपपन्नः ॥

"ज्योतींषि विष्णुरि"त्यादिसामानाधिकरण्यमध्यासेन तादात्म्याभिप्रायम्

"ज्योतींषि विष्णुः" इत्यादिसामानाधिकरण्यं तु कार्य-कारणभावनिबन्धनं सविशेषेणापि तादात्म्याद् व्यवहारदशायामुपपद्यते। तत्र स्वरूपांशेन विवर्तोपादनत्वमपीश्वरे मायोपहितरूपेणैव विवर्तोपादानत्वाद् यावन्मायं मायोपहितात्मनैवानुवर्तते, इति मायामाश्रित्य विवर्तोपादानत्वमपि परिणामिकारणवदेव प्रतीयते, इत्येवाभिप्रेत्य वार्तिकम्—

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥"

इति । परमार्थतस्तु तदनन्यत्वमेव; वाचारम्भणत्वाद् विनाशाख्य-विकाराश्रयस्याविद्यान्तस्य, इति सत्तात्रैविध्यवादोऽपि ब्रह्मोपादानत्व एव व्यवहारदशायामाश्रित्यैव, इति न "ज्योतींषि विष्णुरि"त्याद्यभेदव्यपदेश-विरोधः । ब्रह्मात्मता तु प्रपञ्चस्य बाधितैव । अत एव—"सर्वं खल्विदं ब्रह्मे"त्यादौ बाधायां सामानाधिकरण्यम् , इति सर्वस्य जगतो ब्रह्मोपा-दानकस्य दृष्टिभेदेन सत्यत्वम् , मिथ्यात्वं च ॥

"न त्वेवाहमि"त्यत्रेव 'मनुरभवमि'ति भूतकालनिर्देशो
न विरुध्यते, प्रत्युत भूतपूर्वगत्याऽभेद-
विवक्षायामनुकूलः

तत्र—"न त्वेवाहं जातु नासम्"इति वर्तमानेऽप्याऽऽसमेवेति भूत-कालव्यपदेशवत् स्वरूपमात्रविवक्षायामपि "मनुरभवमि"ति न भूत-कालनिर्देशानुपपत्तिः; कालत्रययोगविवक्षायामेव तात्पर्यात् , अन्यथा परमात्मशरीरकत्वस्यापि वर्तमानत्वात् परमतेऽपि "अहं मनुरभवमि"ति भूतकालव्यपदेशः कथम ?

वस्तुतस्तु—मनुत्वमौपाधिकस्वरूपम् , न चेतनरूपेणाभेदः, किन्तु निरुपाधिकमनुस्वरूपमात्राभिप्रायेणैवैक्यमित्युपाधिविरहावस्थामाश्रित्यैवा-भेद इति निरूपणार्थमेवातीतकालव्यपदेशः । स चाद्वैतवाद एवोपपद्यते, न तु परमते । तत्र प्रथम-मध्यमोत्तमपुरुषाणां प्रयोगः प्राथमिकवाक्यार्थ-प्रतीतिमवलम्ब्यैव, न तु लक्ष्यार्थप्रतीतिं भाविनीम् , इति "तत्त्वमसि" "अहं ब्रह्मास्मी"त्यादाविवा"हं मनुरभवमि"त्यत्राप्युत्तमपुरुषप्रयोग उपप-द्यते । शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्य मुख्यस्य त्वपवाद एव; सर्वत्रैषु प्रयोगेषु मध्यमोत्तमपुरुषप्रयोगानुपपत्तेरिति व्यक्तमन्यत्र ॥

विशिष्टजीवेश्वरैक्यं नाद्वैते, किन्तूपलक्षितचैतन्यैक्यमेव

तत्राद्वैतं निर्विशेषौपाधिककर्तृत्व-भोक्तृत्वादिशून्यमुक्तात्मैक्यम् , यस्य न भोक्तृत्वम् , सुख-दुःखाद्यनुसन्धानादि वा, इति न सर्वेण सर्वप्रतिसन्धा-नापत्तिः । न चात्र जीवत्वेन जीवानां बद्धानाम् , जीवेश्वरयोर्वैक्यं विव-

च्छितम्, येन प्रत्यक्षादिविरोधः स्यात्, तत्तदन्तःकरणोपाधिकानां जीवानामन्यत्वस्य सम्प्रतिपन्नत्वात् ॥

### जीवेश्वरैक्यमनेकजीववादे जीवस्य विशिष्टेश्वरभावेनेत्येकं प्रस्थानम् यदा जीवस्य जगद्व्यापारेण साकमेवेश्वरभावः

जीवेश्वरैक्यवादस्तु जीवेश्वरयोर्बिम्ब-प्रतिबिम्बभाव इति कल्पे; अनेक-जीववादे विवरणमत ईश्वरभावस्यैव मुक्तात्मरूपत्वात् यद्यप्युपपद्यते; तथापि परमत इवेश्वरस्वरूपातिरेकेण तत्र जीवस्य न स्वरूपेण सत्त्वम्; जीवोपाधीनां हृदयग्रन्थीनां तदा निरस्तत्वेन जीवत्वस्याप्यभावात् ॥

इयान् विशेषः—जगद्व्यापारवर्जं स्वरूपतोऽहमर्थरूपेणैव सत ईश्वरभावो मुक्तौ परमते, अद्वैतसिद्धान्ते तु स एवेश्वर इति जगद्व्यापारोऽप्यैश्वरेण रूपेण तस्य; ईश्वरस्वरूपातिरिक्तजीवस्वरूपाभावादेवेश्वरभावव्यपदेशः, न तु तत्साधर्म्यमात्रेणेति। "तत्त्वमसि"वाक्यार्थस्तु सर्वमुक्त्यवस्थामाश्रित्यास्मिन् कल्पे ॥

### जीवेश्वरोभयप्रतिबिम्बवादे संविन्मात्रतैव मुक्तिः

जीवेश्वरोभयप्रतिबिम्बवादे च ब्रह्मभावस्यैव जीवात्मनोऽपि मुक्तात्मस्वरूपत्वात् प्रतिजीवं मुक्तात्मस्वरूपत्वमुपाधिविलय इति विवेकः। ईश्वरभावोऽयमीश्वरत्वमेव, इति तत्क्रतुन्यायोऽत्र न तत्साम्यापत्तिविषयः, किन्तु तदैक्यविषयः ॥

### ईश्वरभावमुक्तिपक्षेऽविद्यावस्थाविशेषान्तःकरणादिमात्रनिवृत्तिः, न तु मूलाविद्यानिवृत्तिः

तत्रेश्वरभावोऽपि जीवेश्वरानुस्यूतब्रह्मात्मतानुसन्धाननिमित्त एव, तेन हि तत्तज्जीवगतमूलाविद्यावस्थाविशेषाणामन्तःकरणादीनामेव निवृत्तिः, न तु मूलाविद्याया ईश्वरोपाधिभूतायाः, इत्यद्वैत एवेश्वरभावः। बिम्बचैतन्यमपीश्वरो मायोपहित एव, न मायाविशिष्टः, इति बिम्बज्ञानमपि स्वरूपमात्रविषयावस्थाज्ञाननिवर्तकम्, न तु विशिष्टेश्वरविषयकम्, इति नातत्त्वज्ञानादत्र मुक्त्यापत्तिः ॥

### ईश्वरभावमुक्तावपि जीवस्य जीवत्वनिवृत्त्या जीवन्मुक्त्यादिव्यवस्था समानैव शुद्धब्रह्मात्मभावपक्षेण

तद्विदां दृष्ट्या तु स्वरूपेणैक्यम्, न तूपाध्युपहितरूपेण, इति तद्दृष्ट्या यावद्विदेहमुक्ति बाधितानुवृत्त्या परसत्त्वेऽपि स्वरूपमात्रस्या-

ननुसन्धातृत्वात् न सर्वसुखाद्यनुसन्धानापत्तिः । अत एव नोपदेशानुपपत्तिरपि । उपहितरूपेण तु भेद एव, परं तु स कल्पितत्वावगमादकिञ्चित्करः ॥

एकजीववादेऽपि व्यवहारोपपत्तिः, वेदप्रामाण्याविरोधश्च

तत्रैकजीववादः, अनेकजीववादश्च प्रस्थानभेदमात्रत्वात्, इति कल्पद्वयस्यापि समर्थनं तत्तत्प्रस्थानदृष्ट्या तस्य तस्यैव तत्त्वतया तत्र विकल्पाभावात्, इति नान्यतरपक्षः परिषद्घटनेन निष्कर्ष्टव्यः ॥

न चैकजीवादे व्याहतिलेशोऽपि । तत्र ह्येको जीवो व्यावहारिकः । स चेश्वरभिन्नः; अविद्योपाधिकत्वात्, अन्ये तु स्वाप्ना जीवा इव प्रातिभासिकास्तद्दृष्ट्या, इति न व्यवहारानुपपत्तिर्यावन्मुख्यजीवमुक्ति, तत्रापि जीवस्वरूपं संविन्मात्रं न प्रातिभासिकम्, किन्तु तत्रापि बाधितानुवृत्त्यैव-शरीरित्वात् व्यवहारोपपत्तिः, इति स्वाप्ना इव तत्तच्छरीरोपाधिभेदेन कल्पितेन बहुविधव्यवहारोपपत्तेर्न किमप्यनुपपन्नम्, ॥

तत्रापि बाधितानुवृत्त्यैव शरीरित्वाद् व्यवहारोपपत्तिः

न चात्र पक्ष ईश्वरोऽपि कल्पितः; तदुपाधेर्मायाया अनादित्वेन कल्पान्तरेष्विव व्यावहारिकत्वेनोपाधितः, स्वरूपतो वा तस्य कल्पितत्वायोगात् । 'अधिकोपदेशात्तु' इति न्यायेनेश्वराधीना एव हिताहितव्यपदेशा अत्रापि, इति न मुख्यजीवप्रवृत्ति-निवृत्त्योरीश्वराधीनत्वमनुपपन्नम् । न चात्रैकजीववाद इव वेदप्रामाण्यादिविरोधशङ्काऽपि ॥

एकजीववादे न भोगसाङ्कर्यम्, न वोपदेशानुपपत्तिः

स च जीवः "स वै शरीरी प्रथमः" इति वचनसिद्धो हिरण्यगर्भः, तस्यैव स्वप्नावस्थायामपरे जीवाः । स च शरीराणामधिष्ठानं विशिष्टरूपेण तदाश्रितमूलाविद्याश्रयतया स्वाप्नेष्विव, इति तत्र कल्पेऽपरेषां शरीराणां मायामात्रत्वमेवानेकजीववादे स्वाप्नानामिव, इति न भोगादिसाङ्कर्यम्; उपाधिद्वारा प्रातिभासिकानामपि तेषां भिन्नत्वात् । उपदेशास्तु स्वाप्नोपदेशवदत्राप्युपपद्यते । यदि प्रातिभासिको जीवस्वरूपं हैरण्यगर्भमेव, तत्रापि संविदात्मतैव । तदा हि यावत्सर्वमुक्तीश्वरभाव इव हैरण्यगर्भभाव एव तस्य मुक्तिः, इति न तत्र बन्ध-मोक्षाविवेकः, येन न कदापि बन्धः, मोक्षो वाऽत्राऽऽपद्येत, इति शास्त्रोपदेशवैयर्थ्यादिप्रसङ्गो न दोषः ॥

### 'ब्रह्मैव संसरती'ति कल्पोऽपि प्रस्थानान्तरम्

एतेन—ब्रह्मैव संसरतीति कल्पोऽपि—व्याख्यातः। सोऽपि प्रस्थान-भेदमात्रम्, इति न तत्रैव तात्पर्यमद्वैतसिद्धान्ते। तदुपपत्तिस्त्वद्वैतसिध्युक्तरीत्या व्यष्टि-समष्टिमनआद्युपाधिकत्वेन विश्व-तैजस-प्राज्ञ-विराट्-हिरण्यगर्भान्तर्यामिभेदेन जीवेश्वरयोः, जीवानां च विशिष्टानां भेदात् तुरीय-संविन्मात्रस्वरूपेणाभेदादिति मन्तव्यम् ॥

### तत्तदुपाधिभेदेन व्यष्टीनाम्, समष्टीनां चात्राप्यौपाधिको भेदो वर्तते

अत्र प्रतिशरीरम'हमि'ति बुद्धिस्तत्तदुपाध्युपहितरूपेणैव, इति न जीव-भेदानुपपत्तिः; स्वरूपेणाभेदात्, न वाऽभेदानुपपत्तिः। स च व्यष्टि-समष्टिभेदेन भिन्न इति त्वन्यदेतत्। अत्रापि हि मुख्यो जीवस्तुरीयं संविन्मात्रम्, अन्ये तु जीवाभासाः, इत्याभासानामहंप्रत्ययविषयत्वमनात्मन्यात्माध्यासात्, इत्यहंप्रत्ययविषयत्वादिकं समानम् ॥

### समष्टिशरीरकस्य, व्यष्टिशरीरोपाधिकजीवस्य च श्रीभाष्यमत इव न भोगसाङ्कर्यम्

तत्र समष्टिशरीराभिमानी हिरण्यगर्भः परमते सर्वशरीरकः परमात्मेव व्यष्टिशरीराणामप्यात्मा, परन्तु परमात्मेव न तत्तच्छरीरमेवात्मानं मन्यते, न वा तस्य तत् कर्मकृतम्, इति न सर्वजीवसुख-दुःखाद्यनुसन्धातृत्वं हिरण्यगर्भस्य; अन्यथा सर्वशरीरकत्वाद् ब्रह्मणः परमतेऽपि कथं न ब्रह्मणः सर्वदुखेन दुःखित्वम्?

### श्रीभाष्यमत इवैकजीववादेऽपि न प्रतिशरीरं निर्जीवत्वापत्तिः

न चात्र पक्षे सर्वेषां शरीराणां निर्जीवत्वापत्तिः। सा यदि हिरण्यगर्भशरीरत्वम्, जीवशरीरत्वं चोभयं बाधितमित्यभिप्रेत्य, तर्हि परमतेऽपि सर्वेषां शरीराणां निर्जीवत्वापत्तिः; तत्र व्यष्टिदृष्ट्या जीवशरीरत्वम्, समष्टिदृष्ट्या हिरण्यगर्भादिशरीरत्वमिति स्वीकारात्, इति न कोऽपि विरोधोऽत्रापि ॥

### जीवाभासत्वं समष्टिशरीरघटकैकशरीरत्वम्, न तु करणादिकमिव तदवयवत्वम्, येन भिन्नशरीरकत्वापत्तिः, जन्म-मरणादिकं तु तत्तदुपाधिमात्रसम्बन्धनाशाभ्याम्, इति न भोगसाङ्कर्यम्

तत्र जीवाभासत्वं तत्तत्कर्माधीनाभासरूपस्थूल-सूक्ष्मादिव्यष्टिशरीरोपाधिकत्वम्, समष्टिजीवैकदेशत्वं वा। तदेकदेशत्वं नाम तत्समष्टिघटकश-

रीरविशेषमात्रोपाधिकत्वम्, न तु छिन्नावयवत्वम्, येन ब्रह्मणश्छेद्यत्वप्रसङ्गः। न हि कर-चरणाद्यवयवविशेषाः व्यष्टिशरीरैकदेशा इति कृत्वा शरीरं छिन्नावयवम्, तेन च तस्य, तदुपाधिकस्य जीवस्य च छेद्यत्वं न बद्धजीवेऽपि दृश्यते। न चाऽऽत्माऽवयव्यत्र, किन्तु तत्तदवयवशरीरोपहितः। उपाधिनाशेनात्मनाशव्यपदेशस्तु—"चराचरव्यपाश्रयस्तु व्यपदेशो भाक्तस्तद्भावभावित्वादि" ति सूत्रं समर्थयति। स्वरूपतोऽनाश इति तु—

> "अजो नित्यः शाश्वतोऽयं पुराणो
> न हन्यते हन्यमाने शरीरे ॥"

इति श्रुतिसिद्धः। न चात्र हिरण्यगर्भस्यैवान्तःकरणेन सौभर्यादिवत् समष्ट्यात्मत्वम्, किन्तु तत्समष्ट्युपाधिना परमते परमात्मनः सर्वशरीरावच्छिन्नत्वमिव, इति नात्र तस्य भोगसङ्करप्रसङ्गः ॥

अतिरिक्ता हि जीवाभासाः व्यष्टयः परस्परम्, समष्टिशरीरिणश्च; उपाधिभेदात्। अयं च कल्पो नैकजीववादे, किन्त्वनेकजीववादे, इति ततः प्रस्थानान्तरम् ॥

तत्र समष्टिजीवमुक्तौ सर्वमुक्तिः, तदा, आत्यन्तिकप्रलये वा, इति प्राकृतप्रलये कतिपयलोकमहर्षीणां सद्भावः प्रमाणसिद्धो न विरुध्यते ॥

### अनेकजीववादे हिरण्यगर्भमुक्तौ न सर्वमुक्तिः

अयमेव कल्पोऽनेकजीववादे, जीवेश्वरबिम्ब-प्रतिबिम्बभावे, यत्र यावत्सर्वमुक्तीश्वरभावो नाम, इति हिरण्यगर्भमुक्तौ न सर्वमुक्त्यापत्तिः, कल्पान्तरीयब्रह्मद्वाराऽपि सृष्टिव्यवस्थोपपत्तेः ॥

तत्र हिरण्यगर्भावसाने तस्य मुक्तावपि मायोपहितस्यान्तर्यामिणः समष्टिकारणशरीरकस्य जीवातिरिक्तस्य सत्त्वात् तत्तत्कर्मानुसारेण मन्वन्तरादाविव कल्पान्तरादावपि सृष्टिरप्रत्यूहा ॥

तत्र मायोपहितं सविशेषं ब्रह्मैव जगतः स्रष्टृ, जीवस्तु कल्पान्ते सूक्ष्मरूपेण वर्तते, इति न जीवेश्वरद्वयम्, जीवद्वयं वा तदा। समष्टिजीवोऽपि हिरण्यगर्भः समष्टिसूक्ष्मशरीरात्मा कल्पान्ते सर्वसूक्ष्मशरीराविनाशादुपहितरूपेण व्यष्टिरूपेणाभास एव, कारणशरीरात्मना तु तदा वर्तते। सर्वमुक्तौ तु तस्यापि तदुपहितरूपेणाभासत्वमेव, इति न किमप्यनुपपन्नम् ॥

### जीवेश्वरयोः, जगदीश्वरयोः, जगद्ब्रह्मणोश्चाद्वैतसिद्धान्ते सामानाधिकरण्यव्यवस्था

तत्र जीवाभासानां विशिष्टानामिव जीवेश्वरयोरपि विशिष्टयोर्विशिष्टरूपेण भेदाद् न सामानाधिकरण्यम्। अत एव "तत्त्वमसी" त्यादौ जहदजहल्लक्षणा। न चात्र विशिष्टापह्नवो दोषः; विशिष्टरूपेण तस्येष्टत्वात्। संविन्मात्रेणाभेदो हि वेदान्ततात्पर्यविषयः। स तु न तत्रापह्नूयते। सामानाधिकरण्यं हि जीवेश्वरयोः संविन्मात्रस्वरूपेणाभेदात्, ब्रह्म-प्रपञ्चयोस्तु बाधात्, ईश्वर-प्रपञ्चयोस्तु कार्य-कारणभावनिबन्धनतादात्म्यादिति गतमधस्तात्। तत्रा 'हं मनुरभवमि' त्यादावभेदे सामानाधिकरण्यम्, वालो युवेत्यादौ बाधायां सामानाधिकण्यमिति व्यवस्था ॥

### आत्मनो न स्वरूपतः, किन्तूपाधित एवानेकत्वे महाभारतप्रमाणनिष्कर्षः

एतेन—

बहूनां पुरुषाणां हि यथैका योनिरुच्यते।"

इत्यपि—व्याख्यातम्; शरीरभेदेऽप्यात्मैक्यप्रतिपादनत्वादस्य। पुरुषपदं हि तत्राहमर्थपरम्;

"बहवः पुरुषा राजन् साङ्ख्ययोगविचारणे।"

इति प्रक्रमात्। तत्राहमर्थस्तु यदि चिदचिद्ग्रन्थिरूपः, तर्हि तत्र पुरुषाणामेकयोनित्वम्; अन्यथा त्वनेकत्वम्। स चाहंप्रत्ययविषयस्थूलसूक्ष्मशरीराद्युपाहितात्मा स्वरूपेणैकः, उपहितरूपेण त्वनेक इति कल्प एव—

"बहूनां पुरुषाणां हि यथैका योनिरुच्यते।"

इति वाक्यशेषोपपत्तिः। अतो जीवैक्याभिप्रायमेवोक्तं वचनम्। तच्च संविन्मात्रमुख्यजीवत्वकल्प एव, नाहमर्थमुख्यजीवत्वे; तस्य परस्परभेदस्य संप्रतिपन्नत्वेन तदैक्यस्य बाधात् ॥

### महाभारतस्य साङ्ख्यादिविषयत्वायोगः

तत्र साङ्ख्यमतेऽन्यत्र वा जीवानां नित्यत्वाद् न जीवकारणपरतयोक्तं वचनं योजनमर्हति। योनिशब्दो ह्यत्र यद्युपादानपरः, तर्हि जीवोपाध्यधिष्ठानं संविन्मात्रमेव मुख्यो जीव इति पक्ष एवात्र स्वरसः। अत एव—

"समासतस्तु व्यासः पुरुषैकात्म्यमुक्तवान् ।"

इति वाक्यशेषः । तेन हि चिदचिद्ग्रन्थिरूपाणामात्मनां संविन्मात्रेणैकात्मत्वमिति बोधनात् विगीतानि, शरीराणि, मयैवात्मवन्तीति प्रयोगमूलमेव तत्त्वं ज्ञाप्यते ।। एतेन—

"ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ।।"

इति वचनमपि—व्याख्यातम् तस्यापि सर्वदेहस्थैकक्षेत्रज्ञमात्रपरत्वात् । तथा चोक्तम्—

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।।

इति ।।

महाभारतस्य परमात्मैकत्वपरतायामेव तात्पर्यम्

न चात्र परमात्मनो विवक्षा; जीवसाक्षिण एवात्र प्रकरणात् , परमात्मनोऽप्रकरणात् । "एकश्चरति भूतेषु" इति भूतपदं शरीरपरम् , न शरीरिपरम्, इति नात्र जीवातिरिक्तस्य परस्य प्रक्रमः । अत एव—

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।।"

इति—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।"

इति गौडपादकारिका च । अस्याः श्रुतित्वं परदृष्ट्या, स्वदृष्ट्या तु गौडपादीयत्वमिति त्वन्यदेतत् ।।

आत्मबहुत्वस्याप्रामाणिकत्वम् , तदेकत्वस्यैव सर्वत्रावगमात् ,
न चैकवचनं जात्या, आत्मत्वस्याजातित्वात्

उभयत्र चात्र जीवैक्यपरत्वम् ; तत्र कर्माध्यक्षपदसमभिव्याहारात् प्रथमं कर्माधिकारिजीवपरम् । तच्च निष्कर्षकविधयेति विशेषः । तत्र "सर्वभूतेष्विति बहुवचनमौपाधिकाभिप्रायम् , उपाध्यभिप्रायं वा । अत एवात्र निष्कर्षविधा । न चात्मत्वं जातिः; आत्मनः स्वरूपत एकत्वात् , उपाधिभेदनिबन्धनत्वाच्चात्मबहुत्वस्य; यथा घटाकाश-मठाकाशादिरूपेण भेदेन बहुत्वेऽप्याकाशस्यैकत्वाद् तत्र नाकाशत्वं जातिः । अतो नात्र जात्येकत्वेनोपपत्तिः क्षोदक्षमा ।।

### स्वरूपतो जीवात्मैक्यसिद्धान्तोपसंहारः, तद्बहुत्ववचनाना-मौपाधिकत्वव्यवस्था च

अयमेव न्यायः परमात्मन्यपि। सोऽपि संविन्मात्रेणैवैकः, उपहितरूपेण तु त्रिगुणमायोपाधिकत्वेन, तत्तद्गुणाधिकमायोपाधिकत्वेन च भिन्न एव; अन्यथा कथं विष्णूत्कर्षवादः परेषाम्? यथाष्टदिगुपाधिकत्वेन तत्तद्दिग्विशेषोपाधिकत्वेन चाकाशभेदः, एवं परमात्मैक्यमपि निर्विशेषसंविन्मात्रतयैव। "स एकधा भवति त्रिधा भवति, बहुधा भवती"त्यादिश्रुतीनामपि संविन्मात्रस्योपाधिभेदेन प्रयुक्तभेदाभिप्रायत्वम्, न तु सगुणेश्वरबहुभावाभिप्रायेण, इति परमात्मैक्याभिप्रायत्वमप्यात्मैक्याभिप्रायमेव। तदुक्तम्—

"सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः ॥"

इति। अतो जीवात्मैक्यानुमानं मुक्तात्मविषयकमबाधितम् ॥

### चैत्र-मैत्रादिभेदस्त्वौपाधिकः, इति न परस्परानुसन्धानापत्तिः

तत्र चैत्र-मैत्रादिसोपाधिकभेदस्तु नाद्वैतिनामपि विप्रतिपन्नः, इति चैत्रः, मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, मैत्रानुसंहितदुःखाननुसन्धातृत्वादित्यनुमानं सिद्धसाधनम्। यद्यपि चैत्र-मैत्रभेदोऽद्वैतसिद्धान्ते कदाचिद्बाध्यः; कदाचिदखण्डाकारसंविन्मात्रविषयकवृत्तिमात्रबाध्यत्वात् तस्य। अधिकं शतभूषण्यामेव व्यक्तम्। सर्वथा तु मुक्तात्मस्वरूपैक्यं न प्रत्यक्षबाधितम्, अनुमानबाधितं वा, इत्युक्तानुमानेनापि ब्रह्मात्माभेदस्यैव साधनेन सिद्धसाधनात्, साध्याप्रसिद्ध्या दृष्टान्तासिद्धेश्च निर्विशेषज्ञानबाध्याभेदकत्वेन सोपाधिकत्वाच्च ॥

॥ इत्यात्माद्वैतोपपत्तिः ॥

## जीवेश्वरैक्यानुपपत्तिः

जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रमद्वैते जीवत्वेश्वरत्वविशिष्टैक्यं बाधितम् , अतो न भोगानुसन्धानसाङ्कर्यमद्वैतवादे

जीवेश्वरैक्यमखण्डाकारवृत्तिजन्याविद्यातत्प्रयुक्तोभयनिवृत्तित्वोपलक्षितसंविद्रूपत्वम् , अद्वीतीयप्रत्यगभिन्नस्वरूपमात्रं वा "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।" "तत्त्वमसी"त्यादिप्रमाणसिद्धम् , न तु तदीश्वरत्वविशिष्टजीवत्वविशिष्टयोरैक्यम् , जीवत्वोपलक्षितेश्वरत्वविशिष्टयोरैक्यम् , ईश्वरत्वोपलक्षितजीवत्वविशिष्टव्यक्त्यैक्यं वा ।

सद्वितीयत्वस्य बाधाद् एकपदमात्रे लक्षणायामीश्वरस्य, जीवस्य वा स्वरूपमात्रबोधने वाक्यवैयर्थ्यात् , न पदत्रयलक्षणा दोष इति व्यक्तमखण्डार्थवादे

न चात्र पक्षे व्यक्तिद्वयमवतिष्ठते, इति न सर्वेण सर्वप्रतिसन्धानप्रसङ्गः; व्यक्तिद्वयैक्याभावात् ? न चेश्वरेण जीवक्लेशानामनुसन्धानमवर्ज्यम् । न च जीवेश्वरव्यक्त्योरभेदोऽद्वैतसिद्धान्ते, किन्तु निरुपाधिस्वयंज्योतिःसंविन्मात्रपरिशेष एव । जीश्वरभेदवाक्यानि तु तयोरुभयोरुपाधिभेदभिन्नभेदयोर्व्यावहारिकौपाधिकतद्भेदपराणि, न तयोः स्वरूपभेदपराणि, यत्तु सिद्धान्तलेशसंग्रह ईश्वरभावो मुक्तिरिति मुक्तात्मस्वरूपनिरूपणप्रकरणे विवेचितम् ,॥

सिद्धान्तलेशसंग्रहीतेश्वरभावप्रकरणे मुक्तावस्थायां न जीवत्वमीश्वरस्येति न जीवेश्वरव्यक्त्यैक्यमद्वैतम् , तत्र प्रमाणानि, तस्य गौणमुक्तेर्विशेषश्च

तदापि न जीवस्य सत ईश्वरैक्यम् , किन्तु जीवत्वे निवृत्त ईश्वरस्वरूपातिरिक्तौपाधिकजीवाभासाभिप्रायः, इति न तदपि जीवेश्वरैक्याशयम् , इति जीवेश्वरैक्यदूषणमनुक्तोपालम्भनमेव । न च मुक्तात्मेश्वरभावपक्षे द्वयोरैक्यम् ; उक्तविधया तत्र जीवत्वप्रयोजकनिवृत्तिमात्रेणेश्वरत्वोपहितैक्यविवक्षायामपि स्वरूपभेदाभावात् ॥

अयं च जीवेश्वरभावो जगद्व्यापारसहितोऽनेकजीववादे जीवेश्वरबिम्ब-प्रतिबिम्बभावपक्षे बहुतरसूत्रभाष्यादिसंमत इति सिद्धान्तलेशसंग्रहे—

"उत्तराच्चेदाविर्भूतस्वरूपस्तु" "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" "इत्याद्यनुसारेण विवेचितः, इति नाप्रामाणिकः। न चायमीश्वरभावः सगुणोपासनफलब्रह्मसाधर्म्यमात्रं जगद्व्यापारवर्जम्, किन्तु निर्गुणब्रह्मसाक्षात्कारफलब्रह्मभाव एव ॥

परं त्वेकाविद्यापक्षे स जीवमात्रतत्त्वसाक्षात्कारेण; तावन्मात्राश्रिताऽविद्यावस्थाविशेषाणां स्वीकारात्, एकमुक्तौ सर्वमुक्त्यापत्तिपरिहारार्थत्वाच्च तत्स्वीकारस्य, इति न यावन्मूलाविद्यानिवृत्ति तदुपहितात्मना ब्रह्मस्वरूपसाक्षात्कारफलमिति तु विशेषः। इदं च प्रस्थानभेदमात्रमिति त्वनन्तरप्रकरणे विशदीकृतम्। भामतीमते जीवभेदेनाविद्यानानात्वाद् न निर्विशेषब्रह्मभावविरोधः। अयमेव न्यायः प्रकटार्थकारादीनां मतेऽपि।

### ईश्वरभावो न मुक्तिरिति भामत्या इव प्रकटार्थविवरणस्यापि प्रस्थानम्

तत्र—

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।"

इति सिद्धान्तेऽविद्यावस्थाविशेषोपहितस्यैव जीवत्वात् तदुपाधिनिवृत्तावीश्वरभावविवक्षायां न विरोधलेशोऽपि। तत्रेश्वरत्वं चैतन्यमात्रस्य कारणोपाधित्वकृतम्, जीवत्वं कार्योपाधिकत्वकृतम्, न च जीवाविद्याकृतमीश्वरत्वमीश्वरस्य; कार्य-कारणोपाधिकत्वमात्रत्वाद् जीवत्वेश्वरत्वयोः ॥

### ईश्वरभावाख्यमुक्तेरपि पर्यवसाने निर्विशेषब्रह्मभाव एव पर्यवसानम्, तत्क्रमश्च

ततश्च जीवोपाधिमात्रनिवृत्त्या जीवत्वस्य निवृत्तावीश्वरोपाधिमूलाविद्यातत्तदवस्थाविशेषकार्योरूपोपाधिविशेषनिवृत्त्या जीवविशेषगतजीवत्वनिवृत्तावपि जीवान्तरोपाधितदवस्थाविशेषाणां नाशपर्यन्तमीश्वरभावस्यानुवृत्त्येश्वरभावो मुक्तिरिति हि व्यवस्था, इत्यविद्याऽवस्थाविशेषनाशपर्यन्तमीश्वरभावो मुक्तिः। ततस्त्वीश्वरत्वस्यापि निवृत्त्या निर्विशेषब्रह्ममात्रमवतिष्ठत इति निष्कर्षः ॥

तत्र जीवाविद्याकल्पित ईश्वर इति पक्षस्यास्वीकारात्, तमादाय दूषणानि सर्वाण्यनुक्तोपलम्भनानि, इति तत्तज्जीवोपाधिनिवृत्तौ तस्य

तस्य मुक्तत्वाद् न कश्चिदपि मुक्तः स्यादित्यापत्तिः, न वा पुनरपि कार्योपाधिकत्वेन जीवभावापत्त्याऽनिर्मोक्षापत्तिः ॥

### जीवेश्वरोभयप्रतिविम्बभावे शुद्धब्रह्मभाव एव मुक्तिः, तत्र प्रस्थानद्वयमूलनिष्कर्षश्च

जीवेश्वरोभयप्रतिविम्बभावपक्षे तु ततज्जीवानां बिम्बरूपनिर्विशेषभावो निराबाधः। तत्र बिम्ब-प्रतिविम्बयोरैक्यमेव। औपाधिकसम्बन्धात् प्रतिबिम्बं बिम्बात् पृथगिवावभासते, इत्युपाधिनिवृत्तौ प्रतिबिम्बमपि बिम्बात्मनैवावशिष्यते, इत्युभयप्रतिविम्बवादे ब्रह्मभावः, जीवमात्रप्रतिबिम्बभावे तस्येश्वरभावो मुक्तिरिति सुस्थम्। अन्यत्तु सर्वमत्रानुक्तोपालम्भनम् ॥

### मुख्येऽद्वैतसिद्धान्ते जीवेश्वरयोराराध्याराधकभावाद्यविरोधः, न वा कर्म-भक्तियोगादिवैयर्थ्यम्, न वा लोकव्यवहारानिर्वाहः

तत्रेश्वरभावमुक्तिकल्पः प्रस्थानभेदमात्रम्, इति प्रस्थानान्तरेण तस्य निरासोऽकिञ्चित्करः; तुल्यनयेन तस्यापि प्रथमेन प्रस्थानेन निरासस्संभवात्, इति सिद्धान्तलेशसंग्रहीतस्य पक्षस्य तदध्यासरूपतानिरासोऽकार्यकारी, इति यवदीश्वरत्वं जीवत्वेन तावज्जीवेश्वरभेदो निराबाधः, इति न तदैक्यमद्वैतसिद्धान्ते, इति जीवेश्वराराध्याराधकभावादि सर्वं सुस्थमद्वैतसिद्धान्तेऽपि। "ब्रह्मविदाप्नोति परमि"त्यादौ ज्ञानमात्रेण ब्रह्मप्राप्तिर्हि तस्यामाप्तत्वभ्रमनिवृत्तिरेव; कण्ठचामीकरादिप्राप्तौ तथा दर्शनात्, इति मुक्तौ न जीव-ब्रह्मणोर्भेदप्रसङ्गः ॥

एतेन "सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्" "मुक्तोपसृप्यव्यपदेशाच्च" "भोगमात्रसाम्यलिङ्गाच्च" इत्यादिसूत्राण्यपि व्याख्यातानि ॥

### सुषुप्त्युत्क्रान्तिसूत्रं न जीवेश्वरभेदपरम्

तत्र "सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्" इति सूत्रं संसारिणोऽतिरिक्तमसंसारिस्वरूपम्; एकस्य सोपाधिकत्वात्, अन्यस्य निरुपाधिकत्वादिति वर्णयति, इति न तत्र जीवेश्वरभेदप्रतिपादनम् ॥

### अद्वैतसिद्धान्ते कामादिविपाक एव मुक्तिः, न तु भेदापेक्षा प्राप्तिरिति मुक्तोपसृप्यसूत्रमपि न प्रतिकूलम्

एतेन—द्वितीयं सूत्रमपि—व्याख्यातम्; तेन हि राग-द्वेषादिहृदयग्रन्थिविमुक्तिमात्रं ब्रह्मणः प्राप्यत्वम्, न तु मुक्तौ प्राप्य-प्रापकभेदलेशो-

ऽपीति प्रतिपाद्यते । अत एव श्रुतिः "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्यो अमृतो भवत्यत्र ब्रह्म समश्नुते" इति । अनया हि रागादिसर्वग्रन्थिनिवृत्तिरेव मुक्तिः, न तूत्क्रान्तिसापेक्षा प्राप्तिर्नाम मुक्ताविति प्रतिपाद्यते । "भोगमात्रसाम्यलिङ्गाच्चे"ति सूत्रं तु गौणमुक्तिपरं जीवेश्वरभेदपरमेवाद्वैतमतेऽपि , इति नानेनाद्वैतसिद्धान्तव्याघातः ॥

### श्रीभाष्यमते मुक्तोपसृप्यत्वानुपपत्तिः

वस्तुतस्तु—श्रीभाष्यमते प्रत्यगात्मनो मुक्तस्य ब्रह्मणाऽपृथक्सिद्धत्वाद् जीवेश्वरयोरात्यन्तिकभेदो न संभवति, इति "सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्" "मुक्तोपसृप्यभेदव्यपदेशात्" "भोगमात्रसाम्यलिङ्गाच्चे" त्यादि न घटते; अत्यन्तभेदेऽपृथक्सिद्धेर्बाधात् । न हि मुक्तापृथक्सिद्धस्य ब्रह्मणो मुक्तप्राप्यत्वम् ॥

### अपृथक्सिद्धिसम्बन्धवादे भेदव्यपदेशानुपपत्तिः

एतेन—"ब्रह्मविदाप्नोति परमि"त्याद्यपि तत्र व्याहतमिति—व्याख्यातम् । तत्रापृथक्सिद्ध्युपपादको हि भेदः परतन्त्रो न स्वतन्त्रतया भेदव्यपदेशमर्हति, इति कथं भेदव्यपदेशोऽपि सूत्रेषु तत्र तत्र परमते जीवेश्वरयोः ॥

### जीवस्य परमात्मशरीरत्वे परमात्मनो जीवदुःखेन दुःखित्वापातः

तत्राऽपृथक्सिद्धिर्ब्रह्मणो यथा मुक्तेन, न तथा बद्धेन । न ह्यसति कार्य-कारणभावे कस्यापि परमात्मनाऽपृथक्सिद्धत्वं संभवति । शरीरत्वं तु मुख्यं प्रत्यगात्मन एवाभौतिकशरीरस्य, न तु बद्धस्य सशरीरस्य; तस्य विशिष्टरूपेण परमात्मशरीरत्वस्यासंभवात् ॥

सूक्ष्मचिदचिद्विशिष्टकार्यं हि स्थूलचिदचिद्विशिष्टं न विशेष्यमात्रस्य शरीरतामर्हति; अन्यथा जीवशरीरेण परमात्मनः सशरीरत्वम् , तद्धर्मेण धर्मवत्त्वम् , विकारित्वादिकं चापद्येत । सद्वारकमेव जीवशरीरेण परमात्मनः सशरीरत्वम् , न साक्षादिति हि परेषां सिद्धान्तः । न च शुद्धप्रत्यगात्मस्वरूपातिरिक्तो विशिष्टरूपेण, स्थूलविशिष्टरूपेण वा ब्रह्मणः केवलस्य कार्यम् , येन तच्छरीरं स्यात् , अन्यथा कथं न जीवदुःखेन परमात्मनो दुःखित्वम् ?

## 'तत्त्वमस्यादि' महावाक्यानां संविन्मात्रा-भेदाभिप्रायत्वमेव

'तत्त्वमसी'त्यादिसामानाधिकरण्यमपि शुद्धप्रत्यगात्माापृथक्भावेनैव; अन्यथा बद्धस्यापि ब्रह्मापृथक्सिद्धत्वे किमिति मुक्तौ जीवस्य शुद्ध-प्रत्यगात्मावस्थाऽपेक्षा ? कथं च मुक्तस्येव बद्धस्यापि न भोगमात्रसाम्यं ब्रह्मणः यदि शरीरसम्बन्धस्तद्विरोधी, तर्हि कथं बद्धशरीरेणापृथग्-भावात् परमात्मनोऽपि न दुःखादि। अतः संविन्मात्राभेदाभिप्रायमेव "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादि सामानाधिकरण्यम्। तदपि जीवत्वेश्वरत्वोपलक्षितसर्वोपाधिशून्य-स्वप्रकाश-संविन्मात्रमित्येव युक्तम्॥

## विशिष्टजीवेश्वरैक्यं न 'तत्त्वमसि' महावाक्यार्थः, अधिष्ठान-संविदात्मनैवाभेदस्य विवक्षणात्। अत एव "नेतरोऽनु-पपत्तेरि'त्यादिः सूत्रेषु भेदव्यपदेशः

ईश्वरपदपरित्यागेन "अहं ब्रह्मास्मी"ति ब्रह्मपदप्रयोगो हि नित्य-शुद्धमुक्तस्वभावनिर्विशेषस्वरूपमेव जीवस्याभिप्रैति। अत एव— "अहमीश्वरः" इति न महावाक्यम्। ततो ज्ञायते—न जीवेश्वरैक्यं शास्त्रतात्पर्यविषय इति। न चात्र व्यक्तिद्वयैक्यमिति गतमधस्तात्, इति 'घटः पटः' 'गन्धो रसः' इत्यादिवैलक्षण्यात् स्वरूपैक्यमादाय 'घटः पटः' इत्यादिप्रतीतिर्न प्रसरति; द्रव्यात्मनैक्यविवक्षायां तु तथा प्रयोगोऽपि नासाधुः। अत एव "सद्भावेन ह्यजं सर्वमि"ति गौडपादीया कारिका। यत्र व्यक्तिद्वयसाधारणं कारणजातस्वरूपमेकम्, तत्र कारणात्मना कार्य-योरप्यभेदो न व्याहन्यते। यथा सुवर्णात्मना कटक-कुण्डलयोः॥

अयमेव न्यायः—'अहं ब्रह्मास्मी'त्यादावपि; संविदात्मनाऽभेदात्, अधिष्ठानसंविदात्मनैवाभेदस्यात्र विवक्षणात्॥

ईश्वरभावमुक्तिपक्षस्तूपपादितः। "नेह नानाऽस्ती"त्यादि श्रुत्यर्थवि-चारस्त्वन्यत्र विशदः, इति न तया ब्रह्मणोऽपि निषेधः, अद्वितीयश्रुत्येक-वाक्यतया ब्रह्मेतरसर्वनिषेधाभिप्रायत्वात्तस्याः। न च कुत्रापि जीवेश्व-रयोरभेदोऽद्वैतसिद्धान्ते स्वीक्रियते, इति विज्ञानमयादानन्दमयस्य, ततो-ऽपि पुच्छब्रह्मणोऽपि भेदो नाद्वैतसिद्धान्तविरुद्धः। अत एवानन्दमया-धिकरणे "नेतरोऽनुपपत्तेः" "इतरव्यपदेशाच्चे"ति सूत्रे॥

### आनन्दमयाधिकरणस्याद्वैत एव स्वारस्यम्

आनन्दमयाधिकरणस्याद्वैताभिप्रेतयोजनैव बादरायणाचार्याणामपि संमता, इति परपक्षनिराकृतिपूर्वकं वेदान्तरत्नामण्यादौ, विशिष्य शतभूषण्यां च व्यक्तम् ॥

### आनन्दमयस्यापि कोशत्वे कठ-रुद्रोपनिषदादयोऽपि प्रमाणम्

पञ्चकोशोपनिषत् मुद्रापिता न कुत्राप्युपलभ्यत इति साहसम् पञ्चकोशोल्लेखेन तदतिरिक्तपुच्छब्रह्मण्येव तैत्तिरीयोपनिषदस्तात्पर्यमिति कठ-रुद्रोपनिषदादयो बहव उपनिषदः श्रावयन्तीति पूर्वमुपपादितम् । अधिकमद्वैततत्त्वशुद्धावप्युक्तम् , इति तस्य व्याख्यातृभिरनुदाहरणमकिञ्चित्करम् ॥

### आनन्दमयपरमात्मतायां तत्पर्यायान्ते "तस्यैष एव शारीर आत्मे"ति वाक्यवैयर्थ्यापत्तिः

"तस्यैष एव शारीर आत्मा, यः पूर्वस्ये"ति वाक्यमानन्दमयपरमात्मतायां व्यर्थम् । 'तस्य पूर्वस्यैव शारीर आत्मा य एव आनन्दमयः' इति योजनायाम् , "तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मे"त्यनेनैव गतार्थत्वात्, प्राणमयादिपर्यायेष्वपि तथा योजनायाम्—आनन्दमयपर्यायान्ते तदात्मताऽसङ्गतिः । भाष्यं तु स्वनिरसिष्यमाणवृत्तिकारमताभिमतां योजनामाश्रित्य, न तु स्वसिद्धान्ताभिप्रेताम् ॥

### ब्रह्मण आनन्दमयस्याप्यधिष्ठानस्यैव पुच्छपदेन निर्देशो न विरुध्यते

तत्रानन्दमयो यदि प्रिय-मोदादिशिरस्कः सावयव एव, तर्हि तस्य सावयवत्वादनित्यतापत्तिः । सावयवत्वं यदि न वस्तुतः, किन्तु पक्षिरूपेण "द्वा सुपुर्णावि"ति श्रुत्युक्तरीत्योपदेशार्थम् , तर्हि अनश्नतः पक्षिण इवान्तर्यामिरूपेणाधिष्ठानमात्रतया पुच्छरूपेणोपदेशोऽपि न विरुध्यते । परमात्मनः पक्षित्वमिव पुच्छत्वमप्यसंभवि वस्तुत इति समानम् । "ब्रह्मविदाप्नोति परमि"ति प्रकृतस्य पक्षिरूपेणोपदिश्यमानस्य ब्रह्मपदेनोपदेशोपसंहार एव युक्तः । पक्षित्वम् , पुच्छत्वं चाकार्यकारि; बुद्धौ समर्पणमात्रार्थत्वात् ॥

### प्रक्रान्तशैलीपरित्यागेन भूमविद्यावत् "ब्रह्म पुच्छमि"ति सर्वान्तरोपदेशः

न चात्र सर्वान्तरत्वं 'ततोऽन्यस्ततोऽन्यः' इति क्रमेणैवोपदेश्यमिति नियमः; उपक्रान्तशैलीपरित्यागेन "पुच्छं ब्रह्मे"त्यधिष्ठानतया निर्देशस्यापि भूमविद्यायामिवाविरोधात्, इति 'तस्माद्वा एतस्माद्वा आनन्दमयादन्योऽन्तर आत्मे'त्यनुपदेशोऽकिञ्चित्करः ॥

### 'ब्रह्मविदि'तिप्रक्रान्तं "ब्रह्म पुच्छमि"ति परामृष्टमेव, सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते"त्युपसंहृतम्

'एतमानन्दमयमात्मानमुपसंक्रामति" इत्युपसंहारस्तु क्षेत्रविविक्तात्मस्वरूपविज्ञाननिर्णयाधीन एव ब्रह्मस्वरूपनिर्णयः, जीवब्रह्मैक्यस्यापि तन्निर्णयाधीननिर्णयत्वादित्येवमभिप्रायः। अत एव भृगुवल्ल्यां मयट्परित्यागेन कारणात्मना ब्रह्मण उपदेशे "आनन्दो ब्रह्मेति व्यजानात्। "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता" इति पुच्छब्रह्मण्येव प्रतिष्ठात्वेन निर्दिष्टे ब्रह्मस्वरूपोपदेशस्य समाप्तिरिति व्यवस्थापितम्। अधिकं तैत्तिरीयोपनिषद्वार्तिके। सामानाधिकरण्ये विषये वक्तव्यं सर्वं तत्र तत्र व्यक्तम् ॥

### "तत्त्वमसी"त्यत्र शरीर-शरीरिभावेन न सामानाधिकरण्यसंभवः

तत्र मुख्यं सामानाधिकरण्यमभेदे "तत्त्वमसी"त्यादावद्वैतसिद्धान्त एव। ब्रह्मणो शरीर-शरीरिभावे न मुख्यं तात्पर्यम्; सर्वशरीरकस्य श्वेतकेतुमात्रशरीरित्वोपदेशवैयर्थ्यं स्यात्मद्वैतपक्षेऽकिञ्चित्करम्, आत्माद्वैते तु सर्वात्म्यैक्योपदेशत्वात् तदुपदेशः सार्थकः न चायमनुपपन्नोऽपि; "सदेवे"ति प्रस्तुतस्याचिच्छरीरकश्वेतुकेतुमात्रशरीरकत्वस्य बाधात्। प्रक्रान्ताचिच्छरीकत्वत्यागस्तु स्वसिद्धान्तविघाती ॥

### अन्तर्यामिब्राह्मणस्य शरीर-शरीरभावे न प्रामाण्यम्

अन्तर्यामिब्राह्मणं पृथिव्याद्यवच्छिन्नात्ममात्रबोधनेन सर्वाधिष्ठानत्वमेव बोधयति, न तु तच्छरीरकत्वं परमार्थतः इति तदर्थनिर्णायकबहुतरोपनिषदनुसारेणाद्वैततत्त्वशुद्धौ, तद्भूमिकायां च व्यक्तम्। "यो विज्ञाने तिष्ठन्" इत्यपि विज्ञानमयस्य बुद्ध्युपाधिकस्य परमात्माधिष्ठानकत्वमेव ज्ञापयति, न तु जीवात्मशरीरकत्वम् ॥

तत्र विज्ञानपदं यदि बद्धात्मपरम् , तर्हि न मुक्तात्मनः परमात्मशरीरत्वम् यदि मुक्तात्मपरम् , तर्हि तस्य परमात्मापृथक्सिद्धत्वे "विज्ञाने" इति सप्तम्यनुपपत्तिः, बद्धात्मनोऽपि परमात्मशरीरत्वसिद्धान्तव्याकोपश्च उभयपरत्वं त्वेकत्र वाक्ये बाधितम् । सर्वत्र पृथिव्यादीनां परमात्मपृथग्भूततया निर्देशादपृथक्सिद्धत्वम् , शरीरत्वं वा न युज्यते, अधिकमद्वैततत्त्वशुद्धौ ॥

न चात्र शरीर-शरीरिभावः, परमात्मनः सर्वापृथक्सिद्धत्वं वा कण्ठोक्तम् । शरीरपदप्रयोगमात्रं तु भोगायतने प्रसिद्धं तदर्थं नात्र गोचरयति । अन्यत्तु चतुर्विधं शरीरलक्षणमसङ्गतमिति विशिष्टाद्वैतभञ्जनादौ, अद्वैततत्त्वशुद्धौ च व्यक्तम् ॥

### सशरीरत्वे परमात्मनः प्रियाप्रियसंस्पर्शापत्तिः

परमात्मनः सर्वशरीरत्वे "न ह वै सशरीरस्य सतः प्रियाप्रिये न स्पृशतः" इति श्रुत्या परमात्मनोऽपि प्रियाप्रियसंस्पर्शप्रसंगः । तत्र सशरीरत्वं शरीरात्मत्वबुद्धिनिबन्धनमेव दुःखनिदानम् । अत एव जीवन्मुक्तानाम् , अवताराणां च तदात्मत्वबुद्धिरहितानां न दुखित्वम्, इति तेन नयेन भगवतोऽप्यशरीरत्वमेव स्वभावः, न शरीरित्वमित्येव फलति, तेन च "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।" "अशरीरं वाव सन्तं प्रियाप्रिये न संस्पृशतः"इत्यादिश्रुतयोऽप्युपपद्यन्तेतराम् , इति वस्तुतः स्वशरीरत्व ईश्वरस्यापि दुःखित्वादिप्रसक्तिरनिवारणीया ॥

### जीवन्मुक्तानामिव सशरीरत्वेऽपि ब्रह्मणो दुःखाभावे सिद्धे व्यर्थमेव दिव्यमङ्गलविग्रहादिकल्पनम्

सगुणब्रह्मप्राप्तिरपि जगद्व्यापारवर्जमीश्वरभावसमाख्या सदा ब्रह्मात्मभावनाभ्यासपाटवादिह जीवन्मुक्तानामिव वैकुण्ठादावपि शरीरात्मताबुद्ध्यभावादेव न बन्धो नाम । अत एव—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मनः प्रविशन्ति परं पदम् ॥"

इति स्मृतिः, "कार्यात्यये तदध्यक्षेण सहातः परमभिधानादि"ति सूत्रं च "ब्रह्मविद् ब्रह्मैव भवति" इति श्रुतिस्तु "तत्त्वमसी"ति श्रुतिसिद्धं ब्रह्मात्मत्वमेव परमा मुक्तिरिति, श्रावयति इति शरीरात्मताबुद्धिविरहमा-

त्रेण सर्वत्र दुःखाप्रसङ्गनिर्वाहात् किमिति वेश्वरमात्रे सशरीरत्वस्य स्वाभाविकत्वं कल्प्यते । अन्तर्यामिब्राह्मणं त्वधिष्ठानतयोपपद्यते ॥

### "ब्रह्मविद् ब्रह्मैव भवती"त्यत्र 'एव' पदस्य सादृश्यार्थत्वेन ब्रह्मसाम्यस्यैव मुक्तिपरत्वायोगः

एतेन—"ब्रह्मविद् ब्रह्मैव भवती"ति श्रुतादेवकारस्येवार्थत्वमाश्रित्य ब्रह्मसाधर्म्यपरैव साऽपीति-परास्तम् । सत्यमेवकारस्यास्ति सादृश्यमप्यर्थः, अस्ति त्वसाधारणमपि । सत्यप्येवं कुतो वा प्रचुरप्रयोगसिद्धस्यावधारणार्थस्य परित्यागः ?

तत्र यदि साधर्म्यं सविशेषब्रह्मभावमात्रमभिप्रेत्य, तर्हीष्टापत्तिः । निर्विशेषब्रह्मभावस्तु न तत्सादृश्यमात्रम्; तत्र प्राप्य-प्रापकभावकथायाः सादृश्यप्रतियोग्यनुयोगिकथाया वाऽसंभवात्, इति 'ब्रह्मैव भवति' इति न साधर्म्यमात्रेण, इति तत्रैवकारस्यावधारणार्थत्वस्यैव वक्तव्यत्वात् ॥

वस्तुतस्तु—"ब्रह्मैव भवती"त्यत्रैवकारस्य सादृश्यार्थत्वेऽपि सादृश्यमत्यन्ताभेदमभिप्रेत्यैव । तत्र भिन्नेऽप्यभेदव्यवहारो गौण्या बहुशो दृश्यते, यदि भेदोऽपि सत्यः, तस्य मिथ्यात्वे तु सादृश्यमत्यन्ताभेदपर्यवसायि, इति भेदस्य कल्पितत्वात्, तस्य बाधाच्च परमसाम्याभिप्राय एव सादृश्यार्थ एवकार इति वक्तव्यम् । तथाच श्रुतिः—निरञ्जनः परमं साम्यमुपैति" इति । तत्र परमसाम्यं चात्यन्ताभेद एव । अत एव सगुणेश्वरभावे पराभिमते "भोगमात्रसाम्यलिङ्गाच्चे"ति केवलं साम्यपदम्, न तु परमसाम्यपदम् ॥

### ऐक्य-परमसाम्ययोरविशेषः

साम्यानन्वयेन हि परमसाम्यस्यैकस्यैवोपमानत्वमुपमेयत्वं चाश्रित्य सादृश्यप्रतियोग्यनुयोगिनोरत्यन्ताभेद एव दृश्यते इयान् विशेषः—गौणस्थलेऽभेदस्याहार्यारोपः, परमसाम्यस्थले तु भेदस्याहार्यारोपः । अत एव परमं साम्यं यदंशे साम्यम्, तदंशे न तदन्यमित्यभिप्रायः; अन्यथा "भोगमात्रसाम्यलिंगाच्चेत्य"त्र कुतो वा न परमसाम्यनिर्देशः ? इति गौणमुक्त्यभिप्रायं साम्यपदम्, अत्यन्ताभेदाभिप्रायं परमसाम्यपदम्, तच्चात्यन्ताभेद एवेति सूचनमेव "ब्रह्मैव भवती"त्यादिवाक्यस्य कृत्यम् । न च निर्विशेषब्रह्मभावो निरालम्बः; निर्विशेषवाक्यप्राबल्येन

तस्यैवौपनिषदत्वस्य विशदीकरिष्यमाणत्वात् । अत एव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वमपि ॥

सविशेषब्रह्मभावो गौणमुक्तिः, न परममुक्तिः

तत्र सविशेषमपि ब्रह्म वस्तुतः संविन्मात्रेणैव परमार्थम्, औपाधिकेन तु सविशेषेण रूपेण तदपि बाध्यमेव, इति तद्भावमात्रमुक्तितावादो नौपनिषदो राद्धान्तः । किं बहुना ? जीवात्मनाम्, त्रिमूर्तीनाम्, अन्येषां देवानां चेन्द्र-यम-वरुणादीनामपि शरीरभेदमात्रेण परस्परभेदः, स्वरूपं तु सर्वेषामेकमेव । व्यक्तं चैतत्—"न त्वेवाहमि"ति श्लोके भाष्येऽपि । न चैतावता व्यावहारिकी कर्मयोग-भक्तियोगादिव्यवस्था परमत इव हीयते ॥

ब्रह्म-रुद्रादिभेदोऽप्यौपाधिकः

तत्र त्रिमूर्त्यैक्यं न तद्व्यक्तिरूपेण, तदुपाधिविशिष्टरूपेण वा, किन्तु निरुपाधिस्वरूपेण । तत्र सत्त्वाधिकमायोपहितचैतन्यं रक्षणैककृत्यं स्वरूपं विष्णुर्नाम, रजोऽधिकमायोपहितं चैतन्यं सृष्ट्यैकशक्तिमान् ब्रह्मा, रुद्रस्तु तमोऽधिकमायोपहितचैतन्यं संहारैकदीक्षम्, तत्तदुपाधिभेदात्तस्य तस्य तदा तदा तत्तन्नाम ॥

रामचन्द्रस्य शिव-विष्णूभयरूपत्वं रामतापन्याद्यनुसारेण

अत एव श्रीरामचन्द्रो विष्ण्ववताररूपोऽपि नृसिंहवत् रुद्ररूपेणापि श्रीरामायणादौ निर्दिश्यते ॥

व्यक्तं चेदमन्यत्र । किं बहुना ? रामतापन्युपनिषदपि रामपदेन नारायणाष्टाक्षर-शिवपञ्चाक्षरोभयार्थसंग्रहपरं निर्वक्ति, इति ब्रह्म-रुद्रयोरपि जीवत्वम्, नेश्वरत्वमिति वादः शिवद्रोहतात्पर्येण ॥

स्वयं स्वस्य मनुष्यत्वं वदन्तौ राम-कृष्णौ न जीवौ, ब्रह्म-रुद्रौ तु जीवाविति वादे न शिवद्रोहतोऽन्यत् किमपि निदानम् । अस्तु नाम तयोर्विष्णोर्वा कस्यापि समष्टिजीवम्, ईश्वरस्यापि सत ईश्वरत्वमपि सर्वेषां ब्रह्म-विष्णु-रुद्राणां तत्तदुपनिषत्सिद्धम, स्मृति-पुराणेतिहासादिसिद्धं दुरपह्नवम् ॥

स्वरूपत ऐक्यमेव जीवानाम्, जीवेश्वरयोः, जीव-ब्रह्मणोश्च

तत्र जीवानां परस्परम्, जीवे-श्वरयोः, जीवब्रह्मणोश्चोपहितसंविन्मात्ररूपेणाद्वैतमित्यद्वैतसिद्धान्ते, ब्रह्म-रुद्रयोः, अन्यस्य वा जीवत्वेश्वरत्वकथा

न तेषां स्वरूपैक्यं विरुणद्धि । तत्रैकमेव ब्रह्म प्रपञ्चे सर्वा अपि मतीर्गृह्णदपि तत्तदुपाधिभेदात् , कार्यभेदाच्च भिन्नमिव केवलं प्रतीयते । परमार्थतस्तु सर्वत्र स्वरूपमेकमेव । विशेषस्तु-तिसृणां मूर्तीनां पूर्वोक्ततत्तदुपाधिभेद-मात्रेण, न सर्वत्रैकान्तःकरणेन, अन्येन वा, येन जीवत्वमेव त्रिमूर्तीना-मापद्येत ॥

पुराणेषु मूर्तिविशेषपारम्यवादः परस्परविरुद्धं श्रूयमाणोऽप्यर्थ-
वादमात्रं 'न हि निन्दा'न्यायमात्रेण

पुराणेषु विष्णो रुद्रसृष्टत्वस्य, रुद्रस्य विष्णुसृष्टत्वस्य, ब्रह्मणो रुद्रसृ-ष्टत्वस्य चाम्नानं तत्तद्रूपेण तदा तदा तस्य तस्याभिव्यक्तिमात्रेण कार्यव-शात् । अत एव—

"शिवस्य हृदयं विष्णुर्विष्णोस्तु हृदयं शिवः ।"
"मद्भक्तः शंकरद्वेषी मद्द्वेषी शंकरप्रियः ॥
तावुभौ नरकं यातो यावच्चन्द्रदिवाकरौ ।"

इत्यादिवचनानि तत्र तत्र । ब्रह्म-विष्णु-रुद्राणां पुराणविशेषेषूत्कर्षा-पकर्षादिश्रवणं तु 'न हि निन्दा'न्यायेन । अत एव बह्व्यः शिवतत्त्वप्रतिपा-दिका अप्युपनिषदो विष्ण्वादिपारम्यप्रतिपादिका इव । अतो मूर्तिभेदपा-रम्यवादोऽयं हठवाद एव अधिकमद्वैततत्त्वशुद्धौ ॥

॥ इति जीवेश्वरैक्यानुपपत्तिः ॥

# अखण्डार्थत्वोपपत्तिः

## निर्दुष्टाखण्डार्थत्वलक्षणम्

"पदस्मारितातिरिक्तागोचरप्रमाजनकानेकापर्यायपदकत्वमखण्डार्थत्वं वाक्यगतम्। तत्तु तात्पर्यवशात् समानाधिकरण-व्यधिकरणवाक्य-साधारणम्। सर्वत्र, समानाधिकरणे वा वाक्ये वाक्यार्थप्रतीतिदशायां विशिष्टभानेऽपि तात्पर्यानुसारात् तस्याखण्डार्थत्व एव पर्यवसानाद् लक्षणसमन्वयः॥

सर्वत्र पदार्थे पदार्थान्तरान्वयग्रहोऽयं प्राथमिकबोधविषयमर्थमादाय, तात्पर्यविषयमर्थमादाय वा। आद्ये द्वितीयबोधेऽखण्डार्थस्यैव तात्पर्यविषयत्वे वाक्यम्, पदार्था एव वा लक्षणयाऽखण्डं बोधयितुं शक्नुवन्ति। द्वितीये तु प्रतीयमानर्थस्यैवाखण्डस्य बोधः॥

## अखण्डार्थस्वरूपनिष्कर्षः

तत्र पदस्मारितगोचरत्व-तत्स्मारितातिरिक्तागोचरत्वयोस्तात्पर्यानुपपत्तिरेव नियामिका। स चाखण्डार्थः पदस्मारितातिरिक्तेतररूपो वस्तुगत्याऽखण्ड इति नियमः। वस्तुगत्या सखण्डस्यापि खण्डांशे तात्पर्याविषयत्वमात्रेण, तदंशस्याविवक्षामात्रेण वाऽखण्डार्थत्वमात्रं पर्याप्तम्। तेन च 'सोऽयं देवदत्तः' 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ सोऽयं देवदत्तः' इत्यादौ वस्तुतः सखण्डत्वेऽपि नाखण्डत्वस्य हानिः॥

## अखण्डार्थत्वलक्षणस्य निर्दुष्टस्य तत्तदुदाहरण-परीक्षणेन निष्कर्षः

तात्पर्यविषयैकप्रतिपादिकार्थमात्रपरत्वमखण्डार्थत्वमिति निष्कर्षः। किं वनमिति प्रश्नोत्तर 'एकदेशस्था वृक्षाः' इति वाक्येऽपि समुदायावस्तुत्वे वनस्वरूपमात्र एकत्रैव तात्पर्यादखण्डार्थत्वमिष्टमेव। एकत्वं हि प्रातिपदिकार्थस्यैकधर्मावच्छेदेन वृत्तिविषयत्वम्। तत्र वनादिस्वरूपस्य चन्द्रादेरिव संसृष्टविषयत्वेऽपि शक्ति-लक्षणान्यतरैकवृत्तिज्ञानजन्यस्मृतिविषयातिरिक्ताविषयकप्रमाजनकत्वस्यैवाखण्डार्थत्वात् 'एकदेशस्था वृक्षाः' इत्यादा कस्या एव वनवैलक्षणाया विषयत्वस्य नानावृत्तेष्वनपायात्। न चात्रैकत्वं प्रातिपदिकार्थस्य प्रातिपदिकार्थतावच्छेदकैक्यम्, किन्त्वेकवृत्तिज्ञानजन्यज्ञानविषयत्वमात्रम्, इति न निर्विशेषवाक्येऽव्याप्तिः। 'गामा-

नय' 'नीलो घटः' 'द्विषदन्नं न भोक्तव्यमि' त्यादौ तु न स्वरूपविशेष-मात्रं तात्पर्यविषयः, किन्तु संसृष्टमेव, इति न तत्रातिव्याप्तिः। "सत्यं ज्ञान-मनन्तं ब्रह्मे" त्यादौ वाक्यं तु लक्षणयाऽनृतादिव्यावृत्तस्वरूपमात्रपरम्; स्वरूपलक्षणत्वात्। "गन्धवती पृथिवी" त्यादौ तु न स्वरूपमात्रं लक्ष्यम्; अतो न तत्राप्यतिव्याप्तिः। अयमेव न्यायो 'मृद् घटः' इत्यादावपि; तत्र तादात्म्यभानस्येष्टत्वात्॥

'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ 'सत्य-ज्ञानादि'-
वाक्यादौ चाखण्डार्थत्वसमन्वयः

'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ प्रकाशस्य द्रव्यतया तत्र प्रकर्षस्याविरोधेन प्रकर्षविशिष्टप्रकाशेन चन्द्रस्वरूपमात्रस्य नक्षत्रादिव्यावृत्तस्य लक्षणान्नाव्याप्तिः। निर्विशेषत्वम्, अखण्डत्वं वा न स्वाभाविकमत्र विवक्षितम्, किन्तु खण्डांशस्य, संसर्गस्य वा तात्पर्याविषयत्वेऽविवक्षामात्रम्, इति ब्रह्मवत् चन्द्रस्य वस्तुतोऽनिर्विशेषत्वेऽपि न क्षतिश्चन्द्रादिपदानामाकृतिविशेषवाचित्वेऽपि। आकृतिर्हि व्यक्तीनां साधारणं धर्ममात्रम्, न स्वरूपमेव, इति तस्या अतात्पर्यविषयत्वेनाभानेनाखण्डार्थत्वं प्रकृष्टप्रकाशवाक्येऽप्यविशिष्टम्॥

एकार्थस्यानेकपदबोध्यत्वाविरोधः; स्वरूपमात्रस्य विवक्षि-
तत्वे वस्तुगत्या सविशेषत्वस्याकिञ्चित्करत्वात्

"सत्यं ज्ञानमनन्तम्" "आनन्दो ब्रह्मे" त्यादिवाक्यैरसत्यादिव्यावृत्ततयाप्येकमेव स्वरूपं सत्यादिपदैर्बहुभिरपि बोध्यते, इति न "आनन्दादयः प्रधानस्ये"ति सूत्रविरोधः। न हि पदबहुत्वमर्थबहुत्वे तन्त्रम्; "सोऽयं देवदत्तः, प्रकृष्टप्रकाशश्चन्द्र" 'एकदेशस्था वृक्षा वनामि'त्यादावनेकान्तात्। अतश्चन्द्रमण्डलस्य सावयवत्वम्, अवयवसंनिवेशविशेषरूपत्वं वाऽकिञ्चित्करम्, चन्द्रस्वरूपमात्रप्रश्नोत्तरवाक्ये संनिवेशविशेषाद्यविवक्षया स्वरूपमात्रविवक्षायां बाधकाभावात्॥

स्वरूपमात्रविषयकसंशयनिवर्तकत्वात् स्वरूपलक्षणत्वं
सत्य-ज्ञानादिवाक्यानाम्

स्वरूपं हि विशेष्यमात्रं सधर्मकमपि, निर्धर्मकमपि शब्दबोधे तात्पर्यानुसारेणैव भानमर्हति। निर्विशेषमपीतरव्यावृत्त्युपलक्षितरूपेणैव सत्यादिवाक्यैरवगमात् न सविशेषवाक्यतात्पर्यविषयः, तद्बोध्यं वा। अद्वैतसि-

द्धिस्त्वसंकीर्णस्वरूपमपि लक्ष्यं भवतीति विवेचयति। अनुपहितं त्वस्य लक्ष्यमितरव्यावृत्त्युपलक्षितरूपेणेति तदाशयः, इति जडादिव्यावृत्त्युपलक्षिततयैव निर्विशेषस्य बोधनाद् न तत्र संशयापत्तिः; संशयादिप्रयोजकमूलाविद्याया विनाशादिति विवेकः ॥

"सर्वं खल्विदं ब्रह्म" इत्यतः "तत्त्वमसी"ति वाक्यवैलक्षण्यम्, "सर्वं खल्विदमि"त्यत्राखण्डार्थत्वाभावश्च

तत्र "सर्वं खल्विदं ब्रह्मे"ति नाखण्डार्थम्; कार्य-कारणभावापन्नवस्तुद्वयतादात्म्यावगाहित्वात्। न चैवं तत्त्वमस्यादिवाक्यम्; निरुपाधिकस्वरूपमात्रपरत्वात्। न चात्र त्वम्पदं प्रजार्थकम्; श्वेतकेतुमात्रपरत्वात्, तस्य च त्वंपदार्थस्याहंरूपेण तेनावगतस्य, तद्व्यावर्तनेनोपदेशो ह्यत्र विवक्ष्यते; अन्यथा विशिष्य तस्य तदसीति सदात्मरूपतयोपदेशोऽनुपपन्नः, बाधितश्च। प्रजानां कार्यत्वमपि तदुपाधिजन्यत्वेनौपचारिकमेव, न तु साक्षात् जीवानां जन्यत्वम्। अत एव गीता, कठवल्ली च—

"अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥"

इति। अतो नात्र 'त्वं' 'अहं' च जन्यात्मपरम्। न चात्र बाधायां सामानाधिकरण्यम्। नैष्कर्म्यसिद्धिमते तु अहंकारांशमात्रमादाय बाधायां सामानाधिकरण्यम्, न त्वमहमर्थगतं चिदंशमादायापीति तत्रैव व्यक्तम् ॥

तत्त्वमसिवाक्यस्याखण्डार्थत्वे शोधकवाक्यानामुपयोगः

तत्र यद्यपि विनापि तत्त्वम्पदार्थशोधनं संविन्मात्रविवक्षयाऽखण्डार्थत्वं निर्वोढुं पार्यते; तथापि लक्ष्यार्थस्वरूपमखण्डं सच्चिदात्मस्वरूपम्, न तु चिन्मात्रमिति बोधयितुं तत्त्वम्पदशोधकवाक्यम्, तेन च लक्ष्यस्यानृत-जडादिव्यावृत्तिरुपलक्षणविधया ज्ञाप्यते। तेन च शून्यवादस्य, अचेतनवादस्य, सविशेषवादस्य च व्यावृत्तिः फलति, इति सविशेष एव न शास्त्रस्य पर्यवसानम्। सत्यपि सविशेषत्वस्य स्वाभाविकत्वे संविन्मात्रेण सामानाधिकरण्यमिति परेषां राद्धान्तोऽपसिद्धान्तः, येनाखण्डार्थतायामपि चन्द्रवत् सखण्डत्वमपीति निरस्तं भवति ॥

चाक्षुषादिप्रत्यक्षापेक्षया शाब्दस्य प्रत्यक्षस्य प्राबल्यम्, सत्यां ज्ञानसामग्र्यां धर्मस्यापि ग्रहणनियमः

वस्तुतन्त्रं प्रमात्मकं ज्ञानं प्रत्यक्षादौ संनिकर्षविशेषात् धर्मविषयकमपि भवति, येन सविकल्पकता, निर्विकल्पकं प्रत्यक्षं जन्यमसति प्रति-

बन्धके सविकल्पकज्ञानद्वारैव कार्यकारि, न तु तथा शब्दप्रमाणजं ज्ञानम्; तात्पर्यानुसारित्वात् शाब्दप्रमाया, इति 'सोऽयं देवदत्तः' इत्यादौ सत्यपि देवदत्तत्वादिविशेषे तदविवक्षया निर्विकल्पकं ज्ञानं प्रत्यक्षम्; निर्विचिकित्सपरोक्षज्ञानासंभवात्, इति तात्पर्यानुसारेण शाब्दज्ञानस्य निर्विकल्पकस्यापि प्रामाण्यम्, संविन्मात्राश्रिताज्ञाननिवर्तकत्वेन कार्यकारित्वं चाबाधम् ॥

### शाब्दनिर्विकल्पके लक्षणया तात्पर्यविषयमात्रपरत्वम्

तत्र "सोऽयं देवदत्तः" इति वाक्यजन्यज्ञाने देवदत्तकरचरणाद्यवयवसंनिवेशस्यापि भानेऽपि तदुपलक्षितस्वरूपमात्रज्ञानमेव तात्पर्यवशात् शाब्दम्, इति न निर्विकल्पकत्वस्य क्षतिः। न हि देवदत्तशब्दार्थः तदीयकरचरणादिसंनिवेशोऽपि, किन्तु तत्स्वरूपमात्रम्। तत्र यद्यपि तत्राकृतिरेव शब्दार्थः, तथापि न "सोऽयं देवदत्तः इत्यत्र तस्या अपि भानम्। तत्र तस्यातात्पर्यात्, स्वरूपमात्रपरत्वे लाक्षणिकत्वापत्तिस्त्विष्टापत्तिः ॥

प्रत्यक्षत्वेऽपि तस्य शाब्दत्वं तज्ज्ञानस्य न वर्णाकारादिविशिष्टतया। पश्चात् तेषामपि बोधस्तु न शाब्दः, किन्तु चक्षुरादिप्रमाणजन्यः। न चायं न्यायो निर्विशेषब्रह्मसाक्षात्कारेऽपि, तद्विषयाज्ञान-तत्प्रयुक्तसर्वविशेषाणां ज्ञेयस्य विषयस्य, करणस्य, ज्ञानस्य, ज्ञातुर्वाऽभावेन विशेषज्ञानस्य बाधात्। तदुक्तम्—"यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्, केन कं विजानीयात्" इति, इति न समानाधिकरणस्थले शाब्दत्वेऽपि धर्मविषयकत्वम्, इति स्वरूपमात्रविषयकत्वमबाधम् ॥

### भिन्नप्रवृत्तिनिमित्तकत्वं तत्त्वमस्यादिवाक्येऽपि सामानाधिकरण्यप्रयोजकमबाधम्

न चात्यन्ताभेदपरत्वे भिन्नप्रवृत्तिनिमित्तकत्वाभावात् सामानाधिकरण्यायोगः; "उद्भिदा यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेते" त्यादौ विनापि प्रवृत्तिनिमित्तभेदं सामानाधिकरण्यदर्शनात्। अधिकमद्वैततत्त्वशुद्धौ। वस्तुतस्तु—"तत्त्वमसी"त्यादौ लक्ष्यार्थैक्येऽपि प्राथमिकबोधे शक्यताच्छेदकभेदस्यापि भानाद् न सामानाधिकरण्यस्य हानिः। तात्पर्यवशात् तदविवक्षया स्वरूपमात्रैक्यबोधस्तु पाश्चात्यः, न तु सोऽपि प्रवृत्तिनिमित्तभेदमपेक्षते, इति वाच्यतावच्छेदकानां पाश्चात्यबोधेऽनन्वयेऽपि ब्रह्मतत्त्वनिर्णायकत्वं तत्त्वमस्यादिवाक्यानां न हीयते ॥

### ब्रह्मजिज्ञासाविषयो ब्रह्मोत्थिताकाङ्क्षयैव, यदर्थमुत्तरसूत्राणि

तत्र ब्रह्मतत्त्वमुपक्रमोपसंहारादितात्पर्यग्राहकलिङ्गोपहितत्वाद् वाक्यादेव निर्णीयते, न तु ततः प्रागपि, औपनिषदस्य तस्य प्रमाणान्तरानवगाह्यत्वात्, इति न वेदान्तवाक्यद्वारा तज्जिज्ञासा किं तद्ब्रह्मेति नोत्तिष्ठति। तत्र "ब्रह्मविदाप्नोति" वाक्यस्य श्रवणमात्रेण ब्रह्मपदस्यानेकार्थत्वात् किं वा ब्रह्म ज्ञेयमत्र विवक्षितमिति शङ्का स्वयमेवोत्तिष्ठति, इति नात्रोत्थाप्याकाङ्क्षा नाम ॥

### "सच्च त्यच्चाभवदि"त्यादिवाक्यानां ब्रह्मनिर्विशेषत्व एव स्वारस्यम्

तत्र बृंहणं यदि विकसनम्, परिणामित्वं वा, तर्हि केवलस्य विशिष्टस्य वा सविकारत्वमापद्येत, इति स्वरूपेण, विशिष्टरूपेण वाऽपरिणामि; तथापि सर्वोपादानमधिष्ठानविधया सर्वत्रानुविद्धमनृत-जड-परिच्छिन्नव्यावृत्तं ब्रह्मस्वरूपमिति बोधनार्थमेव 'सच्च त्यच्चाभवदि"त्यादिवाक्यम्। इदं च निर्विशेषत्व एवोपपद्यते ॥

### "सोऽश्नुते सर्वान् कामान् सहे"ति वाक्यस्वारस्यमप्यद्वैत एव

तत्र "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता।" इति सर्वत्र ब्रह्मभावमापन्नस्य युगपन्मानुषादिब्रह्मान्तसर्वानन्दभोक्तृत्वं जीवन्मुक्तदशायामपि प्रतिपाद्यमानं ब्रह्मविदः सर्वात्मत्वे सत्येवोपपद्यते। न चात्र सहशब्दः साहित्यपरः; वाक्यान्तरगतत्वेन ब्रह्मणा सह स्वरसतोऽनन्वयात्। अर्थवशेन पादव्यवस्थया हि मन्त्राणां लक्षणम्, इति "तदेतदृचाऽभ्युक्तमि"त्युपक्रमनिर्दिष्ट 'सह' शब्दस्य पूर्वपादेनान्वय एवोपपद्यते, इति सहपदेन यौगपद्यविवक्षैवाऽत्र स्वरसा ॥

युगपदनुभवस्तु सच्चिदानन्दस्वरूपात्मतामात्रम्। सर्वज्ञत्वं तु ब्रह्मणः सर्वतादात्म्यमात्रम्, न तु ज्ञानवत्त्वम्। एवं युगपत् सर्वभासकत्वम्, तद्भोक्तृत्वं च सच्चिदात्मानन्दस्वरूपत्वम्। फलतस्तु तद्व्यतिरेकेण सर्वाभाव इति गतमधस्तात्, इति नात्रोभयविभूतिविशिष्टपरिपूर्णब्रह्मानुभवस्यानुभवितृनिष्ठस्य निर्देशः, इति निर्विशेषतायामेवास्य प्रकरणस्य तात्पर्यम् ॥

### तत्पदार्थ त्वम्पदार्थशोधकवाक्यानामपि महावाक्यैकवाक्यता

तत्र "सत्यं ज्ञानमि" ति वाक्येन "योऽयं विज्ञानमय" इति वाक्येन च निर्विशेषतत्त्वम्पदार्थमात्रज्ञानेऽपि तयोरैक्यं विना न मुक्तिः, इति

महावाक्यापेक्षा। पूर्वयोस्तु तत्पदार्थशोधनमात्रम्, तत्राहमादिज्ञानस्यैव बन्धकत्वादहमुपस्थितिद्वारकस्वरूपाभेदज्ञानस्यैव मोक्षसाधनत्वम्, न तु त्वम्पदार्थज्ञानमात्रस्य, तत्पदार्थज्ञानमात्रस्य, 'घटो ब्रह्मेति' वाक्यजन्य-ज्ञानस्य वेति तु विशेषः॥

'अहं ब्रह्मास्मी'ति ज्ञानं समानाधिकरणमिति
प्रस्थानभेदेन व्यवस्था

तत्र जीवब्रह्मैक्यं "तत्त्वमसी"त्यादिवाक्यजन्यज्ञानस्या'हंब्रह्मास्मी'ति ज्ञानाकारत्वेन। तत्राहंपदेनाहंकारमात्रतादात्म्यविवक्षायां बाधायां सामानाधिकरण्यम्, तदुपहितचैतन्यविवक्षायामहंकारांशत्यागेनाभेदे सामानाधिकरण्यमिति जीवेश्वरोभयप्रतिबिम्बतायाम्, तयोः कार्य-कारणोपाधिकत्वे च। जीवेश्वरोभयबिम्बप्रतिबिम्बत्वाभावेऽप्ययमेव न्यायः, तथापि तदभेदात्मता सर्वमुक्ताविंत्यादि व्यक्तमधस्तात्॥

ब्रह्मसिद्धीष्टसिद्धि-न्यायरत्नावली-तत्त्वदीपिकाऽद्वैतसिद्ध्याद्युक्तमखण्डार्थत्वमेव सत्यादिवाक्यानाम, तत्त्वमस्यादिवाक्यानां च॥

ब्रह्मसिद्धिरीत्याऽखण्डार्थत्वनिष्कर्षः

तत्र ब्रह्मसिद्धिनिष्कर्षः—सर्वानुगतसन्मात्रविषयत्वम्, व्यवहारदशायामनाद्यविद्याकल्पितसदादिभेदं ब्रह्म सखण्डं विषयः, तत्त्वमस्यादिवाक्यजन्यज्ञाने तु तदेवाखण्डं विषयः। खण्डकल्पकाविद्याविलयादित्यखण्डार्थत्वं सुस्थम्॥

इष्टसिद्धिदृष्ट्याऽखण्डार्थत्वम्

इष्टसिद्धिरप्यत एव व्याख्याता। अभेदातिरिक्तसंसर्गविषयकत्वं सखण्डार्थकत्वम्, अभेदविषयकत्वमखण्डार्थत्वमिति तदाशयः। अभेदश्चात्र संसर्गविधया भासमानो वाक्यगम्योऽत्यन्ताभेद एव, न भेदघटितः; भेदप्रयोजकाज्ञाननिवृत्त्या भेदस्याप्रतिभानात्। 'नीलो घटः' इत्यादीनां तु नाखण्डार्थत्वम्॥

तच्चैक्यमन्विताभिधानवादेऽपि पदलक्ष्यमेव; न तद्वाच्यम्; संविन्मात्रस्येव तदैक्यस्यापि शब्दगोचरत्वात्। न चात्र लक्ष्यार्थमात्रत्वमखण्डार्थत्वम्, किन्तु तस्याभेदविषयकत्वम्, येन 'गङ्गायां घोषः' इत्यस्याप्यखण्डार्थत्वापत्तिः। अतो लक्ष्यार्थत्वमात्रेण न "यतो वा इमानि भूतानि जायन्ते"इत्यादिवाक्यविरोधः॥

### पदान्तरवाच्यस्यैव लक्ष्यत्वमिति न नियमः वाक्यार्थेऽन्वि-
### ताभिधानवादे, अभिहितान्वयवादे च व्यभिचारात्,
### अत एव प्रमाणान्तरमेयस्यैव लक्ष्यत्व-
### मित्यपि न नियमः

न हि वाच्यत्वमौपनिषदत्वप्रयोजकम् ; अर्थवादवाक्यार्थस्य प्राशस्त्यस्याप्यवैदिकत्वापत्तेः, शब्दविशेषवाच्यस्यैव लक्ष्यत्वमिति नियमस्तु आकृतिशब्दार्थत्वे व्यक्तेरवाच्याया: सर्वत्र वाक्येषु वाक्यार्थत्वस्यावाच्यस्यापि शाब्दत्वस्वीकाराद् न विकल्पसहः ॥

अत एव प्रमाणान्तरमेयमेव वाक्यप्रमेयमिति न नियमः; यूपाहवनीयादेः प्रमाणान्तरागम्यस्यापि वाक्यगम्यत्वात् । तत्र लक्ष्यार्थस्याप्यनुभवः समाधिदशायां संविन्मात्रस्य वर्तते, इति न तस्य स्मरणानुपपत्तिर्यद्यन्विताभिधानवादः । अभिहितान्वयवादे तु पदार्थस्यानुभवस्मरणविलक्षणमभिधानात्मकमेव ज्ञानम् , इति न प्रमाणान्तरेणानुभवापेक्षा ॥

विशिष्टशक्तिज्ञानस्यैव विशेष्यमात्रान्वयतात्पर्यसध्रीचीनस्य वाक्यार्थप्रतीतिहेतुत्वकल्पे तु न शुद्धस्यानुभवः, स्मृतिर्वाऽपेक्ष्यते; वाक्येनैव विनापि शक्तिम् , लक्षणां वा विशेष्यमात्रानुभव उपपद्यते ॥

विशेषण-विशेष्योभयं विशिष्टार्थ इति मते तु विशेष्यमात्रस्यापि पदेनोपस्थितिरविरुद्धा ॥

न चैतावताऽप्रमितत्वम् ; विशेष्यमात्रस्य, तात्पर्यविषयस्य प्रमाणान्तराप्राप्तिमात्रेण प्रमेयत्वोपपत्तेः । ब्रह्मणोऽप्रमेयत्वमेवंरूपमेव, इति नान्येषामिव तस्यापि प्रमेयत्वापातः । सर्वं चेदं न्यायरत्नदीपावल्याम् , पदार्थतत्त्वनिर्णये च व्यक्तम् ॥

### वाक्यस्य विशेषणांशत्यागेन विशेष्यपरत्वं सति तात्पर्ये
### लक्षणया भवति

तत्र विशेष्यमात्रस्य शाब्दबोधे 'सोऽयं देवदत्तः' इत्यादाविव विशेषणांशत्यागेन व्याख्यातम् । तत्र 'सोऽयमि'त्यपि देवदत्तस्वरूपविशेषोपस्थापकमेव, न तु तद्वाचकम् । तत्तेदन्तयोरेकवाक्येन तत्रापि विशेषणांशस्य त्यागात् । सत्यमेकत्रातीत-वर्तमानकालसम्बन्धः सम्भवति, न तु स तथा युगपत् , सोऽयमिति च युगपत् तदुभयसम्बन्धं बोधयति । अत

एव विरोधात् तत्रोभयविशेषणस्य त्यागः। तत्त्वदीपिकाऽद्वैतसिद्धयादि-लक्षणोद्धारस्तु प्रागेवाकारि, इति न कापि क्षत्या॥

### अखण्डार्थत्वेऽनुमानं प्रमाणम्

सत्यादिवाक्यम्, पदार्थसंसर्गातिरिक्ते प्रमाणम्, प्रमाणत्वात्, चक्षुरादिवदित्यनुमानमपि—व्याख्यातम्। पदार्थसंसर्गातिरिक्तश्चात्र तद्वाक्यघटकपदार्थैक्यं वा, इष्टसिध्युक्तरीत्याऽत्यान्ताभेदो वा। चक्षुरादिकं हि पदार्थद्वयाभेदं स्वरूपमात्रमपि गृह्णाति, इति तावन्मात्रमादाय दृष्टान्तः। न च तत्र साध्यवैकल्यम्; संसर्गांशे प्रामाण्याभावस्याविवक्षणात्। न च सिद्धसाधनम्; स्वरूपमात्राभेदबोधस्य तत्त्वमस्यादिवाक्यान्तरेण स्वीकारात्॥

### तत्त्वमस्यादिवाक्यविशेषेषु विशेषणांशत्यागेन स्वरूपमात्रपरत्वेनाखण्डार्थत्वोपपादनम्, जीवेश्वरयोः स्वरूपस्य बाधात्

तत्र प्रतिपदं शुद्धधर्मिमात्रबोधकत्वेऽपि पदद्वयार्थाभेदस्यान्यतोऽसिद्धत्वात् नाप्रामाण्यम्, अनधिगतार्थत्वात्। न च विना लक्षणां तदभेदप्रतीतिर्निर्वहति। तत्र स्वरूपाभेद एव सत्यज्ञानानन्दरूपमात्रानुबन्धी भासते, न ज्ञानत्वादिधर्मविशेषोऽपि, इति नाखण्डार्थत्वहानिः॥

अयमेव न्यायस्तत्त्वमस्यादिवाक्येष्वपि। तत्रापि हि विशिष्टयोरभेदस्य बाधात् समानाधिकरणानेकपदावगताभेदप्रतीतिर्निर्वाहस्य तदभेदविषयकत्वे बाधितत्वात् तदुपपत्त्यर्थं विशेषणांशमात्रत्यागेन तात्पर्यविषयाभेदमात्रप्रतीतिर्विवक्ष्यते। तदुक्तम्—

> "सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
> पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः
> उत्पन्ने च विरोध एकरसिके वस्तुन्यखण्डार्थधीः"

इत्यादि। "एकमेवाद्वितीयमि"त्युपक्रम-परामर्शोपसंहारानुपपत्त्या तु नात्रार्थान्तरपरता। न चात्र घट-पटयोरिव जीवेश्वरयोः स्वरूपतो मिथ्यात्वम्, अभेदो वा, इति धर्मत्यागेन स्वरूपैक्यबोधोऽबाधः। कटक-कुण्डलादावेकसुवर्णस्वरूपमिव सर्वत्र ब्रह्मैकमेवानुवर्तते॥

### जीवेश्वरानुगतसंवित्स्वरूपं सामान्यम् , अतो नात्र विरोधः

न च तत्र स्वरूपभेदः; सर्वत्रानुवर्तमानत्वमेव ब्रह्मणः सामान्यत्वं सुवर्णस्येवेति विवेकः। इयान् विशेषः—व्यक्तिभेदे तत्र स्वरूपमात्रस्य व्यावृत्तिस्तत्तदसाधारणधर्मेण विशेषाख्येन, ब्रह्मणस्त्वनन्तस्य सर्वप्रतीतिविषयस्य न कुतोऽपि व्यावृत्तिः। 'निर्विशेषं न सामान्यमि'ति न्यायो न ब्रह्म गोचरयति; अन्यथा ब्रह्मणोऽपि व्यावर्तमानत्वे मिथ्यात्वापत्तिः ॥

### ब्रह्मणो निर्धर्मकत्वेन निष्प्रकारकज्ञानत्वं वाऽखण्डार्थत्वम्

निष्प्रकारकज्ञानजनकत्वं वाऽखण्डार्थत्वम्। तच्च प्रकृष्टप्रकाशादिवाक्यसाधारणमिति व्यक्तमधस्तात्। न च विशेषाभावेन सविशेषत्वम्। अयमेव न्यायो निर्भेदपदेऽपि; भेदाभावस्यापि मिथ्यात्वात्। धर्ममात्रं हि ब्रह्मणोऽविद्याकल्पितमित्यखण्डाकारवृत्त्याऽविद्यायां निवृत्तायां न सधर्मत्वकथाऽपि ॥

इदं सर्वाद्वैतवादे। भावमात्राद्वैतवादे तु भावधर्माप्रकारकत्वमखण्डार्थकत्वमत्रसेयम्। अभावस्याधिकरणात्मकत्वपक्षे त्वभावसत्यत्वेऽपि तस्य न प्रकारतेति व्यक्तमन्यत्र ॥

### वाक्यस्य संसर्गपरत्वस्योत्सर्गः, न तु नियमः

वाक्यस्य विशिष्टार्थपरत्वनियमस्त्वसति बाधके। तात्पर्यानुपपत्त्या तन्नियमबाधस्तु नियतः; अन्यथा तात्पर्याविषयस्यापि शाब्दबोधे भानापत्तेः ॥

### एकप्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमित्यप्यदुष्टम्

"शीतोष्णस्पर्शवन्तौ पयःपावकौ" इति वाक्यं तु द्वन्द्वस्य भेदाभेदोदासीनपदार्थबोधकत्वात् , लक्षणवाक्यत्वेनैव साहित्यस्याविवक्षणात् , प्रत्येकं वाक्यद्वयद्वाराऽखण्डार्थविषयकत्वाच्च, 'एकप्रातिपदिकार्थमात्र'त्वमखण्डार्थत्वमिति कल्पोऽपि साधुः। 'नीलो घटः' इत्यत्र तु प्रातिपादिकार्थेतरनीलत्वादिवैशिष्ट्यस्यापि बोधात् , न तत्रोक्तलक्षणस्यातिव्याप्तिः ॥

'एकप्रातिपादिकार्थ'त्वमित्यत्रैकपदं प्रातिपादिकार्थस्य विशेषणम् , न तु प्रातिपदिकस्य, इति न सत्यादिवाक्येष्वखण्डार्थेष्वसम्भवः, घटाद्येकपदमात्रबोधकत्वापत्तिर्वा ॥

### सत्यादिवाक्येषु सर्वेषां पदानां स्वरूपमात्रपरत्वेऽपि सर्वपदसार्थक्यम्

तत्र 'सत्यादि'वाक्येऽद्वितीयपदैकवाक्यतानुसारेणानृत-जड-परिच्छिन्न-व्यावृत्ताखण्डस्वरूपबोधो नैकेनापि विना पदेन संभवति, इति सर्वपद-सार्थक्यम्। न चैतत् सत्यत्वादिविशिष्टार्थबोधकत्वे निर्वहति; सद्वितीय-त्वापत्तेः, प्रतिपदं लक्षणावृत्त्या निर्विशेषस्वरूपमात्रविवक्षा नियता ॥

### अखण्डार्थवाक्य आसत्ति-योग्यतादिकमपि नैकेनैव पदेन, इति सर्वेषां पदानामुपयोगः

न ह्यन्यथा पदजन्याव्यवहिततात्पर्यविषयपदार्थोपस्थितिरासत्तिः संभवति, इत्यासत्तिरूपकारणमप्यखण्डार्थत्व उपपद्यते। योग्यताऽपि न तात्पर्यविषयाबाधेनाखण्डार्थत्वं विना। न चेदं तादात्म्यसंसर्गप्रतियोग्यनु-योगिकबोधकत्वे संभवति; अद्वितीयश्रुतिविरोधात् ॥

### 'तत्त्वमस्या'दिवाक्ये नोद्देश्य-विधेयभावो मुख्ये वाक्यार्थे

न च वाक्यसामान्य-मुद्देश्य-विधेयभावापन्नार्थबोधकमिति नियमः; तात्पर्यविषयार्थकत्वरूपस्यैव तन्नियमात्; अन्यथा "तत्त्वमसी"त्याद्य-वसिपदोपपत्त्यर्थं "नात्रोद्देश्य-विधेयभावविवक्षे"ति श्रीभाष्यविरोधापत्तिः। प्राथमिकबोधदशायामेवोद्देश्य-विधेयभावविवक्षया वाक्यत्वमबाधम् ॥

### तत्त्वम्पदार्थयोः संविन्मात्रयोरभेदो विषयः, उद्देश्य-विधेयभावेनैवेतीष्टसिद्धिः

अखण्डेऽपि शोधिते त्वंपदार्थे चोद्देश्यत्व-विधेयत्वविवक्षयोभयाभेद-विवक्षाऽखण्डार्थत्वेऽपि न विरुध्यते। विरुद्धत्रिकद्वयापत्तिस्त्वेकस्यैवो-द्देश्यत्वं, विधेयत्वं चाश्रित्य परस्परविधिस्वीकारे दोषः। न चात्र तथा; वाक्यार्थभेदानङ्गीकारात्। एकत्वं ह्यत्र वस्तुगतिमनुरुध्य, न तु वाक्यार्थ-भेदस्तेनेति वैषम्यम् ॥

"सत्यं ज्ञानमि"ति वाक्येऽसत्यादिव्यावृत्तिः, तद्व्यावृत्तित्वोपलक्षितं वा स्वरूपं वाक्यार्थः, इति नाखण्डार्थत्वव्याघातः ॥

### ब्रह्मस्वरूपमात्रस्याज्ञानाविरोधित्वात् तदावरकाज्ञान-निवृत्त्यर्थमखण्डाकारवृत्त्यपेक्षा

तत्र ब्रह्मस्वरूपस्य स्वप्रकाशत्वेऽप्यज्ञानेनावृतत्वात् तदज्ञाननिवृ-त्त्यर्थं वृत्तेरपेक्षणात् नोक्तवाक्यवैयर्थ्यम्; स्वरूपज्ञानस्यावृतस्य संशय-

विपर्ययाविरोधित्वात्। 'अहमि'त्यादौ संशय-विपर्यययोरभावस्त्वन्तःकरणोपधानप्रयुक्तः, न तु स्वरूपज्ञानमात्रप्रयुक्त इति व्यक्तं तत्र तत्र, इति नाखण्डार्थवाक्यवैयर्थ्यम् ॥

### प्रकृष्टप्रकाशवाक्ये स्वरूपलक्षणत्वोपपादनम्

एतेन—अपर्यायशब्दानामभिन्नार्थत्वमखण्डार्थत्वमितीष्टसिद्धिरपि—व्याख्याता। तत्र "प्रकृष्टप्रकाशश्चन्द्रः" इत्यत्र प्रकाश-प्रकर्षयोरभेदोक्तिस्तु प्रकर्ष-प्रकाशयोरुभयोर्मिलित्वैवासंकीर्णचन्द्रस्वरूपलक्षणत्वमभिप्रेत्य, येन-ज्योतिरन्तरव्यावृत्तस्वरूपमवसीयते, न तु प्रकाश-प्रकर्षयोरैक्यम्, येन नक्षत्रादीनामपि प्रकृष्टप्रकाशत्वापत्तिः, प्रकर्षप्रकाश इति प्रयोगापत्तिः, प्रकाशः सवितेति प्रयोगापत्तिर्वा ॥

### लक्षणवाक्यानामितरव्यावृत्त्युपलक्षितस्वरूपबोधकत्वेनाखण्डार्थत्वसम्भवः

एतेन—लक्षणवाक्यान्तराण्यपि—व्याख्यातानि; इतरव्यावृत्त्युपलक्षितस्वरूपमात्रबोधकत्वात्। का पृथिवीति प्रश्नार्थस्तु पृथिवीपदस्य कोऽर्थ इति न तद्वाच्यार्थमभिप्रेत्य; तस्य तत्तत्पदवाच्यत्वस्य प्रसिद्धत्वेन ज्ञातत्वात्, किन्त्वितरव्यावृत्तपृथिवीस्वरूपप्रश्न एव, इति स्वरूपमात्रप्रश्नोत्तरत्वेन नासाधारणधर्मविशेषविशिष्टस्यात्र बोधः, गन्धवत्त्वमपि पृथिव्यां नासिकयैव प्रत्यक्षम्, परन्तु जलेऽपि तद् दृश्यते, इति स्वरूपमात्रे संशयनिरासाभिप्रायेणैवायं प्रश्नः। अन्यत्राप्येवमेव। व्यावृत्तिस्तु सर्वत्रोपलक्षणतया, अभावस्याधिकरणात्मकत्वेऽसंकीर्णमात्रस्वरूपतयाऽवगम्यते, इति न कुत्रापि लक्षणवाक्ये, सत्यादिवाक्ये, वाऽखण्डार्थत्वं हीयते ॥

### घटादिज्ञानस्य, अखण्डाकारवृत्तेश्च प्रमेयत्वे विशेषः

प्रमात्वं ह्यनधिगताबाधितार्थविषयकत्वमखण्डाकारवृत्तिमात्रे; वृत्तेरावरणाभिभवमात्रार्थत्वस्य स्वीकारात्, प्रमाणजन्यत्वाच्च। घटादिज्ञानेऽपि यद्यपि व्यवहारदशायामबाधितार्थत्वं घटाकारवृत्तेः संभवति; परन्तु न सोऽनधिगतः; जडत्वात्, इति परम्परयाऽनधिगतत्वं तस्य तद्विषयकत्वम्, वृत्तेश्च वक्तव्यमिति विशेषः। अत एव फलव्याप्यत्व-वृत्तिव्याप्यत्वाभ्यां जड-संविदोः प्रमेयत्वव्यपदेशः। प्रमाणजन्यत्वं तु साक्षात् वृत्तेरेव, न तु चैतन्यस्य, इति न तस्य स्वयं जन्यप्रमात्वमिति व्यक्तं

परिभाषादौ। न चाद्वैतसिद्धान्तेऽनिर्वचनीयख्यातिस्वीकारात् तद्वति तत्प्रकारकत्वं प्रमात्वं नाम, इति नाखण्डाकारवृत्तेरप्रमात्वापातः ॥

सामानाधिकरण्येऽपि स्वरूपप्रश्नोत्तरस्त्र एवाखण्डार्थत्वम्,
न तु सिंहदेवदत्त-वैश्वदेव्यामिक्षेत्यादावपि

एतेन—विगीतं वाक्यम्, विशिष्टपरम्, वाक्यत्वादित्यनुमानमपि—परास्तम्; स्वरूपमात्रतात्पर्यकत्वाभावस्योपाधित्वात्। तत्रोपक्रमावगतं विशेषणं वस्तुस्थितिमाश्रित्य, न तु तस्यापि हेतुतावच्छेदकत्वम्। यथा च स्वरूपमात्रे प्रकरणस्य तात्पर्यम्, तथा तत्र तत्र व्यक्तम्। न चायं न्यायः 'सिंहो देवदत्त' इत्यत्रापि। तत्र व्यक्तिभेदः, अत्र तु स्वरूपैक्यमिति विशेषात्। स्वरूपैक्येऽपि तत्त्वमसिसामानाधिकरण्यं न हीयते, इति हि "सा वैश्वदेव्यमिक्षेत्यादौ दृष्टम्। निदर्शनमिदमभेदेऽपि सामानाधिकरण्यमुपपादयितुम्, न त्वभेदपरत्वे सर्वत्राखण्डार्थत्वमिति नियममभिप्रेत्य, इति न तत्राप्यखण्डार्थत्वापत्तिः, अतिव्याप्तिर्वा ॥

भिन्नप्रवृत्तिनिमित्तकत्वं स्वरूपमात्रपरत्वेऽपि

भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वं सामानाधिकरण्यमिति नियमस्तु शरीर-शरीरिणोरेकत्वाभावात् श्रीभाष्यमते सुतरां बाधितः। न चापृथक्सिद्धिरैक्यमिति चानर्थान्तरम्; अन्यथा 'घटो घटः' इति वाक्यस्यापि प्रामाण्यापत्तिः; घटस्य घटेनापृथक्सिद्ध्यापत्तेः, इति भिन्नप्रवृत्तिनिमित्तकत्वं पदयोरपर्यायत्वमभिप्रेत्य, न तु विशेषणभेदप्रतीतिनियममाश्रित्य। तत्र श्रीभाष्यमते भेदः परतन्त्रः, अद्वैतमते स बाधित इति विशेषः। न चैतावताऽखण्डार्थताहानिः; उपलक्षणतया व्यावृत्तिबोधेऽपि स्वरूपैक्याबाधात् ॥

अखण्डार्थत्वलक्षणपदकृत्यम्, सत्यज्ञानादिवाक्यानां
'घटः कलशः' इति वाक्याद् विशेषश्च

तत्र 'घटः कलशः' इत्यादौ पर्यायत्वात् पदद्वयस्याभेदबोधकत्वेऽपि न प्रामाण्यमिति सूचयितुमेव भिन्नप्रवृत्तिनिमित्तकत्वे सतीति विशेषणमित्युक्तत्वात् कथं 'घटः कलशः' इति वाक्यप्रामाण्यापत्तिरेकार्थत्वेऽपि। न हि स्वरूपमात्रबोधकत्वेनाखण्डार्थत्वं वाक्यस्य, किन्त्वपर्यायानेकपदघटितत्वविशिष्टस्यैव तस्य। अपर्यायत्वं ह्येकवाच्यतावच्छेदकत्वाभावेन। स च वाच्यतावच्छेदकस्य तात्पर्याविषयस्य शाब्दबोधे भानाभावो विरुद्धः; अपर्यायत्वमात्रोपपादकत्वात् तद्विशेषणस्य। न च सत्य-

ज्ञानानन्तादिपदानि पर्यायपदानि, न वा 'घटः कलशः' इतिवाक्य-साम्यं सत्य-ज्ञानादिपदानाम् ॥

अपर्यायत्वनिर्णयः प्राथमिकबोधमात्रमाश्रित्य, न तु पर्य-वसन्नवाक्यार्थदशाम्

अपर्यायत्वनिर्णयस्तु प्राथमिकबोधे बाधितस्य, अबाधितस्य वा वाच्य-तावच्छेदकस्य प्रतीतिमात्रेण, न तु तस्यापि शाब्दबोधे नियमेन भानेन; अन्यथा 'गङ्गायां घोषः' इत्यादौ वाच्यतावच्छेदकस्यैव शाब्दबोधे भाना-पत्तिः, न तु लक्ष्यार्थस्य, इति न लक्षकपदघटितं वाक्यमप्रमाणं स्यात् ॥

अखण्डार्थत्वेऽभेदस्य भाने प्रस्थानभेदाः

तत्र सामानाधिकरण्यघटकमैक्यमत्यन्ताभेदः पदार्थविधयैव भासते, न तु संसर्गविधयेत्येकं प्रस्थानम्, संसर्गतया भानेऽपि नाखण्डार्थत्वविरोधः; अभेदातिरिक्तसंसर्गाविषयकत्वेनेत्यपरं प्रस्थानम्, इत्यादावेवोक्तम्, इति तत्तत्प्रस्थानभेदेनाभेदभानमुन्नेयम्। सूचितश्चायमर्थः परिभाषायामपि। अपर्यायपदान्तरसमभिव्याहारं विना नाखण्डार्थत्वमिति तु निष्कर्षः ॥

अभिहितान्वयान्विताभिधानभेदव्यवस्था

तत्र सर्वाणि पदानि तत्तत्पदार्थस्य शोधितस्याभिधायकानि, तद-भिहिताः पदार्था अभेदमनुभावयन्तीति व्यवस्था पदार्थप्रामाण्यवादे। सर्वाणि पदानि मिलितानि, वाक्यार्थमभेदं बोधयन्तीत्यन्विताभिधान-वादे। तत्तत्पदानि तत्तत्पदार्थमात्रबोधनिमित्तानि, ते तु वाक्यार्थं स्वरूप-सत्या शक्त्या बोधयन्तीति व्यवस्था, इति नैकपदेनैव निर्वाहः, न वा सर्वपदलाक्षणिकत्वं दोषोऽत्राऽपीति व्यक्तमन्यत्र ॥

तत्र तात्पर्यनिर्णयस्तूपक्रमादितात्पर्यग्राहकप्रमाणानुसारी, इति विशे-षणपदप्रयोगः, तदप्रयोगो वाऽकिञ्चित्करः। तत्र सत्यपदमसत्यव्यावृत्त-परम्; अद्वितीयत्वाद् ब्रह्मणः। न च सत्यपदार्थाप्रसिद्धिः; लौकिक-पार-मार्थिकेषु तस्य प्रसिद्धत्वात्। अत एव निर्विशेषत्वाद् ब्रह्मणो न तत्र सत्यत्व-ज्ञानत्वादिविवक्षा ॥

ब्रह्मभूयंगतानामप्युपदेशोपपत्तिर्मतद्वयेऽपि समाना

एतेन—उपदेशोपपत्तिरपि—व्याख्याता; जीवन्मुक्तानामपरोक्षितात्म-तत्त्वानां व्युत्थितानामुपदेष्टृत्वसंभवात्। इयमेव नीतिः सविशेषब्रह्मतत्त्वो-पदेशेऽपि। यदीहैव बोधायनेन, श्रीभाष्यकारेण, तदनुयायिभिर्वा सविशे-षब्रह्मभावरूपा मुक्तिः, वैकुण्ठलोकादिर्वाऽनुभूता, अनुभूयते वा, तर्हि कुतो

वोत्क्रान्त्यपेक्षा, वैकुण्ठादिलोकान्तरगमनं वा। तेषां श्रुतिमहिम्ना परीक्षाविधया तन्निर्णयस्तु सर्वत्र समानः, इत्यखण्डार्थस्यानुभूतस्योपदेशोऽद्वैतसिद्धान्तेऽविरुद्धः। उत्क्रान्तिवैयर्थ्यापत्तिरित्यद्यापत्तिः; अद्वैतमतेऽपरोक्षितात्मतत्त्वानां प्रारब्धशेषावसानेऽत्रैव मुक्तेः स्वीकारात्। तत्र "तत्त्वमसी"त्यादौ 'असि' पदं वाक्यसाधुत्वार्थमिति तस्यापि न लक्षकत्वम्, न वेति प्रस्थानभेदाद् न सर्वपदलाक्षणिकत्वं, 'विषं भुङ्क्ष्वे'त्यादाविव, न वा तद्दूषणम्॥

असत्यां गतौ सर्वपदलक्षणा, नान्यथा। अतः "तत्त्वमसी"त्यादौ असिपदादावलक्षकत्वेऽपि न दोषः

तत्र सत्यां गतौ न लक्षणा कुत्रापि। अत एव विशिष्टवाचकानां विशेषणमात्रबोधतात्पर्यकत्वे विशेषणांशत्यागेन विशेष्यमात्रानुभावकत्वमिति साम्प्रदायिकः पन्थाः। लक्षणापक्षे तु यावत्सु पदेषु लक्षणां विना विवक्षितबोधो न निर्वहति, तावत्स्वेव लक्षणा। अतोऽसिपदेऽपि न स्वरूपलक्षणा, इति 'विषं भुङ्क्ष्वे'त्यादौ द्वितीयाविभक्तेः, धातोः, लोटश्चालक्षकत्वेऽपि न दोषः॥

"तत्त्वमसी"त्यादावपि प्रथमाया न लक्षकत्वम्, एवमेव "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यत्रापि। अत्रापि सत्यमिति प्रथमान्तमेव। "यो वेद निहितं गुहायाम्" इत्यत्र तु ब्रह्मणो गुहानिहिताभिन्नरूपेण ज्ञानं पृथगेव प्रस्तूयते; ब्रह्मस्वरूपलक्षणमात्राभिप्रायत्वात् प्रथमवाक्यस्य। निहितपदस्य विशेषणपरस्य ब्रह्मणाऽन्वयस्तु 'सर्वत्र प्रसिद्धाधिकरण'नयेनान्यार्थस्यापि ब्रह्मणोऽनुकर्षेण॥

अत एव हि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यत्र प्रत्यगभिन्नस्य ब्रह्मणः एवाज्ञातस्य कारणत्वाम्नानम्। यत्र विशिष्टार्थपरत्वं नियतम्, तत्रैव तात्पर्यवशाद् विशिष्टयोरेव सामानाधिकरण्यम, न ततोऽन्यत्रापि। सर्वथा त्वन्विताभिधानवादे, अभिहितान्वयवादे वा तात्पर्यानुसारेण तत्त्वमस्यादिवाक्येषु सर्वपदलक्षणाऽर्थवादेष्विव न दुष्यति॥

लक्षणाश्रयणं हि तत्त्वमस्यादिवाक्येषु, विना लक्षणां न गतिरित्यभिप्रेत्य, यदि विनैव लक्षणां प्रकृतवाक्यार्थोऽभीप्सितो निर्वहति, तर्हि न तत्र लक्षणायामाग्रहः; विवक्षितमात्रपरत्व एव तात्पर्यात्। सोऽपि कल्पः साम्प्रदायिकानां पूर्वं निरूपित एव। न ह्यन्यथा वाक्यतात्पर्यनिर्वाहः। तत्र बाधितत्वात्तु विशिष्टार्थबोधस्य न तावन्मात्रे वाक्यतात्पर्यमिति विवेचितं तत्र तत्र॥

### अन्विताभिधानवादेऽप्यभिहितान्वयवाद इव संसर्ग-विषयत्वानियमः

तत्राभिहितान्वयवादे, अन्विताभिधानवादे चान्वयपदं तात्पर्यविषयपरम्, न तु संसर्गपरमिति बिन्दुटीकायाम्, चन्द्रिकायां च व्यक्तम्, इति नोभयत्राप्यन्वयघटितत्वेऽपि संसर्गविषयकत्वं नियतम्॥

### पदमात्रस्य वाक्यप्रमाणत्वाभावात् पदान्तरवैयर्थ्य-शङ्काया नोत्थितिः

तत्र शब्दस्य प्रमाणत्वमनेक-साकाङ्क्षपदघटितवाक्यत्वेन, न तु पदत्वेन, इति न गङ्गापदेनैकेन लक्षणया प्रमोत्पत्तिः। गङ्गापदमात्रं हि कुतो वा न लक्षकम्। यद्यन्वयानुपपत्त्या, तर्हि किं वा तात्पर्यम्? कुतो वा निर्णीयते? आसत्तिरपि कारणमेकपदप्रयोगे न संभवति। पदार्थमात्रस्य स्मृतिर्न शाब्दबोधः, किन्तु तदनुभावितो वाक्यार्थबोध एव। तत्र पदार्थज्ञानं स्मृतिमात्रम्, अभिधानरूपं वाऽकिञ्चित्करम्। सर्वथा तु न तावन्मात्रस्य प्रामाण्यम्॥

तत्राभिहितान्वयवादे पदवृत्तिमात्रज्ञानाधीनं ज्ञानं न स्मृतिः; पदार्थस्याभिधीयमानस्य पदेन पूर्वमननुभवेन पदज्ञानाधीनत्वस्य तत्रासंभवेन स्मृतित्वायोगात्, नाप्यनुभवः; तत्प्रमाणस्य पदार्थज्ञानातिरिक्तस्य तत्राभावात्, इत्यभिधानमेव तत्र स्मृत्यनुभवविलक्षणं ज्ञानमित्यभिहितान्वयवादः; अन्विताभिधानवादे तु पदेन पूर्वमनुभवं जातं मत्वा स्मृतित्वम्। उभयथापि तावन्मात्रस्य न वाक्यजन्यप्रमाविषयत्वम्॥

तत्र मीमांसकमतमाद्रियताम्, मा वाऽऽद्रियताम्, पदार्थज्ञानमात्रप्रमात्वं तु शाब्दज्ञानस्य नोपपद्यते, इति येन केनापि मार्गेण तात्पर्यविषयार्थबोधकत्वेन तत्त्वमस्यादिवाक्यानामखण्डार्थत्वं दुरपह्नवम्। अधिकमत्र चर्वितचर्वणमात्रमिति शम्॥

॥ इत्यखण्डार्थत्वोपपत्तिः ॥

इति शास्त्ररत्नाकर-शतभूषण्यादिविविधविरुदभाजो

महामहोपाध्यायश्रीमदनन्तकृष्णशास्त्रिणः

कृतिष्वद्वैततत्त्वसुधाद्वितीयभागः

# विशेषतो द्रष्टव्यम्

अयं हि द्वितीयभागोऽखण्डार्थत्वसमर्थनपर्यन्तमेव शरीरास्वास्थ्यादिभिर्बहुतरैः कारणैः साम्प्रतमेव प्रकाशयितुमपारि। परिशिष्टानि त्वपराणि प्रकरणानि (१) भावरूपाज्ञानसमर्थनम् , (२) जीवाज्ञानवादसमर्थनम् , (३) अविद्यास्वरूपसमर्थनम् , (४)मायाविद्याविभागसमर्थनम् , (५) निवर्तकोपपत्तिः, (६) निवृत्त्युपपत्तिः, (७) शब्दवेद्यत्वोपपत्तिः, (८) विकल्पांशाप्रामाण्यसमर्थनम् , (९) उपबृंहणवैयर्थ्यविघटनम् , (१०) ऐक्यार्थापत्त्युपपत्तिः, (११) अधिकारिसमर्थनम् , (१२) मुक्तसंविन्निर्विषयत्वसमर्थनम् , (१३) निर्गुणश्रुत्यर्थासंकोचसमर्थनम् , (१४) ब्रह्मोपादानत्व-जगन्मिथ्यात्वसमर्थनम् , (१५) निर्विशेषनिदानत्वसमर्थनम् , (१६) अद्वितीयश्रुत्यर्थप्रसाधनम् , (१७) सत्त्वासत्त्वविवेकप्रसाधनम् , (१८)जीवैक्यसमर्थनम् , (१९) अपशूद्राधिकरणाविरोधोपपत्तिः, (२०) कर्माधिकारसाधनम् , (२१) यतिलिङ्गभेदसमर्थनञ्च ।

एषु—भावरूपाज्ञानमुभयसंप्रतिपन्नम् , तस्याभावरूपत्वनिरासस्तु प्रत्यक्षादिप्रमाणानामप्रवृत्त्यादिना पीठिकायामद्वैतसिद्ध्यादौ च बहुधा समालोचितम् , जीवाज्ञानवादः, निवर्तकानुपपत्तिः, निवृत्त्यनुपपत्तिः, अविद्यास्वरूपं सत्त्वासत्त्वविभागादिकं च वेदान्तरक्षामण्यद्वैतत्त्वशुद्धि-शतभूषणी-प्रकृतनिबन्धपीठिकासु निबन्धे च तत्र तत्र विस्तरेण समीक्षितम् , जीवैक्यपक्षस्तु जीवेश्वरैक्यानुपपत्त्यादौ सम्यग्विमृष्टम् । ब्रह्मोपादानतावादस्तु प्रायेण बहुषु प्रकरणेषु प्रसङ्गेन परीक्षितम् । अयमेव न्यायः शब्दवेद्यत्ववादस्यापि, अवेद्यत्वोपपत्तिस्वप्रकाशत्वादिप्रकरणस्याऽप्ययमेव विषयो रूपभेदेन, विकल्पाप्रामाण्यवादस्तु ब्रह्मसिद्धेः सिद्धान्तः, तत्र श्रीभाष्यादिकं तदीयपूर्वपक्षांशं सिद्धान्तयोपक्षिपति, सिद्धान्तांशस्य गोपनेन । पदार्थतत्त्वनिर्णय—न्यायरत्नावल्यादीनामपि गोपनेन, वक्तव्यं चात्र सर्वं पीठिकायां विशदीकृतम् । कर्माधिकार-यतिलिङ्गसमर्थनादावपि न्यायरत्नदीपावली-शतभूषण्यादिसिद्धान्तितस्य निरसनेन स्वमतसमर्थनं भूषणेनात्र कृतम् , तत्र विरुद्धानेकश्रुत्यनुसारेण विकल्प एव समर्थितः शतभूषण्या, श्रुतीनामपि कासांचन स्वसिद्धान्तविरोधमात्रेणाप्रामाण्यं मत्वा भूषणस्य मतान्तरनिरासो न समादरमर्हति । सर्वथा तु पूर्वेषां प्रकरणानामिव यक्षानुरूपबलिन्यायेन भूषणविचारक्रमेणैव परीक्षणं कृतमपि, शरीरास्वास्थ्यादिभिः कारणैरनिवारणीयैः साम्प्रतं प्रकाशनमशक्यमिति, द्वितीयो भागोऽयमेतावत्पर्यन्तमेव साम्प्रतं बहिरवतार्यते । आशास्यते—एतान्यपि प्रकरणानि सविस्तरं प्रकरणान्तराणीव यथायथमवसरान्तरे प्रकाशमेष्यन्तीति शम् ।

---

